# ANARGHARAGHAVA

( A DRAMA IN SEVEN ACTS )

BY

MURARI-MISHRA.



WITH A FULL COMMENTARY

BY

*Pandit-Kulapati Jibananda Vidyasagara, B.A.*

EDITED AND PUBLISHED BY

*PANDIT ASHU BODH BIDYABHUSHANA*

AND

*PANDIT NITYA BODH BIDYARATNA.*

THIRD EDITION.



CALCUTTA.

PRINTED AT THE VACHASPATYA PRESS.

1936.



**Price 2-8 As.**

To be had of :—

Pandit-Kulapati Jibananda Vidyasagara B.A.

Superintendent, Free Sanskrit College.

*No. 2, Ramanath Majumdar Street,*

*Amherst-Street P.O., Calcutta.*

# अनर्घराघवम् ।

महाकविश्रीमुरारिमिश्रविरचितं सप्ताङ्कनाटकम् ।

बि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचितया
टीकया समलङ्कृतम् ।
तदात्मजाभ्यां श्रीआशुबोध-विद्याभूषण तथा
श्रीनित्यबोध-विद्यारत्नाभ्यां
प्रतिसंस्कृत्य च प्रकाशितम् ।

तृतीयसंस्करणम् ।

कलिकातामहानगर्य्याम्,
वाचस्पत्ययन्त्रे मुद्रितम् ।

ई १९३६ ।



मूल्यं सार्द्धरूप्यकद्वयम् ।

प्रकाशक—{ पण्डित-श्रीआशुबोध-विद्याभूषण
तथा
पण्डित-श्रीनित्यबोध-विद्यारत्न।

प्राप्तिस्थान—{ २न०, रमानाथ मजुमदार ष्ट्रीट्
आम्हार्ष्टष्ट्रीट् पोष्ट-अफिस, कलिकाता।

प्रिण्टर—बि, बि, मुखर्जी।

२ न०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता।

# अनर्घराघवम् ।

## प्रथमोऽङ्कः ।

निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः
कोकप्रीति-चकोरपारणपटुज्योतिष्मती लोचने ।
याभ्यामर्द्धविबोधमुग्धमधुरश्रीरर्द्धनिद्रायितो
नाभीपल्वलपुण्डरीकमुकुलः कम्बोः सपत्नीकृतः ॥ १ ॥

ग्रन्थारम्भे प्रारिप्सितपरिसमाप्तिकामो ग्रन्थकृत् विशिष्टदेवतोपासनरूपं मङ्गलं नान्दीव्याजेनाचरति, निष्प्रत्यूहमिति ।—निष्प्रत्यूहं प्रत्यूहस्य विघ्नस्य, अभावः, निष्प्रत्यूहं निर्विघ्नं, तस्मै विघ्नाभावायेत्यर्थः, कौमोदकीलक्ष्मणः कौमोदक्याख्यनिजगदाचिह्नस्य, गदाधरस्येति यावत्, भगवतः विष्णोः, कोकस्य चक्रवाकस्य, प्रीतिः आनन्दः, चकोरस्य पक्षिविशेषस्य, पारणम् उपवासान्तभोजनं, पिपासानिवारणार्थं पानमिति भावः, तयोः पटुनी समर्थे, उपयोगिनी इति यावत्, ये ज्योतिषी तेजसी, सूर्यचन्द्ररूपे इति यावत्, ते विद्येते ययोः तथोक्ते, चक्रवाकस्य दिवसे स्त्रिया अविरह इति तदानन्दोपयोगी सूर्यः, तथा चकोरस्य रजन्यां चन्द्रिकापाने परितृप्तिरिति तत्पारणोपयोगी चन्द्र इति प्रसिद्धेरिति भावः, लोचने नेत्रे, उपास्महे आराधयामः; याभ्यां लोचनाभ्यां, नाभी पल्वलमिव अल्पसर इव, "पल्वलञ्चाल्पसरः" इत्यमरः, नाभेर्गभीरत्वात् सरःसाम्यम्, तत्र यत् पुण्डरीकं श्वेताम्भोजं, "पुण्डरीकं सिताम्भोजम्" इत्यमरः, तस्य मुकुलः अर्द्धविकसिता कलिका, अर्द्धविबोधेन अर्द्धप्रकाशेन, सूर्यरूपलोचनप्रभायोगादिति भावः, मुग्धमधुरा अति मनोहारिणी, श्रीः शोभा यस्य तथोक्तः, तथा अर्द्धनिद्रायितः अर्द्धांशे निद्रां गतः, अपरांशस्य विकाशाभावेन निमीलित इति यावत्, चन्द्ररूपलोचनप्रभायोगादिति भावः, सूर्योदये पुण्डरीकविकाशस्य चन्द्रोदये च तन्निमीलनस्य कविसमयसिद्धत्वादिति भावः, अत एव कम्बोः शङ्खस्य, "शङ्खः स्यात् कम्बुरस्त्रियाम्" इत्यमरः, सपत्नीकृतः विपक्षीकृतः, "रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः । द्विड्विपक्ष—" इत्यमरः;

अपि च—

विरमति महाकल्पे नाभीपथैकनिकेतन-
स्त्रिभुवनपुरः शिल्पी यस्य प्रतिक्षणमात्मभूः।
किमधिकरणा? कीदृक्? कस्य व्यवस्थितिः? इत्यसा-
वुदरमविशद्द्रष्टुं तस्मै जगन्निधये नमः॥ २॥

( नान्द्यन्ते ) ( क )

सुगुप्तमङ्गस्य एकपृष्ठं यथा विवृतम्, अपरपृष्ठञ्च संवृतं, पुण्डरीकमुकुलोऽपि तथा एकाग्रस्य विवृतत्वात् अपराग्रस्य च संवृतत्वात् सादृश्येन अङ्गस्पर्द्धीकृत इव अवस्थित इति भावः। भगवतश्चरणादिकमपहाय लोचनोपासनं यत्कृतं तदीयशुभदृष्टि-पातमार्थमिति द्रष्टव्यम्। उपमाऽलङ्कारः। तदुक्तं दर्पणे—"साम्यं वाच्यमवैधर्म्यं वाक्यैक्ये उपमा द्वयोः" इति। शार्दूलविक्रीडितं वृत्तं—"सूर्याश्वैर्यदि मः सजौ स-त त गाः शार्दूलविक्रीडितम्" इति तल्लक्षणात्॥ १॥

विरमतीति।—महाकल्पे महाप्रलये, विरमति निवर्त्तमाने, अतिक्रामति सतीत्यर्थः, कल्पावसाने पुनः सर्गेच्छाकाले इति भावः, नाभी एव पन्थाः भगवदुदर-प्रवेशमार्ग इत्यर्थः, नाभिसमुद्भूतपद्ममिति भावः, स एव एकम् अद्वितीयं, निकेतनं निलयः यस्य तथोक्तः, ब्रह्मणः भगवन्नाभिकमलवास्तव्यत्वादिति भावः, त्रिभुवनमेव पूः तस्याः त्रिलोकीनगर्य्या इत्यर्थः, शिल्पी निर्माता, असौ आत्मभूः ब्रह्मा, कस्य पदार्थस्य, कीदृक् व्यवस्थितिः? व्यवस्था? सा च किमधिकरणा? किमाश्रया? कस्मिन्नाधारे कः पदार्थः किं-रूपेण व्यवस्थितः? इति यावत्, यथा—तथाभूतः आत्मभूः असौ सदधिष्ठानभूता नाभिः, असौ सृष्टिर्वा, किमधिकरणा? कीदृक्? कस्य व्यवस्थितिः? असौ नाभिः सृष्टिर्वा किमाश्रित्य वर्त्तते? कीदृशी? अत्र कस्य अवस्थितिरित्यर्थः, इति द्रष्टुं प्रतिक्षणं क्षणे क्षणे, मुहुर्मुहुरित्यर्थः, यस्य उदरम् आविशत्, जगतां निधये क्रोडस्थसमस्तभुवनायेत्यर्थः, तस्मै नारायणायेति यावत्, नमः। हरिणीवृत्तं, "न-स-म-र-स-ला गः षड्वेदैर्हयैर्हरिणी मता" इति तल्लक्षणात्॥ २॥

(क) नान्द्यन्ते इति।—नन्दयति देवादीनिति नान्दी रङ्गविघ्नोपशान्त्यर्थं नटैः क्रियमाणमङ्गलाचरणविशेषः। तदुक्तं दर्पणे—"यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये। कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते॥ प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि। तथाऽप्यवश्यं कर्त्तव्या नान्दी विघ्नोपशान्तये॥ आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते। देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता॥" अत्राष्टपदा नान्दी। तथा च—

सूत्रधारः । अलमतिविस्तरेण । भो भो लवणोदवेला-वनालीतमालतरुकन्दलस्य त्रिभुवनमौलिमण्डनमहानीलमणेः कमलाकुचकलशकेलिकस्तूरिकापत्राङ्कुरस्य भगवतः पुरुषोत्तमस्य यात्रायामुपस्थानीयाः (ख) सभासदः । कुतश्चित् द्वीपादागतेन कलहकन्दलनाम्ना ( ग ) कुशीलवेन रौद्रबीभत्स-भयानकाद्भुतरसभूयिष्ठं (घ) कमपि प्रबन्धमभिनयता (ङ) नित्यं

---

"मङ्गल्यशङ्खचन्द्राब्ज-कोककैरवशंसिनी । पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ॥" इति दर्पणकारः ।

( ख ) भो भोः !, सभासदः । इति उत्तरेणान्वयः । लवणोदेति ।—लवणम् उदकं यस्य स लवणोदः लवणसमुद्रः, तस्य वेला तीरभूमिः, "वेला स्यात्तीरनीरयोः" इत्यमरः ; तत्र या वनाली वनराजिः, तस्या यः तमालतरुः तापिञ्छवृक्षः, तस्य कन्दलस्य काण्डभूतस्य, तत्प्ररोहस्थानीयस्येति भावः यद्वा—कन्दलस्य नवाङ्कुरस्य, अभिनवोद्भिन्न-तमालपल्लवमच्छश्यामस्निग्धश्यामवर्णस्येत्यर्थः, "कन्दलं त्रिषु कपालेऽप्युपरागे नवाङ्कुरे" इति मेदिनी । त्रिभुवनेति ।—त्रिभुवनस्य मौलिर्मस्तकं, मस्तकसदृशश्रेष्ठं पुरुषोत्तम-क्षेत्रमिति यावत, तस्य मण्डनाय अलङ्करणाय, महान् नीलमणिः नीलकान्तरत्नं तस्य, तत्सदृशस्येत्यर्थः । कमलेति ।—कमलायाः लक्ष्म्याः, कुचौ स्तनौ, कलशाविव कुम्भाविव, तयोः यः केलिः क्रीडनं, हर्षजननव्यापारविशेष इति यावत, तस्य तदर्थं वा कस्तूरिकापत्राणि मृगनाभिचित्रितपत्राकाररचनाविशेषाः, तेषाम् अङ्कुरस्य प्ररोहस्य, कारणभूतस्येति यावत्, भगवतो विहारार्थमेव तत्कुचरञ्जनादिति भावः । भगवतः ऐश्वर्य्यादिसर्वशक्तिमतः ; तदुक्तम—"ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः । ज्ञान-वैराग्ययोश्चैव षण्णां भग इतीङ्गनः ॥" इति । पुरुषोत्तमस्य विष्णोः । यात्रायाम् उत्सवे । उपस्थानीयाः उपस्थिताः, आराधनीया वा । उपपूर्वकात् तिष्ठतेः कर्त्तरि अनीय-प्रत्ययः ।

( ग ) कलहकन्दलनाम्ना कलहस्य कन्दलः प्रकाण्डः, नवाङ्कुरो वा, तत्स्वरूप इत्यर्थः, नाम यस्य तथोक्तेन । "कलहकन्दनाम्ना" इति पाठे—कलहस्य कन्दः मूलं नाम यस्य तथाभूतेन ।

( घ ) रौद्रेति ।—रौद्रः उग्ररूपः, बीभत्सः विकृतरूपः, भयानकः दारुणरूपः, अद्भुतः आश्चर्य्यरूपः, ते रसाः भूयिष्ठाः प्रचुराः यत्र तथाविधम् । उक्तञ्च दर्पणे—"रौद्रः

किलायमुद्वेजितो (च) लोकः। तत्र कस्यचिदभिमतरसभावभाजः प्रेक्षणकस्य प्रयोगानुज्ञया (छ) नाट्यवेदोपाध्यायबहुरूपान्तेवासी मध्यदेशीयः (ज) सुचरितो नाम भरतपुत्रोऽहमनुगृह्ये (झ)। यतः,—

प्रीतिर्नाम सदस्यानां प्रिया रङ्गोपजीविनः।
जित्वा तदपहर्त्तारमेष प्रत्याहरामि ताम्॥ २॥

---

क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः। आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम्॥ जुगुप्सास्थायिभावस्तु बीभत्सः कथ्यते रसः। नीलवर्णो महाकालदैवतोऽयमुदाहृतः॥ भयानको भयस्थायि भावः कालाधिदैवतः। अद्भुतो विस्मयस्थायि-भावो गन्धर्व-दैवतः॥" इति।

(ङ) प्रबन्धं रचनाविशेषं, नाटकमिति यावत्। अभिनयता नाट्येन प्रकटयता।

(च) उद्वेजितः विरक्तीकृतः।

(छ) अभिमतरसभाजः अभिमतं मनोऽनुकूलं, रसं भजते इति तथोक्तस्य मधुररसशालिन इत्यर्थः। प्रेक्षणकस्य प्रकृष्टम् ईक्षणं दर्शनं, दृश्यवस्तु इति यावत् यस्य यत्र वा तस्य, नाटकस्येत्यर्थः। प्रयोगानुज्ञया अभिनयाय अनुमत्या।

(ज) नाट्यवेदेति।—नाट्यवेदस्य नाट्यशास्त्रस्य, उपाध्यायः उपदेष्टा, यः बहुरूपः तन्नामा आचार्य्यविशेषः, तस्य अन्तेवासी शिष्यः। मध्यदेशीयः मध्यदेशभव इत्यर्थः। भरतपुत्रः नटपुत्रः। "भरता इत्यपि नटाः" इति अमरः।

(झ) अनुगृह्ये अनुगृहीतोऽस्मि।

प्रीतिरिति।—सदस्यानां सभ्यानां, प्रीतिः सन्तोषः, नाम सम्भावनायां, रङ्गं नृत्यव्यापारं तत्स्थानं वा, उपजीवति जीविकात्वेन आश्रयतीति तथोक्तस्य, ममेति शेषः, प्रिया इष्टा, सदस्यप्रीतिरेव मादृशस्य हितायेति भावः; एषः अहं, तस्याः प्रीतेः, अपहर्त्तारं चौरं, विनाशकमिति यावत्, लोकविरक्तिकरं पूर्वोक्तं बहुरूपनाट्यमिति शेषः, जित्वा परिभूय, तां प्रीतिं, प्रत्याहरामि प्रत्यानयामि, पुनस्तान् सदस्यान् प्रीतान् करोमीति यावत्। एतेन सीताहर्त्तारं रावणं जित्वा पुनः रामस्य सीताप्रत्यानयनं ध्वनितम्। अनुष्टुप्छन्दः॥ २॥

(आकाशे कर्णं दत्त्वा)। किं ब्रूथ? "वैदेशिको भवानसमग्रपात्रः, (ञ) कथमीदृशे कर्मणि प्रगल्भते?" (ट) इति। (विहस्य सप्रश्रयम् (ठ) अञ्जलिं बद्ध्वा)। हन्त भोः! किमेवमुदीर्य्यते? (ड) भवद्विधानामाराधनी वृत्तिरेव (ढ) मे पात्राणि समग्रयिष्यति (ण)। यतः,—

यान्ति न्यायप्रवृत्तस्य तिर्य्यञ्चोऽपि सहायताम्।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति॥ ४॥

(पुनराकाशे कर्णं दत्त्वा)। किं ब्रूथ? "तर्हि प्रहितेयमस्माभिः पत्रिका?" इति।

(प्रविश्य नटः पत्रिकां ददाति। सूत्रधारो गृहीत्वा वाचयति)।—

"यत्र सर्वपुरुषार्थरहस्यनिःस्यन्दिनि— (त)

---

(ञ) वैदेशिकः विदेशभवः। अत एव असमग्रपात्रः असमग्रम् असम्पूर्णं पात्रम् अभिनयार्थाभिनेतृ-नेपथ्यादिनामर्थीसमाधानं यस्य तादृशः, देशीयैर्यथा सर्वं सङ्गृहीतुं शक्यते, विदेशीयैस्तथा नेति भावः।

(ट) प्रगल्भते स्पर्द्धते।

(ठ) सप्रश्रय सविनयम्।

(ड) उदीर्य्यते कथ्यते।

(ढ) आराधनी अनुरञ्जनी। वृत्तिः व्यापारः।

(ण) पात्राणि नटादीन्। समग्रयिष्यति सम्पूर्णानि करिष्यति, अभिनेतृ-नेपथ्यादीनामभावं पूरयिष्यतीत्यर्थः।

यान्तीति।—तिर्य्यञ्चोऽपि पशु पक्षिजातीया अपि, न्यायप्रवृत्तस्य सदाचारमनुसरत इति यावत्, जनस्येति शेषः, सहायताम् अनुकूलता, यान्ति गच्छन्ति; अपन्थानम् अन्यायमार्गं, गच्छन्तं तु जनं, सोदरः अपि विमुञ्चति त्यजति। एतेन रामस्य वानरसहायत्वं विभीषणेन रावणस्य त्यागश्च ध्वन्यते॥ ४॥

(त) यत्रेति।—सर्वे पुरुषार्थाः धर्मार्थ काम मोक्षाः, तेषां रहस्यं गोपनीयं तत्त्वं, तस्य निःस्यन्दः क्षरणं तद्वतीत्यर्थः। तदुक्तं सङ्गीतकल्पतरौ—"देवर्षिचरितपात्रपूर्वचरितान्यालोच्य धर्मोदयः तद्भावाश्रितभूमिकाऽभिनयने स्यादर्थसिद्धिः परा।

चेतःशुक्तिकया निपीय शतशः शास्त्रामृतानि क्रमा-
द्वान्तैरक्षरमूर्त्तिभिः सुकविना मुक्ताफलैर्गुम्फिताः ।
उन्मीलत्कमनीयनायकगुणग्रामोपसंवल्गन-
प्रौढाहङ्कृतयो लुठन्ति सुहृदां कण्ठेषु हारस्रजः ॥ ५ ॥

तस्मै वीराद्भुतारम्भ-गम्भीरोदात्तवस्तवे ।
जगदानन्दकन्दाय सन्दर्भाय त्वरामहे" ॥ ६ ॥

---

सङ्गीताद्भुतचित्तवृत्तितरला वश्या भवत्यङ्गना शान्तं मङ्गलसैवयेति कथितं नाट्यं चतुर्वर्गदम् ॥" इति । यत्र सन्दर्भे ।

चेत इति ।—चेतः चित्तमेव, शुक्तिका मुक्तास्फोटः, तया क्रमात् शतशः शतं शतं वारान् इत्यर्थः, बहूनि इत्यर्थो वा, शास्त्राणि उपदेशगर्भाणि शासनानि एव, अमृतानि निपीय सादरं पीत्वा, समालोच्येति यावत्, वान्तैः उद्गीर्णैः, मुक्ताफलैः मुक्तं त्यक्तम्, अफलम् असारवस्तु येषु तथाभूतैः, अक्षराण्येव मूर्त्तयः आकाराः येषां तैः, गद्यपद्यमयैर्वाक्यैरिति भावः, सुकविना गुम्फिताः विरचिताः, उन्मीलता प्रस्फुरता, कमनीयानां हृद्यानां, नायकस्य "त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही । दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता ॥" इत्युक्तलक्षणकस्य नेतुः, "नायको नेतरि श्रेष्ठे हारमध्यमणावपि" इति विश्वः, गुणानां "शोभा विलासो माधुर्यं गाम्भीर्यं धैर्यतेजसी । ललितौदार्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः ॥" इत्युक्तलक्षणानां गुणानां, ग्रामस्य समुदायस्य, उपसंवल्गनेन सम्बन्धेन, सद्भावेनेति यावत्, विरचनेनेति भावः, प्रौढा उद्भटा, अहङ्कृतिः रचनोत्कर्षजनिताभिमानः यासु तथाविधाः, हरन्तीति हाराः, मनोहारिण्यः, स्रज इव माला इव, अक्षरमाला इति यावत्, सुहृदां सुष्ठु हृदयशालिनां, सामाजिकानामित्यर्थः, कण्ठेषु लुठन्ति । अन्यान्यपि मौक्तिकानि शुक्तिकासु बहुशः सामुद्रपानीयं चन्द्रनिःसृतामृतं वा पीत्वा क्रमेण ततो वान्तानि सुचतुरपुरुषेण गुम्फितानि कमनीयमध्यमणिसंयुतानि सूत्रेण ग्रथितानि च सत्पुरुषाणां कण्ठेषु लुठन्तीति द्रष्टव्यम् । शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

तस्मै इति ।—वीराद्भुतयोः रसयोः, आरम्भेण उद्योगेन, ताडकावध-धनुर्भङ्गादिरूपेणेति भावः, गम्भीरं दुरवगाहं, तथा उदात्तं हृद्यं, प्रियमित्यर्थः, महार्घकं वा, "उदात्तो दातृ-महतोर्हृद्ये च स्वरभिद्यपि" इति हैमः ; वस्तु अभिधेय-

(विमृश्य सहर्षस्मितम्) (ञ)। मारिष! रामायणमिति शृणोषि तत्रभवतः कवित्वावतारप्रथमतीर्थस्य (ट) वल्मीकजन्मनो मुनेः सरस्वतीनिर्यासो यशःशरीरम् (ठ) इक्ष्वाकूणाम्?

नटः। अथ किम्।

सूत्रधारः। तत्प्रतिबद्धप्रबन्धानुबन्धिनी परिषदाज्ञा (ड)।

नटः। (विहस्य)। अहो! सकलकविसार्थसाधारणी खल्वियं वाल्मीकीया सुभाषितनीवी (ढ)।

---

विषयः यत्र तथाभूताय, जगताम् आनन्दस्य कन्दाय मूलभूताय, सन्दर्भाय रचनाविशेषाय, नाटकायेति यावत्, नाटकाभिनयायेति भावः, त्वरामहे सत्वरा भवामः। युग्मम्। अनुष्टुप् वृत्तम् ॥ ६ ॥

(ञ) विमृश्य विचिन्त्य। सहर्षस्मितं सहर्षं सानन्दं, स्मितं मन्दहासविशेषः यस्मिन् तत् यथा तथा, आहेति अध्याहार्य्यक्रियाविशेषणम्। स्मितलक्षणमुक्तं यथा—"ईषत् प्रफुल्लितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः। अदृष्टदन्तकुसुमैरुत्तमाना स्मितं भवेत्॥" इति।

(ट) तत्रभवतः पूज्यस्य। "पूज्यस्तत्रभवानत्रभवान्" इत्यमरः। कवित्वेति।—कवित्वेन काव्यकर्त्तृत्वेन, अवतारः अवतरणं, प्रादुर्भाव इत्यर्थः, कवित्वावतारः, तत्र प्रथमः आद्यः, तीर्थः पात्रं, प्रथमं कवित्वपदवीमारूढस्येत्यर्थः, आदिकवेरिति यावत्।

(ठ) सरस्वतीनिर्यासः वाङ्निस्रवः, वागमृतमित्यर्थः। यशःशरीरं कीर्त्तिरूपं शरीरं, भौतिकन्तु शरीरं चीयते इदन्तु न तथेति भावः।

(ड) तदिति।—तेन वाल्मीकिना, प्रतिबद्धः विरचितः, यः प्रबन्धः रामायणमिति यावत्, तदनुबन्धिनी तदनुसारिणी। परिषदाज्ञा सभ्यानामादेशः। परिषदा रामायणानुबन्धिना केनचित् प्रबन्धेन वयं प्रीणनीया इति आज्ञप्तमिति भावः।

(ढ) सकलेति।—सकलानां कविसार्थानां कविसम्प्रदायानां, साधारणी संवादिनी, सर्वकविसम्मतेत्यर्थः। वाल्मीकीया वाल्मीकिसम्बन्धिनी। सुभाषितनीवी सुष्ठुवाक्यविन्यासग्रन्थिरित्यर्थः; सुभाषितरूपमूलधनमित्यर्थो वा, वाल्मीकिसुभाषितरूप-मूलधनमुपजीव्य सर्वे कवयः कविपदवीमारोहन्तीति भावः, "नीवी परिपणो मूलधनम्" इत्यमरः।

सूत्रधारः। मारिष! किमुच्यते—

अपि कथममौ रक्षोराजस्तताप जगत्त्रयीम्?
अपि कथमभूदिक्ष्वाकूणां कुले गरुडध्वजः।?
अपि कथमृषौ दैव्यो वाचः स्वतः प्रचकाशिरे?
सुचरितपरीपाकः सर्वः प्रबन्धकृतामयम्॥ ७॥

तत्र तावन्निरूपयामि (फ) रूपकमभिरूपम् (ब) ईदृशम्। (मुहूर्तमिव स्थित्वा स्मरणमभिनीय सोल्लासम्)। अस्ति मौद्गल्यगोत्रसम्भवस्य महाकवेर्भट्टश्रीवर्द्धमानतनूजन्मनः तन्तुमतीनन्दनस्य (भ) मुरारेः कृतिरभिनवमनर्घराघवं नाम नाटकम् (म)। तत् प्रयुञ्जानाः सामाजिकानुपास्महे (य)। (विचिन्त्य सहर्षम्)। अहो!

---

अपीति।—असौ रक्षोराजः राक्षसेश्वरः रावणः, कथं केन प्रकारेण, केन हेतुना वा, जगत्त्रयीं त्रिलोकीं, तताप? सन्तापितवान्? अपि-शब्द प्रश्नवाचकम्; इक्ष्वाकूणां कुले गरुडध्वजः विष्णुः, कथं केन हेतुना, अभूत? अजनि? ऋषौ वाल्मीकौ, दैव्यः देवसम्बन्धिन्यः, वाचः गिरः, देवभाषा इत्यर्थः, कथं केन हेतुना, स्वतः आत्मना, प्रचकाशिरे? प्रादुर्भूताः? इत्यर्थं, अयं सर्वः रावणराक्षसादिकृत जगत्त्रयसन्तापनादिरूपः, प्रबन्धकृतां काव्यरचयितॄणां, सुचरितस्य सुकृतस्य, परिपाकः परिणामः, परिपच्यते इति परिपाकः फलं वा, कर्मणि घञ् प्रत्ययः, प्रबन्धकृता सुकृतबलेनैव तत्तत् सर्वं चित्ते आविर्भवतीति भावः। हरिणीवृत्तं—"न-स-म-र-स-ला गः षड्वेदैर्हयैर्हरिणी मता" इति तल्लक्षणात्॥ ७॥

(फ) निरूपयामि निर्द्धारयामि।

(ब) अभिरूपं रमणीयं, सर्वजनप्रियमित्यर्थः, "अभिरूपो बुधे रम्ये" इति मेदिनी।

(भ) वर्द्धमानतनूजन्मनः वर्द्धमानपुत्रस्य। तन्तुमती नाम काचित् रमणी, तस्या नन्दनस्य तद्गर्भजस्य।

(म) अनर्घः अमूल्यः, राघवो रामः, रामचरितमिति यावत् यत्र तथोक्तम्।

(य) तत् नाटकम्। प्रयुञ्जानाः अभिनयन्तः। सामाजिकान् सभ्यान्, सहृदयानिति यावत्। उपास्महे आराधयामः।

रमणीया खल्वियं सामग्री परिषदाराधनस्य (र)। यतः,—

मद्वर्ग्या रसपाठगीतिगतिषु प्रत्येकमुत्कर्षिणो
मौद्गल्यस्य कवेर्गभीरमधुरोद्गारा गिरां व्यूतयः।
धीरोदात्तगुणोत्तरो रघुपतिः काव्यार्थबीजं मुनि-
र्वाल्मीकिः फलति स्म यस्य चरितस्तोत्राय दिव्या गिरः॥८॥

अयं तु प्राचेतसीयं कथावस्तु बहुभिः प्रणीतमपि प्रयुञ्जानो नापराध्यति श्रोत्रियपुत्रः (ल)। पश्य—

यदि क्षुण्णं पूर्वैरिति जहति रामस्य चरितं
गुणैरेतावद्भिर्जगति पुनरन्यो जयति कः?

---

(र) सामग्री उपकरणम्। परिषदाराधनस्य सभ्यजनतोषविधानस्य।

मद्वर्ग्या इति।—मम वर्ग्याः सम्प्रदायभुक्ता जनाः, प्रत्येकम् एकैकम्, रसपाठः रसयुक्तः पठ्यते इति पाठः सन्दर्भः, सुललितरचनाविशेष इत्यर्थः, तस्य गीतिः सङ्गीतं, तस्या गतिषु पद्धतिषु, उत्कर्षिणः उत्कर्षवन्तः, पारदर्शिन इत्यर्थः, मौद्गल्यस्य मौद्गल्यगोत्रसम्भूतस्य, कवेः मुरारेः, गिरां वाचां, व्यूतयः रचनाः, गभीरः अर्थगुरुः, मधुरः मनोहरश्च, उद्गारः उक्तिः यासु तथाभूताः, तथा काव्यार्थस्य नाटकीयवस्तुनः, बीजं मूलं, मूलभूत इत्यर्थः, रघुपतिः रामः, धीरोदात्तस्य "अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः। स्थेयान् निगूढमानो धीरोदात्तो दृढव्रतः कथितः॥" इति दर्पणोक्तलक्षणकस्य नायकभेदस्य, गुणैः अविकत्थनत्वादिभिः, उत्तरः भूयान्, वाल्मीकिः यस्य रघुपतेः, चरितस्तोत्राय चरितकीर्त्तनाय, दिव्याः संस्कृताः, गिरः वाचः, फलति स्म उत्पादयामास, उद्भावयामासेत्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥ ८॥

(ल) प्राचेतसीयं प्रचेताः वरुणः, "प्रचेता वरुणः पाशी" इत्यमरः, तस्यापत्यं पुमान् प्राचेतसः वाल्मीकिः, तस्य इदं तत्सम्बन्धि तत्प्रणीतं वा, कथावस्तु कथारूपमितिवृत्तं, बहुभिः कालिदास-भवभूत्यादिभिः, प्रणीतमपि विरचितमपि, प्रयुञ्जानः अभिनयमार्गेण विरचयन्। श्रोत्रियपुत्रः छान्दसात्मजः, वेदविद्ब्राह्मणतनयः इत्यर्थः, "श्रोत्रियच्छान्दसौ समौ" इत्यमरः; न अपराध्यति न दोषमर्हतीत्यर्थः।

यदीति।—पूर्वैः प्राचीनैः पण्डितैः वाल्मीकिप्रभृतिभिः, क्षुण्णं लेखनीमुखेन

स्वमात्मानं तत्तद्गुणगरिमगम्भीरमधुर-
स्फुरद्वाग्ब्रह्माणः कथमुपकरिष्यन्ति कवयः ? ॥ ९ ॥

उपक्रममाणश्च स कविः स्वनिर्भासशब्दब्रह्माणमाचार्यं प्राचेतसं गिरं च देवतामेवमुपश्लोकितवान् ( व )—

तमृषिं मनुष्यलोकप्रवेशविश्रामशाखिनं वाचाम् ।
सुरलोकादवतारप्रान्तरखेदच्छिदं वन्दे ॥ १० ॥

---

उत्कीर्णं, विरचितमिति यावत्, इति शेषः, रामस्य चरितं, मत्प्रणीतमिति शेषः, यदि जडति त्यजन्ति, लोका इति शेषः, तदा तत्तद्गुणाना "रसस्याङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा। गुणा माधुर्यमोजोऽथ प्रसाद इति ते त्रिधा ॥" इति दर्पणोक्त-माधुर्यौज-प्रसादादीना, गरिमणा गुरुत्वेन, गम्भीरं गभीरार्थक, मधुरं हृद्यञ्च यथा तथा, स्फुरत् प्रकाशं गच्छत्, वाग्ब्रह्म शब्दरूपं ब्रह्म येषां तथाभूताः, कवयः काव्यप्रणेतारः स्वम् आत्मानं निजस्वरूपमित्यर्थं, कथं केन प्रकारेण, उपकरिष्यन्ति ? प्रतिपत्तिरूपामुपकारं नेष्यन्ति ? नैव नेतुं शक्ष्यन्तीत्यर्थः, कः पुनः अन्यः, पुमानिति शेषः, जगति एतावद्भिः गुणैः पूर्वोक्तैः काव्यगुणैः, माधुर्यादिगुणवत्काव्यरचनैरित्यर्थः, जयति ? उत्कर्षं लभते ? न कोऽपीत्यर्थः; तस्मात् रामचरितस्य पूर्वकविभिः कृतत्वेऽपि तथाविधगुणसम्पन्नं काव्यं समादरणीयमिति तात्पर्यम् । शिखरिणीवृत्तं —"रसैरुद्रैश्छिन्ना य-म-न-स-भ ला गः शिखरिणी" इति लक्षणात् ॥ ९ ॥

( व ) उपक्रममाणः आरभमाणः । स्वनिर्भासेति ।—स्वस्मिन् निर्भासते स्वतः स्फुरतीति तथोक्तं, शब्दब्रह्म यस्य तथाभूतम् । आचार्यं गुरुं, काव्यप्रणेतॄणामिति भावः । प्राचेतसं वाल्मीकिम् । गिरं देवतां वाग्देवीमित्यर्थः । उपश्लोकितवान् श्लोकेन स्तुतवानित्यर्थः ।

तमिति ।—वाचां देववाणीनां, मनुष्यलोके मर्त्यभूमौ, यः प्रवेशः समागमः, तस्मिन् विश्रामशाखी श्रमापहतरुः तं, विश्रामकरणार्थं वृक्षतुल्यमित्यर्थः, तथा सुरलोकात् स्वर्गात्, यः अवतारः अवतरणं, तस्मिन् अवतरणकाले इत्यर्थः, प्रान्तरे शून्यवर्त्मनीत्यर्थः, यः खेदः निरवलम्बनतया क्लेशः, तं छिनत्तीति तथोक्तम् आश्रयदानात् तत्क्लेशापहारिणमिति यावत्, तं प्रसिद्धम्, ऋषिं वाल्मीकिमित्यर्थः, वन्दे प्रणमामि । आर्या वृत्तम् ॥ १० ॥

धातुश्चतुर्मुखीकण्ठशृङ्गाटकविहारिणीम्।
नित्यं प्रगल्भवाचालामुपतिष्ठे सरस्वतीम्॥ ११॥

नटः। (सहर्षम्)। भाव! तत् प्रस्तूयताम्। अस्य हि मौद्गल्यानां ब्रह्मर्षीणामन्वयमूर्द्धन्यस्य (अ) मुरारिनामधेयस्य बालवाल्मीकेर्वाङ्मयममृतबिन्दुनिष्यन्दि कन्दलयति (ब) कौतुकं मे।

सूत्रधारः। मारिष! स्थाने (स) भवतः कुतूहलमीदृशमेवैतत्। तथा हि—

तत्तादृगुज्ज्वलककुत्स्थकुलप्रशस्ति-
सौरभ्यनिर्भरगभीरमनोहराणि।

---

धातुरिति।—धातुः ब्रह्मणः, चतुर्णां मुखानां समाहारः चतुर्मुखी मुखचतुष्टयमित्यर्थः, तस्याः कण्ठाः एव शृङ्गाटकानि चत्वारः पन्थानः, "शृङ्गाटकचतुष्पथे" इत्यमरः, तेषु विहारिणीं सततसञ्चारिणीं, प्रगल्भा च वाचाला च तां समुद्धतवाग्वादिनीमित्यर्थः, सरस्वतीं नित्यं सततम्, उपतिष्ठे मन्त्रेणाराधयामीत्यर्थः। मन्त्रकरणकोपपूर्वकात्तिष्ठतेरात्मनेपदम्॥ ११॥

(अ) मौद्गल्यानां मौद्गल्यगोत्रसम्भूतानाम्। अन्वयमूर्द्धन्यस्य वंशश्रेष्ठस्येति भावः।

(ब) बालवाल्मीकेः नवावतारवाल्मीकेः। वाङ्मयं काव्यम्। अमृतबिन्दुनिष्यन्दि सुधाबिन्दुवर्षीत्यर्थः। कन्दलयति जनयतीत्यर्थः।

(स) स्थाने योग्यविषये युक्तं वा, "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः।

तदिति।—तत् प्रसिद्धं, तादृशम् असाधारणमिति यावत्, उज्ज्वलं दीप्यमानं, यत् ककुत्स्थकुलं तन्नामराज्ञो वंशः, पुरा पुरञ्जयो नाम कश्चित् इक्ष्वाकुवंशीयः नृपतिरासीत्। तमेकदा देवाः समागत्य असुरजयाय अनुरुरुधुः। स च तानब्रवीत्, यदि शतक्रतुः वृषरूपः मां सङ्ग्रामभूमिं नयति तदाऽहं तेषामसुराणां जयाय यास्यामीति। देवाश्च शक्रमुपेत्य तथैवोचुः। स च देवेन्द्रः वृषरूपमास्थाय तं राजानमसुरजयार्थं रणभूमिमनयत्। स राजा तस्य वृषरूपस्येन्द्रस्य ककुदि समास्थाय असुरान् जिगाय। ततश्चास्य ककुत्स्थ इति, तद्वंशीयानाञ्च काकुत्स्था इति प्रसिद्धिरिति पुराणवार्त्ता; तस्य या प्रशस्तिः चरितकीर्त्तनेन प्रशंसा, तस्याः सौरभस्य

वाल्मीकिवागमृतकूपनिपानलक्ष्मी-
मेतानि बिभ्रति मुरारिकवेर्वचांसि ॥ १२ ॥

( नेपथ्ये गीयते )।

दिणअरकिरणुक्केरो पिआअरो कोऽवि जीअलोअस्स।
कमलमउलंकवालोकिअमहुअरकड्ढणविअड्ढो * ॥ १३ ॥

सूत्रधारः। ( आकर्ण्य )। कथमुपक्रान्तमेव (ख) नर्त्तकैः, यदियं दशरथोत्सङ्गात् (क) रामभद्राकर्षिणो विश्वामित्रस्य

* दिनकरकिरणोत्करः प्रिया(य)करः कोऽपि जीवलोकस्य।
कमलमुकुलाङ्कपालीकृतमधुकरकर्षणविदग्धः ॥ इति संस्कृतम्।

सुरभिताया:, कमनीयताया वा, ख्यातेर्वा, "सुरभिः सुगन्धि-कान्तयोस्त्रिषु। विख्याते—" इति मेदिनी ; निर्भरेण अतिशयेन, गभीराणि महान्ति, मनोहराणि च एतानि मुरारिकवेः वचांसि वाल्मीके: वागेव रामायणमेवेत्यर्थः, अमृतकूप तस्य निपानं तदमृतपानार्थं तत्समीपे कृतजलाधारविशेषः, "आहावस्तु निपानं स्यादुपकूप-जलाशये" इत्यमरः, तस्य लक्ष्मीं शोभा, बिभ्रति भजन्ते। अत्रान्यस्य धर्म्म अन्यत्रो वहन्तीति निपानस्य मुरारिवचसश्च विम्ब-प्रतिविम्बभावात् निदर्शनाऽलङ्कारः, तदुक्तं दर्पणे—"सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वाऽपि कुत्रचित्। यत्र विम्बानुविम्बत्वं बोधयेत् सा निदर्शना ॥" इति। वसन्ततिलकं वृत्त, "ज्ञेयं वसन्ततिलकं त-भ-जा ज गौ गः" इति तल्लक्षणात् ॥ १२ ॥

दिनकरेति।—दिनकरस्य सूर्य्यस्य, किरणोत्करः तेजोराशिः, तत्स्वरूप इत्यर्थः, जीवलोकस्य संसारस्य, प्रियाकरः प्रियस्य प्रियानुष्ठानस्य, आकरः खनिस्वरूपः, आश्रयभूत इत्यर्थः, प्रियानुष्ठाता इति यावत् ; "प्रियकरः" इति वा संस्कृतं, तथात्वे हितकरः इत्यर्थः, कमलमुकुलेन पद्मकलिकया, अङ्कपालीकृतः क्रोडनिहितः, स्वस्य अभ्यन्तरे आवद्धीकृत इत्यर्थः, यः मधुकरः भ्रमरः, तस्य कर्षणे तत्क्रोडात् हरणे इति यावत्, विदग्धः दक्षः, कोऽपि अनिर्वचनीयप्रभावसम्पन्नः पुरुष इति भावः, दृश्यते इति शेषः ॥ १३ ॥

(ख) उपक्रान्तं प्रारब्धम्।

(क) दशरथोत्सङ्गात् दशरथक्रोडात्।

प्रावेशिकी ध्रुवा (ख)। (पुरोऽवलोक्य सहर्षम्)। अये! कथम्!! अत्रैव तत्रभवतः कमलयोनिजन्मनो मुनेरायतनात् (ग) प्रतिनिवृत्तेन ऋत्विजा (घ) वामदेवेन किमपि तद्वाचिकम् (ङ) अभिधीयमानो महाराजो दशरथस्तिष्ठति। तदेहि, न द्वयोस्तृतीयेन भवितव्यम्, (च) इत्यावामप्यनन्तरकरणीयाय (छ) सज्जीभवावः। (इति निष्क्रान्तौ)।

प्रस्तावना। (ज)

(ततः प्रविशति यथोपदिष्टो दशरथो वामदेवश्च)।

दशरथः। अहो!! बहुधा श्रुतमपि भगवतो वशिष्ठस्यानुशासनं (झ) नवं नवमिव प्रमोदयति माम्।

---

(ख) प्रावेशिकी प्रवेशसूचिका। ध्रुवा गीतिविशेषः; सा च पञ्चधा; यदाह भरतः,—"ध्रुवा तु गीतिभेदोऽयमिति; प्रावेशिकी निष्क्रामकी परिक्रामण्यवस्थितिः। अत्यापनी तु पञ्चम्यो ध्रुवा नाट्यार्थसिद्धये॥ तत्र प्रावेशिकी ज्ञेया प्रवेशे नाटयोगतः॥" इति च।

(ग) कमलयोनिजन्मनः ब्रह्मणो मानसपुत्रस्य। मुनेः वशिष्ठस्येत्यर्थः। आयतनात् आश्रमात्।

(घ) ऋत्विजा पुरोहितेन।

(ङ) वाचिकं सन्देशवचनं, "सन्देशवाक् वाचिकं स्यात्" इत्यमरः।

(च) द्वयोः परस्परं कथयतोः वामदेव दशरथयोरित्यर्थः। तृतीयेन, जनेनेति शेषः। न भवितव्यं न तत्र गन्तव्यमिति यावत्, उभयोर्विश्रम्भालापस्य व्याघातसम्भवादिति भावः।

(छ) अनन्तरकरणीयाय अतःपरं कर्तव्यानुष्ठानाय।

(ज) प्रस्तावना प्रस्तावयति सूचयति नाटकीयवस्तु अनयेति व्युत्पत्त्या प्रस्तुतसूचिका मिथः सम्भाषणा इत्यर्थः। तदुक्तं दर्पणे—"नटी विदूषको वाऽपि पारिपार्श्विक एव वा। सूत्रधारेण सहिताः संलापं यत्र कुर्वते॥ चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा॥" इति।

(झ) अनुशासनम् उपदेशवचनम्।

वामदेवः ।—

मधुकैटभदानवेन्द्रमेदःप्लवविस्रा विषमेव मेदिनीयम् ।
अधिवास्य यदि स्वकैर्यशोभिश्चिरमेनामुपभुञ्जते नरेन्द्राः ॥ १४ ॥

दशरथः । (सविमर्शस्मितम्) । सखे वामदेव ।—

तस्याज्ञयैव परिपालयतः प्रजा मे
कर्णोपकण्ठपलितच्छलतो जरेयम् ।
यद्गर्भरूपमिव मामनुशास्ति सर्व-
मद्यापि तन्मयि गुरोर्गुरुपक्षपातः ॥ १५ ॥

मधुकैटभेति ।—मधुश्च कैटभश्च तयोः तदाख्ययोः, दानवेन्द्रयोः दैत्यराजयोः, मेदसा वसया, "स्यान्मेदस्तु वपा वसा" इत्यमरः ; प्लवेन आप्लवनेन, आच्छादितत्वेनेत्यर्थः, पूरणेन इति यावत्, विस्रा आमगन्धवती, "विस्रं स्यादामगन्धि यत्" इत्यमरः, अत एव मेदिनी मेदोबहुला, मेदोयोगादिति भाव, इयं पृथिवी, विषमेव अभोग्यैवेत्यर्थः, दौर्गन्ध्यादिति भावः, अत वासे लोकानां शरीरेषु विविधदुष्कृतयोगात् दुर्गन्ध एव वासते इति तात्पर्य्यम्, यदि पक्षान्तरे, अथवा दौर्गन्ध्यात् वासायोग्ये ऽपीत्यर्थः, यदा—यदि सम्भावनायाम्, मन्ये इत्यर्थः, नरेन्द्राः राजानः, स्वकैः स्वकीयैः, यशोभिः कीर्त्तिभिः, प्रजारक्षणजनितैरिति भावः, एनां मेदिनीम्, अधिवास्य यशः-सौरभैः संस्कृत्य, "संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम्" इत्यमरः, चिरं दीर्घकालम् उपभुञ्जते, वासायोग्यामपि इमां नरेन्द्रा एव स्वकीययशःसौरभैः सुरभिं कृत्वा वासयोग्यां कुर्वन्ति उपभुञ्जते च, अतः सर्वैरेव यशः सुष्ठु आचरितव्यमिति तात्पर्य्यम् ॥ १४ ॥

तस्येति ।—तस्य गुरोः, आज्ञयैव आदेशेनैव, प्रजाः परिपालयतः परिरक्षतः, मे मम, इयं जरा वार्द्धकं, कर्णोपकण्ठयोः कर्णसमीपस्थप्रदेशयोः, तत्रत्यकेश-निचयानामित्यर्थः, "समीपे निकटासन्न···उपकण्ठान्तिकाभ्यर्णाभ्यग्रा—" इत्यमरः ; पलितच्छलतो जराजनितशौक्ल्यव्याजेनेत्यर्थः, कर्णान्तवर्त्तिनः केशनिचयाः परिपक्वा इति भावः, "पलितं जरसा शौक्ल्यं केशादौ" इत्यमरः, आशैशवं वार्द्धकं यावत् तदाज्ञयैव प्रजाः पालयामीति निष्कर्षः, अद्यापि गुरुः वशिष्ठः, गर्भरूपमिव शिशुं स्तनन्धयमिव, मां सर्वम् अनुशास्ति उपदिशति, इति यत् तत् मयि गुरोर्महान्, पक्षपातः स्नेहो यस्य तादृशः, इति मन्ये इति शेषः । वसन्ततिलकं वृत्तम् ॥ १५ ॥

वामदेवः । महाराज ! किमुच्यते, समानवृत्तेरपि क्वचिदेव कस्यचित्तारामैत्रकम् ( ञ ) । तथा हि, स तत्रभवान्—

साधारणो रघूणां गुरुर्भवन्नपि विशेषदृष्टिस्ते ।
नामोदयति कमिन्दुः ? कुमुदं पुनरस्य सर्वस्वम् ॥ १६ ॥

दशरथः । वामदेव ! मम हि गुरुवचनश्रवणतृष्णामङ्कुशी-करोति ( ट ) श्रोत्रवृत्तिरिन्द्रियान्तरानुसारिणी ( ठ ) हृदय-महागजस्य ; तत्र किञ्चिदपरम् ( ड ) अवशिष्यते ?

वामदेवः । महाराज ! निःशेषमभिहितम् । इमां तु सर्वसन्देहसङ्क्षेपकारिकां कारिकाम् ( ढ ) अतिप्रयत्नेन भगवान् भवन्तमनुस्मारयति । ( ण )

---

( ञ ) समानवृत्तेः समाना साधारणी वृत्तिः व्यापारः, अनुशासनरूप इत्यर्थः, यस्य तथाभूतस्यापि, सर्वेषु जनेषु समदर्शिनोऽपीत्यर्थः, कस्यचित् जनस्य, क्वचिदेव जने, तारामैत्रकं स्वतःसिद्धा चक्षुःप्रीतिः, नक्षत्रयोगकृता प्रीतिर्वा । "अक्षिपुत्र्याञ्च नक्षत्रे तारोक्ता वालुयोरिति" इति विश्वः ।

साधारण इति ।—रघूणां रघुवंशीयानां, साधारणः तुल्यरूपः, गुरुः भवन्नपि ते तव, त्वयीत्यर्थः, सम्बन्धविवक्षया षष्ठी , विशेषदृष्टिः अत्यन्तमनुरागीत्यर्थः ; तथा हि, इन्दुश्चन्द्रः, कं जनं, न आमोदयति ? न प्रीणयति ? सर्वमेव आमोदयतीत्यर्थः, पुनः किन्तु, कुमुदं कैरवम्, अस्य इन्दोः, सर्वस्वं परमप्रियमिति भावः । प्रतिवस्तूपमाऽलङ्कारः । तदुक्तं दर्पणे—"प्रतिवस्तूपमा सा स्यात् वाक्ययोर्गम्य-साम्ययोः । एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक् ॥" इति । आर्य्यावृत्तं—"यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये पञ्चदश चतुर्थके साऽऽर्य्या ॥" इति तल्लक्षणात् ॥ १६ ॥

( ट ) गुरुवचनेति ।—गुरुवचनस्य, श्रवणे या तृष्णा लालसा, आग्रह इति यावत् ताम् । अङ्कुशीकरोति अनङ्कुशम् अङ्कुशं हस्तिशासनदण्डविशेषं तादृशं करोति ।

( ठ ) इन्द्रियान्तरानुसारिणः इन्द्रियान्तरं श्रोत्रव्यतिरिक्तं चक्षुरादिकम्, अनु-सरति अनुधावतीति तथोक्तस्य ।

( ड ) अपरम् अन्यत्, वक्तव्यमिति शेषः ।

( ढ ) सर्वेति ।—सर्वेषां सन्देहानां वाचिकानां, सङ्क्षेपः सङ्क्षेपः, तस्य कारिकां कारणीं कारिकां श्लोकं, "कारिका तु कृतौ श्लोके" इति विश्वः ।

दशरथः । (सादरम्) । अवहितोऽस्मि । किमाज्ञापयति ?

वामदेवः ।—

हुतमिष्टं च तप्तं च धर्मश्चायं कुलस्य ते ।
गृहात् प्रतिनिवर्त्तन्ते पूर्णकामा यदर्थिनः ॥ १७ ॥

दशरथः । (सहर्षम्) । सुष्ठु, शिरसि कृतमाचार्य्यवचनम् ।

किञ्च—

अस्मद्गोत्रमहत्तरः क्रतुभुजामद्यायमाद्यो रवि-
र्यज्वानो वयमद्य ते भगवती भूरद्य राजन्वती ।
अद्य स्वं बहु मन्यते सहचरैरस्माभिराखण्डलो
येनैतावदरुन्धतीपतिरपि स्वेनानुगृह्णाति नः ॥ १८ ॥

---

(च) अनुधारयति स्मृतिविषयं प्रापयति, स्मृतिपथं नेतुमनुकूलयतीत्यर्थः ।

हुतमिति ।—अर्थिनः याचकाः, पूर्णकामाः सफलमनोरथाः सन्तः, गृहात् राजभवनात्, प्रतिनिवर्त्तन्ते प्रतिगच्छन्ति, इति यत्, एतत् ते तव, कुलस्य वंशस्य, हुतं "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् होमः इत्यर्थः, देवोद्देशेन अग्नौ हव्यप्रक्षेपः इति यावत्, एवम् "इष्टं" "तप्तम्" इत्यत्रापि बोद्धव्यम्, इष्टम् अग्निहोत्रादिकः क्रतुः, तप्तं तपश्चरणम्, अयं धर्मश्च अवश्यकर्त्तव्यः कार्य्यविशेषश्च । यद्वा—हुतं होमः कृतः, इष्टं यागोऽनुष्ठितः, तप्तं तपश्चरणं कृतं, अभवन्निति शेषः, न किन्तु, ते कुलस्य अयं धर्मः विशेषतः, यत् अर्थिनः पूर्णकामाः गृहात् प्रतिनिवर्त्तन्ते इति । अनुष्टुब्वृत्तम् ॥ १७ ॥

अस्मदिति ।—अद्य अस्माकं गोत्रस्य वंशस्य, महत्तरः अतिमहान्, आदिपुरुष इत्यर्थः, रविः सूर्यः, क्रतुभुजां देवानाम्, आद्यः श्रेष्ठः, अभूदिति शेषः । वयम् अद्य ते यज्वानः विधिना कृतयज्ञाः, अभूमेति शेषः, "यज्वा तु विधिनेष्टवान्" इत्यमरः, अद्य भगवती भूः पृथिवी, राजन्वती शोभनराजशालिनीत्यर्थः, "सुराज्ञि देशे राजन्वान्" इत्यमरः ; अद्य आखण्डलः इन्द्रः, अस्माभिः सहचरैः, स्वं स्वपतिपाल्यं, त्रिलोकीराज्यमिति यावत् बहु मन्यते समधिकमाद्रियते इत्यर्थः, येन हेतुना अरुन्धती-पतिः वशिष्ठोऽपि, स्वेन आत्मना, स्वयमित्यर्थः, नः अस्मान्, एतावत् समधिकमिति भावः, अनुगृह्णाति, उपदेशदानेनेति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

वामदेवः। राजर्षे! सहजानुभावगम्भीरमहिमानो (त) यूय-मेव तादृशाय यशसे। (थ) वयं तु केवलमुपदेष्टारः,—

उन्मुद्रयति हि कुमुदाकरमशरन्निशानिशातनिस्तुषोऽपि
तुषारकिरणः।
स पुनः किमुच्यते भगवान् द्वितीयपरमेष्ठी वशिष्ठः?॥ १९॥

अपि च—

इदं वो याज्यानामुदितमुदितं यत् कुलमभूत्
यदिष्टं वा कुर्वन्नकृत सगरः पूर्त्तमुदधिम्।
असौ पूर्वेषां ते सुचरितपताका यदमर-
स्रवन्ती कृत्स्नोऽयं त्रिभुवनगुरोस्तस्य विभवः॥ २०॥

---

(त) सहजेति।—सहजः स्वाभाविकः, यः अनुभावः प्रभावः, तेन गम्भीरः दुरवगाहः, महिमा माहात्म्यं येषां तथाविधाः।

(थ) यशसे तत्तत्सुकृतानुष्ठानजनितकीर्त्तये, प्रभवथेति शेषः।

उन्मुद्रयतीति।—शरदः शरत्कालस्य, निशा रात्रिः, तया निशातः तेजितः, समुज्ज्वल इत्यर्थः, तथा निस्तुषः निरावरणः, निर्मल इति यावत्, स न भवतीति अशरन्निशानिशातनिस्तुषः अपि वर्षाकालीनोऽपीति भावः, तुषारकिरणः शीतरश्मिः, चन्द्र इत्यर्थः, कुमुदाकरं कैरवनिचयं, तदाधारजलाशयं वा, उन्मुद्रयति हि विकाशयत्येव, सः पुनः द्वितीयपरमेष्ठी अपरो ब्रह्मा, वशिष्ठः कुः पृथिवी, तस्याः मुदः आनन्दस्य, आकरः आश्रयं त्वं भवन्तमिति भावः, उन्मुद्रयतीति किम् उच्यते? किं कथ्यते? अत्र किं वक्तव्यमिति भावः। शीतरश्मेस्तु कदाचित् मलिनता कदाचिन्निर्मलता च अस्य तु भगवतः सदैव निर्मलत्वमित्याशयेन द्वितीयपरमेष्ठीत्युक्तम्। कुमुदाकरं वृत्तम्—"एकादशभिर्वर्णैरष्टादशभिः क्रमादुभौ पादौ। तत् कुमुदाकरवृत्तं चरमौ तु दशाक्षरौ यस्य॥" इति तल्लक्षणात्॥ १९॥

इदमिति।—याज्यानां यजमानानां वः युष्माकम्, इदं कुलम् उदितम् उदि-तम् अतिशयेन उदितं, वर्द्धितमित्यर्थः उदितं मुदितञ्चेति उदितमुदितं वा अभूत् इति यत्, वा अथवा, इष्टं यज्ञं, कुर्वन् सगरः उदधिं समुद्रं, पूर्त्तं खातं, "पूर्त्तं त्रिषु पूरिते स्यात् क्लीबे खातादिकं मतम्" इति मेदिनी, अकृत खातवानिति यत्, ते तव, पूर्वेषां पूर्वपुरुषाणां सुचरितपताका सत्कार्य्य वैजयन्तीस्वरूपेत्यर्थः, असौ

किञ्च—

कौशिकस्वीकृतस्यापि यदाज्ञाऽतिक्रमादभूत्।
त्रिशङ्कोरुपभोगाय न द्यौरपि न भूरपि ॥ २१ ॥

(प्रविश्य)।

प्रतीहारी। जयतु जयतु देवः। देव! भगवान् कौशिको द्वारमध्यास्ते।

दशरथः। (ससम्भ्रमम्)। किं कौशिकः!!

वामदेवः। अहं तमुपेत्य श्रौतेन (द) विधिना पुरस्कृत्य (ध) प्रवेशयामि तपोनिधिम्। (इति प्रतीहार्य्या सह निष्क्रान्तः)।

दशरथः। (सहर्षम्)—

यः क्षत्रदेहं परितक्ष्य टङ्कैस्तपोमयैर्ब्राह्मणमुच्चकार।
परोरजोभिः स्वगुणैरगाधः स गाधिपुत्रोऽपि गृहानुपैति ॥ २२ ॥

---

अमरस्रवन्ती सुरनदी, मन्दाकिनीत्यर्थः, "अथ नदी सरित्। स्रवन्ती निम्नगाऽऽपगा" इत्यमरः; इति यत् अय कृत्स्नः समयः, तस्य प्रसिद्धस्य, त्रिभुवनगुरोः वशिष्ठस्य, विभवः प्रभावः; वशिष्ठप्रभावेणैव तव पूर्वपुरुषाः तादृशानि महान्ति कर्माणि साधयामासुरिति तात्पर्य्यम्। शिखरिणी वृत्तम् ॥ २० ॥

कौशिकेति।—यस्य वशिष्ठस्य, आज्ञाऽतिक्रमात् आदेशलङ्घनात् हेतोः, कौशिकेन विश्वामित्रेण, स्वीकृतस्य त्वां सशरीरं स्वर्गं प्रेषयिष्यामीति अङ्गीकृतस्यापि, त्रिशङ्कोः तदाख्यनरपतेः, द्यौरपि स्वर्गोऽपि, न, भूरपि भूमिरपि, उपभोगाय आश्रयाय, न अभूत्। अनुष्टुब्वृत्तम् ॥ २१ ॥

(द) श्रौतेन श्रुतिर्वेदः तद्विहितेन।

(ध) पुरस्कृत्य परितोष्य, अग्रेकृत्य इति वा।

य इति।—यः तपोमयैः टङ्कैः पाषाणविदारकास्त्रभेदैः, "टङ्कः पाषाणदारणः" इत्यमरः, क्षत्रदेहं परितक्ष्य तनूकृत्य, खण्डीकृत्येत्यर्थः, विशोध्य इति भावः, ब्राह्मणं ब्रह्मसम्बन्धि, देहमिति शेषः, उच्चकार उच्चैः कृतवान्, ब्राह्मणं देहं बहुमेने इत्यर्थः, अत्यन्तब्रह्मतेजःपूर्णं चकारेति यावत्, परोरजोभिः रजोगुणात् परैः, रजोगुणातिशायिभिरित्यर्थः, स्वगुणैः निजैः सात्त्विकैः गुणैरित्यर्थः, अगाधः अतल-

( ततः प्रविशति वामदेवोपदिश्यमानवर्त्मा विश्वामित्रः )।

विश्वामित्रः। सखे वामदेव! त्वमधुनैव वशिष्ठाश्रमादागतोऽसि। कच्चित् कुशली तावदरुन्धतीनाम्ना पतिव्रतामयेन ज्योतिषा सहचरितधर्मा ( न ) तत्रभवान् मैत्रावरुणिः ( प )।

वामदेव.। विशेषेण ( फ ) पुनरद्य याज्यकुलमुपतिष्ठमाने ( ब ) चिरन्तनप्रणयिनि कौशिके।

विश्वामित्रः। सखे वामदेव! चिरेण दशरथो द्रष्टव्य इति सर्वमनोरथानामुपरि वर्त्तामहे।

वामदेवः। ( सविनयम् )। भगवन् कुशिकनन्दन! धन्यः खल्वयं राजा सावित्रः, ( भ ) यमेवमनुरुध्यन्ते ( म ) भवन्तोऽपि।

विश्वामित्रः। सखे! धन्य एवायं—

नमन्नृपतिमण्डलीमुकुटचन्द्रिकादुर्दिन-
स्फुरच्चरणपल्लवप्रतिपदोक्तदोःसम्पदा।

---

स्पर्शः, दुरवगाह इत्यर्थः, स गाधिपुत्रः विश्वामित्रः अपि, गृहान्, ममेति शेषः, उपैति आगच्छति, अहो। महाभाग्य ममेति भावः॥ २२॥

( न ) सहचरितः सहानुष्ठितः, धर्मः येन तथाभूतः, "सस्त्रीको धर्ममाचरेत्" इति शास्त्रादिति भावः।

( प ) मैत्रावरुणिः मित्रस्य वरुणस्य तयोरपत्यं पुमान् मैत्रावरुणिः। पुरा ब्रह्ममानसजनितं देहमपहाय तपस्यतोर्मित्रावरुणयोस्तेजसा ऊर्वशीगर्भे सम्भूत इति पुराणात् मैत्रावरुणीति सञ्ज्ञाबीजं ज्ञातव्यम्।

( फ ) विशेषेण कुशलीति शेषः।

( ब ) याज्यकुलं याज्यस्य यजमानस्य दशरथस्य, कुलं गृहमित्यर्थः। उपतिष्ठमाने समागच्छतीत्यर्थः।

( भ ) सावित्रः सूर्य्यवंशीयः।

( म ) अनुरुध्यन्ते अभिनन्दन्ति।

नमदिति।—नमन्ती प्रणिपतन्ती, या नृपतिमण्डली राजचक्रं, तस्याः मुकुटानां

अनेन सृष्टजितरां तुरगमेधमुक्ताभ्रम-
त्तुरङ्गखुरचन्द्रकप्रकरदन्तुरा मेदिनी ॥ २३ ॥

( पुरोऽवलोक्य सहर्षम् )—

चिरादक्ष्णोर्जाड्यं शमयति समस्तासुरवधू-
कचाकृष्टिक्रीडाप्रसभसुभगम्भावुकभुजः।
त्रिलोकीजङ्घालोज्ज्वलसहजतेजा मनुकुल-
प्रसूतिः सुत्राम्णो विजयसहकृत्वा दशरथः ॥ २४ ॥

सखे वामदेव! इयमनेन पीयूषतुषारसीकरासारवर्षिणी सुजनसञ्चारकौतुकमिषलेखा पौरस्त्येनेव महता लोकनाथेन सहस्रशिखरीक्रियते (य)।

---

किरीटाना, चान्द्रकया ज्योत्स्नया, प्रमयेति यावत्, दुर्दिन मेघाच्छन्नमिति यावत्, तत् यथा तथा, स्फुरन् राजन्, यशश्चन्द्रपक्षव तेन प्रतिपदं पदे पदे, प्रतिक्षणमिति वा, छन्ना कथिता, प्रकटितेति यावत्, दीप्यत् बहुबलमन्त्राङ्क यस्य तथोक्तेन, सम्राजेति भाव, अनेन दशरथेन, मेदिनी पृथिवी, तुरगमेधेषु अश्वमेधेषु, मुक्तानाम् अभिमन्त्र्य विसृष्टानाम्, अत एव भ्रमतां सर्वासु दिक्षु विचरतां, तुरङ्गाणां खुर-चन्द्रकप्रकरः चन्द्रकलाकारखुरचिह्नसमूह, तेन दन्तुरा उन्नतानता, व्याप्तेति यावत्, सृष्टजितराम् अतिशयेन सृष्टजे, कृतेत्यर्थ। पृथ्वीवृत्तं, "ज-सौ ज-स-य-ला वसु-ग्रहयतिश्च पृथ्वी गुरुः" इति तल्लक्षणात् ॥ २३ ॥

चिरादिति।—समस्तानाम् असुराणां या वध्वः अङ्गनाः, तासां कचाकृष्ट्या केशाकर्षणेन या क्रीडा तया प्रसभं सततं, सुभगम्भावुकौ प्रीतिदौ, भुजौ बाहू यस्य तथोक्तः त्रिलोक्याः जङ्घालं प्रसरदिति भावः, उज्ज्वलं सहजं स्वाभाविकं, तेजः प्रतापः यस्य तथाभूतः मनुकुलं प्रसूतिः उद्भवः यस्य तथाविधः मनुवंशीय इत्यर्थः, सुत्राम्णः इन्द्रस्य, "सुत्रामा गोत्रभित् वज्री" इतीन्द्रपर्याये अमरः, विजये, असुराणामिति शेषः, सहकृत्वा सहकारी, दशरथः चिरात् बहुकालात् परम्, अक्ष्णोः नेत्रयोः जाड्यं जडतां, रमणीयदृश्याभावादिति भावः, शमयति निवारयति, अद्भुतो विश्वासघातीत्यर्थः, आनन्दयतीति भावः। शिखरिणी वृत्तम् ॥ २४ ॥

(य) पीयूषेति —पीयूषममृतमेव, तुषारं हिमं तस्य सीकराः कणाः, तेषाम् आसारवर्षिणी धारासारवर्षिणी सुजनानां सङ्गता, सभादि जनौ भाषते, यत्

वामदेवः। भगवन्! अद्य खलु दिलीपकुलकुशलकर्म-कल्पलतानामङ्कुरग्रन्थिभिः (र) उदोर्य्यन्ते किसलयानि, (ल) यदत्रभवानपि त्रिभुवनसनातनगुरुः (व) एवमस्मै नरेन्द्राय स्पृहयति (श)।

(इति परिक्रामतः)।

दशरथः। (सहर्षं ससम्भ्रममासनादुत्थायोपसृत्य च)। भगवन् कुशिकनन्दन! ऐक्ष्वाकः पङ्क्तिरथोऽभिवादयते (ष)।

विश्वामित्रः। स्वस्ति भवते (स) सपरिवाराय।

(इति सर्वे यथोचितमुपविशन्ति)।

दशरथः। (सप्रश्रयम्)। भगवन् विश्वामित्र!—

कच्चित् कान्तारभाजां भवति परिभवः कोऽपि शौवापदो वा?
प्रत्यूहेन क्रतूनां न खलु मखभुजो भुञ्जते वा हवींषि?।

---

कौतुकम् आनन्दः, तस्य सचेतसो घनस्य ओ, पौरस्त्येन पूर्वदिग्भवेन, महता वायुना इव, ऐक्ष्वाकेण नृपतिना दशरथेनेत्यर्थः, सहसाभिमुखीक्रियते सहसाभिमुखी क्रियते, दशरथस्य आत्माभिमुखकौतुकं भूयसा परिवर्द्धते इति भावः।

(र) दिलीपेति।—दिलीपस्य कुलं वंशः, तस्य कुशलकर्माणि कुशल-जनकानुष्ठानानि एव, कल्पलताः कल्पतरवः, तासाम् अङ्कुराः प्ररोहाः, तेषां ग्रन्थिभिः पर्वभिः।

(ल) किसलयानि नवपल्लवाः। उदोर्य्यन्ते उद्गाव्यन्ते।

(व) अत्रभवान् पूज्यः। त्रिभुवनेति।—त्रिभुवनस्य सनातनः चिरन्तनः, गुरुः आचार्य्यः, विश्वामित्र इत्यर्थः।

(श) स्पृहयति आकाङ्क्षति।

(ष) पङ्क्तिरथः पङ्क्तिः दश, दशसु दिक्षु गत इत्यर्थः, रथो यस्य सः दशरथः. "पङ्क्तिर्दशाक्षरच्छन्दो दशसंख्यादिषु स्त्रियाम्" इति मेदिनी; अभिवादयते प्रणमति।

(स) स्वस्ति शुभं, भूयादिति शेषः।

कच्चिदिति।—कान्तारभाजाम् अरण्यवासिनां, कोऽपि शौवापदः श्वापदकृतः, परिभवः तिरस्क्रिया, पीडेति यावत्, कच्चित् भवति वा? भवति किम्? मखभुजा

कर्त्तुं वा कश्चिदन्तर्वसति वसुमतीदक्षिणः सप्ततन्तुः ?
यत्सम्प्राप्तोऽसि ? किंवा रघुकुलतपसामीदृशोऽयं विवर्त्तः ॥ २५ ॥

विश्वामित्रः। (विहस्य)।—

जनयति त्वयि वीर ! दिशां पती-
नपि गृहाङ्गनमात्रकुटुम्बिनः।
रिपुरिति श्रुतिरेव न वास्तवी
प्रतिभयोन्नतिरस्तु कुतस्तु नः ? ॥ २६ ॥

अपि च—

---

यज्ञाश्रिनो देवाः, "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इत्यमरः; प्रत्यूहेन विघ्नेन, यज्ञस्येति शेषः, क्रतूनां यज्ञानां, हवींषि न खलु नैव, भुञ्जते वा ? वा अथवा, वसुमती पृथिवी, दक्षिणा यस्य तथाविधः, सप्ततन्तुः यज्ञः, (कर्त्तुं) कर्त्तुं करणाय, अन्तः मध्ये, वसति कश्चित् ? किम् ? यत् यतः, सम्प्राप्तः समागतः, असि ? भवसि ? किंवा रघुकुलतपसां रघुवंशोद्भवानां तपोऽनुष्ठानानाम्, ईदृशः अयं, विवर्त्तः ? परिपाकः ? रघुवंशीयानां तपःप्रभावेणैव भवादृशानां गृहागमनं सम्भवतीति भावः। स्रग्धरा वृत्तं, "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति लक्षणात् ॥ २५ ॥

जनयतीति।—हे वीर ! त्वयि भवति, दिशां पतीनपि दिक्पालानपि, नृपतीनपि इति वा, गृहाङ्गनमात्रे त्वदीयगृहप्राङ्गणे एव, कुटुम्बानि पोष्यवर्गाः, "कुटुम्बं पोष्यवर्गे च" इत्यमरमाला; एषां सन्तीति तादृशान् कुटुम्बिनः सपरिवारावस्थिता-निति यावत्, सततयज्ञानुष्ठानात् भयात् वेति भावः, जनयति कुर्वति सति, रिपुः शत्रुः, विघ्नकारीति भावः, अस्माकमिति शेषः, इति एवं, श्रुतिरेव शब्दमात्रमेवेत्यर्थः, वर्त्तते इति शेषः, वास्तवी तात्त्विकी न, विघ्न इति शब्दमात्रमेव वर्त्तते, परन्तु विघ्नकर्त्तां नामापि न श्रूयते इति भावः; नः अस्माकं, तु पुनः, प्रतिभयस्य भयङ्करस्य, भयहेतोः शत्रोरित्यर्थो वा, शत्रुभ्यः भयस्य इति वा, "भयङ्करं प्रतिभयम्" इत्यमरः, "प्रतिभयं भये भीष्मे" इति च हैमः, उन्नतिः वृद्धिः, कुतः अस्तु ? भवतु ? न कुतोऽपि भयस्यावकाश इति भावः। द्रुतविलम्बितं वृत्तं, "द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥ २६ ॥

दत्तेन्द्राभयविभ्रमाद्भुतभुजासम्भारगम्भीरया
त्वद्वृत्त्या शिथिलीकृतस्त्रिभुवनत्राणाय नारायणः ।
अन्तस्तोषतुषारसौरभमयश्वासानिलापूरण-
प्राणोत्तुङ्गभुजङ्गतल्पमधुना भद्रेण निद्रायते ॥ २७ ॥

दशरथः । (सवैलक्ष्यस्मितम्) (ङ) । भगवन् विश्वामित्र ! अभ्यमित्रीणस्य तत्रभवतः सुनासीरस्य नासीरपूरकेण पदाति-परमाणुना (क) मयाऽपि कदाचिदुद्धृतं धनुः, यन्मूलः (ख) अयमलौकिकलोकप्रवादो भवन्तमाप्याययति (ग) ।

दत्तेति ।—दत्तम् इन्द्राय अभयं येन तादृशः विभ्रमः विलासः यस्य तथाभूतः, अत एव अद्भुतः विस्मयजनकः अलौकिकः इति यावत्, यः भुजयोः बाहुयुगलस्य, "भुजा भुजः। द्वयोः बाहौ करे" इति मेदिनी, सम्भारः बलमित्यर्थः, तेन गम्भीरया उद्भटया, महत्या इति यावत्, तव वृत्त्या व्यापारेण, आचरणेनेत्यर्थः, पृथिवीपालनरूपेणेति यावत्, हेतुना त्रिभुवनस्य त्राणाय परिरक्षणार्थं, परिरक्षणे इति यावत्, शिथिलीकृतः शिथिलप्रयत्नीकृत इत्यर्थः, उपेक्षमाण इति भावः, नारायणः अधुना अन्तस्तोषेण आन्तरसन्तोषेण, तुषारः शीतलः, समुद्रसलिलेनेति भावः, सौरभमयः शोभनगन्धपूर्णः, नाभिस्थकमलसम्पर्कादिति भावः, यः श्वासानिलः निश्वासवायुः, नारायणस्येति शेषः, तेन आपूरणं परिपोषणं यस्य तथाभूतेन, प्राणेन तदाख्यवायुना, उत्तुङ्गः समुन्नतः, स्फीत इत्यर्थः, सर्पाणां वायुभुक्त्वादिति भावः, भुजङ्गः एव शेष एव, तल्पः शय्या यत्र तत् यथा तथा, भद्रेण सुखेन, निद्रायते स्वपिति । शार्दूलविक्रीडितं वृत्तम् ॥ २७ ॥

(ङ) सवैलक्ष्यस्मितं सलज्जमन्दहासम् ।

(क) अभ्यमित्रीणस्य अमित्रान् शत्रून्, अभिमुखं गतस्य सामर्थ्येन शत्रूणामभि-मुखं गच्छतः इत्यर्थः, "यो गच्छत्यलं विद्विषतः प्रति । सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्य मित्रीण इत्यपि ॥" इत्यमरः; सुनासीरस्य इन्द्रस्य, "वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः" इतीन्द्रपर्य्याये अमरः, नासीराणां सेनामुखानाम्, अग्रगामिसेनानां वा, "नासीरोऽग्रसरे" इति विश्वः; पूरकेण सङ्ख्यापूरकेण, सङ्ख्यावर्द्धकारिणेत्यर्थः, पदातिपरमाणुना क्षुद्रपदातिनेत्यर्थः ।

(ख) यन्मूलः यन्निबन्धनः ।

(ग) आप्याययति प्रीणयति ।

विश्वामित्रः। (सोत्प्रासस्मितम्)। सखे !—

त्रैलोक्याभयलग्नकेन भवता वीरेण विस्मारित-
स्तज्जीमूतमुहूर्त्तमद्भुतधनुःपाण्डित्यमाखण्डलः।
किञ्चाजस्रमखार्पितेन हविषा सम्फुल्लमांसोल्लस-
त्सर्वाङ्गीणवलीविलुप्तनयनव्यूहः कथं वर्त्तते ॥ २८ ॥

वामदेवः। महाराज भूकश्यप! यथाऽऽह भगवान् कौशिकः (घ)। स्वयमनेकधा सुधर्म्मायामध्यक्षीकृतम् (ङ) अहमपि ब्रवीमि—

त्वय्यर्द्धासनभाजि किन्नरगणोद्गीतैर्भवद्विक्रमै-
रन्तःसम्भृतमत्सरोऽपि भगवानाकारगुप्तौ कृती।

---

त्रैलोक्येति।—चातुर्वर्ण्यवत् स्वार्थे, त्रयाणां लोकानां समाहारः त्रिलोकी सा एव त्रैलोक्यं त्रिभुवनं, तस्य अभये निर्भयतायां, लग्नकेन प्रतिभूस्वरूपेण, वीरेण भवता तत् प्रसिद्धं, जीमूतस्य मेघस्य, मुहूर्त्तं क्षणिकं, अद्भुतम् आश्चर्य्यभूतं, यत् धनुः रामधनुरिति इन्द्रधनुरिति च नामकं, तस्मिन् पाण्डित्यं कौशलं, विस्मारितः, निष्प्रयोजनत्वात्तद्धनुर्ग्रहणस्येति भावः; किञ्च अपरञ्च, अजस्रम् अनवरतं, मखेषु यज्ञेषु, अर्पितेन दत्तेन, हविषा हवनीयद्रव्येण, सम्फुल्लं प्रवृद्धं, यत् मांसं तेन उल्लसन्ती उद्गच्छन्ती, या सर्वाङ्गीणा सर्वाङ्गव्यापिनी, वली चर्मसङ्कोचः, तया विलुप्तः विनष्टः, समाच्छन्न इति यावत्, नयनव्यूहः नेत्रसमूहः, सहस्रनयनानीति भावः यस्य तथाभूतः सन्, कथम् इत्यत्र इन्द्रेति पदमध्याहृत्य अन्वयः कर्त्तव्यः, कथमपि अतिकष्टेन, वर्त्तते। हविर्भुक्त्वात् अनवरतहविर्भोजनेन शरीरस्थौल्यं, तेन च वलीनां समुद्भवः, वलीभिश्च नेत्राणां समाच्छादनमिति महत्तैवापदिष्टार्थेन क्लेशेन तिष्ठतीति निष्कर्षः। शार्दूलविक्रीडितं वृत्तम् ॥ २८ ॥

(घ) भूकश्यप। भुवि पृथिव्यां, कश्यपमुनेरवतार इत्यर्थः, पितृजनकत्वादिति भावः। भगवान् कौशिकः विश्वामित्रः, यथा आह ब्रवीति, तथेति शेषः।

(ङ) सुधर्म्मायां सुष्ठु धर्मः यस्यामिति तदाख्यायां देवसभायामित्यर्थः, "स्यात् सुधर्म्मा देवसभा" इत्यमरः; अनेकधा बहुवारम्, अध्यक्षीकृतं प्रत्यक्षीकृतं, दृष्टमित्यर्थः।

त्वयीति।—त्वयि अर्द्धासनभाजि पाकशासनार्द्धासने स्थिते, इन्द्रेणेति शेषः,

उन्मीलद्भवदीयदक्षिणभुजारोमाञ्चविद्धोच्चर-

द्बाष्पैरेव विलोचनैरभिनयत्यानन्दमाखण्डलः ॥ २९ ॥

दशरथः। (सस्मितम्)। वामदेव! त्वमपि भगवन्तं गाधि-नन्दनमनुप्रविष्टोऽसि (च)—

एतस्मै समराङ्गनप्रणयिने तिष्ठेत कः प्रज्वल-

द्दम्भोलिद्युतिमण्डलोद्भटभुजस्तम्भाय जम्भारये ?।

निर्यद्भिर्बहिरेष रोषदहनज्योतिःस्फुलिङ्गैरिव

खे रज्यद्भिरपीक्षणैः समतनोदाग्नेयमस्त्रं द्विषाम् ॥ ३० ॥

---

किन्नराणां देवयोनिविशेषाणां, गणैः समूहैः, उद्गीतैः उच्चैः गान्धारग्रामेण कीर्त्तितैः, भवतः विक्रमैः शौर्यैः, असुरपराजयव्यापारैरिति यावत्, अन्तः मनसि, सम्भृतः सञ्जातः, मत्सरः विद्वेषः यस्य तथाभूतोऽपि, मां परित्यज्य एनं मर्त्यमुपस्तुवन्तीति ईर्ष्याकुलितचित्तोऽपीति यावत्, आकारस्य चित्तविकारजनितमुखम्लान्यादेः मत्सरचिह्नस्य, गुप्तौ संवरणे, कृती दक्षः, भगवान् परमैश्वर्य्यवान्, आखण्डलः इन्द्रः, उन्मीलद्भिः गानश्रवणात् उद्गच्छद्भिः, भवदीयदक्षिणभुजायाः तव दक्षिणबाहोः, इन्द्रस्य वामभागावस्थितत्वादिति भावः, रोमाञ्चैः पुलकैः, विद्धानि संसृष्टानि, अत एव उच्चरन् उद्गच्छन्, बाष्पः अश्रुजलं येभ्यः तथाभूतैः, विलोचनैः नेत्रैः, आनन्दं हर्षं, सङ्गीतश्रवणजमिति भावः, अभिनयति प्रकाशयति। शार्दूलविक्रीडितं वृत्तम् ॥ २९ ॥

(च) अनुप्रविष्टोऽसि अनुसृतोऽसि, अनुसरसीत्यर्थः।

एतस्मा इति।—प्रज्वलता प्रदीप्यमानेन, दम्भोलेः वज्रस्य, द्युतिमण्डलेन प्रभानिचयेन, उद्भटौ *दारुणौ, भुजावेव स्तम्भौ यस्य तथाभूताय, समराङ्गनप्रणयिने सङ्ग्रामभूमिप्रियाय, सर्वदा युद्धक्षेत्रवर्त्तिने इत्यर्थः, एतस्मै जम्भारये जम्भासुरशत्रवे इन्द्राय, कः तिष्ठेत ? कः आत्मनो युद्धाभिप्रायं प्रकाशयेत् ? युद्धार्थी सन् एतत्समीपे कस्तिष्ठेत् ? न कोऽपीत्यर्थः। एषः इन्द्रः, बहिः निर्यद्भिः निर्गच्छद्भिः, रोष क्रोध एव, दहनः अग्निः, तस्य ज्योतिषां शिखानां, स्फुलिङ्गैरिव कणैरिव, "त्रिषु स्फुलिङ्गोऽग्निकणः" इत्यमरः; रज्यद्भिः रक्ततां गच्छद्भिः, खे: निजैः, ईक्षणैः नेत्रैरपि, द्विषां शत्रूणां, प्रतीति शेषः, आग्नेयम् अस्त्रं समतनोत् विस्तारितवान्, ववर्षेत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ३० ॥

विश्वामित्रः। (सस्मितं दशरथबाहुमालम्ब्य)। राजर्षे ! वसिष्ठ-शिष्य !—

संवृत्तोऽयं यदि तव भुजच्छायया सम्प्रतीन्द्रो
निर्विघ्नश्रीरियमभिनवा कीदृशी ते प्रशस्तिः ?।
इक्ष्वाकूणां लिखितपठिता स्वर्वधूगण्डपीठ-
क्रीडापत्रप्रकरमकरीपाशुपाल्यं हि वृत्तिः ॥ २१ ॥

दशरथः। भगवन् सर्वाद्भुतनिधे ! (क) भगवन्तमनुगन्तुमुक्तिप्रत्युक्तिकया के वयम् ? (ख)। एवं किल त्रिशङ्कुसङ्कीर्त्तनोपाख्यानपारदृश्वानः (ग) पौराणिकाः कथयन्ति—

ब्राह्मोत्कम्पत्रिदशपरिषन्मौलिमाणिक्यमाला-
बालादित्यप्रकरकिरणस्मेरपादारविन्दे।

---

संवृत्त इति।—यदि अयम् इन्द्रः तव भुजच्छायया बाहुबलाश्रयेण, सम्प्रति निर्विघ्नश्रीः निर्विघ्ना विघ्नविरहिता, श्रीः सम्पत् यस्य तादृशः, संवृत्तः सञ्जातः, तदा इयं ते तव, अभिनवा नूतना, प्रशस्तिः प्रशंसा, सुख्यातिरित्यर्थः, कीदृशी ? का ? नेयं तव अभिनवा प्रशस्तिः, अपि तु कुलक्रमागतैवेत्याह, इक्ष्वाकूणामिति।—स्वर्वधूनां सुरसुन्दरीणां, गण्डपीठेषु कपोलदेशेषु, यः क्रीडापत्रप्रकरः विलासार्थे विरचितपत्रावलीसमूहः, तत्र या मकरी मकराख्यजलजन्तुस्त्री चित्रितेति भावः, तस्याः पाशुपाल्यं रक्षेति यावत्, असुरभयदूरीकरणेन तासां चेतसः प्रफुल्लता-सम्पादनद्वारा इति भावः, इक्ष्वाकूणां लिखितपठिता लिखिता पठिता च, प्रसिद्धेवेति यावत्, वृत्तिः व्यापारः, कुलधर्म इत्यर्थः। मन्दाक्रान्ता वृत्तं, "मन्दाक्रान्ताम्बुधि-रस-नगैर्मो भ-नौ तौ गयुग्मम्" इति तल्लक्षणात् ॥ २१ ॥

(क) सर्वाद्भुतनिधे ! सर्वाश्चर्याश्रय !

(ख) अनुगन्तुम् अनुसर्त्तुम्। उक्तिप्रत्युक्तिकया वचन-प्रतिवचनेनेत्यर्थः। वयं के ? न केऽपीत्यर्थः, न समर्था वयमिति भावः।

(ग) त्रिशङ्क्विति।—त्रिशङ्कोः तदाख्यनृपतेः, सङ्कीर्त्तनं चरितवर्णनं यत्र तादृशं, यत् उपाख्यानम् आख्यायिका, तस्य पारदृश्वानः पारगामिनः, तदभिज्ञा इति यावत्।

ब्राह्मेति।—ब्राह्मेण [illegible], उत्कम्पः उच्चैः कम्पः यस्याः तथाभूता, या त्रिदश-

प्राचीमेतां भुवनरचनामन्यथा निर्मिमाणे
कार्पण्योक्तीस्त्वयि रचितवानन्तरायं महेन्द्रः ॥ २२ ॥

(विहस्य)।

जवादाराद्‌ त्वामुपनमति वर्गे दिविषदा-
मपव्यस्तो मन्दैरजनि रथहंसैः कमलभूः।
नियच्छामो जिह्वां न तव चरितेभ्यः किमुत ते
सुधासध्रीचीनामतिपतति वाचामवसरः ॥ २३ ॥

(बद्धाञ्जलिः)। भगवन्! प्रसीद तावत्; उत्तरोत्तरेषां

---

परिषत् देवसभा, सभास्थदेववृन्दमित्यर्थः, तस्या मौलिषु किरीटेषु, या माणिक्यमाला माणिक्याख्यरत्नविशेषस्रजः, ता एव बालादित्यप्रकरकिरणाः नवोदितद्वादशसूर्यप्रभाः, तैः स्मरं विकसितं, रञ्जितमिति भावः, पादारविन्दं चरणकमलं यस्य तथाभूते, त्वयि भवति, एतां वर्त्तमानां, प्राचीं पूर्वतनीं, विधातृकृतामित्यर्थः भुवनरचनां जगत्सृष्टिम्, अन्यथा अन्येन प्रकारेण, निर्मिमाणे कुर्वाणे सति, महेन्द्रः देवराजः, कार्पण्योक्तीः दीनवचनानि, 'कृपया एवं मा कुरु मा कुरु' इत्येवं रूपेणार्त्तस्वरेण प्रार्थनावाक्यानीति यावत्, अन्तरायं विघ्नं, सृष्टिविघ्नमिति शेषः, रचितवान् कृतवान्। पुरा द्वितीयां सृष्टिं कर्त्तुमुद्यतं विश्वामित्रं भयोद्विग्ना देवाः समुपेत्य पादपतनेन दैन्यवचसा च प्रसादयामासुरिति पुराणवार्त्ता। मन्दाक्रान्ता वृत्तम् ॥ २२ ॥

जवादिति।—दिविषदां देवानां, वर्गे गणे, त्वां भवन्तम्, आरात् समीपे, अभिवादयितुं, जवात् वेगात्, सत्वरमिति यावत्, उपनमति उपगच्छति सति, मन्दैः मन्थरगामिभिः, रथहंसैः रथयोजितहंसैः उपलक्षितः, हंसवाहितरथारूढ इत्यर्थः, कमलभूः ब्रह्मा, अपव्यस्तः अनुत्कण्ठित इत्यर्थः, अजनि संवृत्तः, हंसानां मन्थरगामितया सत्वरं गन्तुमक्षमत्वादिति भावः; वयं तव चरितेभ्यः चरितकीर्त्तनेभ्यः, जिह्वां रसनां, न नियच्छामः न निवारयामः, किमुत? अत्र किं वक्तव्यम्? नैव तव चरितवर्णने निवर्त्तामहे इत्यर्थः; यद्वा—किमुत इति विकल्पे अथवा इत्यर्थः, "बाढे उताहो किमुत विकल्पे किं किमूत च" इत्यमरः; सुधासध्रीचीनाम् अमृतसहचरीणां, पीयूषसदृशमनोहारिणीनामित्यर्थः, ते तव वाचाम् अवसरः समयः, अतिपतति अतिवर्त्तते, अस्माकं वचनानि तव वचनावसरमदृष्ट्वैव प्रसरन्ति इत्यर्थः; किमर्थमागमनं श्रोतुमिच्छामीति भावः। शिखरिणी वृत्तम् ॥ २३ ॥

महोत्सवानां (ञ) कदाचिदपि न तृप्यन्ति पुंसां हृदयानि, यदियं त्वदुपस्थानसुलभसम्भावनाऽतिप्रसङ्गसङ्कीर्तननर्त्तकी (ट) मे चित्तवृत्तिर्नियोगानुग्रहाय स्पृहयति। अपि च—

एताभिस्तव कौतुकोक्तिभिरपि त्रैविद्यमूर्त्तेरिव
त्वष्टस्यामरशिल्पिना दिनकृतोऽवच्छेदवेदाक्षरैः।
पूताः स्मो वयमद्य यद्यपि तदप्याज्ञामपि स्यामहो!
वोढुं विष्टिरनर्घता रघुकुले कल्पान्तमुन्मीलतु॥ १४॥

विश्वामित्रः। (विहस्य)। ऐन्दुमतेय! (ठ) किमन्यत् नियोज्यं (ड)—

निर्मुक्तशेषधवलैरचलेन्द्रमन्थ-
सङ्क्षुब्धदुग्धमयसागरगर्भगौरैः।

---

(ञ) उत्तरोत्तरेषाम् उत्तरोत्तरवर्त्तिनाम्। महोत्सवानामिति कर्मणि षष्ठी।

(ट) त्वदिति।—तव उपस्थानेन उपस्थित्या, सुलभः सुप्रापः, स्वयमुपगत इत्यर्थः, यः सम्भावनाऽतिप्रसङ्गः समादरातिशयः, तस्य सङ्कीर्ते सङ्कीर्त्तने, नर्त्तकी नटी, तत्स्पृष्टेत्यर्थः।

एताभिरिति।—यद्यपि वयम् एताभिः पूर्वोक्ताभिः, कौतुकोक्तिभिः परिहासवचनैः, अमरशिल्पिना विश्वकर्मणा, त्वष्टस्य तनूकृतस्य, शाणयन्त्रे समारोप्य उद्घर्षणेन मन्दप्रभीकृतस्येत्यर्थः, "तष्ट त्वष्टौ तनूकृते" इत्यमरः, त्रयाणां वेदानां समाहारः त्रिवेदी, सा एव त्रैविद्यं, तत् मूर्त्तिर्यस्य तथाभूतस्य त्रयीमयशरीरस्येत्यर्थः, दिनकृतः सूर्य्यस्य, अवच्छेदा एव खण्डभूतान्येव, यानि वेदाक्षराणि तैरिव पूताः स्म पवित्रीकृता भवामः। पुरा किल तेजोऽसहमानया सूर्य्यपत्न्या संज्ञया पित्रा विश्वकर्माऽभिहितः सूर्य्यं यन्त्रोल्लिखितं कृत्वा किञ्चित् हीनतेजसमकरोदिति पुराणम्; तदपि तथाऽपि, आज्ञां भवतः आदेशं, वोढुं सम्पादयितुं, विष्टिः कर्मकरः, "विष्टिः कर्मकरे त्विषु" इति मेदिनी; स्यां भवेयम्, अहो! अनर्घता अमूल्यता, असाधारणत्वमित्यर्थः, अर्थिकामपूरणे इति भावः; कल्पान्तम् आप्रलयं, रघुकुले उन्मीलतु प्रसरतु शार्दूलविक्रीडितं वृत्तम्॥ १४॥

(ठ) ऐन्दुमतेय! इन्दुमतीतनय!

(ड) नियोज्यम् आदेष्टव्यं, वक्तव्यमिति यावत्।

राजन्निदं बहुलपक्षदलन्मृगाङ्क-

च्छेदोज्ज्वलैस्तव यशोभिरशोभि विश्वम् ॥ २५ ॥

पुनरिदानीमपि—

यशःसोमानुच्चैरुपचिनु चकोरप्रणयिनी-

रसज्ञापाण्डित्यच्छिदुरशशिधामभ्रमभरान् ।

अपि त्वत्तेजोभिस्तमसि शमिते रचतु दिशा-

मसौ यात्रामैत्रीं नभसि नितरामम्बरमणिः ॥ २६ ॥

किन्तु कतिपयरात्रमायुधसध्रीचा (ढ) रामभद्रेण सन्नि-

---

निर्मुक्तेति।—हे राजन्! निर्मुक्तः मुक्तकञ्चुकः, निर्मोकरहितः इत्यर्थः, "निर्मुक्तो मुक्तकञ्चुकः" इत्यमरः, यः शेषः अनन्तनागः, तद्वत् धवलानि शुभ्राणि तैः, अचलेन्द्रः मन्दरगिरिः, तेन मन्थः विलोडनं, तेन सङ्क्षुब्धः समुच्छलितः, यः दुग्धमयसागरः क्षीरोदधिः, तस्य गर्भवत् अभ्यन्तर इव, गौराणि तैः, तथा बहुलपक्षे कृष्णपक्षे, "बहुला नीलिकायां...। पुंस्यग्नौ कृष्णपक्षे च—" इति मेदिनी, दलन् उन्मीलन्, यः मृगाङ्कच्छेदः चन्द्रखण्डः तद्वत् उज्ज्वलानि तैः, बहुलपक्षस्य शुक्लपक्षापेक्षया चन्द्रस्य स्पृहणीयत्वद्योतनायेति बोध्यम्; तव यशोभिः विश्वं जगत्, अशोभि अलङ्कृतम्। वसन्ततिलकं वृत्तम् ॥ २५ ॥

यश इति।—चकोरप्रणयिनीनां चकोरीणां, या रसज्ञा जिह्वा, "रसज्ञा रसना जिह्वा" इत्यमरः, तस्याः पाण्डित्यं नैपुण्यं, चान्द्रिकापानचातुर्य्यमिति यावत्; उक्तञ्च, "चकोर्य्य एव चतुराश्चन्द्रिकापानकर्मणि" इति, तस्य छिदुरः भेदकः, यशसि चन्द्रिकाभ्रमात् तस्याः पाण्डित्यच्छेद इति बोद्धव्यम्; शशिधामभ्रमभरः चन्द्रकिरणभ्रान्त्यतिशयः येषु तान्, उच्चैः महतः, यशःसोमान् कीर्त्तिराशीन्, उपचिनु वृद्धिं नय, तथा तव तेजोभिः प्रतापैः, किरणैश्च, तमसि दुःखे अन्धकारे च, शमिते शान्तिं गमितेऽपि, असौ अम्बरमणिः सूर्य्यः, नभसि आकाशे, दिशां यात्रामैत्रीं गमनेन मित्रतां, नितरां केवलं, रचतु; तवैव तेजसा तत्कार्य्ये साधिते तस्य उदयस्य निरर्थकत्वेऽपि केवलमिदानीं दिक्षु भ्रमणं पूर्वमैत्रीरक्षणार्थमिति तात्पर्य्यम्। भ्रान्तिमान् अलङ्कारः, तदुक्तं दर्पणे—"साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थिता" इति। शिखरिणी वृत्तम् ॥ २६ ॥

(ढ) आयुधसध्रीचा आयुधेन अस्त्रेण सह, अञ्चति गच्छति, विचरतीत्यर्थः; तादृशेन अस्त्रसहचरेण, अस्त्रधारिणेत्यर्थः। "यः सहाञ्चति सध्र्यङ् सः" इत्यमरः।

हितवैतानव्रतानाम् (थ) अस्माकमाश्रमपदं सनाथीकरिष्यति (त)। अपि च—

मध्येकृत्य घनं धिनोति जलधिः स्वैरम्बुभिर्मेदिनीं
हन्ति स्वैः किरणैस्तमिस्रमरुणं कृत्वाऽन्तराले रविः।
त्वं रामान्तरितश्च पालय निजैरेव प्रतापैः प्रजा-
मीदृक्कोऽपि परोपकारसुहृदामेष स्वभावो हि वः ॥ २१ ॥

किञ्च—

दृष्टः साक्षादसुरविजयी नाकिनां चक्रवर्त्ती
मात्स्यो न्यायः कथयति यथा वारुणी दण्डनीतिः।

(थ) संनिहितेति।—संनिहितम् उपस्थितम्, वैतानव्रतं यज्ञकर्म येषां तथोक्तानाम्। "वितानो यज्ञ उल्लोचे" इति मेदिनी।

(त) सनाथीकरिष्यति सरक्षकं करिष्यति, रक्षिष्यति इत्यर्थः।

मध्येकृत्येति।—जलधिः समुद्रः घनं मेघं मध्येकृत्य द्वारीकृत्येति यावत्, स्वैः अम्बुभिः जलैः, मेदिनीं पृथ्वीं, धिनोति तर्पयति, रविकरैराकृष्टं जलधेर्जलमूर्द्ध्वमुत्थाय मेघो भूत्वा वृष्टिरूपेण पततीति शास्त्रात् जलधिजलस्य मेघद्वारेण मेदिनीतर्पणं बोध्यम्, रविः सूर्य्यः, अरुणं स्वसारथिम्, अन्तराले मध्ये, कृत्वा स्वैः किरणैः तमिस्रं तिमिरं, हन्ति नाशयति, त्वञ्च रामेण अन्तरितः, रामः अन्तः मध्ये, इतः गतः, अन्तःस्थित इत्यर्थः यस्य तादृशः इति वा रामान्तरितः, रामं मध्ये कृत्वेत्यर्थः, निजैः प्रतापैः तेजोभिः, प्रजां प्रकृतिवर्गं, पालय रक्षस्व, परोपकारे परहितसाधने सुहृत् इव अन्तःकरणं येषां तथाभूतानां, वः युष्माकम्, ईदृक् एवंविधः, कोऽपि अनिर्वचनीयः, एष स्वभावः हि प्रकृतिरेव। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, तदुक्तं दर्पणे—"सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः॥" इति। शार्दूलविक्रीडितं वृत्तम् ॥ २१ ॥

दृष्ट इति।—नाकिनां देवानां, चक्रवर्त्ती प्रभुः, इन्द्र इत्यर्थः, असुरविजयी असुराणामेव जेता, न तु धर्मस्येति भावः, त्वन्तु असुरविजयी धर्मविजयी चेति; किञ्च, असुरविजयी इत्यनेन तस्य त्वष्टृपुत्रादिहन्तृत्वं, तेन च तस्य दुष्कृतिनो राज्यं प्राप्तवत्त्वमिति च व्यज्यते, तव तु न तथेति; यद्वा—असुरविजयित्वात्

पातालेन्द्रादहिभयमथास्यैव नित्यानुबद्धं
तत् पुण्यैर्जनि भवता वीर! राजन्वती भूः ॥ १८ ॥

दशरथः (सविषादमात्मगतम्)। कथमिदमस्माकं सकललोक-शोकशङ्कूद्धरणशीलशीतलेभ्यः कौशिकप्रसादेभ्यो रामभद्रप्रवास-वैमनस्यमुत्पत्स्यते (थ)!! इष्टं वा निःशेषानन्दिनः स्वस्तिनो·

---

कर्णदेव सङ्ग्रामासक्तस्य तस्य प्रजापालने नैव दृष्टिरिति व्यज्यते, तव तु न तथेति ; किञ्च, चतुरङ्गा विजयः चतुरङ्गबलविजय इत्यर्थः, स अस्यास्तीति तथोक्तः: चतुर्भिर्विजित इत्यर्थः दैवीमाहात्म्यादेः महिषासुरादिभिर्बहुशस्तथा दर्शनात् ; अन्यस्य प्रजारक्षणाक्षमत्वात् तद्राज्ये स्थितिर्न युक्ता, त्वं न कदाऽपि विजित इति च व्यज्यते। वरुणो बहुजलशायिनो, दण्डनीतिः दुष्टानां निग्रहाय विरचितं नीतिशास्त्रं, मात्स्यः मत्स्यसम्बन्धी, न्यायः व्यवहारः, यथा यादोगणस्थः, तथा कथयति प्रकाशयति, वरुणो हि जलाधिपतिः तत्प्रजाश्च मत्स्यादयो जलचराः, तेषां व्यवहारः सजातीयदुर्बलभक्षकत्वं, तथा च, वरुणस्य दण्डनीतिः साधूनामल्प-धनानां महाधनैर्बलवद्भिः पीड़ इति फलं, न तु तत्त्वतो दुष्टनिग्रहणमिति तद्राज्ये स्थितिर्न युक्तेति व्यज्यते। अथ किञ्च, पातालेन्द्रात् वासुकेः, अहिभयम् सर्पभीतिः, नित्यानुबद्धं सततसम्बद्धम्, अस्यैव ; अहिभयमित्यत्र अहिभ्यः भयम् अहीनां भयमिति चार्थः ; तथा च, पाताले राजा वासुकिः, तत्प्रजाश्च सर्पाः, तैः सह वासो मृत्युरेव, तदुक्तं —"सर्पे च गृहे वासो मृत्युरेव न संशयः" इति, सर्पाणाञ्च [illegible] वासुकिर्भयं, कदाऽप्यस्मान् गरुडाय प्रदास्यतीति, तत्र युक्तस्तव वास इति व्यज्यते। हे वीर! तत् तस्मात्, ते, तव, पुण्यैः सुकृतैः, भवता भूः पृथिवी, राजन्वती सुराजयुक्ता, न्यायपरायणराजाधिष्ठिता इत्यर्थः, "सुराज्ञि देशे राजन्वान्" इत्यमरः, जनि जाता, तव राज्ये न कश्चिदपि प्रजानां क्लेश इति भावः। मन्दाक्रान्ता वृत्तम् ॥ १८ ॥

(थ) सकलेति।—सकलानां लोकानां जनानां, शोकः एव शङ्कुः हृदयनिहितं शल्यमिति यावत्, तस्य उद्धरणम् उत्पाटनं, शीलं स्वभावो येषां तथाभूताः, शीतलाः शीतलाश्च तेभ्यः। कौशिकप्रसादेभ्यः विश्वामित्रानुग्रहेभ्यः। रामभद्रेति।—रामभद्रस्य प्रवासेन विदेशगमनेन, वैमनस्यं विमनस्कत्वं, विषाद इत्यर्थः, ममेति शेषः, उत्पत्स्यते भविष्यति।

नामपीन्दुकरकन्दलीनां कमलवनीमीलनं कलङ्कस्थानम् (द)।
(विमृश्य)। का गतिः (ध)—

कूर्मराजभुजगाधिपगोत्र-
ग्रावदिक्करिभिरेकधुरीणः।
मां प्रसूय कथमस्तु विगीतो?
हा! परार्थविमुखो रघुवंशः ॥ १९ ॥

विश्वामित्रः। (सस्मितम्)। राजर्षे! ममकारो हि राजपुत्रेषु राज्ञामुपलालनक्लेशाय केवलम्, उपयोगस्तु प्रजानाम् (न)। यथैतत्—

---

(द) वा अथवा। निःशेषेति।—निःशेषः परिपूर्णः, निरतिशय इत्यर्थः, य आनन्दः तस्य निःष्यन्दिनीनां वर्षिणीनाम्। इन्दुकरकन्दलीनां चन्द्रकिरणनिचयानाम्। कमलवनीनिमीलनं क्षुद्रपद्मवनसङ्कोचनम्, पद्मसङ्कोचसाधनमित्यर्थः, कलङ्कस्थानं कलङ्ककरमित्यर्थः। सकललोकदुःखहरणस्य मदीयदुःखजननं जगदानन्दिनश्चन्द्रस्य पद्मनिमीलनमिवेति तात्पर्य्यम्।

(ध) गतिः उपायः।

कूर्मेति।—कूर्मराजः कमठपतिः, पृष्ठे सागर-वनसहितसप्तद्वीपवसुन्धराधारक इति भावः, भुजगाधिपः वासुकिनागः, शिरसि पृथ्वीधारणकर्त्ता इति भावः, गोत्रग्रावाणः कुलपर्वताः, दिक्करिणः दिग्गजाः तैः, एकधुरीणः समानधुरन्धरः, पृथिव्याः भारवहनशील इत्यर्थः, रघुवंशः मां प्रसूय कथं केन प्रकारेण, परार्थविमुखः परकार्य्यसाधने पराङ्मुखः सन्, विगीतः निन्दितः, अस्तु? भवतु? हा! इति खेदे, कूर्मराजादयः सदैव तत्तद्वसुन्धराधारणरूपकार्य्यकारित्वेन यथा परार्थसाधनपराः, रघुवंशोऽपि तथा, किन्तु यदि रामप्रदानेऽहं पराङ्मुखो भवेयं, तदा रघुवंशो मयैव कलङ्कपातितः स्यादिति भावः ॥ १९ ॥

(न) ममकारः ममत्वबुद्धिरित्यर्थः। ममेत्यव्ययम्। उपलालनेति।—उपलालनं सन्तर्पणेन शरीरपोषणं, तेन क्लेशः तस्मै, यद्वा—उपलालने लयन पोषणे, रक्षणवर्द्धने इत्यर्थः, यः क्लेशः कष्टं तस्मै। उपयोगः उपकारः। राज्ञां ममत्वबुद्ध्या निजपुत्रोपलालनं केवलं क्लेशकरं, न तु किञ्चिदपि लोकोपकारकं, परन्तु भाविप्रजानां सुखविधानार्थमिति भावः।

कष्टा वैधव्यथा कष्टो नित्यमुद्वहनक्लमः।
श्रवणानामलङ्कारः कपोलस्य तु कुण्डलम्॥ ४०॥

दशरथः। भगवन्! परमनुगृहीता वयमेवं तत्रभवता सम्भाव्यमानाः (प); किं पुनरकृतास्त्रः क्षीरकण्ठो (फ) वत्सोऽयमिति मुग्धोऽस्मि (ब)।

विश्वामित्रः। (विहस्य)। सखे! तत्रभवन्तं मैत्रावरुणिमृषिं पुरोधाय चरितब्रह्मचर्य्यव्रतस्य (भ) धनुर्वेदसंस्कारास्तावदस्य कृशाश्वप्रसादादस्मास्वायतन्ते (म)।

दशरथः। (सविनयोपरोधम्)। भगवन्! उच्छ्वसितमपि (य) रघुराजवीजिनां त्वदायत्तमेव, किमुत कार्मुकविद्यासम्प्रदायः। शङ्के, सहस्रकिरणकुलैकपक्षपातेनैव (र) सहस्रं वत्सरान्

---

दृष्टान्तेनैतत् समर्थयति, कष्टेति।—श्रवणानां श्रोत्राणां, वैधव्यथा वेधजनिता पीडा, कुण्डलधारणार्थमिति शेषः, कष्टा क्लेशदायिनी, तथा नित्यं सततम्, उद्वहने कर्णयोः धारणे, यः क्लमः क्लान्तिः, परिश्रम इत्यर्थः, सोऽपि कष्टः, तु किन्तु, कुण्डलं कर्णभूषणं, कपोलस्य गण्डदेशस्य, अलङ्कारः शोभाजनकमित्यर्थः॥ ४०॥

(प) सम्भाव्यमाना सादरमभ्यर्थ्यमाना इत्यर्थः।

(फ) किं पुनः किन्तु इत्यर्थः। अकृतास्त्रः अशिक्षितधनुर्वेद इत्यर्थः। क्षीरकण्ठः दुग्धपायी, दुग्धपोष्य इति यावत्।

(ब) मुग्ध मूढः, किङ्कर्त्तव्यविमूढः इति यावत्।

(भ) पुरोधाय पुरोहितं कृत्वा। चरितेति।—चरितम् अनुष्ठितं, ब्रह्मचर्य्यव्रतं येन तथाभूतस्य, वाशिष्ठेनोपनीतस्येति भावः।

(म) कृशाश्वस्य मम पूर्वप्रपितामहस्य, धनुर्वेदोपदेष्टुः गुरोरिति भावः, प्रसादात् अनुग्रहात्। आयतन्ते आयत्ताः इत्यर्थः, धनुर्वेदसंस्कारो मयैवास्य सम्पादनीय इति भावः।

(य) उच्छ्वसितं जीवनम्। रघुराजेति।—रघुराजः वीजी आदिपुरुषः प्रधानपुरुषो वा येषां तथोक्तानां रघुवंशीयानामित्यर्थः।

(र) शङ्के मन्ये। सहस्रेति।—सहस्रकिरणस्य सूर्य्यस्य, कुलं वंशः, तस्मिन् एकः अद्वितीयः, पक्षपातः स्नेहः तेन।

भगवन्तं कृशाश्वमुपासीनो दिव्यास्त्रमन्त्रोपनिषदमध्यगीष्ठाः (ल)।

विश्वामित्रः। अलं च ते रामभद्रेऽपि बालोऽयमित्यलीकसम्भावनया (व); दिवस्पृथिव्योस्तिमिरतिरस्कारिणीं तरणिरणुतरोऽपि तेजसा तिरस्करोति (श)।

दशरथः। (सस्मितम्)। भगवन्! कुशिकवंशकेतो! कस्य तलिनो (ष) तादृशी जिह्वा, यस्त्वामपि ब्रुवाणमधरोत्तरेणाभिसन्धत्ते? (स) (अपवार्य्य)। (ह) वामदेव! एवमत्रभवान् कौशिको ब्रवीति।

वामदेवः। राजर्षे! किमत्र प्रष्टव्या वयम्?—

कौशिकोऽर्थी भवान् दाता रक्षणीयो महाक्रतुः।
रक्षिता रामभद्रश्चेदनुमन्यामहे वयम्॥ ४१॥

---

(ल) उपासीनः आराधयन्। दिव्यास्त्रेति।—दिव्यानि अस्त्राणि तेषां मन्त्रोपनिषदं मन्त्ररहस्यम्। अध्यगीष्ठाः अधीतवानसीत्यर्थः।

(व) बालोऽयं शिशुरयम्। अलीकसम्भावनया असमननेन, मिथ्याशङ्कयेत्यर्थः।

(श) तरणिः सूर्य्यः "द्युमणिस्तरणिर्मित्रः" इति सूर्य्यपर्य्याये अमरः। अणुतरोऽपि अतिक्षुद्रोऽपि, तेजसा किरणेन प्रतापेन च, दिवस्पृथिव्योः द्यावा-भूम्योः, तिमिरमेव अन्धकारमेव, तिरस्कारिणीं अवनिकां तां, तिरस्करोति अपनयति, निरस्यतीत्यर्थः।

(ष) तलिनी स्वच्छा, परिष्कृतेति यावत्, "तलिनं विरले स्तोके स्वच्छेऽपि वाच्यलिङ्गकम्" इति विश्वः।

(स) अधरोत्तरेण अधरः वादः, उत्तरः प्रतिवादः तेन वादप्रतिवादेनेत्यर्थः। यद्वा—अधरोत्तरेण स्वल्पमहता, स्वल्पार्थकेन महार्थकेन वा वाक्प्रपञ्चेनेति भावः। अभिसन्धत्ते बाधते, पराजयते इति यावत्।

(ह) अपवार्य्य, "रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते। नाट्यधर्म्मसमायोगात् कृतं तदपवारितम्॥" इति लक्षणोक्तमपवारितं कृत्वा, अन्यतो मुखं परावृत्येत्यर्थः।

कौशिक इति।—कौशिकः विश्वामित्रः, अर्थी याचकः, भवान् दाता, महाक्रतुः

अपि च—

जगतीभारखिन्नानां विश्रामो भवतामयम्।
यत् यथाकामसम्पत्ति-प्रीतार्थिमुखदर्शनम् ॥ ४२ ॥

किं च विशेषेण—

पूरयितुमर्थिकामान् मैत्रावरुणेन गोत्रगुरुणा ते।
सन्दिशता सन्दिष्टः समाधिदृष्टोऽयमेवार्थः ॥ ४३ ॥

दशरथः। वामदेव ! एवमेतत्—

ध्यानमयदृष्टिपातप्रमुषितकालाध्वविप्रकर्षेषु।
विषयेषु नैष्ठिकानां सर्वपथीना मतिः क्रमते ॥ ४४ ॥

( विमृश्य )।

---

महाशयाः, रघुवंशीयाः, चेत् यदि, रामभद्रः रक्षिता रक्षाकर्त्ता, यज्ञस्येति भावः, भवेदिति शेषः, तदा वयम् अनुमन्यामहे अनुमोदामहे। अनुष्टुप् वृत्तम् ॥ ४१ ॥

जगतीति।—जगत्याः पृथिव्याः, भारेण पालनरूपकार्य्यातिशयेन, खिन्नानां क्लिष्टानां, श्रान्तानामित्यर्थः, भवतां भवादृशानां भूपालानामित्यर्थः, अयम् एषः एव, विश्रामः श्रान्तिदूरीकरणं, श्रमापनोदनोपाय इति यावत्, यत् कामम् अभिलषितमनतिक्रम्य इति यथाकामं प्रार्थनाऽनुरूपं द्रव्यं, तस्य सम्पत्त्या लाभेन, प्रीतानां हृष्टानाम्, अर्थिनां याचकानां, मुखदर्शनम्, अभिलाषानुरूपधनप्राप्त्या याचकानां प्रफुल्लमुखदर्शनजनितानन्दानुभव एव भवतां चित्तविनोदनोपाय इति निष्कर्षः। अनुष्टुप् वृत्तम् ॥ ४२ ॥

पूरयितुमिति।—अर्थिनां याचकानां, कामान् अभिलाषान्, पूरयितुं सफलयितुं, सन्दिशता वाचिकं प्रेषयता, ते तव, गोत्रगुरुणा कुलाचार्य्येण, मैत्रावरुणेन वशिष्ठेन, अयमेवार्थः विश्रामलाभ रामभद्रानयनविषय इत्यर्थः, समाधिदृष्टः योगबलेन प्रत्यक्षीकृतः, अत एव सन्दिष्टः मन्मुखेन वाचिकतया प्रेषित इत्यर्थः। आर्य्या वृत्तम् ॥ ४३ ॥

ध्यानेति।—नैष्ठिकानां निष्ठा उत्कर्षः, तत्र आसक्ताः नैष्ठिकाः तेषाम् उत्कर्षशालिनां, तपःसिद्ध्या उत्कर्षं प्राप्तानामित्यर्थः, निष्ठा व्रतं वा प्रयोजनमेषां नैष्ठिकानां व्रतपराणां, यम-नियमादिना सिद्धिं प्राप्तानामित्यर्थः, "निष्ठोत्कर्ष-व्यवस्थयोः। क्लेशे निष्पत्तौ नाशेऽन्ते निर्वाहे याचने व्रते" इति हारावली; सर्वपथीना सर्वमार्गप्रचारिणी, सर्वतोमुखीत्यर्थः, मतिः बुद्धिः, ध्यानमयेन चित्तस्य बाह्यविषयविमुखी,

क्रियाणां रक्षायै दशरथमुपस्थाय विमुखे
मुनौ विश्वामित्रे भगवति गते सम्प्रति गृहान्।
तपोलेशक्लेशादुपशमितविघ्नप्रतिभये
प्रवृत्ते यष्टुं वा रघुकुलकथैवास्तमयते ॥ ४५ ॥

(मुनिं प्रति)। जगद्गुरो! गाधिनन्दन!—

त्वं चेद्दीक्षिष्यमाणो मे रामभद्रं प्रतीक्षसे।
ततः पतिव्रतावृत्तमियं चरतु मेदिनी ॥ ४६ ॥

---

करणात्मकेन, दृष्टिपातेन ज्ञानयोगेनेत्यर्थः, प्रकर्षेण अत्यर्थं, मुषितः अपहृतः, निराकृत इत्यर्थः, कालस्य अतीतानागतरूपस्य, अध्वनः मार्गस्य च, विप्रकर्षः दूरत्वं येन तथाभूतेषु, विषयेषु वस्तुषु, क्रमते प्रसरति, योगबलेन सर्वमवगच्छतीत्यर्थः। आर्य्या वृत्तम् ॥ ४४ ॥

क्रियाणामिति।—क्रियाणां यज्ञानामिति यावत्, रक्षायै रक्षणाय, दशरथम् उपस्थाय उपास्य, दशरथसमीपमागत्येत्यर्थः, भगवति मुनौ विश्वामित्रे विमुखे पराङ्मुखे, असम्पन्नकामे इति भावः, गृहान् आश्रमान्, गते प्रस्थिते, तथा तपोलेशस्य किञ्चिन्मात्रतपसः, क्लेशात् व्ययात्, यद्वा—तपसि तपश्चर्य्यायां, यः लेशक्लेशः ईषत्-क्लेशः तस्मात्, स्वल्पक्लेशार्जिततपःप्रभावादित्यर्थः, न तु महता कृच्छ्रेणार्जिततपःप्रभावात् तादृशतपःप्रभावस्य एतत्क्षुद्रविघ्नोपशमने निष्प्रयोजनत्वादिति भावः, उपशमितं निरस्तं, विघ्नेभ्यः यज्ञविघातकनिशाचरेभ्यः, प्रतिभयं त्रासः येन तथाभूते, मत्साहाय्यं विनाऽपि ईषन्मात्रेण तपःप्रभावेणैव यज्ञविघ्ने निराकृते सतीति भावः; यष्टुं यज्ञं सम्पादयितुं, प्रवृत्ते वा प्रक्रान्ते सति, रघुकुलस्य कथैव अर्थिनां कामनापूरकत्ववार्त्तैव, अस्तम् अदर्शनं, लोपमिति यावत्, अयते गच्छति। शिखरिणी वृत्तम् ॥ ४५ ॥

त्वमिति।—दीक्षिष्यमाणः दीक्षां प्रवेक्ष्यन्, यज्ञे दीक्षितो भविष्यन्नित्यर्थः, त्वं चेत् यदि, रामभद्रं प्रतीक्षसे अपेक्षसे, प्रत्यवेक्षणं करोषि इत्यर्थो वा, तत् तदा, नः अस्माकम्, इयं मेदिनी पृथिवी, अयोध्या भूमिरित्यर्थः, पतिव्रतावृत्तम् एकपतिकायाः नियमं, "प्रवासे मलिना कृशा" इत्यादिरूपमिति यावत्, चरतु अनुतिष्ठतु; रामः अस्याः पतिः, तस्य त्वया सह गमने प्रवासित्वात् अस्याः प्रोषितभर्तृकतया तदुचितमालिन्यादिकं भवति, तथा च, इयं भूमिः रामविरहेण नितरां व्यथिष्यते, तत् सुकुमारः रामः न समर्पणीय इति भावः। अनुष्टुप् वृत्तम् ॥ ४६ ॥

(नेपथ्याभिमुखः) । कः कोऽत्र भोः !

( प्रविश्य ) ।

दौवारिकः । किमाज्ञापयति देवः ?

दशरथः । आहूयतां रामभद्रः ।

वामदेवः । लक्ष्मणश्च ।

दशरथः । ( सस्मितम् ) । ऋषे ! पृथक्प्रयत्नापेक्षो नायमर्थः ( क ) । न खलु प्रकाशमन्तरेण ( ख ) तुहिनभानुरुज्जिहीते ।

( दौवारिको निष्क्रान्तः ) ।

( ततः प्रविशतो राम-लक्ष्मणौ ) ।

रामः । ( सहर्षम् )—

सुराधीशक्रोधाज्जगदपरथा कर्त्तुमपरे
पुराणब्रह्माणो भुवनपितरः सप्त च कृताः ।
धृतास्तुष्टेनामी वहिरपि च वैश्वानरपथात्
कथा पौराणी यच्चरितमिति ह स्म प्रथयति ॥ ४७ ॥

---

( क ) पृथगिति ।—अयम् अर्थः लक्ष्मणाह्वानरूप इत्यर्थः, पृथक् स्वतन्त्रतया, द्वितीयमित्यर्थः, प्रयत्नं प्रयासं, न अपेक्षते इति तथोक्तः, रामाह्वानेनैव लक्ष्मणस्यापि आह्वानस्य सिद्धिरिति भावः ।

( ख ) प्रकाश प्रकाशते इति प्रकाशः आतपः, ज्योत्स्ना इति यावत्, "प्रकाशो द्योत आतपः" इत्यमरः । अन्तरेण विनेत्यर्थः । तुहिनभानुः शीतकिरणः, चन्द्र इत्यर्थः । उज्जिहीते उद्गच्छतीत्यर्थः ।

सुराधीशेति ।—सुराणाम् अधीशः इन्द्रः, तस्मिन् क्रोधः रोषः, विश्वामित्रस्य स्वर्गात् भ्रंशनजनित इति भावः तस्मात् हेतोः, अपरथा अन्यविधम्, एतदनुरूपं द्वितीयमित्यर्थः, जगत् कर्त्तुं स्रष्टुम्, अपरे च अन्ये च, एतज्जगत्स्रष्टुः ब्रह्मणः अतिरिक्ताः इत्यर्थः, सप्त सप्तसङ्ख्याकाः, भुवनपितरः जगत्स्रष्टारः, पुराणब्रह्माणः इति यावत्, कृताः सृष्टाः, तथा तुष्टेन प्रसन्नेनेव इन्द्रादीनां प्रणिपातात् प्रीतेन, प्रशमितक्रोधेन सतेति भावः, अमी आत्मना सृष्टाः सप्तसङ्ख्याकाः भुवनपितरः, वैश्वानरपथात् वायुपथात्, आकाशीयप्रदेशविशेषादिति यावत्, यत्र मरीच्यादयः ब्रह्मपुत्राः सप्तर्षयः सन्तीति

कथं, सोऽपि भगवान् विश्वामित्रः स्वयमस्माभिरुपचरिष्यते (ग)!! (इति परिक्रामन् पुरोऽवलोक्य हर्षातिशयं रूपयन्)। नूनं विनयनस्त्रयोस्तात-वामदेवयोस्तृतीयः प्रशान्तपावनीयाकृतिः (घ) स भगवान् विश्वामित्रो भविष्यति।

लक्ष्मणः। (साश्चर्य्यस्मितम्)। आर्य्य !—

अयमयमीदृशप्रशमविश्वसनीयतनु-
र्भुवनभयङ्करीः कथमधत्त रुषोऽपि मुनिः ?।
स्थितमिदमेव वा मृदुमनोज्ञतुषारतमा-
स्तमसि सति ज्वलन्ति सहसैव महौषधयः ॥४८॥

---

भावः, वह्निः अस्मिन् प्रदेशे इत्यर्थः, धूताश्च ख्यापिताश्च, इति एवं, पौराणी कथा पुरातनी वार्त्ता, यस्य विश्वामित्रस्य, भारतं प्रभावमिति यावत्, प्रथयन्ति स्म विस्तारयन्ति स्म, प्रकटयामास इत्यर्थः। हेति पादपूरणार्थमव्ययम्। शिखरिणी वृत्तम् ॥ ४७ ॥

(ग) उपचरिष्यते सेविष्यते।

(घ) प्रशान्तेति।—प्रशान्ता सौम्या, पावनीया पवित्रताजननी, आकृतिर्यस्य तथोक्तः।

अयमिति।—अयमयमिति सम्भ्रमे द्विरुक्तिः। अयमयं नु एषः, मुनिः विश्वामित्रः, ईदृशेन प्रशमेन प्रकृष्टेन शमगुणेन, शमगुणसद्भावादित्यर्थः, विश्वसनीया आश्वसनीया, तनुः शरीरं यस्य तथाभूतः सन् अपि, भुवनानां भयङ्करीः भीत्युत्पादिकाः, रुषः कोपान्, कथं केन प्रकारेण, अधत्त ? धृतवान् ? येन स्थितस्य जगतो विध्वंसः, द्वितीयस्य जगतः सृष्टिश्च प्रारब्धेति भावः, वा अथवा, इदमेव स्थितं स्थितिः, मर्य्यादेत्यर्थः, नियम इति यावत्, यत् मृदवः कोमलाः, मनोज्ञाः मनोहारिण्यः, तुषारतमाः तुषारवत् अतिशीतलाः, अतिसौम्या इत्यर्थः, महौषधयः दिव्यौषधयः, महाप्रभावसम्पन्नाः पार्वत्यलतादिविशेषाः इत्यर्थो वा, तमसि अन्धकारे, तदाख्ये गुणे च सति, सहसैव ज्वलन्ति दीप्यन्ते। कोकिलकं वृत्तम्—"हय-ऋतु-सागरैर्यतियुतं यदि कोकिलकम्" इति तल्लक्षणात्। वृत्तं तु प्रागुक्तं "यदि भवतो नजौ भजजला गुरु नर्दटकम्" इति नर्दटकमेव हयादियतियुतं चेत् कोकिलकं नाम वृत्तमिति ज्ञातव्यम् ॥४८॥

रामः। वत्स लक्ष्मण! एवं दुरवगाहगम्भीराश्चित्रीयन्ते (ङ) महान्तः। अपि च—

व्रतविहतिकरीभिरप्सरोभिः
सह जगदस्य निगृह्णतो रुषाग्नि।
नमदमरशिरःकिरीटरोचि-
र्मुकुलितरोषतमांसि चेष्टितानि ॥४९॥

वामदेवः। (दृष्ट्वा सहर्षम्)। कथमागतो रामभद्रः!! (मुनिं प्रति)। भगवन्!—

ब्रह्मज्योतिर्विवर्त्तस्य चतुर्द्धा देहयोगिनः।
ऋष्यशृङ्गचरोरंशः प्रथमोऽयं महाभुजः ॥५०॥

विश्वामित्रः। (अवलोक्य सहर्षसम्भ्रमम्)। वामदेव! किमुच्यते, आरण्यकेषु (च) किमपि प्रकृष्टतमं ब्राह्मण्यमृष्यशृङ्गस्य। न

---

(ङ) दुरवगाहेति।—दुरवगाहाः दुर्बोध्याः, गम्भीराः गभीरमतयश्च। चित्रीयन्ते आश्चर्यवत् प्रतीयन्ते, लोकानां चेतः चमत्कुर्वन्ति इति यावत्।

व्रतेति।—व्रतस्य तपसः, विहतिं विघ्नं, कुर्वन्तीति तथोक्ताभिः, अप्सरोभिः देवनर्त्तकीभिः, सह जगत् भुवनं, निगृह्णतः भस्मीकर्त्तुमुद्यच्छत इत्यर्थः, अस्य मुनेः, नमतां प्रणिपतताम्, अमराणां देवानां, शिरःकिरीटानि मौलिस्थमुकुटानि, तेषां रोचिर्भिः प्रभाभिः, चरणपतिताभिरिति भावः, मुकुलितं मुद्रितं, सङ्कुचितमित्यर्थः, उपशमितमिति यावत्, रोषः क्रोध एव, तमः अन्धकारः येषु तथाभूतानि, चेष्टितानि चरितानि, रुषाग्नि स्फुरन्ति, पैशाचिका इति शेषः। पुष्पिताग्रा वृत्तम्—"अयुजि नयुगरेफतो यकारो युजि तु न-जौ ज-र-गाश्च पुष्पिताग्रा" इति तल्लक्षणात् ॥ ४९ ॥

ब्रह्मेति।—महाभुजः, महाबाहुः, अयं राम इत्यर्थः, चतुर्द्धा चतुर्भागेन, देहयोगिनः शरीरसंयोगमवाप्नुवतः, प्रतिपन्नदेहस्य इत्यर्थः ब्रह्मज्योतिः ब्राह्मं तेजः, तस्य विवर्त्तस्य परिणामभूतस्य, ऋष्यशृङ्गचरोः ऋष्यशृङ्गहुतापेर्चान्नितस्येति भावः, प्रथमः आद्यः, ज्येष्ठ इत्यर्थः, अंशः भागः। अनुष्टुप् वृत्तम् ॥ ५० ॥

(च) आरण्यकेषु अरण्यवासिषु, तापसेषु मध्ये इत्यर्थः। विभाण्डकः ऋष्यशृङ्गस्य जनकः।

केवलममुना वत्सेन ब्रह्मर्षिर्विभाण्डकः पुत्रवता धुरमारोपितः, दशरथोऽपि।

दशरथः। भगवन्! एवमेवैतत्—

ये मैत्रावरुणं पुरोहितवतो वंशे मनोर्जज्ञिरे
तास्ता वैनयिकी क्रिया विदधिरे येषां च युष्मादृशः।
तेषामञ्चलमेष ते दशरथः सम्प्रत्यमी ये पुन-
र्जातास्ते ध्रुवमृष्यशृङ्गतपसामैश्वर्य्यमिक्ष्वाकवः॥ ५१ ॥

(राम-लक्ष्मणावुपसर्पतः)।

दशरथः। वत्सौ! भगवानेष निःशेषभुवनमहनीयो (ञ) महामुनिः कौशिकः, प्रणम्यताम्।

राम-लक्ष्मणौ। (उपसृत्य)। भगवन्! विश्वामित्र! सावित्रौ (ट) राम-लक्ष्मणावभिवादयेते (ठ)।

विश्वामित्रः। वत्सौ! आयुष्मन्तौ भूयास्ताम्। (इति भुजाभ्यां गृहीत्वा रामं निर्दिश्य च सबहुमानम् आत्मगतम्)—

वशिष्ठोक्तैर्मन्त्रैर्दधति जगतामाभ्युदयिकीं
धुरं सम्प्रत्येते दिनकरकुलीनाः क्षितिभुजः।

---

ये इति।—मैत्रावरुणं वशिष्ठं, पुरोहितवतः पुरतः स्थापयतः, पुरोहितं कुर्वत इत्यर्थः, मनोः वंशे ये राजानः, जज्ञिरे जाताः, युष्मादृशः भवादृशाः, महर्षय इति शेषः, येषां मनुवंश्यानां, वैनयिकीः विनयाधानहेतुभूताः, ताः ताः क्रियाः शिक्षादानादिका इत्यर्थः विदधिरे कृतवन्तः, ते तव, एषः अहं, दशरथः तेषां मनुवंशीयानाम्, अञ्चलं प्रान्तदेशः, शेष इत्यर्थः, युष्माभिः शिक्षितानां राज्ञां मध्ये अहमेव शेष इत्यर्थः, सम्प्रति अमी एते, ये पुनः इक्ष्वाकवः इक्ष्वाकुवंशीयाः, रामादय इति भावः, जाताः उत्पन्नाः, ते ध्रुवं निश्चयेन, ऋष्यशृङ्गतपसाम् ऐश्वर्य्यं प्रभावः, माहात्म्यमित्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ५१ ॥

(ञ) निःशेषेति।—निःशेषस्य समग्रस्य, भुवनस्य महनीयः पूजनीयः।

(ट) सावित्रौ सूर्य्यवंश्यौ।

(ठ) अभिवादयेते प्रणमतः।

वशिष्ठोक्तैरिति।—दिनकरकुलीनाः रविवंशीयाः, एते क्षितिभुजः राजानः,

गृहे येषां रामादिभिरपि कलाभिश्चतसृभिः
स्वयं देवो लक्ष्मीस्तनकलशवारीगजपतिः ॥ ५२ ॥

अपि च—

त्वं तास्ताः स्मृतवानृचो दशतयीस्त्वत्प्रीतये यज्वभिः
स्वाहाकारमुपाहितं हविरिह त्रेताग्निराचामति ।
त्वां क्षीरोदजलेशयं क्रतुभिदः पृथ्वीमवातीतर-
मुद्वृत्ता दशकन्धरप्रभृतयो निग्राहितारस्त्वया ॥ ५३ ॥

वामदेवः । (सस्मितम्) । वत्सौ ! अयमत्रभवान् भवन्तौ नेतुमागतः ।

रामलक्ष्मणौ । यदभिरुचितं भवते ताताय च ।

---

वशिष्ठेन ऋषिणा उपदिष्टैः, मन्त्रैः मन्त्रणाभिः, जगताम् आभ्युदयिकीम् अभ्युदयः मङ्गलं तत्साधनीमित्यर्थः, धुरं राज्यभारं, दधति धारयन्ति, वहन्तीत्यर्थः, येषां राज्ञां, गृहे सम्प्रति लक्ष्म्याः स्तनकलशः कुचकुम्भः एव, वारी गजबन्धनस्तम्भविशेषः, "वारी तु गजबन्धनी" इत्यमरः; तत्र बद्ध इति शेषः, गजपतिः गजेन्द्रः, तत्सदृश इत्यर्थः, लक्ष्मीकान्त इति भावः, स्वयं साक्षात्, देवोऽपि नारायणोऽपि, रामादिभिः चतसृभिः कलाभिः अंशैः, अवतीर्ण इति शेषः । शिखरिणी वृत्तम् ॥ ५२ ॥

सम्प्रति ब्रह्मस्वरूपेण रामं स्तौति, त्वमिति ।—हे राम । इत्यध्याहार्य्यं, त्वं तास्ताः प्रसिद्धाः, दशतयीः दशसङ्ख्याकाः, ऋचः ब्रह्मस्तुतिरूपा ऋग्वेदोक्ता गाथा इति यावत्, स्मृतवान् ? स्मरसि किम् ? इत्यर्थः, इह जगति, त्रेताग्निः "गार्हपत्यो दक्षिणाग्नि-राहवनीयस्त्रयोऽग्नयः । अग्नित्रयमिदं त्रेता—" इत्युक्तरूपास्त्रिविधोऽग्निः, यज्वभिः यथाविधि यागं कुर्वद्भिः याज्ञिकैः, "यज्वा तु विधिनेष्टवान्" इत्यमरः, तव प्रीतये सन्तोषार्थं, स्वाहाकारं स्वाहेति मन्त्रकरणकमित्यर्थः, उपाहितं दत्तम्, अग्नौ आहुतमित्यर्थः, हविः हव्यम्, आचामति भक्षयति, क्रतुभिदः यज्ञघ्निनः दैत्याः, क्षीरोदजलेशयं क्षीरसागरशायिनं, त्वा भवन्तं, पृथ्वीं मेदिनीम्, अवातीतरम् अवतारयामासुः, रावणविनाशाय इति भावः; त्वया उद्वृत्ताः दुराचाराः, जगत्त्रय-पीडका इति यावत्, दशकन्धरप्रभृतयः रावणादयः, निग्राहितारः निग्रहीतव्याः, विनाशयितव्याः इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ५३ ॥

(दशरथस्तौ वत्सावादाय भगवन्! कौशिक! इत्यर्धोक्ते मन्यूत्पीडनिरुध्यमानकण्ठो (अ) वामदेवस्य मुखमीक्षते)।

वामदेवः। **इमौ तौ राम-लक्ष्मणौ।** (इत्यर्पयति)।

(विश्वामित्रः सादरं गृह्णाति)।

(नेपथ्ये शङ्खध्वनिः)।

(वामदेवो निमित्तमनुमोदमानो दशरथमुल्लासयति)।

(पुनर्नेपथ्ये)।

वैतालिकः (ट)। **सुखाय माध्यन्दिनी (ठ) सन्ध्या भवतु देवस्य (ड)। सम्प्रति हि—**

**किरति मिहिरे विष्वद्रीचः करानतिवामनी**
**स्खलत्कमठवद्देहच्छाया जनस्य विचेष्टते।**
**गजपतिमुखोद्गीर्णैराप्यैरपि त्रसरेणुभिः**
**शिशिरमधुरामैणाः कच्छस्थलीमधिशेरते ॥५४॥**

---

(अ) मन्यूत्पीडेति।—मन्युः शोकः, "मन्युशोकौ तु शुक् स्त्रियाम्" इत्यमरः; तस्य उत्पीडेन अश्रूद्रेकजनितपीडनातिशय्येन, निरुध्यमानः रुध्यमानः, कण्ठो यस्य तथोक्तः।

(ट) वैतालिकः बन्दी, राज्ञां स्तुतिपाठकः इत्यर्थः, "वैतालिका बोधकरा बन्दिनः स्तुतिपाठकाः" इत्यमरः।

(ठ) माध्यन्दिनी मध्याह्नकालिकी।

(ड) देवस्य दशरथस्य।

किरतीति।—मिहिरे सूर्ये, विष्वद्रीचः सर्वतः सञ्चारिणः इत्यर्थः, "विष्वद्र्यङ् विष्वगञ्चति" इत्यमरः, करान् मयूखान्, किरति वर्षति सति, मध्याह्ने समुपस्थिते सतीत्यर्थः, जनस्य लोकस्य, अतिवामनी अतिखर्वा, देहच्छाया शरीरस्य प्रतिबिम्बं, स्खलत्कमठवत् स्खलितकूर्मवत्, विचेष्टते आचरति, लोकैर्दृश्यते इत्यर्थः, मध्याह्ने छाया अतिह्रस्वा पादप्रदेशे दृश्यते इति भावः, तथा एणाः हरिणाः, गजपतीनां मुखात् उद्गीर्णैः उत्क्षिप्तैः, आप्यैः जलीयैः, त्रसरेणुभिः "जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः। प्रथमं तत् प्रमाणानां त्रसरेणुं प्रचक्षते॥" इत्युक्तपरिमाणविशिष्टैः परिमितैर्जलकणैरित्यर्थः; शिशिरा शीतला, अत एव मधुरा मनोहारिणी तां तादृशीं

अपि चेदानीं पटीरतरुकोटरकुटीरमध्यासीनाः (ढ)—

प्रत्यक्षरस्रुतसुधारसनिर्विषाभि-
राशीर्भिरभ्यधिकभूषितभोगभाजः ।
गायन्ति कञ्चुकविनिह्नुतलोमहर्ष-
स्वेदोर्मयस्तव गुणानुरगेन्द्रकन्याः ॥५५॥

विश्वामित्रः । सखे दशरथ ! प्रियमपि तथ्यम् (ण) आह वैतालिकः,—

मन्दोद्भूतैः शिरोभिर्मणिभरगुरुभिः प्रौढरोमाञ्चदण्ड-
स्फायन्निर्मोकसन्धिप्रसरदविगलत्सान्द्रस्वेदपूराः ।

---

…क्षण्यौ कलभूयिष्ठदंष्ट्रं, "अलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः" इत्यमरः; …शिरीरते चाश्रित्य स्वपन्तीत्यर्थः। हरिणीवृत्तं—"न-स-म र-स-ला गः षड्वेदैर्हयै-…रिणी मता" इति तल्लक्षणात् ॥ ५४ ॥

(ढ) पटीरेति।—पटीरतरुश्चन्दनवृक्षः, "पटीरश्चन्दनतरौ" इति मेदिनी; तस्य …कोटरं रन्ध्रमेव, कुटीरं क्षुद्रगृहम्। अध्यासीनाः अधितिष्ठमानाः।

प्रत्यक्षरेति।—प्रत्यक्षरम् अक्षरे अक्षरे, गानस्येति भावः, स्रुतः क्षरितः, यः …धारसः अमृतद्रवः, तेन निर्विषाभिः विषशून्याभिः, सुधायाः विषहरत्वादिति भावः, …आशीर्भिः दंष्ट्राभिः, "स्त्री त्वाशीर्हिताशंसाऽहिदंष्ट्रयोः" इत्यमरः, अभ्यधिकं यथा तथा …षितो यो भोगः फणदेहः, "भोगः सुखे स्त्र्यादिभृतावहेश्च फण-काययोः" इत्यमरः, … भजन्ते इति तथोक्ताः, उरगेन्द्रकन्याः भुजङ्गकुमार्य्यः, कञ्चुकैः निर्मोकैः, विनिह्नुताः …गोपिताः, लोमहर्षाः रोमाञ्चाः, गानरसास्वादजनितानन्दादिति भावः, स्वेदोर्मयश्च …र्मप्रवाहाश्च, गानश्रमजनिता इति भावः याभिः तथाभूताः सत्यः, तव गुणान् गायन्ति …कीर्त्तयन्ति। वसन्ततिलकं वृत्तम् ॥ ५५ ॥

(ण) तथ्यं सत्यम्।

मन्दोद्भूतैरिति।—मणिभरेण शिरःस्थितरत्नभारेण, गुरुभिः गुरुत्वसम्पन्नैः, …दैरिति भावः, अत एव मन्द मन्थरं यथा तथा, उद्भूतैः उत्तोलितैः, यद्वा— …त्कम्पितैः, चालितैरित्यर्थः, शिरोभिः फणैः उपलक्षिता इत्यर्थः, विशेषणे तृतीया; …तथा प्रौढः उत्कटः, रोमाञ्चः लोमहर्ष एव, दण्डः लगुडः, रोमाञ्चस्य काठिन्यात् …दण्डकाठिन्यवत्त्वात् प्रसारितदेहस्य दण्डवत् दीर्घत्वाच्च दण्डत्वेनारोप इति भावः,

जिह्वायुग्माभिपूर्णाननविषमसमुद्गीर्णवर्णाभिरामं
वेलाशैलाङ्कभाजो भुजगयुवतयस्त्वद्गुणानुद्गृणन्ति ॥ ५६ ॥

(सविनयविस्मयचकितं च)। राजर्षे! प्रत्यासीदति (त) दीक्षा-प्रवेशसमयः, तदेवंविधमधुरगोष्ठीभङ्गनिष्ठुराणां प्रथमे (थ) तावत् वयमेव भवितुमिच्छामः।

(दशरथो राम-लक्ष्मणाववलोक्य बाष्पभरोत्तरङ्गितलोचनो मुनिं प्रति भगवन्! इत्यर्द्धोक्ते बाष्पस्तम्भं नाटयति)।

वामदेवः। (सबहुमानम्)। भगवन्! कौशिक! साधय, शिवाः (द) सन्तु पन्थानो वत्सयो राम-लक्ष्मणयोः।

(इत्युत्थाय सर्वे यथोचितमाचरन्ति)।

---

तेन स्फायन् स्फीततां गच्छन्, यः निर्मोकः कञ्चुकः, तस्य सन्धेः संयोगस्थानात्, देह-निर्मोकयोः सन्धिस्थानरन्ध्रप्रदेशादित्यर्थः, प्रसरन् विस्तारं गच्छन्, अविरलश्च असवश्च सम्मदः सम्यक् हर्षः, स्वेदपूरः घर्मप्रवाहश्च, गात्रश्रमजनित इति भावः यासां तथाभूताः; सन्धेरिति पञ्चमी एकत्र हेतौ अन्यत्रापादाने इति बोध्यम्; वेला समुद्रकूलं, "वेला काले च सीमायामम्बुः कूल-विकारयोः." इति मेदिनी; तत्र यः शैलः पर्वतः, तस्य अङ्कभाजः उत्सङ्गवर्त्तिन्यः, भुजगयुवतयः भुजङ्गतरुण्यः, जिह्वायुग्मेन जिह्वाद्वयेन, भुजङ्गानां द्विजिह्वत्वादिति भावः, अभिपूर्णं व्याप्तं, यत् आननं मुखं, तेन विषमं विपर्य्यस्तं, दुर्बोध्यं यथा तथा इत्यर्थः, समुद्गीर्णैः समुच्चारितैः, वर्णैः अक्षरैः, अभिरामं मनोज्ञं यथा तथा, तव गुणान् उद्गृणन्ति उच्चैर्गायन्ति, नागानां वैरी गरुडः, स च विष्णोः वाहनः, तस्मात् भयस्य निवारको यो विष्णुः, स तव पुत्रत्वेनावतीर्ण इति अस्या भवानित्याशयेनेति भावः। स्रग्धरा वृत्तम् ॥ ५६ ॥

(त) प्रत्यासीदतीति प्रत्यासन्नो भवति, निकटीभवतीत्यर्थः।

(थ) एवंविधेति।—एवंविधा ईदृशी, मधुरा मनोहारिणी, या गोष्ठी सभा संलापो वा, "गोष्ठी सभा-संलापयोः स्त्रियाम्" इति मेदिनी; तस्याः भङ्गेन भङ्गहेतु-कत्वेनेत्यर्थः, निष्ठुराः परुषाः, कठोरभाषिणः इत्यर्थः, लोकाचारलङ्घनादिति भावः तेषाम्। प्रथमे अग्रण्यः।

(द) साधय गच्छ। "प्रायेण प्राकृते साधिर्गमेः स्थाने प्रयुज्यते" इति नाट्य-शास्त्रात्। शिवाः शुभाः, निर्विघ्ना इत्यर्थः।

विश्वामित्रः । एवमास्यतां (ध) भवद्भिः । (इति राजपुत्राभ्यामनुगम्यमानो निष्क्रान्तः ) ।

दशरथः । (दीर्घमुष्णं च निःश्वस्य ) । वामदेव ! नूनमिदानीमस्मानिव भगवन्तमपि कौशिकमकारणवत्सलं (न) वत्सो मे रामभद्रः,—

क्वचिदस्मद्वियोगार्त्ति-दुःखी दुःखाकरिष्यति ।
अपूर्वविषयालोक-सुखी च सुखयिष्यति ॥ ५७॥

वामदेवः । (विहस्य ) । राजर्षे ! वयं वा कौशिको वेति क्व पुनरेष कक्षाविभागो रामभद्रमाधुर्य्यस्य (प) ? पश्य—

यदिन्दोरन्वेति व्यसनमुदयं वा निधिरपा-
मुपाधिस्तत्रायं जयति जनिकर्त्तुः प्रकृतिता ।

(ध) आस्यताम् उपविश्यताम् ।

(न) अकारणवत्सलम् अहेतुकस्निग्धम् ।

क्वचिदिति ।—क्वचित् कदाचित्, कस्मिंश्चित् स्थाने वा, अस्माकम् अस्माभिः सह इति वा, वियोगेन विच्छेदेन, या आर्त्तिः व्यथा, तया दुःखी व्याकुलः, रामभद्रः इति गद्यस्थकर्तृपदेनान्वयः; दुःखाकरिष्यति दुःखितं करिष्यति, कौशिकमिति गद्यस्थकर्मपदेनान्वयः, तथा क्वचित् अपूर्वः अदृष्टपूर्वः, यः विषयः प्रदेशादिः, तस्य आलोकेन दर्शनेन, सुखी प्रीतः सन्, सुखयिष्यति च सुखीकरिष्यति च, अत्रापि रामभद्रः कौशिकमित्यनेनान्वयः । अनुष्टुप् वृत्तम् ॥ ५७ ॥

(प) कक्षेति ।—कक्षायाः प्रदेशस्य इत्यर्थः, विभागः पृथक् करणम्, अयमात्मीयः अयं पर इति पात्रभेदेन भेदबुद्धिरिति यावत् । रामभद्रमाधुर्य्यस्य रामचन्द्रीयचरित्रस्य रमणीयतायाः, रामभद्रस्य निजः परो वेति भेदबुद्धिर्नास्ति सर्वस्मिन्नेव समतावुद्धेरिति भावः ।

यदिति ।—अपां निधिः समुद्रः, यत् इन्दोः चन्द्रस्य, व्यसनं विपत्तिं, कृष्णपक्षे अदर्शनमित्यर्थः, उदयं वा उन्नतिं वा, शुक्लपक्षे पुनः पूर्णताप्राप्तिमित्यर्थः, अन्वेति अनुगच्छति, चन्द्रस्य अदर्शने उच्छ्वासाभावम् उदये च उच्छ्वासं प्राप्नोतीति भावः, तत्र अनुगमे, अयम् एषः, उपाधिः कारणमिति यावत्, यत् जनिकर्त्तुः जनकस्य, प्रकृतिता स्वभावः, जयति उत्कर्षेण वर्त्तते इत्यर्थः, अपत्यस्य इन्दोर्व्यसने व्यसनम्, उदये च

अयं कः सम्बन्धो यदनुहरते तस्य कुमुदम् ?
विशुद्धाः शुद्धानां ध्रुवमनभिसन्धिप्रणयिनः ॥ ५८ ॥

दशरथः । (विमृश्य) । एवमेतत्—

रत्नाकरो जनयिता सहजश्च वर्गः
किं कथ्यताममृत-कौस्तुभ पारिजाताः ।
किं तैरचिन्त्यमिह तत् पुनरन्यदेव
तस्यान्तरं कुमुदबन्धुरसौ यदिन्दुः ॥ ५९ ॥

(पुनरवलोक्य) । कथम् !! लोचनपथम् (फ) अतिक्रान्तः सराम-लक्ष्मणो भगवान् !! तत् वयमपि वत्सप्रवासदुर्मनायमाना दक्षिणकोशलेश्वरसुतां (ब) देवीमुपेत्य सान्त्वयामः ।

(इति निष्क्रान्ताः सर्वे) ।

(इति मुनीन्द्रसंवादो नाम प्रथमोऽङ्कः) ।

---

उदयो जनकस्य समुद्रस्य स्वाभाविकः इति सम्भाव्यते इति भावः, परन्तु कुमुदं कैरवं, यत् तस्य इन्दोः, अनुहरते अनुगच्छति, चन्द्रे उदिते कुमुदमुल्लसति अस्तमिते च निमीलतीति भावः, अयम् एषः अनुहरणरूपः, सम्बन्धः सम्पर्कः, कः ? कीदृशः ? इन्दुना सह कुमुदस्य न कोऽपि सम्बन्धोऽस्तीत्यर्थः. पिता पुत्रस्य उदये विपदि च तदनुरूप सुखं दुःखञ्चानुभवतीति स्वभावो युज्यते, कुमुदेन च चन्द्रस्य कः सम्बन्धः, येन तथा आचरतीति भावः ; अतः सम्बन्धः न प्रणयहेतुरित्याह, विशुद्धा इति । विशुद्धाः निर्मलप्रकृतयः, शुद्धानां निर्मलप्रकृतीनाम्, अनभिसन्धिप्रणयिनः अकृत्रिमस्नेहभाजः, भवन्तीति शेषः, इति ध्रुवम् उत्प्रेक्षा । शिखरिणी वृत्तम् ॥ ५८ ॥

रत्नाकर इति ।—रत्नाकरः समुद्रः, जनयिता उत्पादकः, अमृत-कौस्तुभ-पारिजाताश्च, सहजो वर्गः सोदरः, अत्र किं कथ्यताम ? किं वक्तव्यम ? तैः अमृत-कौस्तुभ-पारिजातैः रत्नाकरेण चेत्यर्थः, किम ? न किमपि प्रयोजनं चन्द्रस्येति भावः, पुनः किन्तु, इह जगति, अन्यदेव अपरं किञ्चित्, तत् अनिर्देश्यमिति भावः, अचिन्त्यम् अतर्कणीय, तस्यान्तरं भावान्तरम, अस्तीति शेषः, यत् असौ इन्दु चन्द्रः, कुमुदबन्धुः कैरववल्लभः ; जन्य-जनकभावादिसम्बन्धोऽकिञ्चित्कर इति भावः । वसन्ततिलकं वृत्तम् ॥ ५९ ॥

(फ) लोचनपथं दृष्टिमार्गम् ।

(ब) वत्सेति ।—वत्सयोः राम-लक्ष्मणयोः, प्रवासेन भिन्नदेशत्वेन, विच्छेदेनेति

# द्वितीयोऽङ्कः।

( ततः प्रविशति यजमानशिष्यः )।

शिष्यः। अये! प्रभातप्रायैव रजनी!! तथा हि—

तमोभिः पीयन्ते गतवयसि पीयूषवपुषि
ज्वलिष्यन्मार्तण्डोपलपटलधूमैरिव दिशः।
सरोजानां कर्षन्नलिमयमयस्कान्तमणिवत्
क्षणादन्तःशल्यं तपति पतिरद्यापि न रुचाम्॥ १॥

अपि च—

जाताः पक्वपलाण्डुपाण्डुमधुरच्छायाकिरस्तारकाः
प्राचीमङ्कुरयन्ति किञ्च न रुचो राजीवजीवातवः।

---

यावत्, "प्रवासो भिन्नदेशित्वं कार्याच्छापाच्च सम्भ्रमात्" इति दर्पणे; दुर्मनायमानां दुःखितमनसाम्। दक्षिणकोशलेश्वरसुतां कौशल्याम्।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्यविरचिता
अनर्घराघवप्रथमाङ्कव्याख्या समाप्ता।

---

तमोभिरिति।—पीयूषवपुषि अमृतमयदेहे अमृतरश्मौ चन्द्रे इत्यर्थः, गतम् अतीतं, वयः यौवनकालो यस्य तथाभूते, अस्तं गते सतीत्यर्थः, ज्वलिष्यतः सूर्यकिरणयोगेन तेजः प्रकटयिष्यतः, मार्तण्डोपलपटलस्य सूर्यकान्तमणिनिचयस्य, धूमैरिव तमोभिः तिमिरैः, दिशः पीयन्ते आच्छाद्यन्ते इति यावत्, अद्यापि इदानीमपि, रुचां प्रभाणां, पतिः प्रभुः, सूर्यः इत्यर्थः, अयस्कान्तमणिवत् अलिमयं भ्रमरमयं, सरोजानां पद्मानाम्, अन्तःशल्यम् अन्तराश्रितकीटनिर्मितशल्यविशेषं, कर्षन् बहिर्निर्गमयन्, न तपति न सन्तापं वितरति, न प्रकाशं प्राप्नोतीत्यर्थः। उपमाऽलङ्कारः। शिखरिणी वृत्तम्॥ १॥

जाता इति।—तारकाः नक्षत्राणि, पक्वः परिणतः, यः पलाण्डुः यवनेष्टः, "पेँयाज" इति प्रसिद्धः कन्दविशेषः इत्यर्थः, तद्वत् पाण्डुः शुभ्रा, मधुरा मनोज्ञा च, या छाया

लूतातन्तुवितानवर्त्तुलमितो बिम्बं दधच्चुम्बति
प्रातः प्रोषितरोचिरम्बरतलादस्ताचलं चन्द्रमाः ॥ २ ॥

( सर्वतोऽवलोक्य च )—

दिङ्मण्डलीमुकुटमण्डनपद्मराग-
रत्नाङ्कुरे किरणमालिनि गर्भितेऽपि ।
सौखप्रसुप्तिकमधुव्रतचक्रवाल-
वाचालपङ्कजवनीसरसाः सरस्यः ॥ ३ ॥

अपि च—

प्राचीविभ्रमकर्णिकाकमलिनीसंवर्त्तिकाः सम्प्रति
द्वे तिस्रो रमणीयमम्बरमणेर्व्यामुच्चरन्ते रुचः ।

कान्तिः, ता किरन्ति विक्षिपन्ति, विस्तारयन्तीत्यर्थः तथाभूताः, जाताः, राजीवानां पद्मानां, जीवातवः जीवनौषधभूताः, "जीवातुर्जीवनौषधम्" इत्यमरः, रुचः प्रभाः, अरुणकिरणा इत्यर्थः, प्राचीं पूर्वां दिशं, किञ्चन किञ्चिन्मात्र, स्वल्पमात्रमित्यर्थः, अङ्कुरयन्ति उद्गदयन्ति, किञ्चित् प्रकाशयन्तीत्यर्थः, इतः अस्मिन्, प्रातः प्रभातसमये, प्रोषितरोचिः गतप्रभः, चन्द्रमाः लूता ऊर्णनाभाख्यकीटविशेषः, तस्याः तन्तुवितानवत् सूत्रविस्तारवत्, वर्त्तुलं गोलाकार, जीर्णं धूसरश्चेति भावः, बिम्बं मण्डल, दधत् बिभ्रत् सन्, अम्बरतलात् आकाशमण्डलात्, अस्ताचलं चुम्बति स्पृशति, अस्तगिरिशिखरम् आश्रयतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

दिङ्मण्डलीति ।—दिङ्मण्डल्याः प्राच्या दिश इत्यर्थः, मुकुटमेव मण्डनं भूषणं, तस्मिन् यत् पद्मरागरत्नं तस्य अङ्कुरः प्ररोहः तस्मिन्, किरणमालिनि सहस्रकिरणे, सूर्ये इत्यर्थः, गर्भितेऽपि गर्भस्थितेऽपि, गगनाभ्यन्तरस्थितेऽपीत्यर्थः, अनुदितेऽपीति भावः, सरस्यः सरोवराणि, सुखप्रसुप्ति सुखनिद्रां पृच्छन्तीति सौखप्रसुप्तिकाः, तथाभूता ये मधुव्रताः भ्रमराः, तेषां चक्रवालेन मण्डलेन, समूहेनेत्यर्थः, वाचालया बहुभाषिण्या, भ्रमराणामविरतगुञ्जनादिति भावः, "स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्" इत्यमरः, पङ्कजवन्या कमलवनेन, सरसाः रसवत्यः, मनोहारिण्य इति भावः, जाता इति शेषः । वसन्ततिलकं वृत्तम ॥ ३ ॥

प्राचीति ।—सम्प्रति प्राच्याः दिशः, नायिकाया इति ध्वनिः; विभ्रमाय विलासार्थ-मित्यर्थः, कर्णिकाः कर्णाभरणानि, "कर्णिका कर्णभूषणे" इत्यमरः; तत्स्वरूपा इति

सूर्य्योच्छ्वासमपीदमुत्सुकतया सम्भूय कोषाद्‌बहि-
र्निष्क्रामद्भ्रमरौघसम्भ्रमभरादम्भोजमुज्जृम्भते ॥ ४ ॥

अपि च—

एक-द्विप्रभृतिक्रमेण गणनामेषामिवास्तं यतां
कुर्वाणा समकोचयद्दशशतान्यम्भोजसंवर्त्तिकाः ।
भूयोऽपि क्रमशः प्रसारयति ताः सम्प्रत्यमूनुद्यतः
सङ्ख्यातुं सकुतूहलेव नलिनी भानोः सहस्रं करान् ॥ ५ ॥

अपि च—

प्रत्यासन्नसुरेन्द्रसिन्धुरशिरःसिन्दूरसान्द्रारुणा
यत्तेजस्त्रसरेणवो वियदितः प्राचीनमातन्वते ।

---

भावः, कमलिनीसंवर्त्तिकाः पद्मिनीनवदलानीत्यर्थः, तत्स्वरूपा इति भावः, अम्बरमणेः सूर्य्यस्य, द्वे तिस्रः, उभयथापि वा इति शेषः, द्वे वा तिस्रो वेत्यर्थः, रुचः प्रभाः, आशाम् आकाशम्, उच्चरन्ति उद्गच्छन्ति, पूर्व्वाशामुद्भासयितुं प्रक्रमन्ते इत्यर्थः; सूर्य्योच्छ्वासमपि अल्पकिरणसम्पर्कात् ईषत् विकसितमपि, इदम् अम्भोज पद्मम्, उत्सुकतया उत्कण्ठया, कदा बहिर्निर्गच्छाम इति उद्वेगातिशय्यादित्यर्थः, सम्भूय मिलित्वा, कोषात् कुड्मलात्, सायं मुकुलीभावं गतात् पद्मादित्यर्थः, बहिर्निष्क्रामतः निर्गच्छतः, भ्रमरौघस्य भ्रमरसमूहस्य, पूर्व्वसन्ध्यायां कमलदलान्तः आबद्धस्य इति भावः, सम्भ्रमभरात् आवेगातिशयात् त्वरातिशयात् वा हेतोः, "सम्भ्रमस्त्वरा" इत्यमरः, उज्जृम्भते अत्यन्त विकसतीत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

एकेति।—नलिनी पद्मिनी, अस्तं यतां गच्छताम्, एषां किरणानाम्, एक-द्वि-प्रभृतिक्रमेण एकः किरणः अस्तं गतः, द्वौ किरणौ अस्तं गतौ, त्रयः किरणाः अस्तं गता इत्यादिरूपेण, गणनां सङ्ख्यां, कुर्वाणेव कुर्व्वतीव, दशशतानि सहस्राणीत्यर्थः, अम्भोज-संवर्त्तिकाः पद्मनवदलानि, "संवर्त्तिका नवदलम्" इत्यमरः; समकोचयत् न्यमीलयत्, किरणानामस्तगमनवत् एकादिक्रमेण सङ्कुचिता अकरोदित्यर्थः, निजदलानि निमीलितवतीति यावत्, सम्प्रति इदानीम्, उद्यतः उदयं गच्छतः, भानोः सूर्य्यस्य, अमून् सहस्र करान् किरणान्, सङ्ख्यातुं गणयितुं, सकुतूहलेव कौतुकवतीव, भूयोऽपि पुनरपि, ताः संवर्त्तिकाः, क्रमशः एक-द्व्यादिक्रमेण, प्रसारयति विस्तारयति, विकाशयतीत्यर्थः। उत्प्रेक्षाऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

प्रत्यासन्नेति।—प्रत्यासन्नः निकटवर्त्ती, पूर्व्वदिगधिपत्वादिति भावः, यः सुरेन्द्रः

अहं सम्प्रति यावदभ्युदयते तत्तर्कुटङ्कोन्मृजा-
रज्यद्बिम्बरजश्छटावलयितो देवस्त्विषामीश्वरः ॥ ६ ॥

(पुरः (क) अवलोक्य)। कथम्, इदमुदयाचलमौलिमाणिक्यम् (ख) अर्कमण्डलमद्यापि न विहायस्तलम् (ग) अलङ्करोति !! तदस्मद्दूरायितायमानयज्ञस्य कुलपतेः कौशिकस्यादेशात् समिदाहरणाय (घ) प्रस्थितोऽस्मि; तत् त्वरितं गच्छामि।

(इति परिक्रामति)।

---

देवराज, तस्य सिन्धुरः सिन्धुः इभदानं, गजमदजलमित्यर्थः, "सिन्धुः समुद्रे नद्याञ्च मदे देशनदे नयोः" इति मेदिनी, स अस्य अस्तीति सिन्धुरः हस्ती, ऐरावत इत्यर्थः, तस्य शिरःसिन्दूरस्य शोभार्थं मस्तके विन्यस्तसिन्दूरस्य, सान्द्रः निविडः, अतीवेत्यर्थः, अरुणः रक्तः, यः त्विषामीश्वरस्य, तेजसां द्युतीनां, वसरैव परमाणुसूक्ष्मत्व-परिमाणावशेषाः, इतः अस्मिन् प्रदेशे, प्राचीनं दिगन्तं पूर्वाकाशम्, आनन्दतः व्याप्नुवन्ति, प्रकाशयन्तीत्यर्थः, अतः अहं मन्ये, सम्प्रति तस्य तर्कुटङ्कादित्यवर्त्तुं देवशिल्पिनः विश्वकर्मण इत्यर्थः, तर्कुः चक्राकारयन्त्रविशेषः, शाण इति यावत्, तत्र यष्टङ्कः पाषाण-दारणास्त्रविशेषः, तेन उन्मृजा विशुद्धिः, संस्कार इति यावत्, तया रज्यत् रक्तीभवत्, उज्ज्वलीभवदित्यर्थः, यत् बिम्बमण्डलं, तस्य रजसां रेणूनाम्, उन्मार्जनकाले भूमौ पतितानां कणानामिति भावः, छटाभिः समन्ततः प्रसृताभिः दीप्तिभिः, वलयितः वेष्टितः, त्विषां तेजसाम्, ईश्वरः प्रभुः, देवः सूर्यः, अभ्युदयते यावत् अचिरादेव उदेष्यतीत्यर्थः। "यावत् कार्त्स्न्येऽवधारणे" इति मेदिनी, "यावत्पुराभ्यां भव्ये" इति सूत्रेण वर्त्तमानसामीप्यसम्बन्धिनि भविष्यति लट्। शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

(क) पुरः अग्रतः।

(ख) उदयेति।—उदयाचलस्य मौलौ शिरसि, शिखरमिति शेषः, माणिक्य रत्नविशेषः, तद्वदित्यर्थः।

(ग) विहायस्तलं गगनतलम्।

(घ) अस्मद्दूरे समाजम् आचार्य्यस्य। कुलपतेः "मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात्। अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः ॥" इत्युक्तलक्षणस्य। कौशिकस्य विश्वामित्रस्य। वितायमानयज्ञस्य विस्तार्यमाणयज्ञस्य। समिदाहरणाय काष्ठाहरणाय, "काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित् स्त्रियाम्" इत्यमरः।

(प्रविश्य सम्भ्रान्तो बटुः (ङ)) ।

बटुः । अज्ज ! सुणस्सेह ! किं वि अच्चरिअं भीसणं अ वट्टदि । *

शुनःशेफः । (सचमत्कारं परिवृत्य) । सखे पशुमेढ्र ! किमाश्चर्य्यं भीषणं च वर्त्तते ?

पशुमेढ्रः । अज्ज ! रामो त्ति को वि खत्तिअकुमारो आअदो त्ति सुणिअ कोदूहलेण धावन्तस्स तवोवणपेरंतपरिट्ठिदा (च) पत्थरपुत्तलिआ मच्चमाणुसीभविअ मम ज्जेव्व संमुहं परावडिदा (छ) । तं पेक्खिअ उत्तरासंगवक्कलं (ज) वि उज्झिअ (झ) पलाइदो म्हि । †

शुनःशेफः । (विहस्य) । सखे ! साधु कृतम् । दिष्ट्या हि जीवतः पुनरावृत्तिः (ञ) ।

पशुमेढ्रः । ता रक्खदु मं अज्जो इमाए दुट्टरक्खसीए मुहादो । ‡
(इति वेपमानः (ट) पादयोः पतति) ।

---

* आर्य्य ! शुनःशेफ ! किमप्याश्चर्य्यं भीषणं च वर्त्तते ।

† अद्य राम इति कोऽपि क्षत्रियकुमार आगत इति श्रुत्वा कुतूहलेन धावतस्तपोवनपर्य्यन्तपरिस्थिता प्रस्तरपुत्तलिका सत्यमानुषीभूय ममैव सम्मुखं परापतिता । तां प्रेक्ष्य उत्तरासङ्गवल्कलमप्युज्झित्वा पलायितोऽस्मि ।

‡ तत् रक्षतु मामार्य्य एतस्या दुष्टराक्षस्या मुखात् ।

---

(ङ) बटुः ब्रह्मचारी ।

(च) तपोवनपर्य्यन्तपरिस्थिता तपोवनप्रान्तवर्त्तिनी ।

(छ) परापतिता उपस्थिता ।

(ज) उत्तरासङ्गवल्कलम् उत्तरीयभूतवल्कलम् ।

(झ) उज्झित्वा त्यक्त्वा ।

(ञ) दिष्ट्या भाग्येन । जीवतः जीवनेन वर्त्तमानस्य, तवेति शेषः ; भाग्यवशेन जीवनेनावस्थाय आश्रममागतोऽसीति भावः । पुनरावृत्तिः पुनरागमनम् ।

(ट) वेपमानः कम्पमानः ।

शुनःशेफः। (साश्चर्य्यमुत्थायालिङ्ग्य च)। वयस्य! शृणोषि भगवतो गोतमस्य महर्षेरहल्यां नाम धर्मदारान् (ठ)?

पशुमेढ्रः। जा जणअवंसपुरोहिदस्स तत्थभवदो सदाणंदस्स जणणी? तदो तदो? *

शुनःशेफः। सेयं पुरा पुरुहूतखण्डितचरित्रा (ड) तस्य दीर्घतपसो मुनेर्मन्युना निजमेव (ढ) तदिन्द्रियदौर्बल्यम् (ण) एवं विवर्त्तमानमनुभवन्ती (त) सम्प्रत्यस्य रघुराजपुत्रस्य तेजसा तस्मादन्धकारान्निरमुच्यत (थ)। तदलमावेगेन (द)।

पशुमेढ्रः। (उन्मील्य चक्षुषी सर्वतोऽवलोक्य)। अहो अच्चरिअं!! अज्जस्स पसादेण पुणो वि जीअलोए पविट्ठो म्हि। तह वि संकज्जरो अज्ज वि ण मं परिच्चअदि। ता अज्ज! सुणस्सेह! मुहुत्तअं विसमीअदु। †

शुनःशेफः। सखे! भयमिति किमेतत् ब्राह्मणस्य? तत् पर्य्यवस्थापयात्मानम् (ध)। (इत्युपविशतः)।

---

* या जनकवंशपुरोहितस्य तत्रभवतः शतानन्दस्य जननी? ततस्ततः?

† अहो! आश्चर्य्यम्!! आर्य्यस्य प्रसादेन पुनरपि जीवलोके प्रविष्टोऽस्मि। तथाऽपि शङ्काज्वरोऽद्यापि न मां परित्यजति। तदार्य्य! शुनःशेफ! मुहूर्त्तं विश्रम्यताम्।

---

(ठ) धर्मदारान् धर्मपत्नीम्।

(ड) पुरुहूतेति।—पुरुहूतेन इन्द्रेण, खण्डितं भग्नितं, चारित्रं पातिव्रत्यमिति यावत् यस्याः तथाभूता।

(ढ) दीर्घतपसः दीर्घकालं व्याप्य तपश्चरतः, महातपस्विन इत्यर्थः। मुनेः गोतमस्य। मन्युना क्रोधेन। निजमेव स्वमेव।

(ण) इन्द्रियदौर्बल्यम् इन्द्रियस्य स्पर्शेन्द्रियस्य, दौर्बल्यं विकारमिति यावत्।

(त) विवर्त्तमानं परिणमत्। अनुभवन्ती भुञ्जाना।

(थ) अन्धकारात् शापप्रभावेण जीवलोकेन सह संसर्गशून्यरूपादिति भावः। निरमुच्यत निर्मुक्ता अभूदित्यर्थः।

(द) आवेगेन उद्वेगेन।

(ध) पर्य्यवस्थापय स्थिरीकुरु। आत्मानं स्वम्।

पशुमेढ्रः। (चिरं विमृश्य निःश्वस्य (न) च सविषादम्)। कधं, विसअ-मिअतिण्हासलज्झलाए (प) भअवदो हरिणो वि हरिणदा विटप्पीअदि !! *(फ)।

शुनःशेफः। (विहस्य)। साधु ब्रवीषि। अल्पीयान् (ब) खल्वयं लोकः कथमैहिकसुखाध्यवसायात् (भ) वै अमू-भूयस्यो (म) रातयः पराहण्यन्ते (य)। किन्तु मनोहारिभिराहार्य्यैराक्रियमाणलोचनद्वितयस्यापि (र) न जनो विवेकमङ्कुश-

* कथं, विषयमृगतृष्णासलज्झलया भगवतो हरेरपि हरिणता विटप्यते ॥

(न) निःश्वस्य कथं देवेन्द्रोऽपि दुष्टगमनकार्य्यं कृतवानिति विषादादिति भावः।

(प) विषयेति।—विषयाः भोग्यवस्तूनि, स्रक्चन्दनवनितादयः एवेत्यर्थः, मृगतृष्णाः मरीचिकाः, तासां सलज्झलया शोभया, चाकचक्येनेति यावत्, मोहनेनेति भावः। "सलज्झला तु शोभायाम्" इति रत्नकोषः।

(फ) हरेरिन्द्रस्य। हरिणता हरिणवृत्तिता, पशुत्वमिति यावत्, पाशवी वृत्तिरिति भावः। विटप्यते उपार्ज्यते, विटपि-धातुश्चुरादिर्द्रष्टव्यः। यद्वा—विटप्यते विटप इव आचरतीत्यर्थः, शाखा यथा विस्तृतिं लभते, तथा इन्द्रस्य पाशवप्रवृत्तिरपि विस्तृतिं लभते इति भावः।

(ब) अल्पीयान् अल्पसङ्ख्यकः, विरल इत्यर्थः; यद्वा—क्षुद्राशयः।

(भ) ऐहिकेति।—ऐहिकम् एतज्जन्मसम्बद्धं, यत् सुखम् इन्द्रियभोगजमिति भावः, तस्य अध्यवसायात् आश्रयात्, एतज्जन्मसुखलालसयेत्यर्थः। यद्वा—ऐहिकम् इहलोके भोग्यं, न तु परलोके भोग्यमिति भावः, यत् सुखं तत्र अध्यवसायात् निश्चयात्, उत्साहात् वा।

(म) भूयस्यः बह्व्यः।

(य) पराहण्यन्ते विनाश्यन्ते, व्यर्थं नीयन्ते इत्यर्थः, पारत्रिकसुखजनककार्य्य-वैमुख्येनेति भावः।

(र) आहार्य्यैः आयासेन सम्पाद्यैरित्यर्थः, यद्वा—आहार्य्यैः कृत्रिमैः, क्षयिष्णुभि-

यितुमधीष्टे (ल), किं पुनर्नयनसहस्रतयस्य तादृशि विभवे मरुतां पतिः? चक्षुःप्रीतिमुद्भवन्तीमनूद्भवन्ति चापराणि कुसुमचापचापलानि (व)।

पद्मसेढुः। (विहस्य)। सहि, एदाए ज्जेव्व मुणिघरणीए पुण्णपरिणामो एत्थ रामभद्दस्स पवासे कारणं। *

शुनःशेफः। इदं तावत् प्रथमम् (श)।

पद्मसेढुः। (साभ्यर्थनम्)। अज्ज! दुदीअं (ष) वि सुणिदुं इमिणा दे वअणेण पज्जुस्सुओ (स) म्हि †।

शुनःशेफः। सखे! त्वयि किमकथनीयं नाम। अस्ति किष्किन्धायां पुरन्दरस्य (ह) नन्दनो वालिर्नाम प्लवगराजः।

---

* सखे, एतस्या एव मुनिगृहिण्याः पुण्यपरिणामोऽत्र रामभद्रस्य प्रवासे कारणम्।

† आर्य्य। द्वितीयमपि श्रोतुमनेन तव वचनेन पर्य्युत्सुकोऽस्मि।

---

रित्यर्थः, भोग्यवस्तुभिरिति भावः। आद्रियमाणलोचनद्वितयस्य आकृष्यमाणस्य नयनयुगलस्येत्यर्थः।

(ल) विवेकं विचारं, सदसद्विचारबुद्धिमित्यर्थः। अङ्कुशयितुम् अङ्कुशीकर्तुं, तादृशं लोचनयुगलं विवेकज्ञानेन निवारयितुमिति यावत्। न अधीष्टे न प्रभवति।

(व) नयनसहस्रतयस्य नयनानां सहस्रस्येत्यर्थः। विभवे ऐश्वर्य्ये सतीत्यर्थः। मरुतां पतिः देवेन्द्रः। चक्षुःप्रीतिं नेत्रानुरागम्, उद्भवन्तीम् उत्पद्यमानाम्, अनु पश्चात्, अपराणि अन्यानि, कुसुमचापस्य कामस्य, चापलानि चपलकार्य्याणि, उद्भवन्ति उत्पद्यन्ते, दर्शनवासनापरितृप्त्यनन्तरमेव वासनान्तरपरितृप्त्यर्थं साधुविगीतानि परदारसम्भोगादयः अभिलाषरूपाणि कामविलसितानि जायन्ते इति भावः।

(श) प्रथमं मुख्यम्, आद्यं वा, कारणमिति शेषः।

(ष) द्वितीयं, कारणमिति शेषः।

(स) पर्य्युत्सुकः समुत्सुकः, कुतूहलीत्यर्थः।

(ह) पुरन्दरस्य इन्द्रस्य। प्लवगराजः वानराधिपतिः।

तत्र रजनीचरचक्रवर्त्तिना दशकन्धरेण सह प्रवृत्तमैत्रीकम् अवलोक्य वानरार्क्षभल्ल-गोलाङ्गूलप्रभृतीनामाचार्य्यः सर्वामात्यानुमतः (क) जाम्बवानवादीत् ।

पशुमेढ्रः । (सकौतुकम्) । तदो तदो ? *

शुनःशेफः । ततश्च "राजन् ! मायाविनी (ख) खल्वियं राक्षसजातिः ; विशेषेण महेन्द्रावस्कन्दकन्दलितविक्रमः (ग) पितृवैरी तवायं रावणः । अपि च, त्वदीयदोर्मूलसम्पीडनगलितपौरुषो (घ) न विश्वविजयीति स्वयमाशङ्कनीयः । नापि सामन्तान्तरजिहासयामन्तरावर्त्तिनि समुद्रे लघुमनुत्थः (ङ), तदनेन विराद्धमण्डलेन महासुरविजयिना मैत्रमनर्थानुबन्धि

* ततस्ततः ?

(क) रजनीचरचक्रवर्त्तिना निशाचराधिपेन, राक्षसराजेनेत्यर्थः । प्रवृत्तमैत्रीकं सञ्जातमित्रभावम् । वानरेति ।—वानराः कपयः, ऋक्षभल्लाः भल्लुकाः, "अथ भल्लुके । ऋक्षाच्छभल्लभालूकाः" इत्यमरः ; गोलाङ्गूलाः गोलाङ्गूलाकृतिलाङ्गूलविशिष्टाः कृष्णमुखवानरविशेषाः, तत्प्रभृतीनाम् । आचार्य्यः गुरुः । सर्वामात्यानुमतः सर्वेषु अमात्येषु सर्वैरमात्यैर्वा समादृतः ।

(ख) राजन् ! नृपते ! वालिन् ! । मायाविनी कपटमयी, छलनापरायणेत्यर्थः ।

(ग) महेन्द्रेति ।—महेन्द्रस्य अवस्कन्देन आक्रमणेन, कन्दलितः उद्गतः, सर्वत्र प्रसारं प्राप्त इत्यर्थः, विक्रमो यस्य तथोक्तः ।

(घ) त्वदीयेति ।—तव इदं त्वदीयं, यत् दोर्मूलं बाहुमूलं, तेन यत् सम्पीडनं सम्यक् पेषणमित्यर्थः, तेन गलितं विनष्टं, पौरुषं पुरुषकारः, पुरुषोचितसामर्थ्यमित्यर्थः यस्य तथाभूतः । पुरा सन्ध्यामुपासीनं वालिनमुपेत्य रावणः सङ्ग्रामाय आचक्राम । स तु तं कक्षमारोप्य सप्तसु समुद्रेषु भ्रामयित्वा सन्ध्यां समाप्य च निर्जीवमिव मातिशयमनुनीतस्तत्याजेति पुरावार्त्ता ।

(ङ) सामन्तेति ।—सामन्तान्तरस्य राजान्तरस्य, जिहासायां जिघृक्षायां, स्वात्मपोति शेषः, तव निपाताथम् अन्येषां राज्ञां साहाय्यमानयेति भावः, अन्तरावर्त्तिनि मध्यवर्त्तिनि, समुद्रे लघु शीघ्रं, समुत्तिष्ठतीति तथोक्तः, तव बाहुमर्द्दनेन चलितपौरुषतया असामर्थ्यादिति भावः ।

(च)। किञ्च सर्वथैवमनुपकारिणो पुलस्त्यापत्येषु (छ) प्रीतिरिति भगवानिहोदाहरणं हरिणाङ्कशेखरः (ज)। तथा हि—

उक्षा रथो भूषणमस्थिमाला
भस्माङ्गरागो गजचर्म वासः।
एकालयस्थेऽपि धनाधिनाथे
सख्यौ दशेयं त्रिपुरान्तकस्य ॥ ७ ॥

पशुमेढ्रः। (सहासम्)। अहो! ठेरमल्लअस्स मंतोवण्णासो (झ) परिहासकुसलदा अ। तदो तदो? *

* अहो! स्थविरमल्लकस्य मन्त्रोपन्यासः परिहासकुशलता च। ततस्ततः?

(च) विरोहमण्डलेन विरोह कृतविरोध, सञ्जातवैरमिति यावत, मण्डलं राष्ट्रं यस्य तादृशेन। असुरविजयिना सुरेभ्यः विजय पराभवः सुरविजयः, स नास्ति यस्य तथाभूतेन सुरविजयिनेत्यर्थः, यद्वा—असुराणामपि विजयिना विजेत्रा, न केवल सुरासुरयम, असुराणामपि जय इत्यतु, अत एव विरोहमण्डलेनेति भावः। "सुरविजयिना" इति "सुरासुरविजयिना" इति वा पाठः समीचीनः। अनयानुबन्धि परिणामे अशुभजनकम्। "सकृद्दुष्टञ्च मित्रं यः पुनः सन्धातुमिच्छति। स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥" इति। तथा, "शत्रुणा न हि सन्दध्यात् सुश्लिष्टेनापि सन्धिना। सुतप्तमपि पानीयं शमयत्येव पावकम्॥" इति च नीतिशास्त्रमत्र द्रष्टव्यम्।

(छ) अनुपकारिणो उपकारपराङ्मुखो। पुलस्त्यापत्येषु पुलस्त्यस्य महर्षिविशेषस्य, अपत्येषु सन्तानेषु, यक्षेश्वर राक्षसेश्वरादिष्विति भावः।

(ज) उदाहरणं दृष्टान्तः। हरिणाङ्कशेखर चन्द्रशेखरः, शिव इत्यर्थः।

उक्षेति।—सख्यौ मित्रे, धनाधिनाथे धनपतौ, कुबेरे इत्यर्थः, पुलस्त्यापत्ये इति भावः, एकालयस्थेऽपि एक एव आलयः वसतिः, कैलासः इत्यर्थः, तत्र स्थितेऽपि, विप्रकर्षस्थिते तु किं वक्तव्यमिति भावः, त्रिपुरान्तकस्य हरस्य, इयम् ईदृशी, दशा अवस्था, दुरवस्थेत्यर्थः; तथा च, रथः यानं, वाहनमिति यावत्, उक्षा वृषः, भूषणम् अलङ्कारः, अस्थिमाला, अङ्गरागः अनुलेपनद्रव्यं भस्म, वासः वस्त्रं, गजचर्म। इन्द्रवज्रा वृत्तं, "स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति तल्लक्षणात्॥ ७॥

(झ) स्थविरमल्लकस्य वृद्धभल्लूकस्य। मन्त्रोपन्यासः मन्त्रणावचनम्।

शुनःशेफः। ततश्च तद्वचनं जराप्रलपितम् (ञ) इत्युपहसति हरीश्वरे उपांशु तदनुमत्या महामात्यस्य केसरिणः (ट) पुत्रो हनुमान् कुमारं सुग्रीवमादाय ऋष्यमूकं नाम पर्वतदुर्गमनुप्रविष्टः।

परशुमेढ्रः। (साकूतम् (ठ))। अज्ज! जो सो मारुदी तेदामल्लो (ड) त्ति सुणीअदि ?*

शुनःशेफः। अथ किम् (ढ)।

परशुमेढ्रः। (सविचिकित्सम् (ण))। अज्ज! जधा तधा भोदु, सामी सामी ज्जेव्व ; तं (त) परिच्चइअ ण सरिसो (थ) तारिसस्स महाणुभावस्स पडिऊलपरिग्गहो † (द)।

---

* आर्य्य! योऽसौ मारुतिस्त्रेतामल्ल इति श्रूयते ?

† आर्य्य। यथा तथा भवतु, स्वामी स्वाम्येव ; तं परित्यज्य न सदृशस्तादृशस्य महानुभावस्य प्रतिकूलपरिग्रहः।

---

(ञ) जरेति।—जरया वार्द्धकेन, प्रलपितम् अर्थशून्य वचनम्, असङ्गतवाक्यमित्यर्थः, "प्रलापोऽनर्थकं वचः" इत्यमरः।

(ट) हरीश्वरे कपीन्द्रे, वानरराजे वालिनीत्यर्थः, "शुकाहिकपिभेकेषु हरिर्ना" इत्यमरः। उपांशु एकान्ते। तदनुमत्या तस्य जाम्बवतः, अनुमत्या आदेशेन। महामात्यस्य महामन्त्रिणः। केसरिणः तदाख्यस्य वानरस्य।

(ठ) साकूतं साभिप्रायम्।

(ड) मारुतिः मरुतः वायोरपत्यं पुमान्, केसरिणः क्षेत्रे अञ्जनायां वायुना जात इति पुराणवार्त्ताऽनुसन्धेया। त्रेतामल्लः त्रेता द्वितीयं युग, तत्र मल्लः वीरः।

(ढ) अथ किं तथेत्यर्थः। "अथ किं स्वीकृतार्थकम्" इति भरतः।

(ण) सविचिकित्सं ससंशयं, "विचिकित्सा तु संशयः" इत्यमरः।

(त) तं स्वामिनम्।

(थ) न सदृशः न युक्तः।

(द) महानुभावस्य महाप्रभावस्य, महावीरस्य हनुमत इत्यर्थः। प्रतिकूलपरिग्रहः प्रतिकूलस्य प्रतिद्वन्द्विनः, सुग्रीवस्येत्यर्थः, परिग्रहः स्वीकारः, सुग्रीवस्य प्रभुत्वस्वीकरणमित्यर्थः, तदाश्रयग्रहणमित्यर्थो वा, "परिग्रहः कलत्रे च मूल स्वीकारयोरपि" इति मेदिनी।

शूनःशेफः। (विहस्य)। पुरैव किलायमाञ्जनेयः (ध) भगवतः सहस्रकिरणात् (न) व्याकरणविद्यामधीयानस्तदात्मजन्मनो वानरयोनेः (प) सुग्रीवस्य साहायकमभिप्रायज्ञो गुरुदक्षिणीचकार (फ)।

पञ्चमेढ्रः। (सानन्दम्)। हुं। ता उचिदं ज्जेव्व गुरुपुत्तो सबम्हचारी (ब) वा अणुवट्टीअदि। तदो तदो ? *

शूनःशेफः। ततश्चाहिभयोपजापजर्जरं सुहृद्गृहम् (भ) उपश्रुत्य राक्षसराजः खर-दूषण-त्रिशिरोभिर्महामात्यैरधिष्ठितमात्मबलैकदेशं सिन्धोरुदीचि (म) कूले वालिप्रतिग्रहाय (य) प्राहिणोत्।

पञ्चमेढ्रः। कधं, अपरिहीणमित्तधम्मो (र) वि सो रक्खसो†।

शूनःशेफः। सखे ! किमुच्यते, रावणः खल्वसौ।

---

* हुम्। तदुचितमेव गुरुपुत्रः सब्रह्मचारी वा अनुवर्त्यते। ततस्ततः ?

† कथम्, अपरिहीनमित्रधर्म्मोऽपि स राक्षसः।

---

(ध) आञ्जनेयः अञ्जना नाम काचित् वानरी तस्याः सुतः, हनुमानित्यर्थः।

(न) सहस्रकिरणात् सूर्य्यात्।

(प) तदात्मजन्मनः तत्पुत्रस्य, सूर्य्यात्मजस्येत्यर्थः। वानरयोनेः वानरीगर्भजस्य।

(फ) साहायकं साहाय्यम्। अभिप्रायज्ञः आशयज्ञः, गुरोः सूर्य्यस्येति भावः। गुरुदक्षिणीचकार गुरुदक्षिणात्वेन स्वीकृतवानित्यर्थः।

(ब) सब्रह्मचारी सतीर्थ, सहाध्यायीत्यर्थः।

(भ) अहिभयेति।—गृह्यत्वात् आवृताकारत्वाच्च स्वस्य पक्ष एव अहिः, तस्मात् भयम् अहितुल्यात् स्वपक्षात् भयमित्यर्थः, "नदीभुजामहिभयं स्वपक्षप्रभवं भयम्" इत्यमरः; उपजापः भेदश्च, ताभ्यां जर्जरं जीर्णं, दुर्बलमिति भावः। सुहृद्गृहं सुहृदः मित्रस्य, वालिन इत्यर्थः, गृहम्।

(म) सिन्धोः समुद्रस्य। उदीचि उत्तरे।

(य) वालिप्रतिग्रहाय वालिनः साहाय्यार्थमित्यर्थः।

(र) अपरिहीणेति।—न परिहीनः न परित्यक्तः, मित्रधर्मः यन तथाभूतः।

प्रियाकर्त्तुं त्वस्मै नवनिजशिरःकर्त्तनरस-
प्रहृष्यद्रोमा यः स परमिह लङ्कापरिवृढः।
विलक्षव्यापारं किमपि दहशुर्यस्य दशमं
शिरस्ते मूर्द्धानः क्षणधृतपुनर्जन्मसुभगाः॥ ८॥

पशुमेढ्रः। (सकौतुकम्।) तदो तदो ?*

शुनःशेफः। ततः सुकेतुसुता नागसहस्रबलधारिणी ताडका नाम राक्षसी तस्मादनीकात् (ख) आगत्य मनुष्यमण्डलविहार-कौतुकात् (ग) इमामस्मदीयां भूमिमधिवसति।

पशुमेढ्रः। (सकौतुकम्)। णाअसहस्सबला इत्थी अत्ति त्ति अस्सुदपुव्वं क्खु एदं। तदो तदो ?†

---

* ततस्ततः ?

† नागसहस्रबला स्त्री अस्तीत्यश्रुतपूर्वं खल्वेतत्। ततस्ततः ?

---

प्रियाकर्त्तुमिति।—नवनिजशिरःकर्त्तने नवसङ्ख्यकस्वकमस्तकच्छेदने, यो रसः अनुरागः, तेन प्रहृष्यन्ति उद्गच्छन्ति, रोमाणि यस्य तथाभूतः सञ्जातरोमहर्षः, यः लङ्कापरिवृढः लङ्काधिपः, "प्रभुः परिवृढोऽधिपः" इत्यमरः, स तु स एव, इह जगति अस्मै त्वस्मिने, यद्वा—त्वस्मै अन्यस्मै, त्व शब्दः सर्वादिगणान्तर्गतः अन्यार्थकः, प्रियाकर्त्तुं प्रियं कर्त्तुं, परं प्रभुः, समर्थ इति यावत्; "प्रियाकर्त्तुं कस्मैचन निजशिरःकर्त्तन-रस—" इति पाठे—कस्मैचन अनिर्वचनीयस्वरूपाय, शङ्करायेत्यर्थः, यस्य रावणस्य, क्षणेन कर्त्तनमात्रेण, धृतं गृहीतं, यत् पुनर्जन्म पुनरुत्थानं, तेन सुभगाः अतिप्रियाः इत्यर्थः, ते अस्तितनवसङ्ख्याकाः, मूर्द्धानः शिरांसि, दशमं शिरः किमपि विलक्षः सलज्जः, व्यापारः यस्य तथोक्तं, शङ्करसन्तोषकारित्वेन एते, नाहमिति लज्जाविधुरमिति भावः, ददृशुः। शिखरिणी वृत्तम्॥ ८॥

(ख) सुकेतुसुता सुकेतुर्नाम कश्चित् यक्षः तस्य तनया। नागसहस्रबलधारिणी हस्तिसहस्रसामर्थ्यवती। राक्षसी अगस्त्यशापात् राक्षसीभावमापन्नेति यावत्। अनीकात् सैन्यात्, राक्षसराजप्रेरितादिति भावः।

(ग) मनुष्येति।—मनुष्याणां मण्डले चक्रे, तस्मिन् विहारे विचरणे, यत् कौतुकम् औत्सुक्यं तस्मात्।

शुनःशेफः। ततश्च श्रौतस्य विधेः प्रत्यूहमस्याः (अ) असहमानः कुलपतिरिमौ दाशरथी रामलक्ष्मणावानीतवान्।

पशुमेढ्रः। जाणे, रामभद्दो त्ति को वि रक्खसाणं उवरि अवदस्सो (ब) क्खु एसो *।

शुनःशेफः। सखे! एवमेतत्। रामभद्र इति कोऽप्ययं चतुरक्षरो राक्षसरक्षासिद्धमन्त्रः (स)। विशेषेण पुनरिदानीं भगवता कौशिकेन ब्रह्मज्योतिषः (ड) तादृशं विवर्त्तम् (क) आश्चर्यं दिव्यास्त्रमन्त्रपारायणम (ख) अध्यापितः।

पशुमेढ्रः। सखे, मंतमईहिं अत्थदेवदाहिं समं बलादिबलाओ (ग) सत्तीओ वि रामे संकमिस्सदि †।

शुनःशेफः। अथ किम्। तदपि वृत्तमेव।

---

* जाने, रामभद्र इति कोऽपि राक्षसानामुपर्यवतीर्णः खल्वसौ।

† सखे, मन्त्रमयीभिरस्त्रदेवताभिः समं बलाऽतिबले शक्ती अपि रामे सङ्क्रमिष्यतः।

---

(अ) श्रौतस्य श्रुतिर्वेदः तद्विहितस्य, विधेः यज्ञस्येत्यर्थः। प्रत्यूहं विघ्नम्। अस्याः ताडकायाः, असहमानादिति शेषः।

(ब) राक्षसानाम् उपरि अवतीर्णः राक्षसेभ्यः अधिकबलशालित्वेनावतीर्णः इत्यर्थः, राक्षसान् हन्तुम् अवतीर्ण इति भावः।

(स) चतुरक्षरः चतुर्भिरक्षरैः निष्पन्न इति यावत्। राक्षसरक्षेति।—राक्षसेभ्यः रक्षायां सिद्धमन्त्रः अव्यर्थफलप्रदः मन्त्र इति यावत्।

(ड) ब्रह्मज्योतिषः ब्रह्मतेजसः।

(क) विवर्त्तं परिणामभूतम्।

(ख) दिव्यास्त्रेति।—दिव्यानाम् अलौकिकानाम्, अस्त्राणां कृशाश्वतनयानां, ये मन्त्राः रहस्योपनिषदः, तेषां पारायणं पारगमनं, साकल्यमित्यर्थः।

(ग) बलाऽतिबले बला च अतिबला च ते, विद्याविशेषौ, अनयोः पाठे क्षुधा-पिपासाराहित्यं स्यात्। तथाच रामायणे—"क्षुत्पिपासे न ते राम! भविष्येते नरोत्तम!। बलामतिबलाञ्चैव पठतस्तव राघव!॥" इति।

किञ्च, दीपिष्यमाणाः (छ) न क्रुध्यन्तीति रक्षितारं क्षत्रियमुपाददते (ज)।

पञ्चमेढ्रः। अज्ज! सोहणं मंतेसि। अण्णं वि किं वि पुच्छिदुकामो म्हि। *

शुनःशेफः। किं तत्?

पञ्चमेढ्रः। सव्वधा णिगूढं (झ) वि वाणराणं छग्गुणं (ञ) कधं अज्जेण पडिवण्णं (ट)? †

शुनःशेफः। सखे! सर्वमेतदयोध्यायात्रायां समाधिमयेन (ठ) चक्षुषा साक्षात्कृतत्रिभुवनवृत्तान्तस्य तातविश्वामित्रस्य मुखादश्रौषम्। (सर्वतोऽवलोक्य)। अये! प्राभातिकी (ड) भुवनस्य लक्ष्मीः (ढ)। तथा हि—

* आर्य्य! शोभनं मन्त्रयसे। अन्यदपि किमपि प्रष्टुकामोऽस्मि।

† सर्वथा निगूढमपि वानराणां षाड्गुण्यं कथमार्य्येण प्रतिपन्नम्?

भावः, रत्नाकरः रत्नानाम् आकरः उत्पत्तिस्थानमित्यर्थः, भवति। स्वातिनक्षत्रयोगे मेघमुक्तं जलं समुद्रमध्यवर्त्तिशुक्तिषु पतितं मौक्तिकं भवतीति प्रसिद्धिरत्रानुसन्धेया। प्रतिवस्तूपमाऽलङ्कारः, तल्लक्षणं दर्पणे—"प्रतिवस्तूपमा सा स्यात् वाक्ययोर्गम्यसाम्ययोः। एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक्।" इति। वसन्ततिलकं वृत्तम्॥ ९॥

(छ) किञ्च अन्यच्च। दीपिष्यमाणाः यशः वर्द्धिष्यन्तः।

(ज) उपाददते गृह्णन्ति, आश्रयन्तीत्यर्थः।

(झ) निगूढम् अतिगुप्तम्।

(ञ) षाड्गुण्यं षण्णां गुणानां सन्ध्यादीनां प्रयोग इत्यर्थः; "सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड्गुणाः—" इत्यमरः।

(ट) प्रतिपन्नं विदितम्।

(ठ) अयोध्यायात्रायां रामाभिषेकार्थम् अयोध्यागमनकाले इत्यर्थः। समाधिमयेन ध्यानमयेन।

(ड) प्राभातिकी प्रातःकालीना।

(ढ) लक्ष्मीः शोभा।

प्रत्यग्रज्वलितैः पतङ्गमणिभिर्नीराजिता भानवः
सावित्राः कुरुविन्दकन्दलरुचः प्राचीमलङ्कुर्वते।
प्रौढध्वान्तकरालितस्य वपुषश्छायाच्छलेन क्षणा-
दप्रक्षालितनिर्मलं जगदहो! निर्मोकमुन्मुञ्चति ॥ १० ॥

अपि च—

पीत्वा भृशं कमलकुड्मलशुक्तिकोषा
दोषातनीं तिमिरवृष्टिमथ स्फुटन्तः।
निर्यन्मधुव्रतकदम्बमिषाद्वमन्ति
बिभ्रन्ति कारणगुणानिव मौक्तिकानि ॥ ११ ॥

---

प्रत्यग्रेति।—प्रत्यग्रज्वलितैः अभिनवं यथा तथा प्रदीप्तैः, सूर्यकरस्पर्शादिति भावः, पतङ्गमणिभिः सूर्यकान्तोपलैः, नीराजिताः कृतारात्रिकाः, उत्तेजिताः इत्यर्थः, अत एव कुरुविन्दस्य पद्मरागस्य, कन्दलवत् नवाङ्कुरवत्, रुक् प्रभा येषां तथाभूताः, सावित्राः सौराः, भानवः रश्मयः, प्राचीं पूर्वां दिशम्, अलङ्कुर्वते शोभयन्ति; अहो! आश्चर्यं, जगत् क्षणात् क्षणमात्रेण, छायाम् अनातपं, "छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरः; तच्छलेन तद्व्याजेन, प्रौढेन उत्कटेन, ध्वान्तेन तिमिरेण, करालितस्य भीषणायितस्य, भयङ्करवत् प्रतीयमानस्येत्यर्थः, वपुषः अवयवस्य, अप्रक्षालितम् अधौत निर्मलं निर्मोकं कञ्चुकम्, उन्मुञ्चति त्यजति। अपह्नुतिरलङ्कारः, तदुक्तं दर्पणे—"प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः" इति। शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

पीत्वेति।—कमलानां पद्मानां, कुड्मलाः मुकुलाः, ते एव शुक्तिकोषाः मुक्तास्फोटरूपपात्राणि, दोषातनीं नैशीं, तिमिरवृष्टिम् अन्धकाररूपां वृष्टिं, भृशम् अत्यर्थं, पीत्वा अथ अनन्तरं, प्रातरिति भावः, स्फुटन्तः विकसन्तः सन्तः, निर्यन् निर्गच्छन्, यः मधुव्रतकदम्बः भ्रमरवृन्दं, तन्मिषात् तद्व्याजात्, कारणगुणान् कारणस्य दृष्टस्य तिमिरस्य, गुणान् कार्याणि इत्यर्थः, बिभ्रतीव दधानानीव, मौक्तिकानि मुक्ताफलानि, वमन्ति उद्गिरन्ति, "कारणगुणाः कार्यगुणमारभन्ते" इति न्यायादिति भावः। अत्रापह्नुत्यनुप्राणितोत्प्रेक्षाऽलङ्कारः। वसन्ततिलकं वृत्तम् ॥ ११ ॥

अपि च—

विकसितसङ्कुचितपुनर्विकस्वरेष्वम्बुजेषु दुर्लक्ष्याः।
कलिकाः कथयति नूतनविकासिनीर्मधुलिहामर्घः॥ १२॥

(आदित्यमण्डलं निर्दिश्य)—

कटुभिरपि कठोरचक्रवाकी-
स्वरविरहज्वरशान्तिशीतवीर्यैः।
तिमिरहृतमयं महोभिरश्नन्
जयति जगन्नयनौषधमुष्णभानुः॥ १३॥

तदनुजानीहि मां समिदाहरणाय।

वटुभेद्.। अहं वि क्खत्तिअकुमाराणं दंसणे उक्कंठिदोम्हि; ता कहेहि, कहिं पेक्खामि।*

---

* अहमपि क्षत्रियकुमारयोर्दर्शनाय उत्कण्ठितोऽस्मि, तत् कथय, कुत्र प्रेक्षे।

---

विकसितेति।—मधुलिहां भ्रमराणाम्, अर्घः पूजा, समादर इति यावत्, "मूल्ये पूजाविधावर्घः" इत्यमरः; विकसितानि विकासं गतानि, पुनः सङ्कुचितानि निमीलितानि, रात्राविति भावः, पुनः विकस्वराणि प्रफुल्लानि, सूर्योदयसमये इति भावः तेषु, अम्बुजेषु पद्मेषु, दुर्लक्ष्याः अविज्ञाः पुरातनीर्वा एता इति ज्ञापयितुमशक्याः, कोका-सानिति शेषः, कलिकाः कोरकाः, नूतनविकासिनीः नवविकस्वराः, विकासोन्मुखीरित्यर्थः, कथयति सूचयति, प्रकाशयतीति यावत्, पुरातनीषु पीतत्वेन मधुनः अभावात् भ्रमरास्तत्र न यान्ति, नवासु च मधुसम्पूर्णत्वात् भ्रमराणां तत्रादर इति भावः। आर्या वृत्तम्॥ १२॥

कटुभिरिति।—अयम् उदयोन्मुखः, उष्णभानुः सूर्यः, कटुभिरपि दुःसहोष्णैरपि, कठोरः दारुणः, दुर्विषह इत्यर्थः, यः चक्रवाकीस्वराणां चक्रवाककान्तानां, विरहः भर्तृविच्छेदः, तेन यः ज्वरः सन्तापः, तस्य शान्त्या उपशमेन, शीतं शीतलं, शीतलत्वं, वीर्यं येषां तादृशैः, महोभिः तेजोभिः, मयूखैरिति यावत्, तिमिरहृतम् अन्धकारविनष्टं, जगतां नयनौषधं नेत्रसमूहम्, अश्नन् भक्षं कुर्वन्, निष्प्रभीकुर्वन्, जगद्दृष्टिशक्तिं पुनरानयन् इति भावः, जयति राजते। पुष्पिताग्रा वृत्तम्—"अयुजि नयुगरेफतो यकारो युजि तु न-जौ ज-र-गाश्च पुष्पिताग्रा" इति लक्षणात्॥ १३॥

शुनःशेफः। (विहस्य)। नन्वेतावेव यज्ञवाटमुत्तरेण विहार-भूमिषु (घ) क्रीडतः; तदुपेत्य निःशङ्कमवलोकय।

(इति निष्क्रान्तौ)।

(विष्कम्भकः (ङ))।

(ततः प्रविशतो राम-लक्ष्मणौ)।

रामः। अहो! विचित्रमिदमायतनं (च) सिद्धाश्रमपदं नाम भगवतो गाधिनन्दनस्य—

तत्तादृक् तृणपूलकोपनयनक्लेशाच्चिरद्वेषिभि-
र्भीष्मा वत्सतरी विहस्य वटुभिः सोल्लुण्ठमालभ्यते।
अप्येष प्रतनूभवत्यतिथिभिः सोच्छ्वासनासापुटै-
रापीतो मधुपर्कपाकसुरभिः प्राग्वंशजन्मानिलः॥ १४॥

---

(घ) यज्ञवाटं यागभूमिम्, उत्तरेण यागभूमेरुत्तरस्यां दिशीत्यर्थः। विहार-भूमिषु विचरणप्रदेशेषु।

(ङ) विष्कम्भकः,—तदुक्तं दर्पणे—"वृत्त-वर्त्तिष्यमाणानां कथांशानां निदर्शकः॥ सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥ मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः॥" इति।

(च) आयतनं यज्ञस्थानम्, आश्रमप्रदेशो वा।

तदिति।—तत्ते वत्सतरीनिमित्तनिन्दायाः, तादृशः प्रभूतक्लेशार्थः, तृणपूलकस्य तृणराशेः, उपनयनम् आहरणं, वत्सतर्या आहारार्थमिति भावः; तेन यः क्लेशः तस्मात् चिरद्वेषिभिः सततविरक्तैरिति यावत्, वटुभिः मुनिबालकैः, विहस्य हास्यं कृत्वा, भीष्मा भीषणा, वत्सतरी द्विहायनी गौः, सोल्लुण्ठं सोपहासं यथा तथा, आलभ्यते हन्यते; मधुपर्कस्य अभिमन्त्रणार्थत्वात्; वत्सतरीहननम् अतिथिपरिचर्यार्थं विहितम्; तथा च श्रुतिः,—"महोक्षं वा वत्सतरीं वाऽतिथये गृही" इति। तथा मधुपर्कस्य पाकेन सुरभिः सुगन्धः, एष प्राग्वंशजन्मानिलः हविर्गृहात् पूर्वभागे जातः, अनिलः वायुः अपि, "प्राग्वंशः प्राग्घविर्गृहात्" इत्यमरः; अतिथिभिः अभ्यागतैः, सोच्छ्वासानि उच्छ्वासयुक्तानि, मधुपर्कस्य सुगन्धग्रहणार्थमाकर्षितवायूनीत्यर्थः, यानि नासापुटानि तैः आपीतः सम्यक् पीतः, आघ्रात इति यावत्, प्रतनूभवति अल्पीभवति। शार्दूलविक्रीडितं वृत्तम्॥ १४॥

लक्ष्मणः। आर्य्य ! किलात्रैव—

देवः कौस्तुभकिञ्जल्कनीलोत्पलसमो हरिः।
स्वयं किमपि तत्तेपे तपः कपटवामनः॥ १५॥

इत्यमेतन्महातीर्थमध्यासीना द्विजातयः।
अकुतोभयसञ्चाराः षट्कर्म्माणि प्रयुञ्जते॥ १६॥

(अन्यतो दृष्ट्वा)। आर्य्य !—

पश्यैते पशुबन्धवेदिवलयैरौदुम्बरौदन्तुरै-
र्नित्यव्यञ्जितगृह्यतन्त्रविधयो रम्या गृहस्थाश्रमाः।
यत्रामी गृहमेधिनः प्रचलितस्वाराज्यसिंहासना
वैतानेषु कपोटयोनिषु पुरोडाशं वषट्कुर्वते॥ १७॥

---

देव इति।—कौस्तुभः नारायणवक्षःस्थितमणिविशेषः एव, किञ्जल्कः केसरः यस्य तादृशं, "किञ्जल्कः केसरोऽस्त्रियाम्" इत्यमरः; नीलोत्पलं नीलोत्पलसदृशवर्ण इत्यर्थः, रूपकमलङ्कारः, असौ देवो हरिः विष्णुः, कपटवामनः मायाकल्पितखर्वदेहः सन्, स्वयं किमपि अनिर्वचनीयं, तत् प्रसिद्धं, तपः चान्द्रायणादिकं व्रतं, तेपे चचार। अनुष्टुप् वृत्तम्॥ १५॥

इत्थमिति।—द्विजातयः ब्राह्मणाः, इत्थम् अनेन प्रकारेण, वामनतपश्चरणेन हेतुनेति यावत्, महातीर्थम् अतीव पुण्यस्थानम्, एतत्, चैत्रमिति शेषः, अध्यासीनाः अधिवसन्तः, अकुतोभयः निर्भयः, सञ्चारः येषां तथाभूताः निःशङ्कसञ्चारिणः सन्तः, षट्कर्म्माणि "अध्यापनमध्ययनं यजनं याजनं तथा। दानं प्रतिग्रहश्चैव ब्राह्मणः परिकल्पयेत्॥" इति मनूक्तानि अध्यापनादीनि, प्रयुञ्जते प्रकुर्वन्ति। अनुष्टुप् वृत्तम्॥ १६॥

पश्येति।—पश्य अवलोकय, एते गृहस्थाश्रमाः गार्हस्थ्यधर्माः, पशुबन्धो यागविशेषः, यागार्थं पशुबन्धनं वा, तस्य वेदिः परिष्कृता भूमिः, "वेदिः परिष्कृता भूमिः" इत्यमरः; तद्वलयैः मण्डलाकारवेदिभिरित्यर्थः, औदुम्बरीभिः उदुम्बरकाष्ठनिर्मित-सर्पफणाकारयज्ञपात्रविशेषैः, दन्तुरैः उन्नतानतैः व्याप्तैः, नित्यं सततं, व्यञ्जिता प्रकटिता, गृह्यतन्त्रविधयः गृह्यसूत्रोक्तविधानानि येषु तथाविधाः, अत एव रम्याः मनोहारिणः, दृश्यन्ते इति शेषः; यत्र येषु गृहस्थाश्रमेषु, अमी गृहमेधिनः गृहाधिकारिणः, "न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते" इति स्मरणात्; तैः मेधन्ते

रामः। (सहर्षस्मितम्)। वत्स! इतोऽपि तावत् कृतार्थय (द) चक्षुषी। प्रसन्नपावनः (ध) अयमृषीणां समवायः (न)। इदममीषां—

> पूरयित्वेव सर्वाङ्गमतिरिक्ताः शिरासतीः।
> जटारूपेण बिभ्राणैः शिरोभिर्गहनं सदः ॥ १८ ॥

किञ्च—

> तपःकृशतरैरङ्गैः स्रष्टुमाकारितैरिव।
> सायं प्रातरमी पुण्यमग्निहोत्रं प्रयुञ्जते ॥ १९ ॥

(इति परिक्रामतः)।

---

सङ्कम्पन्ते इति तथोक्ताः, सत्लोकाः गृहिण इत्यर्थः, प्रचलितं प्रकम्पितं, स्वाराज्यम् स्वर्गराज्यं च, सिंहासनं येभ्यः तथाभूताः सन्तः, यागस्य स्वर्गफलकत्वादिति भावः, धेतालेषु यज्ञीयेषु क्रोडेषु अग्निषु, "अग्निर्वैश्वानरो वह्निः···कृपीटयोनिर्ज्वलनः", इत्यमरः; पुरोडाशं हव्यं, वषट्कृत्य जुह्वति। शार्दूलविक्रीडितं वृत्तम् ॥ १७ ॥

(द) कृतार्थय सफलीकुरु।

(ध) प्रसन्नपावनः प्रसन्नः सौम्यः, पावनः पवित्रतासम्पादक इत्यर्थः।

(न) समवायः समाजः।

पूरयित्वेति।—अमीषाम् ऋषीणाम् इदम् इति गद्यस्थेनान्वयः, सदः सभा, गोष्ठीत्यर्थः, सर्वाङ्गं पूरयित्वेव अतिरिक्ताः अधिकाः, सर्वाङ्गव्यापनानन्तरं या अधिकाः सन्ति ता इत्यर्थः, शिरासतीः शिरासमूहान्, जटारूपेण जटाव्याजेन, बिभ्राणैः दधानैः, शिरोभिः गहनं निबिडं, सञ्जातमिति शेषः। अनुष्टुप् वृत्तम् ॥ १८ ॥

तप इति :—अमी ऋषयः, तपोभिश्चान्द्रायणादिभिः कृशतरैः अतीव कृशैरित्यर्थः, अस्थिचर्मावशिष्टैरिति भावः, अत एव स्रष्टुं निर्मातुम्, आकारितैरिव आहूतैरिव, आनीतैरिवेति यावत्, अङ्गैः उपलक्षिता इति विशेषणे तृतीया; यथा चित्रलिखनादौ प्रथमं रेखा क्रियते, ततः वर्णिकाभिः पूरणं क्रियते, तद्वत् एतानि अस्थिचर्ममात्राणि अङ्गानि रक्तमांसादिभिः पूरयितुमिवेति भावः, सायं प्रातः पुण्यं पवित्रम्, अग्निहोत्रं यज्ञविशेषं, प्रयुञ्जते कुर्वते, "सायं जुहुयात् प्रातर्जुहुयात्" इति श्रुतेः सायं-प्रातरुभयकालीयहोमविधानात्। अनुष्टुप् वृत्तम् ॥ १९ ॥

लक्ष्मणः । (सहासम्) । आर्य्य ! रमणीयमितो वर्त्तते—

बालेयतण्डुलविलोपकदर्थिताभि-
रेताभिरग्निशरणेषु सधर्मिणीभिः ।
त्रासाय हेतुमपि दण्डमुदस्यमान-
माघ्रातुमिच्छति मृगो मुनयो हसन्ति ॥ २० ॥

रामः । (परिक्रामन् सकौतुकानुरागम्) । वत्स ! इतस्तावत्—

आर्द्रप्रसूतिरियमङ्कमयज्ञवेदि-
नेदिष्ठमेव हरिणी श्रयते क्षणं च ।
वत्सीयतापसकुमारकरोपनीत-
नीवारनिर्वृतमपत्यमवेक्षते च ॥ २१ ॥

अपि च—

विष्वक् तपोधनकुमारसमर्प्यमाण-
श्यामाकतण्डुलहृता च पिपीलिकानाम् ।

---

बालेयेति ।—अग्निशरणेषु होमगृहेषु, मृगो आश्रमपालितो मृगः, बालेयस्य बलिः पूजा, "बलिः पूजोपहारयोः" इत्यमरः ; तस्मै इदं बालेयं तस्य, तण्डुलस्य विलोपेन भक्षणेन, कदर्थिताभिः विरक्तीकृताभिः, मृगोपरीति भावः, एताभिः सधर्मिणीभिः सहधर्मचारिणीभिः, मुनिपत्नीभिरित्यर्थः, तस्य भक्षिततण्डुलस्य आश्रमपालितस्य मृगस्य त्रासार्थं, त्रासहेतुमपि भयहेतुमपि, उदस्यमानम् उत्क्षिप्यमाणं, दण्डम् आघ्रातुमिच्छति अतः मुनयः हसन्ति, पलायनं दूरापास्तं दण्डमपि खाद्यदानाय उत्क्षिप्यमाणं मन्यमानो जिघ्रतीति हासकारणं, तपोवनस्य शान्तत्वेन निःशङ्कत्वमिति च ध्वन्यते । वसन्ततिलकं वृत्तम् ॥ २० ॥

आर्द्रेति ।—आर्द्रा अभिनवा, प्रसूतिः प्रसवो यस्याः तथोक्ता सद्यःप्रसूतेत्यर्थः, इयं हरिणी अङ्कमयज्ञवेदिनेदिष्ठमेव अतिसन्निहितयज्ञभूमिसन्निहितमेव, क्षणं श्रयते आश्रयति च, वत्सीयाः वत्सेभ्यः हिताः, स्तनन्धयेषु स्नेहपरायणा इत्यर्थः, ये तापसकुमाराः तेषां करैः उपनीतेन दत्तेन, नीवारेण धान्यविशेषेण, निर्वृतं सुखम्, अपत्यं वत्सम् अवेक्षते च पश्यति च । वसन्ततिलकं वृत्तम् ॥ २१ ॥

रामः। वत्स! साधु दृष्टम्—

आलवालवलयेषु भूरुहां
मांसलं स्तिमितमन्तराऽन्तरा।
केरलीचिकुरभङ्गिभङ्गुरं
सारणीषु पुनरम्बु दृश्यते॥ २५॥

तदेहि, भगवतीं कौशिकीमालोकयन्तौ मुहूर्त्तमात्रमात्मानं पुनीवहे (च)। (परिक्रम्यावलोक्य च)। क्वचित् साङ्क्रामिकोऽपि विशेषो नैसर्गिकमतिशेते। तथा हि—

जडस्वच्छस्वादुप्रकृतिरुपहृतेन्द्रियगणो
गुणो यद्यप्यासामयमयुतसिद्धो विजयते।
तथाऽप्युत्कर्षाय स्फुरति सरितामाश्रमसदा-
मिदानीं वानीरद्रुमकुसुमजन्मा परिमलः॥ २६॥

---

ग्रन्थिलासु पर्वगणेषु, ग्रन्थियुक्तवत् परिदृश्यमानासु इत्यर्थः, स्रोतोविघ्नकरीष्विति भावः, कुल्यासु क्षुद्रकृत्रिमसरित्सु, "कुल्याऽल्पा कृत्रिमा सरित्" इत्यमरः; विश्रम्य विश्रम्य स्थित्वा स्थित्वा," प्रवहति वहतीत्यर्थः। प्रतीयमानोत्प्रेक्षा। आर्या वृत्तम्॥ २४॥

आलेति।—भूरुहां वृक्षाणाम्, आलवालवलयेषु वृक्षमूलवर्त्तिवलयाकार-जलाधारसमूहेषु, अन्तरा अन्तरा मध्ये मध्ये, मांसलं प्रचुरं, स्तिमितं निश्चलञ्च, तथा सारणीषु स्वल्पनदीविशेषेषु, "अल्पनद्याञ्च सारणी" इति विश्वः; पुनः किन्तु, केरली केरलदेशीया कामिनी, तस्याश्चिकुराणां केशानां, भङ्गिवत् कुटिलतेव, भङ्गुरं कुटिलम्, अम्बु जलं, दृश्यते। केरलीनां केशाः कुटिला इति प्रसिद्धिः। रथोद्धता वृत्तं, "रान् परैर्न-र-ल-गै रथोद्धता" इति तल्लक्षणात्॥ २५॥

(च) कौशिकीं नदीविशेषम्। पुनीवहे पवित्रीकुर्वः।

जडेति।—आसां सरितां नदीनां, जडः शीतः, स्वच्छः निर्मलः, स्वादुः सुस्वादः, प्रकृतिः स्वभावो यस्य तथाभूतः, तथा उपहृतः आहृतः, आकृष्ट इति यावत्, इन्द्रियगणः इन्द्रियसमूहो येन तथाविधः, शैत्य-स्वादुत्वाद्युपभोगायेति भावः, अयम् अयुतसिद्धः अपृथक्सिद्धः, गुणान्तरानिश्रितत्वेन स्वतःसिद्ध इत्यर्थः, स्वाभाविक इति यावत्, गुणः

लक्ष्मणः। आर्य्य! पुरस्तादनुकौशिकीतीरम् (अ) आलोकय—

तैर्मेधाजननव्रतप्रणयिभिर्व्यूहैर्वटूनामियं
सिक्ता नित्यवसन्तविभ्रमवती रम्या पलाशावली।
एतस्यां हरिणारिपाणिजनखश्रेणिश्रियः कोरका
गोपायन्ति तपोवनं वनकरिक्रीड़ाकराकर्षणात्॥ २७॥

(नेपथ्ये)।

रामभद्र! कियच्चिरमवलोकनेन कृतार्थीक्रियन्ते (अ) तपोवनविहारभूमयः? सम्प्रति हि—

परिणमयति ज्योतिर्वृत्त्या यजूंषि ऋचां पतिः
किमपि शमिनः सावित्राख्यं रहस्यमुपासते।

---

यद्यपि विश्रमयते सर्वोत्कर्षेण वर्त्तते, तथाऽपि इदानीम् आश्रमसदाम् आश्रमवासिनाम्, उत्कर्षाय परितोषायेत्यर्थः, वानीरद्रुमाणां नदीतीरवर्त्तिनां वेतसतरूणां, कुसुमेभ्यः जन्म उत्पत्तिर्यस्य तादृशः, परिमलः सौरभं, पूर्वोक्तगुणमिश्रित इति भावः, स्फुरति प्रसरति। शिखरिणी वृत्तम्॥ २६॥

(अ) पुरस्तात् अग्रतः। अनुकौशिकीतीरं कौशिक्या नद्याः तीरसमीपम्।

तैरिति।—मेधा धारणावती बुद्धिः, "धीर्धारणावती मेधा" इत्यमरः; तस्याः जननाय उत्पादनाय, यत् व्रतं नियमः, तत्प्रणयिभिः तदाकाङ्क्षिभिरित्यर्थः, तैः पूर्वोक्तैः, वटूनां मुनिबालकानां, व्यूहैः समूहैः, सिक्ता जलैरार्द्रीकृता, अत एव नित्यः सन्ततः, सार्वकालिक इत्यर्थः, यो वसन्तविभ्रमः वासन्तिकविलासः, वासन्तिकत्वेन विशिष्टशोभा तद्वती, रम्या मनोज्ञा, इयं पलाशावली पलाशवृक्षश्रेणी, दृश्यते इति शेषः, एतस्यां पलाशावल्यां, हरिणारिः मृगशत्रुः, सिंहः इत्यर्थः, तस्य पाणिजाः नखरा एव, सूचिश्रेण्यः पङ्क्तयः, तासां श्रीरिव श्रीर्येषां तथोक्ताः, कोरकाः कलिकाः, "कलिका कोरकः पुमान्" इत्यमरः; वनकरिणाम् आरण्यगजानां, क्रीड़या क्रीड़ाच्छलेनेत्यर्थः, यत् करैः शुण्डादण्डैः, आकर्षणं तस्मात्, तपोवनं गोपायन्ति रक्षन्ति, वनकरिणस्तादृशीं पलाशकलिकासन्ततिं दृष्ट्वा सिंहनखरान् मन्यमानाः पलायन्ते इति भावः। मेधाजननव्रतं छन्दोब्रह्मचारिभिः क्रियते, तत्र जलेन पलाश-मूलसेचनं विहितमिति वेदविदां समाचारः प्रसिद्धः। शार्दूलविक्रीड़ितं वृत्तम्॥ २७॥

(अ) कृतार्थीक्रियन्ते सफलीक्रियन्ते।

रामः। (श्रुत्वा सकम्पनमूर्द्धमवलोक्य च)। कथं गगनमध्यमध्यारूढो निदाघदीधितिः !! (म) वत्स ! तदेहि, यज्ञवाटमधिष्ठाय क्रमेण कृतार्ह्निकस्य भगवतः कौशिकस्य प्रत्यनन्तरीभवावः (य)।

(इति परिक्रामतः)।

लक्ष्मणः। (सर्वतो दृष्ट्वा)। आर्य्य!—

उद्दामद्युमणिद्युतिव्यतिकरप्रक्रीडदर्कोपल-
ज्वालाजालजटालजाङ्गलतटीनिष्कूजकोयष्टयः।
भौमोष्मप्लवमानसूर्य्यकिरणक्रूरप्रकाशा दृशो-
राविष्कर्म समापयन्ति धिगमूर्मध्याह्नशून्या दिशः॥ १०॥

---

(म) निदाघाः उष्णाः, "निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि" इति मेदिनी; दीधितयः रश्मयो यस्य सः निदाघदीधितिः उष्णरश्मिः, सूर्य्य इत्यर्थः।

(य) प्रत्यनन्तरीभवावः समीपे वर्त्तावहे इत्यर्थः।

उद्दामेति।—उद्दामा उत्कटा, या द्युमणिद्युतिः सूर्य्यतेजः, तस्याः व्यतिकरेण सम्पर्केण, प्रक्रीडतां विहरतां, प्रज्वलतामिति यावत्, अर्कोपलानां सूर्य्यकान्तमणीनां, ज्वालाजालेन प्रभासमूहेन, जटाला सम्बद्धा, या जाङ्गलतटी निर्जलप्रदेशः, "जाङ्गलं निर्जलस्थानम्" इति धरणिः, तत्र निष्कूजाः कूजनरहिताः, निःशब्दा इति यावत्, कोयष्टयः टिट्टिभाः यासु तथोक्ताः, "कोयष्टिकष्टिट्टिभकः" इत्यमरः; तथा भौमे पार्थिवे, ऊष्मणि सन्तापे, प्लवमानैः सन्तरद्भिः, संसृज्यद्भिरिति यावत्, सूर्य्यकिरणैः क्रूराः दारुणाः, दग्धवत् प्रतीयमानत्वात् दुःसहा इति यावत्, प्रकाशाः यासां तथाभूताः, मध्याह्ने दिवसमध्यभागे, शून्याः सौरतेजःप्रतिघातात् दर्शनाक्षमा इति यावत्, यद्वा—शून्याः निर्जनाः, जनसमागमविरहिता इत्यर्थः, "शून्यं बिन्दौ च निर्जने" इति हेमः; प्रखरसूर्य्यतापासहिष्णुतया इति भावः, अमूः दिशः "मध्येऽह्नि शून्या दिशः" इति पाठान्तरम्; दृशोः नेत्रयोः, आविष्कर्म आविष्कारं, दर्शनव्यापारमित्यर्थः; प्रसारणमिति यावत्, समापयन्ति विघ्नन्तीत्यर्थः, प्रखरातपे दृष्टिशक्तिप्रतिघातादिति भावः, अतो धिक् निन्दायां, "धिङ्निर्भर्त्सननिन्दयोः" इत्यमरः; एता दिशः निन्दामीत्यर्थः। "आविष्कृतं" इत्यत्र "बाहुल्यं" इति

अन्तिकतमा (र) चेयं यज्ञवाटभूमिः, तदेतदेव न्यग्रोध-च्छायामण्डपम् (ल) अध्यासीना ऋत्विजः प्रत्यवेक्षावहे (व)। गलितयौवने (श) पुनरहनि भगवन्तं द्रक्ष्यावः।

रामः। एवमस्तु।

(इति परिक्रम्य नाट्येनोपविशतः)।

लक्ष्मणः। (पार्श्वतोऽवलोक्य)। आर्य्य!—

मध्ये व्योम क्रोडयित्वा मयूखान्
भानोर्बिम्बे लम्बमाने क्रमेण।
स्वैरं स्वैरं मूलतः पादपानां
पश्य च्छायाः कश्चिदाकर्षतीव॥ २१॥

रामः। (समन्तादवलोक्य)। वत्स! मध्यान्दिनमतिक्रान्तम् (ष) इति दिनमप्यतिक्रान्तमेव। पश्य—

---

पाठे—आयुष्मन् प्राणधारणोपयोगिव्यापारसामर्थ्यमित्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥ २०॥

(र) अन्तिकतमा अतिसमीपवर्त्तिनी।

(ल) न्यग्रोधेति।—न्यग्रोधः वटः, "न्यग्रोधो बहुपाद् वटः" इत्यमरः; तस्य छाया एव मण्डपं गृहं तत्।

(व) प्रत्यवेक्षावहे पश्यावः।

(श) गलितयौवने अतीततारुण्ये, विगलमध्यमाने इत्यर्थः, प्रशमितसौरातपे इति भावः। अहनि अपराह्णे इत्यर्थः।

मध्ये इति।—मध्ये व्योम आकाशमध्ये, मयूखान् करान्, क्रोडयित्वा संहार्य्य, भानोः सूर्य्यस्य, बिम्बे मण्डले, क्रमेण लम्बमाने स्रंसमाने सति, पश्चिमायामभिपतति सतीत्यर्थः, कश्चित् जनः, पादपानां वृक्षाणां, छायाः मूलतः मूलदेशात्, स्वैरं स्वैरं मन्दं मन्दम्, आकर्षन्निव आकृष्य नयतीव, पश्य अवलोकय। शालिनी वृत्तं—"मात्तौ गौ चेत् शालिनी वेदलोकैः" इति तल्लक्षणात्॥ २१॥

(ष) अतिक्रान्तम् अतीतम्।

लक्ष्मणः । (विहस्य) । कथं रजनीचरचक्रविनाशोत्कण्ठाविसंस्थुलमार्य्यहृदयमदीर्घदर्शिनं भगवन्तं कौशिकमपि सम्भावयति !! (ग)—

अविद्याबीजविध्वंसादयमार्षेण चक्षुषा ।
कालौ भूत-भविष्यन्तौ वर्त्तमानमवीविशत् ॥ ३४ ॥

रामः । किमुच्यते, तत्रभवान् विश्वामित्रः,—

प्रज्ञातब्रह्मतत्त्वोऽपि स्वर्गीयैरेष खेलति ।
गृहस्थसमयाचार-प्रक्रान्तैः सप्ततन्तुभिः ॥ ३५ ॥

---

भावः । राक्षसकुलं समूलघातं हनुमदा कतिचित् राक्षसविनाशरूप पुण्याहमाचरतु इति निष्कर्षः ॥ ३३ ॥

(ग) रजनीति ।—रजनीचराणां राक्षसानां, चक्रस्य समूहस्य, विनाशाय या उत्कण्ठा उत्कलिका, व्यग्रता इति यावत्, तया विसंस्थुलं विवशं, व्याकुलमित्यर्थः, अत एव अदीर्घदर्शिनम् अदूरदर्शिनमित्यर्थः। आर्य्यहृदयम् आर्य्यस्य रामस्य हृदयम्। अयं भावः,—भगवान् कौशिकः राक्षसविघ्नमाचरात् रामेण विनाश्यते इति जानन्नपि कथं तदर्थमुत्कण्ठातिशयं व्यनक्तीत्यस्यादीर्घदर्शित्वमिति भावः। यद्वा—विसंस्थुलमिति आर्य्यहृदयमित्यस्य विशेषणम्; तत्र चायमर्थः,—राक्षसविनाशार्थमतिव्यग्रत्वात् आर्य्यहृदय महाप्रभावस्य विश्वामित्रस्य प्रभावं विस्मृत्य यत् धनुर्ग्रहणाय उद्योजयति, तेन तस्य अदीर्घदर्शित्वं प्रमाणयतीव, वस्तुतस्तु धनुर्ग्रहणस्य प्रयोजनमेव नास्ति, भगवतः प्रभावेणैव राक्षसध्वंसरूपकार्य्यनिष्पादनादिति भावः।

अविद्येति ।—अयं विश्वामित्रः, अविद्या अज्ञानं, तस्या बीजं मूलं, रजस्तमसोरन्यतरमित्यर्थः, तस्य विध्वंसात् विनाशात्, सत्त्वोद्रेकादिति भावः, आर्षेण ज्ञानमयेन, चक्षुषा भूत-भविष्यन्तौ अतीतागामिनौ, कालौ वर्त्तमान कालम् अवीविशत् प्रवेशयामास, भूत भाविनश्च कालं वर्त्तमानत्वेन परिणमयामासेत्यर्थः, त्रिकालज्ञोऽयमिति भावः । अनुष्टुप् वृत्तम् ॥ ३४ ॥

प्रज्ञातेति ।—प्रकर्षेण सम्यगित्यर्थः, ज्ञातं विदितं, ब्रह्मतत्त्वं परमार्थतत्त्वं येन तथोक्तः अपि, एषः विश्वामित्रः, स्वर्गीयैः स्वर्गहितैः, स्वर्गसाधनैरिति यावत्, गृहस्थानां समय नियमः, तस्य आचारेण आचरणेन, प्रक्रान्तैः प्रारब्धैः, सप्ततन्तुभिः यज्ञैः, "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इत्यमरः; खेलति क्रीडति;

अपि च—

आर्द्रीकृतो विनयनम्रमहेन्द्रमौलि-
मन्दारदाममकरन्दरसैरिवायम् ।
प्रक्रान्तकुण्डलितनूतनभूतसर्ग-
स्त्रैशङ्कवं चरितमद्भुतमाततान ॥ १६ ॥

लक्ष्मणः । (पुरोऽवलोक्य सहर्षम्) ।—

आभिरध्वरचर्य्याभिः श्रौतमर्थं कृतार्थयन् ।
अये ! कुलपतिः सोऽयमित एवाभिवर्त्तते ॥ १७ ॥

(ततः प्रविशति दीक्षितवेशः (घ) विश्वामित्रः) ।

रामः । (निर्वर्ण्य सबहुमानम्) । वत्स लक्ष्मण ! पश्य—

कर्मणः श्रूयमाणस्य व्यञ्जनैरधिकोज्ज्वलाम् ।
तपस्तेजोमयीं लक्ष्मीमस्य पुष्णाति मे गुरुः ॥ १८ ॥

---

आत्मतत्त्वविदां मुक्तावधिकारात् स्वर्गफलकक्रियाचरणम् अनात्मवेदिदृष्टिकर्त्तव्यं क्रीडेव, तत्फलाकाङ्क्षाविरहादिति भावः। यदि वा, लोकशिक्षार्थमेव ते क्रीडाच्छलेन यज्ञादिकमाचरन्तीति भावः । अनुष्टुप् वृत्तम् ॥ १५ ॥

आर्द्रीकृत इति ।—अयं विश्वामित्रः, विनयेन नम्रस्य विनतस्य, महेन्द्रस्य मौलि-मन्दारदाम्नः शिरःस्थितमन्दारकुसुममालायाः, मकरन्दरसाः कौसुमा रसाः तैः, आर्द्रीकृत इव परिषिक्त इव, शान्ततां नीत इव इति भावः, अत एव प्रक्रान्तः आदौ प्रारब्धः, कुण्डलितः पश्चात् सङ्कोचितः, नूतनः अभिनवः, भूतसर्गः प्राणिसृष्टिर्येन तथाभूतः सन्, देवेन्द्रप्रणिपातेन त्रिशङ्कोः स्वर्गारोहणव्याघातजनितकोपात् प्रारब्धं नूतनसर्गं परित्यजन्निति भावः, अद्भुतम् आश्चर्य्यं, त्रैशङ्कवं त्रिशङ्कुसम्बद्धं, चरितम् आख्यानम्, आततान विस्तारयामास । वसन्ततिलकं वृत्तम् ॥ १६ ॥

आभिरिति ।—अये ! इति सम्भ्रमसूचकं विस्मयसूचकं वा अव्ययम्; सोऽयं कुलपतिः आचार्य्यः, विश्वामित्र इति यावत्, आभिः अध्वरचर्य्याभिः यज्ञकर्मभिः, श्रौतं श्रुतिविहितम्, अर्थं तत्त्वं, विषयमिति वा, श्रुतेरुद्देश्यमित्यर्थः, कृतार्थयन् सफलयन्, आचरन्नित्यर्थः, इत एव अत्रैव, अभिवर्त्तते आगच्छति । अनुष्टुप् वृत्तम् ॥ १७ ॥

(घ) दीक्षितवेशः कृतयज्ञवेशः, परिहितव्रतिपरिच्छद इत्यर्थः ।

कर्मण इति ।—अस्य मे मम, गुरुः आचार्य्यः विश्वामित्रः, श्रूयमाणस्य श्रुति-

विश्वामित्रः । ( परिक्रामन् सहर्षम् ) । हन्त ! कृतकृत्यप्रायमात्मानं पश्यामः । यतः,—

निर्वृत्तो बहु तावदध्वरभुजामातर्पणोऽयं विधि-
र्दायादेन समं सुकेतुदुहिता चाद्यैव घानिष्यते ।
पाणौकृत्य पुनर्वृषध्वजधनुर्भङ्गैकशुल्कां वधू-
मैक्ष्वाके सुरकार्य्यदिशं चलति स्वास्थ्य विधातास्महे ॥ ३९ ॥

( राम-लक्ष्मणावुभावप्युपसर्पतः ) ।

विश्वामित्रः । ( रामगतिविदं निर्वर्ण्य सकौतुकम् ) ।—

---

विहितस्य, कर्मणः क्रियायाः, यज्ञे अनुष्ठयस्य इति भावः, व्यसनैः विघ्नैः, तत्तद्-यज्ञीयपरिच्छदैरिति भावः, अधिकोज्ज्वलाम् अधिकदीप्तिमतीं, तपसः यत् तेजः ज्योतिः, तन्मयीं तदात्मिकां, लक्ष्मीं श्रियं, पुष्णाति धारयतीत्यर्थः । अनुष्टुप् वृत्तम् ॥ ३८ ॥

निर्वृत्त इति ।—अध्वरभुजां देवानाम्, आतर्पणः सम्यक् तृप्तिजनकः, अयं विधिः यज्ञानुष्ठानमित्यर्थः, बहु तावत् विपुलभावेनैव, साकल्येनैवेत्यर्थः, साङ्गमेव, न तु केनचिदङ्गेन न्यूनमिति भावः, तत् यथा तथा, "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः, निर्वृत्तः सम्पन्नः ; च किञ्च, सुकेतुदुहिता ताडका, दायादेन दायं पैतृकं धनम् आदत्ते इति दायादः पुत्रादिः तेन, समं सह, अद्यैव घानिष्यते विनाशयिष्यते, रामेणेति शेषः, पुनः किन्तु, वृषध्वजस्य हरस्य, धनुर्भङ्ग एव, न तु धनादिरिति भावः, एकः अद्वितीयः, शुल्कः पणः यस्याः तथोक्तां, वधूं भार्य्यां, जानकीमित्यर्थः, पाणौकृत्य उद्वाह्य, पाणौ गृहीत्वेत्यर्थः, तद्धनुर्भङ्गेन परिणीयेति भावः, ऐक्ष्वाके रामे, सुरकार्य्याय देवकार्य्यसाधनाय, राक्षसविनाशायेति भावः, या दिशः दक्षिणा इत्यर्थः, दक्षिणदिग्वासिनः प्रदेशा इति भावः ताम्, चलति गच्छति, रावणवधाय दक्षिणां दिशां प्रयाति सतीत्यर्थः, स्वास्थ्यं स्वस्थतां, विधातास्महे धारयिष्यामः, अनुभविष्याम इत्यर्थः, सुखिनो भविष्याम इति यावत् । निर्विघ्नं यज्ञसमाप्तिर्भवेन्न वा इति या आशङ्का आसीत्, रामप्रभावेण सा दूरीभूता, यज्ञविघ्नकारिणी ताडकाऽपि अद्यैव रामेण घानिष्यते इति भाव्याशङ्काऽपि अचिरमेव दूरीभविष्यति, एवञ्च सर्वविघ्ने अस्वस्थताकारणे दूरीभूतेऽपि यावत् रामो राक्षसकुलविनाशार्थं न प्रयास्यति, तावत् न सम्पूर्णं स्वास्थ्यं लप्स्याम इति निष्कर्षः । शार्दूलविक्रीडितं वृत्तम् ॥ ३९ ॥

एष वैहारिकं वेषमादधानो धनुर्द्धरः।
तत्त्वमान्तरमस्माकममृतैरिव लिम्पति ॥ ४० ॥

उभौ। (उपसृत्य)। भगवन्! दाशरथी राम-लक्ष्मणावभिवादयेते।

विश्वामित्रः। (आलिङ्ग्य)। वत्सौ! किमन्यदाशास्महे (ङ)—
युवाभ्यामभिनिर्वृत्त-योगक्षेमस्य वज्रिणः।
ऐश्वर्य्यप्रक्रियामात्र-कृतार्थाः सन्तु हेतयः ॥ ४१ ॥
(उभौ तूष्णीमधोमुखौ स्तः)।

विश्वामित्रः। (विहस्य)। वत्सौ! समन्तादुपश्लोकितोऽयं सन्निवेशः (च)? कच्चिदस्मदीयास्तपोवनभूमयो रमयन्ति वाम्? उपस्नेहयति (छ) वा गार्हस्थ्यम् (ज) ऋषीणाम्?

---

एष इति।—वैहारिकं विहारसम्बन्धिनं, क्रीडार्थमित्यर्थः, वेष परिच्छदम्, आदधानः परिदधानः, एष धनुर्द्धरः रामः, अस्माकम् आन्तर तत्त्वम् अन्तःकरणम् अन्तरात्मानं वा, अमृतैः सुधाभिः, लिम्पतीव लिप्तं करोतीव। अनुष्टुप् वृत्तम् ॥ ४० ॥

(ङ) आशास्महे आशिषा पूरयाम इत्यर्थः।

युवाभ्यामिति।—युवाभ्याम् अभिनिर्वृत्तः सुसम्पन्नः, योगः अलब्धलाभरूपः, क्षेमः लब्धस्य रक्षादक्षंशनरूपः, अथवा योगः अपूर्वलाभः, "योगो ध्यानेऽप्यपूर्वलाभे" इति धरणिः, क्षेमः विघ्नाभावेन मङ्गलं यस्य तथाभूतस्य, वज्रिणः इन्द्रस्य, हेतय. अस्त्राणि, वज्रादीनीति भावः, ऐश्वर्य्यं प्रभुत्व, तस्य प्रक्रियामात्रम् आधिकारमात्र, प्रभूणाम् अवश्यधारणीयत्वेन तद्व्यस्त्रव्यापारमात्रमिति यावत्, "प्रक्रिया त्वधिकारः स्यात्" इत्यमरः, तेन कृतार्था. सफलाः, सन्तु भवन्तु, युवाभ्यामेव तत्कार्य्यसमाधानादिति भावः। अनुष्टुप् वृत्तम् ॥ ४१ ॥

(च) उपश्लोकितः परिहृष्टः इति यावत्, युवाभ्यामिति शेषः। सन्निवेशः आश्रमप्रदेश इत्यर्थः।

(छ) रमयन्ति सुखयन्ति। वां युवाम्। उपस्नेहयति तर्पयति, स्निग्धौ करोतीत्यर्थः।

(ज) गार्हस्थ्यं गृहस्थोचिताचारः।

उभौ । ( सप्रश्रयम् ( झ ) ) । भगवन् !—

रम्यमेतदरम्यं वा कः परिच्छेत्तुमर्हति ? ।
किन्तु इयातिगं चित्तमद्य नौ पश्यतोरभूत् ॥ ४२ ॥

( इति सर्वे यथोचितमुपविशन्ति ) ।

विश्वामित्रः । ( साकूतस्मितम् ) । वत्सौ !—

इह वनेषु स कौतुकवामनो
मुनिरतप्त तपांसि पुरातनः ।
तमिव वामवलोक्य तपस्विनो
नयनमद्य मनागुदमीमिलन् ॥ ४३ ॥

( उभौ मुहूर्तमुन्मनीभवतः (ञ) ) ।

विश्वामित्रः । ( स्वगतम् ) । अये ! किमप्युत्साहवर्द्धनाय प्राग्भवीयम् ( ट ) अनुस्मारितमन्तःकरणमनयोः ; तदेतावदस्तु,

---

(झ) सप्रश्रयं सविनयम् ।

रम्यमिति ।—एतत् ऋषीणां गार्हस्थ्यमित्यर्थः, रम्यं मनोज्ञम्, अरम्यम् अमनोज्ञं वा, कः जनः, परिच्छेत्तुं निर्णेतुम्, अर्हति ? शक्नोति ? न कोऽपीत्यर्थः, किन्तु पश्यतोः अवलोकयतोः, नौ आवयोः, चित्तम् अद्य इयातिगं रजस्तमोऽतिक्रान्तं, सत्त्वनिष्ठमिति भावः, यद्वा—इयातिगं रम्यारम्यबोधातीतं, केनाप्यनिर्वचनीयभावेन भावितमित्यर्थः, अभूत् । अनुष्टुप् वृत्तम् ॥ ४२ ॥

इहेति ।—सः प्रसिद्धः, कौतुकवामनः कपटवामनमूर्त्तिः, पुरातनः मुनिः नारायणः, इह एषु, वनेषु अरण्येषु, तपांसि अतप्त तपश्चचार ; तपस्विनः मुनयः, अद्य तमिव वामनदेवमिव, वां युवाम्, अवलोक्य दृष्ट्वा, नयनं नेत्रं, ध्यानमुद्रित-लोचनमिति भावः, मनाक् अल्पं यथा तथा, उदमीमिलन् उन्मीलयन्ति स्म, ध्यानदृष्ट्या तमिव युवां पश्यन्ति स्मेति, ध्यानदृष्ट्या तमिव युवाम् अवलोक्य बाह्यनेत्रे-णाप्यवलोकयितुमीषत् नयनोन्मीलनं कृतवन्तः इति वा भावः । द्रुतविलम्बितं वृत्तं—"द्रुतविलम्बितमाह न-भौ भ-रौ" इति तल्लक्षणात् ॥ ४३ ॥

(ञ) उन्मनीभवतः उत्कण्ठितमानसौ भवतः, पूर्वजन्मवृत्तान्तोद्भावनेनेति भावः ।

(ट) प्राग्भवीयं पूर्वजन्मसम्बद्धम् ।

अन्यतः प्रक्षिपामि (ठ)। (प्रत्यागत्यावलोक्य प्रकाशं ससम्भ्रमम्।) कथमुदयगिरिकाश्मीरकुङ्कुमकेदारस्य प्रभातसन्ध्यालतायाः प्रथमस्तवको गभस्तिमाली हस्ताहस्तिकया कुतूहलिनीभिर्दिगङ्गनाभिर्वारुणीं यावदुपनीतः (ड)। (सनिर्वेदं च)।—

> यातोऽस्तमेष चरमाचलचूडचुम्बी
> पङ्केरुहप्रकरजागरणप्रदीपः।
> आः! सर्वतः स्फुरतु कैरवभाः! पिबन्तु
> ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः॥ ४४॥

(ठ) अन्यतः प्रक्षिपामि अन्यस्मिन् विषये मनो नयामि।

(ड) उदयेति।—उदयगिरेः उदयाचलस्य, काश्मीरं तद्देशभवं, यत् कुङ्कुमं तस्य केदारस्य क्षेत्रस्य, यद्वा—उदयगिरिरेव काश्मीरकुङ्कुमकेदारः तस्य, प्रभातसन्ध्या प्रातःसन्ध्या एव, लता वल्ली तस्याः, प्रथमस्तवकः प्रथमसञ्जातगुच्छः, कुङ्कुमलताभिनवोद्भिन्नगुच्छसदृश इत्यर्थः, उभयोरेवारुण्यादिति भावः, गभस्तिमाली सूर्यः, हस्ताहस्तिकया एकस्याः हस्ताभ्यामपरस्या हस्तौ, तस्या अपि हस्ताभ्यामपरस्याः हस्तौ इत्येवंरूपया "हाताहाति" इति प्रसिद्धयेत्यर्थः, कुतूहलिनीभिः कौतुकवतीभिः, दिगङ्गनाभिः दिश एव अङ्गनाः नार्यः ताभिः, वारुणीं पश्चिमां दिशं, यावत् प्रतीत्यर्थः, उपनीतः प्रापितः।

यात इति।—पङ्केरुहाणां पद्मानां, प्रकरस्य समूहस्य, जागरणाय प्रबोधाय, विकाशायेति यावत्, प्रदीपः प्रदीपतुल्यः, एषः सूर्यः, चरमाचलचूडचुम्बी अस्तगिरिशिखरस्पर्शी सन् अस्तं यातः अदर्शनं गतः, आः। इति कोपसूचकं सन्तापसूचकं वा अव्ययम्; "आः स्मरणेऽप्यङ्गीकारे कोप-सन्तापयोरपि" इति मेदिनी, कैरवं कुमुदं, सर्वतः समन्तात्, स्फुरतु विकसतु, आः। उदरम्भरयः उदरभरणार्थिनः, उदरसर्वस्वा इत्यर्थः, चकोराः पक्षिविशेषाः, ज्योत्स्नाकरम्भं चन्द्रिकारूपं दधिमिश्रसक्तुकं, ज्योत्स्ना-करम्भयोः उभयोरेव धावल्यादिति भावः, "करम्भो दधिसक्तवः" इत्यमरः; पिबन्तु, सर्वलोकपावनः जगच्चक्षुरादित्यः अदर्शनं गतः, देवप्रियाणि लोकचित्तरञ्जनानि कमलानि च मुदितानि, इदानीं तुच्छकैरवाणाम् उदरसर्वस्वचकोराणाञ्च उत्सवसमयः समागतः इति महतां विपत्तिदर्शनेन क्षुद्राणामभ्युदयदर्शनेन कोपः सन्तापो वा आः इत्यव्ययपदेन सूच्यते इति मन्तव्यम्। वसन्ततिलकं वृत्तम्॥ ४४॥

( सर्वतोऽवलोक्य )।—

अयमपि खरयोषित्कर्णकाषायमोष-
द्विसृमरतिमिरोर्णाजर्जरोपान्तमर्चिः ।
मदकलकलविङ्कीकाकुनान्दीकरेभ्यः
क्षितिरुहशिखरेभ्यो भानुमानुच्चिनोति ॥ ४५ ॥

अपि च—

मन्त्रसंस्कारसम्पन्नास्त्रय्युदीदन्वतीरपः ।
एतत्त्रयीमयं ज्योतिरादित्याख्यं निमज्जति ॥४६॥

रामः। ( सर्वतो निरूप्य )। वत्स लक्ष्मण !—

तावन्मैरेव तेजोभिः प्लुष्टनिर्वाणमेचकाः ।
दिशो जाताः प्रतीची तु समुदाचरति क्रमात् ॥ ४७ ॥

---

अयमिति ।—अयम् अस्तोन्मुखः, भानुमान् सूर्यः अपि, मदकलानां मदोत्कटानां, मत्तानामित्यर्थः, "मदोत्कटो मदकलः" इत्यमरः; कलविङ्कीनां चटकीनां, "चटकः कलविङ्कः स्यात्" इत्यमरः; काकुरेव विकृतध्वनिविशेष एव, "काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः" इत्यमरः; नान्दी स्तुतिवादः, तत्करेभ्यः, क्षितिरुहशिखरेभ्यः वृक्षाग्रेभ्यः, खरयोषितः गर्दभ्याः, कर्णवत् काषायं कषायेण रक्तमिव काषाय कषायवर्णरञ्जितमित्यर्थः, ईषत् अल्पं यथा तथा, विसृमरं प्रसरत्, यत् तिमिरम् अन्धकारं, तदेव ऊर्णा योग्यत्वात् कृष्णवर्णमेषादिलोम, "ऊर्णा मेषादिलोम्नि स्यात्" इत्यमरः; तया जर्जरं ग्रस्तमिति यावत्, उपान्तं प्रान्तदेशो यस्य तत् तादृशम्, अर्चिः तेजः, उच्चिनोति सङ्गृह्णाति, शनैः शनैः आकर्षतीत्यर्थः। मालिनी वृत्तं—"न-न म य-ययुतेयं मालिनी भोगिलोकैः" इति तल्लक्षणात् ॥ ४५ ॥

मन्त्रेति ।—त्रयीमयं वेदत्रयात्मकम्, आदित्याख्यं सूर्यसंज्ञकं, ज्योतिरित्यर्थः एतत् ज्योतिः तेजः, उदन्वतः समुद्रस्येमाः औदन्वत्यः ताः औदन्वतीः समुद्रसम्बन्धिनीः, अपः जलानि, मन्त्रसंस्कारसम्पन्नाः मन्त्रेण स्वस्य वेदमयत्वात् वैदिकमन्त्रेण, यः संस्कारः विशुद्धिः, तत्सम्पन्नाः तद्युक्ताः, कुर्वत्, निमज्जति समुद्रं प्रविशतीत्यर्थः। अनुष्टुप् वृत्तम् ॥ ४६ ॥

तावन्मैरिति ।—दिशः प्राच्यादयः, तावन्मैः स्वैः एव, तेजोभिः प्रकाशैः, प्लुष्टाः दग्धाः, पश्चात् निर्वाणे शान्ते, तेजसामपगमे इत्यर्थः, मेचकाः श्यामलाः,

किञ्च—

काश्चिद्बिभ्रति भूतिमाश्रमभुवो वेतानवैश्वानर-
ज्वालोपप्लवमानधूमवलभीविभ्रान्तदिग्भित्तयः ।
श्रूयन्ते वटवस्तृतीयसवनस्वाध्यायदीर्घानपि
सन्धीबन्धमनोहरं प्रतिमुहुः स्वान् द्राघयन्तः स्वरान् ॥४८॥

विश्वामित्रः । वत्स राघव !—

उन्मुक्ताभिर्दिवसमधुना सर्वतस्ताभिरेव
स्वच्छायाभिर्निचुलितमिव प्रेक्षते विश्वमेतत् ।
पर्य्यन्तेषु ज्वलति जलधौ रत्नसानौ च मध्ये
चित्राङ्गीयं रमयति तमःस्तोमकीला धरित्री ॥ ४९ ॥

---

"काककृष्णानलमेचकाः" इत्यमरः ; जाताः, निर्वाणाङ्गारा यथा कृष्णवर्णा भवन्ति, तथा सूर्य्यातापदग्धाः अस्यादर्थन्ति दिशः सूर्य्यसन्तापनिर्वाणादन्धकारोदयाच्च कृष्णवर्णा दृश्यन्ते इति भावः, तु किन्तु, प्रतीची पश्चिमा दिक्, क्रमात् क्रममुल्लङ्घ्य, येन क्रमेण अन्या दिशो मेचकाः जाताः, तं क्रममतिक्रम्येत्यर्थः, समुदाचरति सम्यक् राजते, अस्तोन्मुखस्य सूर्य्यस्य प्रत्यक्षिरणसम्पर्कादिति भावः, सम्यक् विभेति वा, अन्यासां दिशामवस्थादर्शनादिति भावः, "समुदाचारस्तु शोभाया पूर्वरूपे भयेऽपि च" इति विश्वः । यद्वा—समुदा सहर्षा, इवेति शेषः, आचरति, अन्या दिशो मलिना जाताः, प्रतीची तु क्रममुल्लङ्घ्य हृष्टेव आचरतीति निष्कर्षः । "तापनेरेव" इत्यत्र "तापनेरिव" इति पाठः समीचीनः ; तत्पक्षे जाता इवेत्युत्प्रेक्षा । अनुष्टुप् वृत्तम् ॥ ४७ ॥

काश्चिदिति ।—आश्रमभुवः तपोवनभूमयः, वेतानस्य यज्ञीयस्य, वैश्वानरस्य अग्नेः, ज्वालाया शिखायाः, उपप्लवमानः इतस्ततः सञ्चरन्, यः धूमः स एव वलभी छादोपरि वर्त्तमानं चूडागृहं, तत्र विभ्रान्ताः विशेषेण भ्रान्ता भीताः, दिश एव भित्तयः कुड्यानि यासां तथाभूताः सत्यः, काश्चित अनिर्वचनीयामिति भावः, भूतिं सम्पदं, शोभामित्यर्थः, "भूतिर्भस्मनि सम्पदि" इत्यमरः ; बिभ्रति दधति, वटवः ब्राह्मणकुमाराः, तृतीयसवने सायंकालीनस्नाने, यः स्वाध्यायः वेदाध्ययनं, तेन दीर्घान् अपि उच्चैस्तरान् अपीत्यर्थः, स्वान् निजान्, स्वरान् उदात्तादीन्, प्रतिमुहुः पुनः पुनः, सन्धीबन्धः परस्परानुगोपायाः, बन्धेन निर्बन्धेन, आग्रहेणेत्यर्थः, मनोहरं मनोज्ञं यथा तथा, द्राघयन्तः अतिदीर्घीकुर्वन्तः, श्रूयन्ते । शार्दूलविक्रीडितं वृत्तम् ॥ ४८ ॥

उन्मुक्ताभिरिति ।—एतत् विश्वं जगन्मण्डलं, दिवसं दिवसं व्याप्येत्यर्थः, अधुना

लक्ष्मणः। (सनिर्वेदम्)।—

तेजोमयं तमोमयमन्यतरस्यां तदेव दिक्चक्रम्।
किमपि विचित्रा धात्रा सृष्टिरियं भुवनकोषस्य॥ ५०॥

(सर्वतोऽवलोक्य)।—

चूडारत्नैः स्फुरद्भिर्विषधरविवराण्युज्ज्वलान्युज्ज्वलानि
प्रेक्ष्यन्ते चक्रवाकीमनसि निविशते सूर्य्यकान्तात् कृशानुः।
किञ्चामी ग्लपयन्तस्तिमिरमुभयतो निर्भरादस्तमिस्रा-
सङ्घट्टोत्पिष्टसन्ध्याकणनिकरपरिस्पर्द्धिनो भान्ति दीपाः॥ ५१॥

रामः। (विलोक्य)।—

---

संयोगे द्वितीया; उन्मुक्ताभिः, परित्यक्ताभिः, रवेः तेजसा तिरोहितत्वाददृश्याभिरिति भावः, ताभिरेव याः दिवाऽपि आसन् ताभिरित्यर्थः, स्वच्छायाभिः निजच्छायाभिः, अधुना अस्तमनसमये इत्यर्थः, सर्वतः समन्तात्, निचुलितमिव कवलितमिव, प्रेक्ष्यते दृश्यते, तमसा तिमिरेण, लोकस्य समूहस्य, लीला विलासः, विसरणमित्यर्थः यस्यां तथाभूता, इयं धरित्री पृथ्वी, पर्य्यन्तेषु प्रान्तेषु, जलधौ समुद्रे, पृथिव्याः प्रान्तस्थसमुद्रचतुष्टये इत्यर्थः, तथा मध्ये मध्यदेशस्थे, रत्नसानौ सुमेरौ च, "मेरुः सुमेरुर्हेमाद्रिः रत्नसानुः सुरालयः" इत्यमरः, ज्वलति दीप्यमाने सति, समुद्रस्य सुमेरोश्च अभ्यन्तरस्थरत्नानां प्रभया उद्भासमाने सतीत्यर्थः, गौरे तेजसीति वा भावः, चित्राङ्गी विविधवर्णरञ्जिता सती, रमयति प्रीतिमुत्पादयति, लोकानामिति शेषः। मन्दाक्रान्ता वृत्तम्॥ ४९॥

तेजोमयमिति।—तदेव दिक्चक्रं दिङ्मण्डलं, तेजोमयं एकस्यां तेजोबहुलम्, अस्तोन्मुखसूर्य्यकरसम्पर्कात् पश्चिमतः उज्ज्वलमिति भावः, अन्यतरस्यां प्राच्यादाविति भावः, तमोमयं तिमिरात्मकम्, अन्धकाराच्छन्नमिति यावत्, अतः धात्रा विधिना, भुवनकोषस्य ब्रह्माण्डस्य, इयं परिदृश्यमाना, सृष्टिः रचना, विधातृकर्तृकं निर्माणमित्यर्थः; "एकदा तूभयप्राप्तौ कर्मण्येव न कर्त्तरि" इति नियमात् भुवनकोषस्येति कर्मणि षष्ठी धात्रेति कर्त्तरि तृतीया, किमपि अनिर्वचनीयं यथा तथा, वाग्व्यापारातीता इत्यर्थः, विचित्रा आश्चर्य्यरूपिणीत्यर्थः। आर्य्या वृत्तम्॥ ५०॥

चूडारत्नैरिति।—विषधराणां भुजङ्गानां, विवराणि गर्त्तानि, स्फुरद्भिः दीप्यमानैः, तिमिरोदयादिति भावः, चूडारत्नैः शिरोमणिभिः, विषधराणामेवेति भावः, उज्ज्वलानि उज्ज्वलानि, भास्वराणि भास्वराणि, अत्यन्तमालोकयुक्तानीत्यर्थः, प्रेक्ष्यन्ते

विश्वं चाक्षुषमस्तमस्ति हि तमःकैवल्यमौपाधिक-
प्राच्यादिव्यवहारबीजविरहाद्दिङ्मात्रमेव स्थितम्।
गृह्यन्ते भयहेतवः पटुभिरप्यक्षान्तरैर्भान्ति च
ध्वान्तेनातिघनेन वस्तु वचसा ख्यातः स्वरेणामुकः॥ ५२॥

---

दह्यन्ते, सूर्य्यकान्तात् सूर्य्यकान्ताख्योपलात्, समायुः अग्निः, चक्रवाकीणां मनसि चेतसि, निर्विशते प्रविशति, सूर्य्यतेजसा सूर्य्यकान्तः अग्निमुद्गिरतीति प्रसिद्धम्, एवञ्च सूर्य्यास्तगमनात् सूर्य्यकान्तस्य निस्तेजस्त्वात् तत्स्थः अग्निः चक्रवाकीणां चेतसि प्रविश्य ताः सन्तापयति इत्यर्थः; सूर्य्यकिरणसम्पर्कात् प्रभावन्तः सूर्य्यकान्ताः सूर्य्यस्य अस्तगमनात् निस्तेजसः, चक्रवाकीणां मनांसि च विप्रयोगे प्रियविच्छेदात् सन्तापानि भवन्तीति निष्कर्षः; किञ्च, अमी प्रज्वलिता इति भावः, दीपाः प्रदीपाः, तिमिरम् अन्धकारं, भञ्जयन्तः खण्डयन्तः, उभयतः उभयोः पार्श्वयोः, निर्भरम् अत्यन्तम्, अहस्तमिस्रयोः दिवसान्धकाररजन्योः, "तमिस्रा तामसी रात्रिः" इत्यमरः; यः सङ्घट्टः सम्मेलनं, तेन उत्पिष्टा विमर्दिता, या सन्ध्या तस्याः कणनिकरं बिन्दुसमूहम्, लोहितत्वात् सन्ध्यावयवविच्युतमिति यावत्, सन्ध्याया लौहित्यादिति भावः, परिष्वजन्ते अनुकुर्वन्तीति तथोक्ताः सन्तः, भान्ति राजन्ते। स्रग्धरा वृत्तं—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति तल्लक्षणात्॥ ५१॥

विश्वमिति।—चाक्षुषं चक्षुरिन्द्रियग्राह्यं, विश्वं जगत्, अस्तम् अदर्शनं गतं, तिरोहितमिति यावत्, अन्धकाराकुलत्वात् चक्षुरिन्द्रियेण विश्वं न दृश्यते इति भावः, तमसाम् अन्धकाराणां, कैवल्यं केवलं तम इति यावत्, अस्ति हि वर्त्तते एव, उपाधिर्विशेषणं तत्सम्बन्धी औपाधिकः विशेषणसम्बद्ध इत्यर्थः, यः प्राच्यादिव्यवहारः दिक्त्वाभेदेऽपि इयं प्राची दिक्, इयं प्रतीचीत्यादिरूप इत्यर्थः, तस्य बीजं हेतुः, सूर्य्य इत्यर्थः, सूर्य्यस्य उदयास्तादिक्रमेणैव दिग्व्यवहारादिति भावः, तस्य विरहात् अभावात्, अस्तगमनादिति यावत्, दिङ्मात्रमेव स्थितं केवलं दिगिति प्रतिभासते, न तु प्राच्यादिरूपेणेति भावः; पटुभिः समर्थैरपि, वस्तुग्रहणे इति भावः, अक्षान्तरैः अन्यैरिन्द्रियैः, त्वगादिभिरित्यर्थः, भयहेतवः भीतिकारणानि, पदार्था इति शेषः, गृह्यन्ते, अन्धकारे दर्शनाभावात् रज्ज्वां सर्पवदिति भावः; अतिघनेन अतिसान्द्रेण, ध्वान्तेन तमसा, वस्तु घटपटादिकं, वचसा आप्तवाक्येन, अयं घटः अयं पट इत्यादि-क्रमेणेति भावः, भाति राजते, ज्ञायते इति यावत्, अन्धकारेण रूपदर्शनाभावत्वादिति

किञ्च—

घनतरतिमिरघुणोत्करजग्धानामिव पतन्ति काष्ठानाम्।
छिद्रैरमीभिरुडुभिः किरणव्याजेन चूर्णानि ॥ ५३ ॥

( नेपथ्ये कलकलः )।

( सर्वे ससम्भ्रममाकर्णयन्ति )।

( पुनस्तत्रैव )।

निर्मज्जच्चक्षुरन्तर्भ्रमदतिकपिशक्रूरतारा नरास्थि-
ग्रन्थिं दन्तान्तरालग्रथितमविरतं जिह्वया घट्टयन्ती।
ध्वान्तेऽपि व्यात्तवक्त्रज्वलदनलशिखाजर्जरे व्यक्तकर्मा
निर्मान्ती गृध्ररौद्रीं दिवमुपरि परिक्रीडते ताडकेयम् ॥ ५४ ॥

---

भावः, स्वरेण कण्ठध्वनिना, परिचितेनेति शेषः, अमुकः अयं पुमान्, ज्ञातः विदितः, भवति। अन्धकारधर्मवर्णनमिदम्। शार्दूलविक्रीडितं वृत्तम् ॥ ५२ ॥

घनेति।—घनतरं सान्द्रतरं, यत् तिमिरम् अन्धकारः, स एव घुणोत्करः काष्ठभक्षककीटसमूहः, तेन जग्धानां भक्षितानां, कृतच्छिद्राणामिति यावत्, काष्ठानां दिशां, दारूणामिति ध्वनिः, "दिशस्तु ककुभः काष्ठाः" इति "काष्ठं दार्विन्धनम्" इति चामरः; चूर्णानि छिद्रैरिव रन्ध्रैरिव, अमीभिः ऊर्द्ध्वाकाश परिदृश्यमानैः, उडुभिः नक्षत्रैः, तिमिरघुणोत्कीर्णकाष्ठानां मध्यवर्त्तिविवरैरिति ध्वनिः, "नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम्" इत्यमरः; किरणव्याजेन मयूखनिभेन, पतन्ति। उत्प्रेक्षाऽलङ्कारः। आर्य्या वृत्तम् ॥ ५३ ॥

निर्मज्जदिति।—निर्मज्जती निमग्नीभवती, कोटरं प्रविशती इति यावत्, ये चक्षुषी नेत्रे, तयोः अन्तः अभ्यन्तरयोः, भ्रमन्त्यौ घूर्णमाने, अतिकपिशे अत्यन्तपिङ्गले, क्रूरे भीषणे, तारे कनीनिके यस्याः तथोक्ता, "तारकाऽक्ष्णः कनीनिका" इत्यमरः; दन्तानाम् अन्तराले मध्ये, ग्रथितं सुदृढम् आसक्तं, चर्वणकाले इति शेषः, नरास्थि-ग्रन्थिं मनुष्यकङ्कालग्रन्थिं, जिह्वया अविरतम् अनवरतं, घट्टयन्ती चालयन्तीत्यर्थः, निष्क्रामयन्तीमिति भावः, व्यात्तं विस्तृतं, यत् वक्त्रं वदनं, तस्मिन् ज्वलतः अनलस्य अग्नेः, शिखया ज्वालया, जर्जरे जर्जरतां गते, विध्वस्ते इति यावत्, ध्वान्ते अन्धकारे अपि, व्यक्तं प्रकटं, कर्म हिंसादिनिष्ठुरक्रिया यस्यास्तथाविधा, इयं ताडका उपरि ऊर्द्ध्वदेशे, दिवम् आकाशं, गृध्ररौद्रीं गृध्राणां श्मशानिकपक्षिविशेषाणां सञ्चारात्,

अपि च—

त्रेताग्निकुण्डपूरं च वर्षन्तो रुधिरच्छटाः।
हिंस्राः सुबाहुमारीच-मिश्रा नः परिवृण्वते ॥ ५५ ॥

विश्वामित्रः। (साकूतम् (ढ))। कथं ताड़का !! वत्स रामभद्र !—

विधानमानुश्रविकं गृहेषु नः
प्रतिस्क्विरन्ती किमियं प्रतीक्ष्यते ?।
सुबाहुमुख्यैः सममाततायिभि-
र्गृहाण चापं निगृहाण ताड़काम् ॥ ५६ ॥

---

रौद्रौ भयङ्करौ, निर्भान्तौ कुर्वन्तौ सन्तौ, परिक्रीडते विहरतीत्यर्थः। स्रग्धरा वृत्तम् ॥ ५४ ॥

त्रेतेति।—हिंस्राः क्रूरकर्माणः, सुबाहु मारीचमिश्राः सुबाहु मारीचाभ्यां संयुक्ताः, राक्षसा इति शेषः, त्रेताग्निः "दक्षिणाग्निर्गार्हपत्याहवनीयस्त्रयोऽग्नयः। अग्नित्रयमिदं त्रेता—॥" इत्युक्तलक्षणमग्नित्रयं, तस्य कुण्डः आधारः, तस्य पूरः पूरणं यस्मिन् तत् यथा तथा, रुधिरच्छटाः रक्तविस्तारान्, शोणितबिन्दून् वा, वर्षन्तः सन्तः, नः अस्मान्, परिवृण्वते वेष्टयन्ति, अवरुन्धन्ति वा। अनुष्टुप् वृत्तम् ॥ ५५ ॥

(ढ) साकूतं साभिप्रायम्, आर्त्तेति अध्याहार्य्यक्रियाविशेषणम्।

विधानमिति।—नः अस्माकं, गृहेषु आश्रमेषु, आनुश्रविकं वैदिकं, विधानम् अनुष्ठानं, प्रतिस्क्विरन्ती नाशयन्ती, इयं ताड़का, किं कथं, प्रतीक्ष्यते ? अपेक्ष्यते ? त्वयेति शेषः, चापं धनुः, गृहाण, सुबाहुमुख्यैः सुबाहुप्रभृतिभिः, आततायिभिः वधोद्यतैः, राक्षसैरिति शेषः, समं सह, "आततायी वधोद्यते" इत्यमरः; तच्च षड्विधत्वमुक्तं, यथा—'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्र-दारापहारी च षडेते आततायिनः॥" इति, तस्य वधे दोषो नास्तीत्युक्तं मनुना—"आततायिनमायान्तमपि वेदान्तगं हवे। जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्॥" इति, "नाततायिवधे दोषो हन्तुर्भवति कश्चन" इति च, ताड़कां निगृहाण निग्रहं कुरु, जहि इत्यर्थः। वंशस्थविलं वृत्तं—"वदन्ति वंशस्थविलं ज-तौ ज-रौ" इति लक्षणात् ॥ ५६ ॥

रामः। (सदृष्टातिरेकम् (ण))। भगवन्! स्त्रियम् (त) इमाम्!!

(पुनर्नेपथ्ये)।

अब्रह्मण्यमब्रह्मण्यम् (थ)। भोस्तात! विश्वामित्र! परिभूयामहे (द), प्रहीयतामधिज्यधन्वा दाशरथिः (ध)।

रामः। (विहस्य नेपथ्याभिमुखीभूतकेन)। बालर्षे! शुनःशेफ! मुहूर्त्तं धीरो भव—

अलं क्लमित्वा गुरुमल्पकोऽयं
विधिस्त्वदाज्ञैव गरीयसी नः।
न कौशिकस्य त्वयि धर्मपुत्रे
पुत्रे मधुच्छन्दसि वा विशेषः ॥ १७ ॥

---

(ण) सदृष्टातिरेकं सानुकम्पातिशयमित्यर्थः, आहेति अध्याहार्य्यक्रियाविशेषणम्।

(त) स्त्रियमिमां, निगृह्णामि!! इति शेषः, स्त्रीवधस्य गर्हितत्वादिति भावः।

(थ) अब्रह्मण्यम् अवध्यम्, अवध्योक्तौ नाट्ये प्रयोज्यमिदम्, "अब्रह्मण्यमवध्योक्तौ" इत्यमरः।

(द) परिभूयामहे निगृह्यामहे, वयमिति शेषः, तत् परित्रायस्वेति भावः।

(ध) प्रहीयतां प्रेष्यताम्। अधिज्यधन्वा ज्यारोपितधनुष्कः, सज्जितधनुष्क इत्यर्थः। दाशरथिः रामः।

अलमिति।—गुरुम् आचार्य्यं, विश्वामित्रमित्यर्थः, क्लमित्वा खेदयित्वा, क्लिष्टं कृत्वा इत्यर्थः, अलं गुरवे क्लेशो न दातव्य इत्यर्थः, अयं विधिः विधानं, राक्षसीवधरूपमित्यर्थः, अल्पकः तुच्छः, अनायाससाध्य इत्यर्थः, तव आज्ञा आदेश एव, नः अस्माकं, गरीयसी अतिमहती, कौशिकस्य विश्वामित्रस्य, धर्मपुत्रे धर्मेण पालिते पुत्रे, त्वयि, वा अथवा, पुत्रे, औरसे इति शेषः, मधुच्छन्दसि विशेषः प्रभेदः, न, अस्तीति शेषः, "गुरुवत् गुरुपुत्रेषु गुरुदारेषु चैव हि" इति मनुवचनेन गुरुपुत्रस्य गुरुवन्माननीयत्वकीर्त्तनात् गुरोश्च धर्मपुत्रौरसपुत्रयोर्निर्विशेषत्वात् त्वदाज्ञयैव कार्य्यं साधयामीति भावः। उपजातिवृत्तम् ॥ १७ ॥

विश्वामित्रः। वत्स! कृतमुत्तरोत्तरेण (न)। नन्वयं नेदीयानाश्रमोपघातः (प)।

लक्ष्मणः। (सव्यथमिव (फ) स्वगतम्)—

मीमांसते किमार्य्योऽयं कौशिकेऽप्यनुशासति ?।
वाचमेषामृषीणां हि शास्त्रमेवानुवर्त्तते ॥ ५८ ॥

रामः। (स्वगतम्)—

गुर्वादेशादेव निर्मीयमाणो
नाधर्माय स्त्रीवधोऽपि स्थितोऽयम्।
अद्य स्थित्वा श्वो गमिष्यद्भिरल्पै-
र्लज्जाऽस्माभिर्मीलिताक्षैर्जितेव ॥ ५९ ॥

---

(न) कृतमुत्तरोत्तरेण पुनः पुनः प्रतिवचसा, कृतम् अलम्, उत्तरोत्तरं विफल-मिति तत्प्रयोजनं नास्तीति भावः।

(प) ननु भोः! नेदीयान् सन्निहितः, उपस्थित इत्यर्थः। आश्रमोपघातः आश्रमपीडा।

(फ) सव्यथमिव सदुःखमिव, आश्रमोपघातश्रवणेनेति भावः।

मीमांसते इति।—कौशिके विश्वामित्रे, अनुशासति आदिशति अपि, अयम् आर्य्यः रामः, किं कं विषयं, मीमांसते? विचारयति? अत्र किमपि विचार्य्यं नास्तीति भावः, हि यतः, शास्त्रमेव एषाम् ऋषीणां वाचम् अनुवर्त्तते अनुसरति, एषां वाणीव शास्त्ररूपेण चलति, तत् कथं अवध्याः स्त्रियः इति शास्त्रानुसरणे आर्य्यस्य विचारः? इति भावः। अनुष्टुप् वृत्तम् ॥ ५८ ॥

गुर्विति।—गुरोः विश्वामित्रस्य, आदेशादेव आज्ञयैव, निर्मीयमाणः क्रियमाणः, अयम् एषः, स्त्रीवधोऽपि नारीहत्याऽपि, अधर्माय न स्थितः न प्रभवतीति भावः, अद्य अस्मिन् दिने, स्थित्वा, अत्रेति शेषः, श्वः परदिने, गमिष्यद्भिः अल्पैः बालकैः, अस्माभिः मीलिताक्षैरेव निमीलितनयनैरेव सद्भिः, लज्जा जिता, भविष्यतीति शेषः, दुष्कार्य्यकारिणा जनसन्दर्शने एव लज्जा, तत्र नयनोन्मीलनाभावं, तदङ्गत्वात् निमीलितनयनेनास्मादकार्य्यकरणात् सत्वरप्रस्थाने केनापि दुष्कृतस्याज्ञेयत्वात् च लज्जापसर इति भावः। यद्वा—मीलिताक्षैः उन्मीलितनयनैः, बालानामकार्य्यं गुर्वादेश एव मत्वा, तदाज्ञयैव मया अकार्य्यम् इदं कृतमपि नाम मे काऽपि

किन्तु—

दीर्घं प्रजाभिरतिकौतुकिनीभिराभि-
रस्मिन्नकीर्त्तिपटहे मम ताड्यमाने।
ज्योतिर्मयेण वपुषा जगदन्तसाक्षी
लज्जिष्यते कुलगुरुर्भगवान् वशिष्ठः॥ ६०॥

(नेपथ्ये)।

अलमिष्टा मखान् मूर्खाः! खड्गधारेयमस्ति नः।
अदवीयानयं पन्थाः स्वर्लोकमुपतिष्ठते॥ ६१॥

रामः। (श्रुत्वा सरोषं सकम्पं चोत्थाय सविनयमञ्जलिं बद्धा)।

भगवन्! जगत्त्रयगुरो! गाधिनन्दन!—

लज्जा, अतः श्वो गमनकाले उन्मीलितनयनैरेवास्माभिर्गन्तव्यमिति भावः। शालिनी वृत्तं—"मात्तौ गौ चेच्छालिनी वेदलोकैः" इति तल्लक्षणात॥ ५९॥

दीर्घमिति।—अतिकौतुकिनीभिः कथमेतत् अकार्य्यं कृतं रघुवंश्येन रामेणेति कौतूहलवतीभिः, आभिः प्रजाभिः जनैः, अस्मिन् मम अकीर्त्तिपटहे स्त्रीवधोऽनेन कृत इति अयशःख्यापकवादित्रभेदे, ताड्यमाने आहन्यमाने सति, ज्योतिर्मयेण तेजोमयेन, वपुषा ज्ञानात्मनेत्यर्थः, ज्योतिर्मयेण वपुषा उपलक्षित इति वा, जगदन्तसाक्षी जगतां अन्तस्य प्रलयस्यापि, साक्षी साक्षात् द्रष्टा, तत्सकाशे न किमपि गोपायितुं शक्यते केनापीति भावः, कुलगुरुः वंशक्रमागतः आचार्य्यः, भगवान् सर्वशक्तिमान्, वशिष्ठः दीर्घम् अत्यन्तं, लज्जिष्यते, ममैतेन कर्मणेति भावः। वसन्ततिलकं वृत्तम्॥ ६०॥

अलमिति।—रे मूर्खाः! याज्ञिका इति शेषः, मखान् यज्ञान्, इष्टा अर्चयित्वा, कृत्वेत्यर्थः, यज्ञैर्देवान् अभ्यर्च्येति यावत्, अलं कृत्वा, यज्ञार्थोऽयमायासो वः निरर्थकमेव इति भावः, नः अस्माकम, इयं खड्गधारा अस्ति वर्त्तते, यया युष्मान् नाशयाम इति भावः, अयम् अदवीयान् अदूरवर्त्ती, सरल इति यावत, शीघ्रगमनाय इति भावः, पन्थाः मार्गः, उपाय इति भावः, स्वर्लोक स्वर्गम, उपतिष्ठते उपस्थितो भवति, शीघ्रं स्वर्गं प्रापयतीति भावः; बहुभिरायासैः खलु यागः क्रियते, तेनापूर्वं पुण्यं जन्यते, ततश्च स्वर्गलाभ इति स्वर्गगमने युष्माकं कुटिलः पन्थाः, अस्माकन्तु खड्गाघातेन शीघ्रं स प्राप्यते इति तथा वध्यमानाः, तत् युष्मान् निहत्य स्वर्गं प्रेषयाम इति भावः। अनुष्टुप् वृत्तम्॥ ६१॥

दशरथगृहे सम्भूतं मामवाप्य धनुर्धरं
दिनकरकुलास्कन्दः कोऽयं कलङ्कनवाङ्कुरः ! ! ।
इति न वनितामेतां हन्तुं मनो विचिकित्सते
यदधिकरणं धर्मस्थीयं तदेव वचांसि नः ॥ ६२ ॥

( प्रविश्य नेपथ्याभिमुखम् ) । भोस्तपोधनाः ! मा भैष्ट ( ब )—

रजनिचरचमूरमूरपास्य-
न्नयमहमागत एव रामचन्द्रः ।
कुशिकसुतकुशाग्रतीर्थबिन्दो-
रिदमनुकल्पमवेत कार्मुकं मे ॥ ६३ ॥

( इति धनुरारोपयन् ( भ ) निष्क्रान्तः ) ।

---

दशरथेति ।—दशरथस्य गृहे वंशे, पत्न्यां वा, "न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते" इति शास्त्रात्, सम्भूतं समुत्पन्नं, धनुर्धरम् अधीतधनुर्वेदं, माम् अवाप्य प्राप्य, दिनकरस्य सूर्य्यस्य, कुलास्कन्दः वंशावमाननकरः इत्यर्थः, कलङ्कः स्त्रीघातक इति अकीर्त्तिः, नवः अङ्कुरः प्ररोहः, दिनकरकुले एवंविधकलङ्कस्य मय्येव प्रथमसर्प-णादिति भाव, अयं कः ? समुत्पन्न इति शेषः, इति—जना एवं वदिष्यन्ति इति विचिन्त्य इत्यर्थः, मम एतां वनितां ताडकां, हन्तुं न विचिकित्सते न संशेते, एतस्या हनने जनाः मां सूर्य्यवंशकलङ्कं कथयिष्यन्ति इति यः संशयः प्रागासीत्, स इदानीं त्वदाज्ञया अपगत इति भावः, "विचिकित्सा तु संशयः" इत्यमरः ; यत् यतः, तदेव वचांसि धनुरुपाध्यायवाक्यानीत्यर्थः, नः अस्माकं, धर्मस्थीय धर्मस्थितिमूलं, धर्मप्रवर्त्तकमिति यावत्, अधिकरणम् अवलम्बनं, तव वच एव धर्म इति ज्ञात्वा एनां हन्मीत्याशयः । हरिणी वृत्तम्—"न स-म-र-स-ला गः षड्वेदैर्हयैर्हरिणी मता" इति तल्लक्षणात् ॥ ६२ ॥

( ब ) मा भैष्ट भीतिं न कुरुध्वम् ।

रजनीति ।—अयमहं रामचन्द्रः अमूः उपरि दृश्यमाना इति भावः, रजनिचर-चमूः राक्षससेनाः, अपास्यन् दूरीकुर्वन्, आगत एव उपस्थित एव, मे मम, इदं हस्तस्थितमिति भावः, कार्मुकं धनुः, कुशिकसुतस्य विश्वामित्रस्य, कुशाग्रे यत् तीर्थं जलं, दर्भाग्रमन्त्रपूतमिति भावः, तस्य बिन्दोः कणस्य, अनुकल्पम् अनुकल्पं, गौणविधानमित्यर्थः, प्रतिनिधिस्वरूपमिति भावः, अवेत जानीत, राक्षसनिधने गुरोः मन्त्रपूतकुशाग्रजलमेव मुख्यः कल्पः, धनुरिदन्तु मम तस्य प्रतिनिधिस्वरूपं, अतः तेनैव

लक्ष्मणः। (बाणदृष्टमाकलयन्)। दिष्ट्या क्षात्त्रेण धर्मेण कौमारमप्यशून्यम् (म) आर्य्यस्यासीत्। (नेपथ्याभिमुखमवलोक्य हर्षं नाटयन् सहासम्)। भगवन्! कौशिक! पश्य पुरस्तात्, आर्य्यं द्युतधनुषि—

वायव्यास्त्रव्यतिकरनिरालम्बनस्ताडकेयः
प्राप्तो जीवन्मरणमसुभिर्विप्रमुक्तः सुबाहुः।
छिन्नोन्मुक्ता भुवि च करुणाऽऽश्चर्य्यबीभत्सहास-
त्रासक्रोधोत्तरलमृषिभिर्दृश्यते ताडकेयम्॥ ६४॥

विश्वामित्रः। (विलोक्य)। वत्स लक्ष्मण! विस्मयेन प्रमोदेन

---

कुशलाङ्गिते प्रागेव हताः, मम तु धनुर्भिन्नमात्रमिति भावः। "मुख्यः स्यात् प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः" इत्यमरः। पुष्पिताग्रा वृत्तम्—"अयुजि नयुगरेफतो यकारो युजि तु न-जौ ज-र-गाश्च पुष्पिताग्रा" इति तल्लक्षणात्॥ ६३॥

(भ) आरोपयन् सज्यं कुर्वन्।

(म) दिष्ट्या भाग्येन, "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः। क्षात्त्रेण क्षत्रियोचितेन। धर्मेण आचारेण। कौमारं बाल्यम्। अशून्यम् अविरहितमित्यर्थः, बाल्यमपि क्षात्त्रधर्मपुरस्कृतमिति यावत्, आर्य्यो बालकोऽपि न क्षत्त्रधर्मपराङ्मुख इति भावः।

वायव्येति।—ताडकाया अपत्यं पुमान् ताडकेयः मारीच इत्यर्थः, वायव्यस्य वायुदैवतस्य, अस्त्रस्य बाणस्येत्यर्थः, व्यतिकरेण सम्बन्धेन, आघातेनेति यावत्, निरालम्बनः आलम्बनः आश्रयः तद्रहितः, शून्ये एव निराश्रयतया अवतिष्ठमानः सन् इत्यर्थः, जीवन् प्राणन्, अपैति म्रियः, मरणं प्राप्तः जीवन्मृतः सन् निराकृत इत्यर्थः; सुबाहुः तदाख्यो राक्षससेनापतिः, ताडकाया एव अपरः पुत्र इति केचित्, असुभिः प्राणैः, विप्रमुक्तः वियुक्तः, निहत इति यावत्, छिन्ना छिन्ना, भुवि पृथिव्याम्, उन्मुक्ता त्यक्ता, पातितेति यावत्, इयञ्च ताडका करुणया स्त्रीत्वनिबन्धनया दयया, आश्चर्य्येण विस्मयेन, कथं महाराक्षसीयं बालेनानेन निहतेत्येवंरूपेणेति भावः; बीभत्सेन घृणया, कुत्सिताकारदर्शनेनेति भावः, हासेन आनन्दजनितेन हास्येन, त्रासेन सत्यं निहता न वा, पुनर्जीवति चेदिति भयेन, क्रोधेन कोपेन, तत्कृतात्याचारस्मरणजेनेति भावः, उत्तरलं चञ्चलं यथा तथा, ऋषिभिः मुनिभिः, दृश्यते। मन्दाक्रान्ता वृत्तं—"मन्दाक्रान्ताऽम्बुधि-रस-नगैर्मो भ-नौ तौ-गयुग्मम्" इति तल्लक्षणात्॥ ६४॥

च परवन्तो (य) वयं न वाचामधीश्महे (र)। वत्सात्यमेव वा किमस्ति, न खल्वियमद्यतनी (ल) वः प्रतिष्ठा (व)—

दिक्कूलङ्कषकीर्त्तिधौतवियतो निर्व्याजवीर्य्योद्धता-
स्ते यूयं रघवः प्रसिद्धमहसो यैः सोऽपि देवाधिपः।
बिभ्राणैरसुराधिराजविजयक्रीडानिदानं धनुः
पौलोमीकुचपत्रभङ्गरचनाचातुर्य्यमध्यापितः॥ ६५॥

लक्ष्मणः। भगवन्! पश्य—

अद्य नैशाचरीं सेनामेनामुन्मूलयन्नयम्।
आधानं वीरधर्मस्य निर्माय त्वामुपस्थितः॥ ६६॥

(प्रविश्य)।

रामः। (सवैलक्ष्यस्मितम (श))—

(य) परवन्तः पराधीनाः।

(र) अधीश्महे प्रभवामः, वाक्प्रसरोऽस्माकं नास्तीति भावः।

(ल) अद्यतनी आधुनिकी।

(व) वः युष्माकम्। प्रतिष्ठा गौरवं, ख्यातिरिति यावत्।

दिगिति।—दिशां कूलङ्कषा प्रान्तस्पर्शिनी, दिगन्तव्यापिनीत्यर्थः, या कीर्त्तिः यशः, तया धौतं क्षालितं, वियत् आकाशं यैः तथाभूताः, निर्व्याजवीर्य्योद्धताः अकपटपराक्रमोन्नताः, ते प्रसिद्धाः, रघवः रघुवंश्याः, यूयं प्रसिद्धमहसः प्रख्यात-तेजसः, विख्यातविदितपराक्रमा यूयमित्यर्थः, असुराधिराजानाम् असुरमुख्यानां, विजयः पराभव एव, क्रीडा खेला, तस्याः निदानं हेतुभूतं, धनुः कार्मुकं, बिभ्राणैः दधद्भिः, यैः युष्माभिः, सः प्रसिद्धः, देवाधिपोऽपि इन्द्रोऽपि, पौलोम्याः पुलोमनन्दिन्याः शच्याः, कुचयोः स्तनयोः, पत्रभङ्गरचनायां पत्रावलिकल्पनायां, चातुर्य्यं वैदग्ध्यं, पाटवमित्यर्थः, अध्यापितः शिक्षितः, तत्कार्य्येऽसुरविजयेऽस्य रघुवंश्यैः सम्पादनात् देवराजः केवलं शच्या सह सततं क्रीडतीति भावः। शार्दूलविक्रीडितं वृत्तम्॥ ६५॥

अद्येति।—अयं रामः अद्य एनां परिदृश्यमानां यज्ञविघातकारिणीं, नैशाचरीं राक्षसीं, सेनाम् उन्मूलयन् समूलं विनाशयन्, वीरधर्मस्य वीरत्वपर्य्यायाः, आधानं स्थापनं, रक्षणमिति यावत्, निर्माय कृत्वा, त्वामस्मिति शेषः, त्वाम् उपस्थितः प्राप्तः। अनुष्टुप् वृत्तम्॥ ६६॥

(श) सवैलक्ष्यस्मितं सलज्जमन्दहासम्।

पूषा वसिष्ठः कुशिकात्मजोऽथ
त्रयस्त एते गुरवो रघूणाम्।
महामुनेरस्य गिरा कृतोऽपि
स्त्रैणो वधो मां न सुखाकरोति ॥ १७ ॥

( आश्रममवलोक्य )।—

प्रत्यासन्नतुषारदीधितिकरक्लिश्यत्तमोवल्लरी-
कल्पाभिर्मखधूमवर्त्तिभिरमी सम्मीलितव्यञ्जनाः।
श्वः सञ्चारयिष्यमाणवटुकव्याधूतशुष्यत्त्वचो
निद्राणातिथयस्तपोधनगृहाः कुर्वन्ति नः कौतुकम् ॥ १८ ॥

( पुरतोऽवलोक्य )।—

स्फुरति पुरतो माद्यन्माद्यच्चकोरविलोचन-
प्रकरकिरणश्रेणीदत्तस्खलद्गस्तघनं महः।

---

पूषेति।—पूषा सूर्यः, वसिष्ठः रघूणां कुलगुरुः, अथ अनन्तरम्, कुशिकात्मजश्च विश्वामित्रश्च, ते प्रसिद्धाः, एते त्रयः रघूणां रघुवंशीयानां, गुरवः, किन्तु महामुनेः अस्य गुरोर्विश्वामित्रस्य, गिरा वाचा, कृतोऽपि अनुष्ठितोऽपि, स्त्रैणः स्त्रीसम्बन्धी, वधः विनाशः, ताडकाहननमित्यर्थः, मां न सुखाकरोति न प्रीणयति। उपजाति वृत्तम् ॥ १७ ॥

प्रत्यासन्नेति।—प्रत्यासन्नः उदयोन्मुखः, यस्तुषारदीधितिश्चन्द्रः, तस्य करेण किरणेन, क्लिश्यन्त्यः पीड्यमानाः, दूरं पलायमाना इत्यर्थः, यास्तमोवल्लर्य्यः अन्धकारवल्लर्य्यः, अन्धकारराशय इत्यर्थः, तत्कल्पाभिः तत्सदृशीभिः, मखधूमवर्त्तिभिः यज्ञीयधूमलताभिः, सम्मीलितं समाच्छन्नं, व्यञ्जनं चिह्नं, द्वारकुड्यादिरूपमिति भावः येषां तथाभूताः, तथा श्वः परदिने, सञ्चारयिष्यमाणाः परिधास्यमानाः, अत एव वटुकैः ब्रह्मचारिभिः, व्याधूताः विशेषेण कम्पिताः, आन्दोलिता इत्यर्थः, शोषणार्थमिति भावः, शुष्यन्त्यश्च शोषं गच्छन्त्यश्च, त्वचः वल्कलानि येषु तथाविधाः, तथा निद्राणाः शयानाः, अतिथयः अभ्यागता येषु तादृशाः, तपोधनगृहाः तपोधनानाम् आश्रमस्थभवनानि, नः अस्माकं, कौतुकम् आनन्दं, कुर्वन्ति जनयन्तीत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

स्फुरतीति।—माद्यतां माद्यताम् अतिशयेन हृष्यतामिति यावत्, चन्द्रोदय-दर्शनेनेति भावः, चकोराणां पक्षिविशेषाणां, ये विलोचनप्रकराः नेत्रसमूहाः, तेषां

हृदय ! लघु मा भूः प्रेयोदर्शनप्रतिभूरयं
कुवलयदृशामिन्दुर्नेत्रे सुधाभिरनक्ति नः ॥ ६९ ॥

अपि च—

उन्मीलन्ति मृणालकोमलरुचो राजीवसंवर्त्तिका-
संवर्त्तव्रतवृत्तयः कतिपये पीयूषभानोः कराः ।
अप्यस्मिन्धवलीभवत्सु गिरिषु क्षुब्धोऽयमुन्मज्जता
विश्वेनेव तमोमयो निधिरपामङ्क्षाय फेनायते ॥ ७० ॥

---

किरणश्रेणीभिः मयूखनिचयैः, दत्तेन अर्पितेन, स्वहस्तेन हस्तावलम्बनेनेत्यर्थः, सादरदृष्टिपातेनेति भावः, घन सान्द्र, नेत्रकिरणैः सह चन्द्रकिरणस्य सम्मिश्रणादिति भावः, महः तेजः, प्रभा इत्यर्थः, चान्द्रमिति भावः, पुरतः अग्रतः, स्फुरति राजते, हे हृदय ! लघु चपलम्, उत्सुकमित्यर्थः, मा भूः न भव, कुवलयदृशां नीलोत्पलाक्षीणां, प्रेयोदर्शनप्रतिभूः प्रियतमदर्शने लग्नकः, तत्स्वरूप इत्यर्थः, अयम् उदयोन्मुखः, इन्दुश्चन्द्रः, नः अस्माकं, नेत्रे सुधाभिः अमृतकिरणैः, अनक्ति लिम्पति, शीतलयतीति यावत् । इन्दुर्हि विरहोद्दीपकतया विरहिणीनां प्रियसमागमसाधकोऽपि यन्मम नेत्रे शीतलयति, तेन शीघ्रं मे प्रियया समागमः सम्भवितेति कथं ते समुत्सुकतेति दुर्बलं हृदयं मैथिलीदर्शनोत्सुकं प्रति रघुपतेरुक्तिरियमिति बोध्यं, वस्तुतस्तु प्राक्तनमेतत् पद्यमिति चिन्त्यम् । हरिणी वृत्तम् ॥ ६९ ॥

उन्मीलन्तीति ।—मृणालवत् कोमलाः सुकुमाराः, रुचः कान्तयः येषां तथाभूताः, राजीवानां पद्मानां, याः संवर्त्तिकाः नवदलानि, "संवर्त्तिका नवदलम्" इत्यमरः ; तासां संवर्त्ते प्रलये, ध्वंसे इत्यर्थः, सङ्कोचने इति भावः, यत् व्रतं सङ्कल्पपूर्वकनियम इत्यर्थः, तदेव वृत्तिर्व्यापारो येषां तथाविधाः, कमलदलसङ्कोचका इति यावत्, चन्द्रस्य कमलदलसङ्कोचकारित्वस्वभावादिति भावः, पीयूषभानोः अमृतकिरणस्य चन्द्रस्य, कतिपये अल्पसङ्ख्यकाः, न तु समग्रा नवोदितत्वादिति भावः, कराः किरणाः, उन्मीलन्ति प्रसरन्ति, अस्मिन् किरणैः, गिरिषु पर्वतेषु, धवलीभवत्सु श्वेतीभवत्सु सत्सु, उन्मज्जतेव उन्मज्जनं कुर्वतेव, अन्धकारसमुद्रे निमग्नावस्थातो मस्तकोत्तोलनं कुर्वतेव इत्यर्थः, विश्वेन जगता, क्षुब्धः मथितः, अयं तमोमयः अन्धकारमयः, नीलत्वादिति भावः, अपां निधिः समुद्रः, अङ्क्षाय झटिति, फेनायते फेनमुद्गिरति । उत्प्रेक्षालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ७० ॥

( सनिर्वेदम् ) ।—

इन्दुर्यद्युदयाद्रिमूर्ध्नि न भवत्यद्यापि तन्मा स्म भू-
न्नासीरेऽपि तमःसमुच्चयममूरुन्मूलयन्ति त्विषः ।
अप्यक्ष्णोर्मुदमुद्गिरन्ति कुमुदैरामोदयन्ते दिशः
सम्प्रत्यूर्ध्वमसौ तु लाञ्छनमभिव्यङ्क्तुं प्रकाशिष्यते ॥ ७१ ॥

( सहर्षम् ) ।—

काश्मीरेण दिहानमम्बरतलं वामभ्रुवामानन-
द्वैराज्यं विदधानमिन्दुदृषदां भिन्दानमम्भःशिराः ।
प्रत्युद्यत्पुरुहूतपत्तनवधूदत्तार्घदर्भाङ्कुर-
क्षौमोत्सङ्गमैन्दवमिदं बिम्बं समुज्जृम्भते ॥ ७२ ॥

---

इन्दुरिति ।—अद्यापि इदानीमपि, यदि इन्दुश्चन्द्रः, उदयाद्रेः उदयाचलस्य, मूर्ध्नि शिरसि, न भवति नोदेतीत्यर्थः, तत् तदा, मा स्म भूत् न भवतु, नोदेत्वित्यर्थः, ननु तर्हि तमोनाशादिकं कथं स्यात् ? इत्याह, नासीरे इति ।—अमूः त्विषः किरणाः, नासीरेऽपि अग्रेऽपि, उदयात् प्रागपीत्यर्थः, "नासीरोऽग्रयाने स्यादग्रेऽपि" इति विश्वः ; तमसाम् अन्धकाराणां, समुच्चयं समूहम्, उन्मूलयन्ति नाशयन्ति, तथा अक्ष्णोरपि चक्षुषोरपि, मुदं प्रीतिं, "मुत् प्रीतिः प्रमदो हर्षः" इत्यमरः ; उद्गिरन्ति प्रकटीकुर्वन्ति, जनयन्तीत्यर्थः, तथा कुमुदैः कैरवैः, तद्विकाशैरिति भावः, दिशः आमोदयन्ते सुरभीकुर्वन्ति, तु पुनः, असौ इन्दुः, सम्प्रति निजत्विषा तत्तत्तमोनाशादिकार्य्य-समाधानानन्तरमित्यर्थः, लाञ्छनं कलङ्कं, स्वकीयमिति भावः, अभिव्यङ्क्तुं प्रकटयितुम्, ऊर्ध्वम् उपरि, प्रकाशिष्यते उदेष्यति, स्वकीयैः सत् कार्य्यं साध्यते, स्वयं प्रकाशे तु कलङ्क इति महत् दुर्भाग्यमिन्दोरिति प्रस्तुतवर्णनेन कस्यापि अप्रस्तुतस्य व्यवहारयोगात् समासोक्तिरलङ्कारः ; तदुक्तं दर्पणे—"समासोक्तिः समैर्यत्र कार्य्य-लिङ्ग-विशेषणैः । व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः ॥" इति । शार्दूलविक्रीडितं वृत्तम् ॥ ७१ ॥

काश्मीरेणेति ।—काश्मीरेण कुङ्कुमेन, "काश्मीरं कुङ्कुमेऽपि स्यात्" इति मेदिनी ; अम्बरतलम् आकाशं, दिहानं दिग्धं कुर्वत्, लिम्पदित्यर्थः, वामभ्रुवां सुन्दरीणाम्, आननस्य मुखस्य, द्वैराज्यं द्वयोः राज्ञोः कर्म परस्परप्रतिबन्धिताचरणमित्यर्थः; आननद्वैराज्यं मुखप्रतिपक्षतां, वदनप्रतिस्पर्द्धितामिति यावत्, विदधानं

एताश्च—

पौलोमीकुचकुम्भकुङ्कुमरजःस्वाजन्यजन्मोद्धताः
शीतांशोर्द्युतयः पुरन्दरपुरीसीम्नामुपस्कुर्वते ।
एताभिर्लिहतीभिरन्धतमसान्युद्ग्रथ्नतीभिर्दिशः
क्षौणीमास्तृणतीभिरन्तरतमं व्योमेदमोजायते ॥ ७३ ॥

अपि च—

नैवायं भगवानुदञ्चति शशी गव्यूतिमात्रीमपि
यामद्यापि तमस्तु कैरवकुलश्रीचाटुकाराः कराः ।

---

कुर्वन्, इन्दुदृषदां चन्द्रकान्तोपलानाम्, अन्तःशिराः जलनाडिकाः, चन्द्रकान्तशिलायाः जलनिर्गममार्गानित्यर्थः, भिन्दानं खण्डयत्, परिस्फोटयदित्यर्थः, चन्द्रोदये चन्द्रकान्तशिलातः जलं निःसरतीति क्षरणादिति भावः, प्रत्युद्यन्तीभिः प्रत्युद्गच्छन्तीभिः, अर्घदानार्थमिति भावः, पुरुहूतपत्तनवधूभिः इन्द्रपुरवासिनीभिः वनिताभिः, देवाङ्गनाभिरित्यर्थः, दत्तः यः अर्घः दूर्वाऽक्षतादिरूपपूजोपकरणं, तत्र यः दर्भाङ्कुरः कुशाङ्कुरः, तस्मै तद्भक्षणार्थमित्यर्थः, क्षीवः मत्तः, अतिचञ्चल इत्यर्थः, उत्सङ्गकुरङ्गः क्रोडस्थहरिणः यत्र तथाभूतम्, इदम् उपरि परिदृश्यमानम्, ऐन्दवम् इन्दुसम्बन्धि, बिम्बं मण्डलं, समुज्जृम्भते सम्प्रकाशते । शार्दूलविक्रीडितं वृत्तम् ॥ ७२ ॥

पौलोमीति ।—पुलोम्नः अपत्यं स्त्री पौलोमी शची, तस्याः कुचकुम्भयोः स्तनकलशयोः, यत् कुङ्कुमरजः काश्मीरपरागः, तस्य स्वाजन्ये स्वाकुल्ये, यत् जन्म उत्पत्तिः, तेन उद्धताः गर्विताः, शीतांशोश्चन्द्रस्य, द्युतयः प्रभाः, पुरन्दरस्य इन्द्रस्य, पुरी स्वर्गनगरी, तस्याः सीम्नां प्रदेशानाम्, उपस्कुर्वते गुणान्तराधानं कुर्वन्ति, तत्प्रदेशान् शोभयन्तीत्यर्थः, अन्धतमसानि गाढान्धकारान्, लिहतीभिः स्वादन्तीभिः, नाशयन्तीभिरिति यावत्, दिशः उद्ग्रथ्नतीभिः प्रकटयन्तीभिः, क्षौणीं पृथ्वीम्, आस्तृणतीभिः आच्छादयन्तीभिः, व्याप्नुवन्तीभिरिति यावत्, एताभिः द्युतिभिः करणभूताभिः, अन्तरतमम् अतिमध्यम्, इदं व्योम आकाशम्, ओजायते ओजस्विवदाचरति, अतिशयेन उज्ज्वलीभवतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ७३ ॥

नैवेति ।—अयं भगवान् शशी चन्द्रः, अद्यापि इदानीमपि, गव्यूतिमात्रीमपि क्रोशद्वयपरिमाणामपि, "गव्यूतिः स्त्री क्रोशयुगम्" इत्यमरः ; याम् आकाशं, नैव उदञ्चति उत्तिष्ठति, उदयाचलात् क्रोशद्वयमात्रमपि ऊर्ध्वं न उत्तिष्ठतीत्यर्थः, तु किन्तु, कैरवकुलानां कुमुदवृन्दानां, श्रीः शोभा, चाटुरालोकः, प्रकाश इति

मथ्नन्ति स्थलशीम्नि शैलगहनोत्सङ्गेषु संरुन्धते
जीवग्राहमिव क्वचित् क्वचिदपि च्छायासु गृह्णन्ति च ॥७४॥

(ज्योत्स्नातिशयं विभाव्य)।—

किं नु ध्वान्तपयोधिरेष कतकक्षोदैरिवेन्दोः करै-
रत्यच्छोऽयमधश्च पङ्कमखिलं छायापदेशादभूत्।
किंवा तस्करकर्त्तरीभिरभितो निस्तक्षणादुज्ज्वलं
व्योमैवेदमितस्ततश्च पतितास्छायाच्छलेन त्वचः ॥ ७५ ॥

(परिक्रम्य पार्श्वतोऽवलोक्य च)।—

---

यावत्, "नृपादेर्वर्णने चाटुरालोके चाटुरिष्यते" इति धरणिः; तौ कुर्वन्तीति तथोक्ताः, कराः किरणाः, तमः अन्धकारं, स्थलशीम्नि स्थलदेशे, मथ्नन्ति विलोडयन्ति, विध्वंसयन्तीत्यर्थः, शैलानां पर्वतानां, गहनानाञ्च निबिडारण्यानाञ्च, उत्सङ्गेषु क्रोडेषु, अभ्यन्तरेष्विति यावत्, संरुन्धते अवरुद्धं कुर्वन्ति, तत्र तत्र अन्धकाराधिक्यादिति भावः, तथा क्वचित् क्वचित् कुत्रापि कुत्रापि, छायासु अपि अनातपप्रदेशेष्वपि, जीवग्राहमिव जीवस्य जीवनस्य, ग्राहः ग्रहणं यस्मिन् कर्मणि तत् यथा तथा, गृह्णन्ति धारयन्ति, छायाविलीनमपि तत्तत्प्रदेशेभ्यः स्वयं प्रवेशेन निष्कासयन्तीवेत्यर्थः, उचितञ्चैतत् भृत्यानामिति ध्वनिः। शार्दूलविक्रीडितं वृत्तम् ॥ ७४ ॥

किमिति।—अयमेषः ध्वान्तपयोधिः अन्धकारसमुद्रः, कतकक्षोदैरिव "निर्मली" इति प्रसिद्धजलप्रसादनफलविशेषचूर्णैरिव, इन्दोश्चन्द्रस्य, करैः किरणैः, अत्यच्छः अतिनिर्मलः, तथा अखिलं समस्तं, पङ्कं कर्दमं, ध्वान्तपयोधेरिति भावः, छायापदेशात् छायाच्छलात्, अधश्च वृक्षादीनां निम्नगमित्यर्थः, अभूत् किं नु ? कर्दमाविलजले कतकचूर्णप्रक्षेपेण पङ्कादिकमधः पतति, जलञ्च उपरिभागे निर्मलं भवतीति प्रसिद्धिमाश्रित्योक्तम्, वा अथवा, तस्य इन्दोः, कराः किरणा एव, कर्त्तर्यः कर्त्तरिकाः, "काटारी" इति प्रसिद्धास्त्रविशेषाः, क्षुद्रकृपाणविशेषा वा, ताभिः अभितः समन्तात् निस्तक्षणादेव कर्त्तनादेव, इदं व्योम आकाशम्, उज्ज्वलं प्रभासम्पन्नं, किं नु ? भवतीति शेषः, तथा छायाच्छलेन छायाव्याजेन, इतस्ततः तस्य त्वचः चर्माणि, निकृत्ता इति शेषः, पतिताश्च, अत्रापि किं नु ? इति पदद्वयमाकर्षणीयम्, यथा अन्यस्यापि निकृत्तस्य वृक्षादेस्त्वच इतस्ततः पतन्ति, तद्वदिति भावः। सन्देहालङ्कारः, तदुक्तं दर्पणे—"सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः" इति। शार्दूलविक्रीडितं वृत्तम् ॥ ७५ ॥

दलविततिभृता तले तरूणा-
मिह तिलतण्डुलितं मृगाङ्करोचिः ।
मदचपलचकोरचञ्चुकोटी-
कवलनतुच्छमिवान्तराऽन्तराऽभूत् ॥ ७६ ॥

(विभाव्य च)।—

त्रिभुवनतमोलुण्टाकीनामहो ! मिहिरत्विषा-
मभिविधिरसौ कोकश्रेणीमनस्यवशिष्यते ।
क्षुधमपि तमः कोपादन्तः प्रविश्य विनिघ्नतः
शशधरकरानच्छिन्नाग्रांश्चरन्ति चकोरकाः ॥ ७७ ॥

---

दलेति।—दलविततिभृतां दलैः पत्रैः, विततिं विस्तृतिं, बिभ्रति धारयन्तीति तादृशानां विस्तृतपल्लवानामित्यर्थः, तरूणां वृक्षाणाम्, इह अस्मिन्, तले अधःप्रदेशे, मृगाङ्करोचिः चन्द्रकिरणः, तिल-तण्डुलितं तिल-तण्डुलाभ्यामिव आचरितं, कुत्रचित् तिलाच्छन्नमिव कृष्णं, कुत्रचित् तण्डुलावृतमिव शुभ्रमित्यर्थः, अतिघनपत्रत्वात् यत्र चन्द्रकिरणो न पतति गाढान्धकारत्वात् तत्र तिलायितं, यत्र च पत्रान्तरालेभ्यः चन्द्रकिरणः अधः पतति तत्र शुभ्रत्वात् तण्डुलायितमिति भावः, अत एव अन्तरा अन्तरा मध्ये मध्ये, तिलायितप्रदेशे इति भावः, मदेन हर्षेण, चपलानां चञ्चलानां, चन्द्रिकापानाशया इति भावः, चकोराणां चन्द्रिकापायिपक्षिविशेषाणां, चञ्चुकोटीभिः चञ्चुभिः, कवलनेन ग्रसनेन, तुच्छमिव शून्यमिव, चन्द्रिकाविरहितमित्यर्थः, अभूत् । उत्प्रेक्षाऽलङ्कारः । पुष्पिताग्रा वृत्तम् ॥ ७६ ॥

त्रिभुवनेति।—अहो । आश्चर्य्ये, त्रिभुवनस्य त्रिजगतः, तमसाम् अन्धकाराणां, लुण्टाक्यः लुण्ठनकारिण्यः तासां, मिहिरत्विषां सौरतेजसाम्, असौ अभिविधिः अभिव्याप्तिः, कोकश्रेणीनां चक्रवाककुलानां, मनसि चेतसि, अवशिष्यते अवतिष्ठते, मिहिरत्विषः इदानीं चक्रवाकहृदयेषु एव वर्त्तन्ते, नान्यत्र ; कथमन्यथा ते रात्रौ परस्परविरहात् सन्तप्ता भवन्तीति भावः ; चकोरकाः चकोरपक्षिणः, कोपात् क्रोधात्, अन्तः तमसामेव अभ्यन्तरमिति भावः, प्रविश्य क्षुधं क्षुधा, क्षुधास्वरूपमित्यर्थः, तमोऽपि अन्धकारञ्च, विनिघ्नतः विनाशयतः, अच्छिन्नाग्रान् सम्पूर्णानित्यर्थः, दूरप्रसारिण इति भावः, शशधरकरान् चन्द्रकिरणान्, चरन्ति खादन्ति, पिबन्तीत्यर्थः । हरिणी वृत्तम् ॥ ७७ ॥

अपि चेदानीं—

तथा पौरस्त्यायां दिशि कुमुदकेदारकलिका-
कपाटघ्नीमिन्दुः किरणलहरीमुल्ललयति।
समन्तादुन्मीलद्बहलजलविन्दुस्तवकिनो
यथा पुष्पायन्ते प्रतिगुडकमेणाङ्कमणयः॥ ७८॥

(परिक्रामदूर्ध्वमवलोक्य)।—

तरुणतमालकोमलमलीमसमेतदयं
कलयति चन्द्रमाः किल कलङ्कमिति ब्रुवते।
तदमृतमेव निर्दयविधुन्तुददन्तपद-
व्रणविवरोपदर्शितमिदं हि विभाति नभः॥ ७९॥

---

तथेति।—इन्दुश्चन्द्रः, पौरस्त्यायां प्राच्यां, दिशि कुमुदानां कैरवाणां, केदारः क्षेत्रं, कुमुदाकरं सर इत्यर्थः, तत्र याः कलिकाः कोरकाः, अविकसित-कुमुदानीत्यर्थः, तासां कपाटघ्नीं सङ्कोचनाशिनीमिति यावत्, विकासिनीमिति भावः, किरणलहरीं मयूखतरङ्गं, तथा तेन प्रकारेण, उल्ललयति प्रसारयति, यथा येन प्रकारेण, समन्तात् सर्वतः, उन्मीलद्भिः उच्छलद्भिरित्यर्थः, प्रसरद्भिरिति यावत्, बहलैः प्रभूतैः, जलविन्दुभिः जलकणैः, स्तवकिनः सगुच्छाः, एतत्र पुष्पीभवनात् गुच्छवत् प्रतीयमाना इत्यर्थः, जलविन्दुवर्षिण इति यावत्, एणाङ्कमणयः मृगाङ्कमणयः, चन्द्रकान्तशिला इत्यर्थः, प्रतिगुडकं गुटिकां गुटिकां प्रति, पुष्पायन्ते राशीभूता भवन्ति, विस्तृता भवन्तीति यावत्। शिखरिणी वृत्तं—"रसैरुद्रैश्छिन्ना य म न स भ ला गः शिखरिणी" इति तल्लक्षणात्॥ ७८॥

तरुणेति।—अयं चन्द्रमाः तरुणः अभिनवः, यस्तमालः तदाख्यवृक्षः, तद्वत् कोमलं मृदुलं, तथा मलीमसं मलिनञ्च, कृष्णवर्णमित्यर्थः, अत्र यत् इति पदमध्याहार्य्यं, यत् एतत् चन्द्रे परिदृश्यमानं किमपि वस्त्विति यावत्, कलयति धत्ते, तत् कलङ्कमिति ब्रुवते वदन्ति, किलेति प्रसिद्धौ, लोका इति शेषः; तत् लोकवचनम् इति भावः, अनृतमेव अलीकमेव, हि यतः, इदं परिदृश्यमानं वस्तु निर्दयस्य निष्ठुरस्य, विधुन्तुदस्य राहोः, दन्तपदेन दन्ताघातेन, दन्ताघातेन इत्यर्थः यत् व्रणं क्षतः, तदेव विवरं रन्ध्रं, तेन उपदर्शितं प्रकटितं, नभः आकाशं, विभाति राजते। राहोर्दन्ताघातेन चन्द्रावयवे छिद्रं सञ्जातं, तेन छिद्रेण पश्चाद्वर्त्तिं कृष्णवर्णम् आकाशं परिदृश्यते,

सन्ध्यानलेन भृशमम्बरमूषिकाया-
मावर्त्तितैरुडुभिरेव भृतोऽयमिन्दुः ॥ ८१ ॥

(विचार्य च)। हन्त ! यथाधर्मम् (च) एतत्—

यत्पीयूषमयूखमालिनि तमःस्तोमावलीढायुषां
नेत्राणामपमृत्युहारिणि पुरः सूर्य्योढ एवातिथौ ।
अम्भोजानि पराञ्चि तन्निजमघं दत्त्वैव तेभ्यस्ततो
गौराङ्गीवदनोपमासुकृतमादत्ते पतिर्यज्वनाम् ॥ ८२ ॥

---

भूयस्तराणि प्रभूतानि, ज्योत्स्नीषु च चन्द्रिकान्वितासु रात्रिषु च, "ज्योत्स्नी चन्द्रिकयाऽन्विता" इत्यमरः; प्रविरलानि स्वल्पानि, दृश्यन्ते इति शेषः, ततः तस्मात्, प्रतीम: मन्यामहे, सन्ध्या एव अनलः अग्निः, तेन अम्बरमाकाशमेव, मूषिका मूषा, "मुषि" इति ख्यातः सुवर्णादिद्रवीकरणपात्रविशेषः इत्यर्थः, तत्र आवर्त्तितैः द्रवीकृतैः, उडुभिरेव नक्षत्रैरेव, अयम इन्दुः चन्द्रः, भृतः पूरितः, पूर्णतां गत इत्यर्थः, ज्योत्स्नीषु रात्रिषु इति शेषः, ततश्च चन्द्रोदये नक्षत्राणां स्वल्पता, द्रवीभूतानां तेषां चन्द्रेण सह एकीभूतत्वादिति भावः। उत्प्रेक्षाऽलङ्कारः। वसन्ततिलकं वृत्तम् ॥ ८१ ॥

(च) यथाधर्मं धर्मानुसारीत्यर्थः ।

यदिति ।—यत् यतः, तमःस्तोमेन तिमिरसङ्घातेन, अवलीढं भक्षितं, नाशितमित्यर्थः, आयुः जीवनं, जीवनचिह्नरूपदर्शनव्यापार इति यावत् येषां तथाविधानां, नेत्राणाम अपमृत्युहारिणि विघातनाशिनीति यावत्, जीवनचिह्नरूपदर्शनव्यापारसम्पादिनीति भावः, पीयूषमयूखमालिनि अमृतरश्मौ एव, चन्द्रे एवेत्यर्थः, सूर्य्योढे सूर्य्यास्तगमनकाले समागते, अतिथौ अभ्यागते जने, पुरः अग्रतः, पूर्वस्यां दिशि वा, उपस्थिते सतीति शेषः, अम्भोजानि पद्मानि, पराञ्चि पराङ्मुखाणि, सङ्कुचितानि इति यावत्, भवन्तीति शेषः, तत् तस्मात्, यज्वनां पतिः द्विजराजश्चन्द्रः, अतिथिरूप इति भावः, निजम् अघं पापं, मालिन्यमिति यावत्, तेभ्यः अम्भोजेभ्यः, दत्त्वैव ततः तेभ्यः, अम्भोजेभ्य एव इत्यर्थः, गौराङ्गी या नारी तस्याः वदनेन या उपमा सादृश्य तया तत्साम्यहेतुकमित्यर्थः, सुकृतं पुण्यम, अम्भोजानामिति भावः, आदत्ते गृह्णाति, सुन्दरीवदनस्य चन्द्रसाम्यप्रसिद्धेः। तथा चोक्तं धर्मसंहितासु—"अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते। स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति॥" "अतिथौ विमुखे प्रोक्तं गते यत् पातकं बुधाम्। तदेवाष्टगुणं प्रोक्तं सूर्य्योढे विमुखे

विश्वामित्रः । (सर्वतोऽवलोक्य सस्मितम्) । अहह !! नामधेयमाधुर्य्यादपरमार्थदृश्वानो विप्रलभ्यन्ते (ख) । तथा हि—

स्मेरा दिशः कुमुदमुद्भिदुरं पिबन्ति
ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः ।
आः ! कीदृगत्रिमुनिलोचनदूषिकायां
पीयूषदीधितिरिति प्रथितोऽनुरागः !! ॥ ८३ ॥

(रामं च दृष्ट्वा सहर्षस्मितम्) । कथमयं कुमाराङ्कविजयप्रत्यागतोऽपि ताड़कानिग्रहेण ह्रिणीयमानः (ग) सहसा नोप-

---

गते ॥" इति च । प्रतिबिम्बरूपं चन्द्रं समुत्थितं दृष्ट्वाऽपि अम्भोजानि सङ्कोचरूपं वैमुख्यं गतानि, तेन च विमुखीभूतः प्रतिबिम्बचन्द्रः निजकलङ्कात्मकं मालिन्यं तेभ्यो दत्त्वा तेषां सौन्दर्य्यात्मकं सुकृतं गृहीतवान्, ततश्च अम्भोजानि सुकृताभावात् मलिनानि जातानि, चन्द्रश्च अम्भोजेभ्यः स्वदुष्कृतसमर्पणात् सुकृतग्रहणाच्च रमणीयदर्शनः अभूत् इति निष्कर्षः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८२ ॥

(ख) नामधेयेति ।—नामधेयमात्रस्य केवलनाम्नः, माधुर्य्यात् मनोज्ञत्वात् । अपरमार्थदृश्वानः अयथार्थदर्शिनः, भ्रान्ता इति यावत् । विप्रलभ्यन्ते प्रतार्य्यन्ते ।

स्मेरा इति ।—दिशः स्मेराः प्रकाशशीलाः, स्वत एव प्रकाशस्वभावाः इत्यर्थः, न तु चन्द्रकरस्पर्शादिति भावः, कुमुदं कैरवम्, उद्भिदुरं स्वत एव विकस्वरं, रजन्यामिति भावः, उदरम्भरयः स्वोदरपरायणाः, उदरमात्रपूर्त्तिलालसा इति यावत्, चकोराः ज्योत्स्नाकरम्भं ज्योत्स्नारूपदधिसक्तून्, "करम्भो दधिसक्तवः" इत्यमरः; पिबन्ति, दधिसक्तुभ्रान्त्या, न तु ज्योत्स्नाबुद्ध्येति भावः, आः !! इति विरक्तौ, तथाऽपीति भावः, अत्रिमुनेः लोचनयोः दूषिकायां मले, मलभूते चन्द्रमसीति यावत्, "दूषिका नेत्रयोर्मलम्" इत्यमरः, "अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः" इति कालिदासः; पीयूषदीधितिः अमृतकिरणः, इति अनुरागः आसक्तिः, आकर्षणमिति यावत्, लोकानामिति शेषः, प्रथितः प्रख्यातः; मलमात्रे सुधामयूखभ्रान्तिः लोकानां मूढ़ताद्योतिका, अयुक्तमेतदिति भावः । वसन्ततिलकं वृत्तम् ॥ ८३ ॥

(ग) कुमारेति ।—कुमाराङ्कः प्रथमं युद्धं, तस्मिन्, यद्वा—कुमाराङ्के कुमारचिह्ने, शिशुत्वबोधकचिह्ने सत्यपीत्यर्थः, शैशवावस्थायामेवेति भावः, यो विजयः शत्रुविनाशः, तस्मात् प्रत्यागतः प्रत्यावृत्तः, शत्रून् विनाश्य समागत इत्यर्थः । ताड़काया निग्रहेण वधेन । ह्रिणीयमानः लज्जमानः, स्त्रीहत्याया अवर्णत्वात् गर्हणीयत्वाच्चेति भावः ।

तिष्ठते (क) वत्सः। (लक्ष्मणं प्रति)। वत्स सौमित्रे! अस्माक-मनेन वृत्तान्तेन प्रदोषलक्ष्मीः (ख) इयमनूद्यते (ग)। पश्य—

> निशाचराणां तमसां निहन्ता
> पुरोऽयमुद्गच्छति रामचन्द्रः ।
> अथोच्छ्वसद्भिर्नयनैर्मुनीना-
> मयं कुमुद्वानजनि प्रदेशः ॥ ८४ ॥

रामः। (विभाव्य)।—

> मदयति यदुत्पन्नो दुग्धाम्बुधेरयमम्बुधीन्
> नयति नयनादत्रेर्जातो मुदं नयनानि च ।
> तदखिलसुरश्रेणीसाधारणप्रणया शची-
> सहचरचरत्कालो सोमः समभ्युदमीहते ॥ ८५ ॥

---

(क) उपतिष्ठते समीपमागच्छति।

(ख) प्रदोषलक्ष्मीः रजनीमुखशोभा, "प्रदोषो रजनीमुखम्" इत्यमरः।

(ग) अनूद्यते पुनरुक्ता भवति, द्विगुणं शोभते इत्यर्थः, रामचन्द्रेण आदौ निशाचर-तमांसि हत्वा प्रदोषलक्ष्मीसम्पादनादिति भावः।

निशाचराणामिति।—निशाचराणां राक्षसानां, तमसाम् अन्धकाराणाम्, अन्धकारस्वरूपाणां निशाचराणामिति यावत्, निहन्ता विनाशकः, अयं राम एव चन्द्रः पुरः अग्रतः, उद्गच्छति उदेति, उपतिष्ठते इत्यर्थः, अथ रामचन्द्रोदयानन्तर-मित्यर्थः, उच्छ्वसद्भिः विकसद्भिः, आनन्दातिशयादिति भावः, मुनीनां नयनैः लोचनैः, अयं प्रदेशः आश्रमभूमिः, कुमुद्वान् कैरववान्, कुमुदवनुल्य इत्यर्थः, अजनि, मुनीनां नयनान्येव कुमुदानि विकसन्तीति भावः। रूपकमलङ्कारः। उपेन्द्रवज्रा वृत्तम्— "उपेन्द्रवज्रा प्रथमे लघौ सा" इति लक्षणात् ॥ ८४ ॥

मदयतीति।—अयम् उदयं गच्छन्, सोमः इति शेषः, दुग्धाम्बुधेः क्षीरसागरात्, यत् यतः, उत्पन्नः समुत्थितः, तस्मात् अम्बुधीन् समुद्रान्, मदयति हर्षयति, अत्रेः, तदाख्यमुनेः, नयनात् जातः, अत एव नयनानि, लोकानामिति शेषः, मुदम् आनन्दं, नयति प्रापयति च, युक्तमेतत् जन्य जनकसम्बन्धादिति भावः, किन्तु अखिलसुरश्रेणीनां सर्वदेवानां, साधारणः समानः, प्रणयः अनुरागः, लालसा इत्यर्थः यस्यां तादृशी, शचीसहचरस्य इन्द्रस्य, चरत्काष्ठा इन्द्रनीयदिक्प्राचीमित्यर्थः, सोमः चन्द्रभेदः अमृतम्,

(सलज्जमुपसृत्य)। भगवन्! अभिवादये।

विश्वामित्रः। (सस्नेहबहुमानमालिङ्ग्य)। वत्स रघुनन्दन! इत्थमेव—

प्रकृष्टकर्त्रभिप्राय-क्रियाफलवतो विधीन्।
प्रयुञ्जानास्त्वया वीर! परिपाल्यामहे वयम्॥ ८६॥

रामः। (स्वगतम्)। शिरसा गृहीतमाचार्य्यवचनम्।

विश्वामित्रः। (समरधूलिधूसरं रामस्य कपोलमुन्मार्जयन्)। यत् सत्यम्, अमुना नक्तञ्चरव्यतिकरेण (घ) प्रियसुहृदा सीरध्वजेन वितन्यमाने वैताने कर्मणि कम्पितमिव मे हृदयम् (ङ)।

रामः। (सगौरवम्)। भगवन्! क एष सीरध्वजो नाम, यम् (च) अद्य ते त्रिभुवनदुर्लभोऽयं प्रियसुहृच्छब्दप्रयोगः कमपि महिमानमारोपयति (छ)?

विश्वामित्रः। वत्स! शृणोषि विदेहेषु मिथिलां नाम नगरीम्?

रामः। यत्र पवित्रमाश्चर्य्यद्वयं जनाः कथयन्ति—सकलराजकदुराकर्षमैन्दुशेखरं (ज) धनुः, लाङ्गलमुखोल्लिखितविश्वम्भराप्रसूतिरगर्भसम्भवा (झ) मानुषी?

---

"सोमः सोमलतायाञ्च चन्द्रे च" इति विश्वः; तत् प्रविष्टं, सम्पन्नं अभीष्टं, युक्तमित्यर्थः, ईहते चेष्टते, एतत् तु निःसम्बन्धतया अतीवयुक्तमिति भावः। हरिणीवृत्तम्॥ ८५॥

प्रकृष्टेति।—हे वीर! प्रकृष्टम् उत्कृष्टं, कर्त्रभिप्रायं कर्त्तारमभिप्रैतीति तथोक्तं, कर्त्तृनिष्ठमित्यर्थः, यत् क्रियाफलं तत् विद्यते येषु तान्, विधीन् वैदिककर्माणि, प्रयुञ्जानाः कुर्वन्तः, वयं मुनयः, त्वया परिपाल्यामहे रक्षणीयाः। अनुष्टुप् वृत्तम्॥ ८६॥

(घ) नक्तञ्चरव्यतिकरेण निशाचरसम्पर्केण।

(ङ) सीरध्वजेन तन्नाम्ना जनकेन। वितन्यमाने विस्तार्यमाणे, क्रियमाणे इत्यर्थः। वैताने यज्ञिये। नक्तञ्चरास्तदीयं यज्ञं यदि विहन्युरिति हृदयं कम्पनमिति भावः।

(च) यं सीरध्वजम्।

(छ) कमपि अनिर्वचनीयं, महिमानं गौरवम्, आरोपयति नयति।

(ज) सकलेति।—सकलैः राजकैः राजन्यैः, दुराकर्षम् अशक्याकर्षणं, नमयितुमसमर्थमिति यावत्। ऐन्दुशेखरं शैवम्।

विश्वामित्रः। (विहस्य)। अथ किम्।

रामः। (सकौतुकम्)। ततः किं तस्याम्?

विश्वामित्रः।—

असौ सीरध्वजो राजा यो देवात् द्युमणेरपि।

अध्यैष्ट याज्ञवल्क्यस्य मुखेन ब्रह्मसंहिताम्॥ ८७॥

तस्य संन्यस्तशस्त्रस्य (ञ) पुराणराजर्षेर्जनकवंशजन्मनो दीक्षाविलोपशङ्का पर्य्याकुलयति (ट) माम्। तदेतम् (ठ) आयुष्मन्तौ, विधिशेषम् (ड) अस्मदीयं समाप्य सहैव (ढ) मिथिलामुपतिष्ठामहे (ण)।

रामः। (सहर्षमपवार्य्य)। वत्स लक्ष्मण! ममापि तस्मिन्नरुणरोहिणीरमणचूडामणिपाणिप्रणयिनि शरासने चिरस्य कौतुकम् (त) अस्ति।

---

(झ) लाङ्गलेति।—लाङ्गलमुखेन हलाग्रेण, उल्लिखिता कृष्टा, विश्वम्भरा भूमिरेव, प्रसूतिः जननी यस्याः तथाभूता। अगर्भसम्भवा अयोनिजाता।

असाविति।—यः असौ राजा सीरध्वजः, याज्ञवल्क्यस्य मुनेर्मुखेन, तथा देवात् द्युमणेः सूर्य्यात् अपि, ब्रह्मसंहितां वेदशास्त्रम्, अध्यैष्ट अधीतवान्। यद्वा—यः याज्ञवल्क्य इति भावः, देवात् द्युमणेरपि ब्रह्मसंहितामध्यैष्ट, तस्य याज्ञवल्क्यस्य मुखेन असौ सीरध्वजः ब्रह्मसंहितामध्यैष्ट, याज्ञवल्क्येन सूर्य्यादधीतं, सीरध्वजेन तु याज्ञवल्क्यादिति भावः। अनुष्टुप् वृत्तम्॥ ८७॥

(ञ) संन्यस्तशस्त्रस्येति।—संन्यस्तं परित्यक्तं, शस्त्रं येन तथाभूतस्य, स्वयमात्मरक्षणाक्षमस्येति भावः।

(ट) दीक्षाविलोपशङ्का नक्तञ्चराक्रमणात् यज्ञव्याघातशङ्केत्यर्थः। पर्य्याकुलयति सर्वतोभावेन व्याकुलयति, अत्यर्थमुद्विग्नीकरोतीत्यर्थः।

(ठ) तत् तस्मात्, तस्य दीक्षारक्षणार्थमिति भावः, एतम् आगच्छतम्।

(ड) विधिशेषं यज्ञस्य शेषविधिम्।

(ढ) सहैव मिलित्वैवेति यावत्।

(ण) उपतिष्ठामहे गच्छामः।

(त) अरुणेति।—अरुणः नवः, अचिरोदित इति यावत्, रोहिणीरमणश्चन्द्रः,

लक्ष्मणः। (सपरिहासम्)। आर्य्यायामयोनिजन्मनि राजकन्यकायाम् (थ) अपि।

रामः। (सव्रीडस्मितम्)। कथमन्यदेव किमपि प्रहसनं सूत्रयति (द) भवान्? (मुनिं प्रति)। भगवन्! इक्ष्वाकुवंशगुरो! यदभिरुचितं भवते।

(इति परिक्रम्य निष्क्रान्ताः सर्वे)।

इति कौमारविक्रमो नाम द्वितीयोऽङ्कः।

---

# तृतीयोऽङ्कः।

(ततः प्रविशति कञ्चुकी (क)।)

---

चूडामणिर्यस्य सः तथोक्तस्य, हरस्येत्यर्थः, पाणिप्रणयिनि हस्तप्रणयवति, सर्वदा धारणात् हस्ताभ्यां सह परिचिते इत्यर्थः, शरासने शरा अस्यन्ते क्षिप्यन्ते अनेनेति शरासनं धनुः तस्मिन्। कौतुकम् औत्सुक्यं, तद्दर्शनलालसेति यावत्।

(थ) आर्य्यायां मान्यायाम्। अयोनिजन्मनि अगर्भसम्भूतायाम्। राजकन्यायां जानक्यामित्यर्थः।

(द) प्रहसनं परिहसनीयम्। सूत्रयति सूचयति, अवतारयतीत्यर्थः।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यकृता
अनर्घराघवद्वितीयाङ्कव्याख्या समाप्ता।

---

(क) कञ्चुकी "अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते॥" इत्युक्तलक्षणः कश्चित् अन्तःपुरवर्त्ती वृद्धब्राह्मणः। उक्तञ्च भरतेन—"जरावैक्लव्ययुक्तेन विशेत् गात्रेण कञ्चुकी" इति। "अन्तःपुरे त्वधिकृतः स्याद्दन्तर्वंशिको जनः। सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते॥" इत्यमरश्च।

कञ्चुकी। (जरावैक्लव्यविसंष्ठुलानि (ख) कतिचित् पदानि गत्वा आत्मानं प्रति सखेदोपालम्भम् (ग)।—

गात्रैर्गिरा च विकलश्चटुमीश्वराणां
कुर्वन्नयं प्रहसनस्य नटः कृतोऽस्मि।
तत्त्वां पुनः पलितवर्णकभाजमेनं
नाट्येन केन नटयिष्यति दीर्घमायुः? ॥ १ ॥

(पुरो विलोक्य)। अये!! सीतापादमूलोपजीविनी कलहंसिका।

(प्रविश्य)।

कलहंसिका। अज्ज! पणमामि। *

कञ्चुकी। वत्से! कल्याणिनी भूयाः।

कलहंसिका। अज्ज! चिरेण कुदो तुम्हे? †

---

* आर्य्य! प्रणमामि।

† आर्य्य! चिरेण कुतो यूयम्?

---

(ख) जरेति।—जरया वार्द्धकेन, यत् वैक्लव्यं विह्वलता, सततदुःस्थतेत्यर्थः, अङ्गान्यपि धारयितुमसामर्थ्यमिति यावत्, तेन विसंष्ठुलानि पदे पदे स्खलितप्रायाणीति यावत्।

(ग) सखेदोपालम्भं सदुःखाक्षेपम्, आहेति अध्याहार्य्यक्रियाविशेषणम्।

गात्रैरिति।—गात्रैः अङ्गैः, गिरा वाचा च विकलः अवशः, अयम् एव, अहमिति शेषः, ईश्वराणां प्रभूणां, चटुं चाटुं, प्रियभाषितमिति यावत्, "चटुश्चाटौ पिचण्डे च" इति मेदिनी; कुर्वन् प्रहसनस्य नाट्यविशेषस्य, परिहासस्य वा, नटः अभिनेता कृतः, वार्द्धकेन स्रष्ट्रा वा इति शेषः, अस्मि; तत् तस्मात्, दीर्घम् आयुः दीर्घकालव्यापि जीवितकालः, पलितवर्णकभाजं पलितेन जराजनितेन केशादौ शौक्ल्येन, "पलितं जरसा शौक्ल्यं केशादौ" इत्यमरः; यत् वर्णकं विलेपनम्, अङ्गरागविधानमित्यर्थः, "गात्रानुलेपनी वर्त्तिर्वर्णकं स्यात् विलेपनम्" इत्यमरः; तद्भाजं तद्धारिणं, शुक्लवर्णं अनुरज्यमानमित्यर्थः, एनं त्वां पुनः इदानीमपीत्यर्थः, केन नाट्येन नटनाख्यव्यापारेण, अभिनयव्यापारेणेत्यर्थः, नटयिष्यति? नर्त्तयिष्यति? तन्न जाने इति शेषः, इदानीमपि तव नटनं न समाप्तमिति मन्ये इति भावः। वसन्ततिलकं वृत्तम्॥ १॥

कञ्चुकी। (विहस्य)। तत् किं न कथ्यते, वत्से! विदितमेव भवत्याः, यथा तत् तादृगद्भुतं दारकद्वयम् (घ) आदाय भगवान् कौशिको यजमानं (ङ) महाराजं सीरध्वजमुपस्थितः।

कलहंसिका। अध इं। अज्ज! पहवं (च) णामधेअं अ ताणं सुणिदुं अत्थि मे कोदूहलं। *

कञ्चुकी। वत्से! कथयामि—

त्रयस्त्रिंशत्कोटित्रिदशमयमूर्त्तेर्भगवतः
सहस्रांशोर्वंशे जयति जगदीशो दशरथः।
यदस्त्रैरस्त्रिग्धैरसुरयुवतिश्वासपवन-
प्रकोपे सिद्धे न स्पृशति शतकोटिं शतमखः॥ २॥

इमौ तस्य विश्वाम्पत्युरात्मजौ राम-लक्ष्मणौ।
ययोर्भरत-शत्रुघ्नावनुजौ द्वन्द्वचारिणौ॥ ३॥

* अथ किम्। आर्य्य। प्रभवं नामधेयं च तयोः श्रोतुमस्ति मे कौतूहलम्।

(घ) दारकद्वयं कुमारयुगलम्।

(ङ) कौशिकः विश्वामित्रः। यजमानं यागनिरतम्।

(च) प्रभवं प्रभवत्यस्मादिति प्रभवः उत्पत्तिस्थानं तं, कस्मिन् कुले जातमित्यर्थः, पितरमिति यावत्।

त्रयस्त्रिंशदिति।—त्रयस्त्रिंशत्कोटित्रिदशमयी त्रयस्त्रिंशत्कोटिदेवतात्मिका, मूर्त्तिर्यस्य तथाभूतस्य सर्वदेवात्मभूतस्येत्यर्थः, भगवतः सहस्रांशोः सूर्य्यस्य, वंशे दशरथो नाम जगदीशः राजा, जयति सर्वोत्कर्षेण वर्त्तते; शतमखः शतक्रतुः इन्द्रः, यस्य दशरथस्य, अस्त्रैः असुरयुवतीनाम् असुराङ्गनानां, श्वासपवनस्य निःश्वासमारुतस्य, प्रकोपे वृद्धौ, सिद्धे सम्पन्ने सति, भर्त्तॄणाम् असुराणां निहतत्वादिति भावः, शतकोटिं वज्रं, न स्पृशति, दशरथेनैव स्वकार्य्यस्यासुरपराजयस्य साधितत्वादिति भावः। शिखरिणी वृत्तम्॥ २॥

इमाविति।—द्वन्द्वचारिणौ युगलचारिणौ युग्मचारिणौ, सततमेकत्र विचरणशीलौ इत्यर्थः, इमौ राम लक्ष्मणौ नाम तस्य विश्वाम्पत्युः नृपतेः दशरथस्य, आत्मजौ

कलहंसिका। जधा अम्हघरे भट्टदारिआ (छ) सीदा उम्मिला अ मंडवी सुदकित्ती अ। (विचिन्त्य हर्षं निरूपयन्ती)। कधं महाकुलप्पसूदा एदे वि कुमारआ। (मुहूर्त्तमिव स्थित्वा दीर्घमुष्णं च निःश्वस्य)। कुदो अम्हाणं ईरिसो भाअधेओ ? * (ज)

कञ्चुकी। भवति ! मा विषीद। सर्वं भविष्यति देव-ब्राह्मणानुग्रहात् ।

कलहंसिका। तदो तदो ? †

कञ्चुकी। ततश्च वृद्धान्तःपुराणामभ्यर्थनया (झ) तौ विकर्त्तनकुलकुमारकौ (ञ) दृष्ट्वा निवर्त्तमानः पुरोधसा गौतमेन (ट) अहमाहूय राजपुत्रीणां सौभाग्यदेवता-ऽऽराधनाय संविहितोऽस्मि (ठ)।

* यथा अस्मद्गृहे भर्तृदारिका सीता ऊर्मिला च माण्डवी श्रुतकीर्त्तिश्च। कथं महाकुलप्रसूता एतेऽपि कुमारकाः !! कुतोऽस्माकमीदृशं भागधेयम् ?

† ततस्ततः ?

पुत्रौ, काकाक्षिगोलकवत् द्वन्द्वचारिणौ इत्यस्य उभयत्रापि अन्वयः कर्त्तव्यः ; एवञ्च द्वन्द्वचारिणौ भरत-शत्रुघ्नौ यथा: राम-लक्ष्मणयोः, अनुजौ कनिष्ठौ, रामस्य अनुजः भरतः, ततः लक्ष्मणः, ततश्च शत्रुघ्न इति निष्कर्षः। अनुष्टुप् वृत्तम् ॥ २ ॥

(छ) भर्तृदारिका राजकन्या, "राजा भट्टारको देवस्तत्सुता भर्तृदारिका" इत्यमरः।

(ज) भागधेयं भाग्यम्, ईदृशैः कुमारैः सह राजदारिकाणां परिणयस्य भाग्याधीनत्वमिति भावः।

(झ) वृद्धान्तःपुराणाम् अन्तःपुरवर्त्तिनीनां वृद्धानां महिलानामित्यर्थः। अभ्यर्थनया प्रार्थनया, अनुरोधेनेत्यर्थः।

(ञ) विकर्त्तनकुलकुमारकौ सूर्य्यवंशीयौ बालकौ।

(ट) पुरोधसा पुरोहितेन, "पुरोधास्तु पुरोहितः" इत्यमरः ; गौतमेन गौतम-महर्षिपुत्रेण, शतानन्देनेत्यर्थः।

(ठ) सौभाग्येति।—सौभाग्यं सुभगत्वं, शुभवर्त्तिताकहेतुभूतमिति भावः, तस्य

कलहंसिका। (सहर्षम्)। अज्ज! सव्वजणमणोसिदाणुऊलं (ड) विअ तत्थभवदो सदाणंदस्स वअणं। *

कञ्चुकी। वत्से! एवमेतत्। न खल्वतथ्यमगम्भीरम् आङ्गिरसो (ढ) ब्रवीति।

कलहंसिका। ता किं मण्णेध संकरसरासणारोवणव्ववसाएण (ण) राएसिणो जणअस्स पडिण्णासाहसं णिव्वाहइस्सदि राहवो? † (त)

कञ्चुकी। वत्से! अस्मानपि तर्कोऽयं तरलीकरोति (थ)।

---

* आर्य! सर्वजनमनीषितानुकूलमिव तत्रभवतः शतानन्दस्य वचनम्।

† तत् किं मन्यध्वे, शङ्करशरासनारोपणव्यवसायेन राजर्षेर्जनकस्य प्रतिज्ञासाहसं निर्वाहयिष्यति राघवः?

---

या देवता तदधिष्ठात्री देवी, गौरीति भावः, तस्याः आराधनाय सम्पूजनाय। संविहितोऽस्मि समादिष्टोऽस्मि, नियुक्तोऽस्मि इति वा।

(ड) सर्वजनेति।—सर्वेषां जनानां मनीषितं वाञ्छितं, मनोरथसिद्धिरिति यावत्, तस्य अनुकूलं सपक्षमित्यर्थः, सहायभूतमिति यावत्।

(ढ) अतथ्यम् अनृतम्। अगम्भीरम् अगूढार्थमित्यर्थः, परिहासवचनमिति यावत्। आङ्गिरसः अङ्गिराः ब्रह्मणः पुत्रः, तस्य अपत्यं पुमान् आङ्गिरसः अङ्गिरः-कुलसम्भूत इत्यर्थः, ब्रह्मणः पुत्रः अङ्गिराः, ततः उतथ्यः, ततो दीर्घतमाः, तत्पुत्रो गोतमः, ततश्च शतानन्द इत्यङ्गिरःसन्तान इति यावत्।

(ण) शङ्करेति।—शङ्करस्य हरस्य, यत् शरासनं धनुः, तस्य आरोपणं मौर्वीसंयोजनं, तत्र व्यवसायः सङ्कल्पः, निश्चय इत्यर्थः, उद्यमो वा तेन।

(त) प्रतिज्ञासाहसं प्रतिज्ञा अङ्गीकारः, अस्मिन् कर्मणि साधिते एतत् दास्यामि, नान्यथा इत्येवं पणः इति यावत्, सैव साहसं दुष्करं कर्म प्रतिज्ञासाहसं पणपूरकरूपं दुःसाध्यव्यापारमित्यर्थः, "साहसन्तु दमे दुष्करकर्मणि। अविमृश्यकृतौ धार्ष्ट्ये" इति हेमः; निर्वाहयिष्यति साधयिष्यति। राघवः रघुकुलोद्भवः, रामः इत्यर्थः।

(थ) तर्कः वितर्कः, संशय इति यावत्। तरलीकरोति चपलयति, आकुलयतीति यावत्।

तथा हि—

पूर्णेऽपि कर्मणि हतेष्वपि राक्षसेषु
विज्ञाय मैथिलसुतामपि वीर्य्यशुल्काम् ।
बालं पितुः प्रियममुं रघुराजपुत्र-
मेतावतीं भुवमृषिः कथमानिनाय ? ॥ ४ ॥

कलहंसिका । (स्मरणमभिनीय सविषादम्) । अज्ज ! पउत्ति-विसेसलंभेण दुम्मणायमाणमत्ताणं पंचालिआकेलिवावारेण विणोदअन्तीं (द) भट्टदारिअं पेक्खिअ उव्विग्गाए (ध) कारणं पारब्भिदुं (न) आगदाए अज्जस्स दंसणेण मए विसुमरिदं, इमिणा उण दे रक्खसणामग्गहणेण सुमराविदम्हि ।*

---

* आर्य्य ! प्रवृत्तिविशेषलम्भेन दुर्मनायमानमात्मानं पाञ्चालिकाकेलिव्यापारेण विनोदयन्तीं भर्तृदारिकां प्रेक्ष्य उद्विग्नया कारणं प्रतिपत्तुम् आगतया आर्य्यस्य दर्शनेन मया विस्मृतम्, अनेन पुनस्ते राक्षसनामग्रहणेन स्मारिताऽस्मि ।

---

पूर्णेऽपीति ।—ऋषिः विश्वामित्रः, कर्मणि यज्ञविधौ, पूर्णे सम्पन्नेऽपि, राक्षसेषु सुबाहुप्रभृतिषु निशाचरवर्गेषु, हतेषु विनष्टेषु अपि यदर्थं म आनीतस्तत्कार्य्यं सिद्धेऽपीति निष्कर्षः, मैथिलसुतां सीतां, वीर्य्यमेव पराक्रम एव, हरधनुर्भङ्गरूप दुष्करं कर्म्म इत्यर्थः, शुल्कं पणः यस्याः तथाभूतां, विज्ञायापि विदित्वाऽपि, पितुः दशरथस्य, प्रियम् अतीव प्रेमास्पदं, मुहूर्त्तमपि अदर्शनासहमिति भावः, रघुराजपुत्रं रघुकुल-कुमारम्, अमुं बालं कुमारं, कथं किमर्थम्, एतावतीं भुवम् एतावद्दूरदेशमित्यर्थः, आनिनाय ? आनीतवान् ? एवं तर्कः अस्मात् तरलोकरोति इति गद्यस्थवाक्ये-नान्वयः, एतत् सर्वं विदित्वाऽपि यत् मुनिरमुम् आनीतवान् तत्र कोऽपि निगूढाशयः सम्भवेदिति भावः । वसन्ततिलकं वृत्तम् ॥ ४ ॥

(द) प्रवृत्तीति ।—प्रवृत्तिर्वार्त्ता, "वार्त्ता प्रवृत्तिर्वृत्तान्तः" इत्यमरः; तस्या विशेषः असामान्यता, अस्माकमविदितस्य कस्यचित् गुरुतरव्यापारस्येत्यर्थः, तस्य लम्भेन प्राप्त्या । दुर्मनायमानं दुःखितमना इव आचरतीति तथोक्तम् । पाञ्चालि-केति ।—पाञ्चालिका वस्त्रादिविरचिता कृत्रिमपुत्तलिका, मूर्त्तिविशेष इति यावत्, "पुत्तलिका" वा "पुतुल" इति भाषा, "पाञ्चालिका पुत्रिका स्यात् वस्त्रदन्तादिभिः कृता" इत्यमरः; तया केलिः क्रीड़नमेव, व्यापारः तेन । विनोदयन्तीं प्रीणयन्तीम् ।

कञ्चुकी। (सविषादम्)। वत्से! कीदृशी सा प्रवृत्तिः, या तव भर्तृदारिकामपि दुर्मनाययति? (प)

कलहंसिका। सुणादु अज्जो, जधा किल सीदादेवीं पत्थिदुं हअग्गीवपुरोहिदो (फ) आअदो त्ति। *

कञ्चुकी। (तथाविधां नाटयन् सहर्षम्)। कथमेतावदपि कार्य्यं वत्सा जानकी जानाति!! यदनेनोदन्तेन (ब) दुर्मनीभूयते। नूनमिदानीमस्याः कृतावतरणमङ्गलानि (भ) अङ्गकानि यौवनस्य पन्थानमीक्षन्ते (म)।

कलहंसिका। अज्ज! एव्वं णेदम्। अज्जए (य) सिदि सिढ़िलीकिदलज्जा संपदि ज्जेव्व अणुहूदं (र) किंवि णिवेदेमि। †
(संस्कृतमाश्रित्य) (ल)—

---

* शृणोतु आर्य्यः, यथा किल सीतादेवीं प्रार्थितुं हयग्रीवपुरोहितः आगत इति।

† आर्य्य! एवं न्विदम्। आर्य्याय स्मृतिशिथिलीकृतलज्जा सम्प्रत्येव अनुभूतं किमपि निवेदयामि।

---

(ख) उद्विग्नया सञ्जातोद्वेगया।

(ग) प्रतिपत्तुं ज्ञातुम्।

(प) दुर्मनाययति दुर्मनसमिवाचरयति।

(फ) हयग्रीवपुरोहितः रावणपुरोधाः।

(ब) उदन्तेन वृत्तान्तेन, "वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्" इत्यमरः।

(भ) कृतेति।—कृतम् अवतरणं प्रादुर्भावो, यौवनस्येति भावः, मङ्गलं मङ्गलानुष्ठानं यैः तथाभूतानि।

(म) ईक्षन्ते पश्यन्ति, आगच्छत् यौवनमभिनन्दितुं माङ्गलिकद्रव्याणि समाहृत्य अपेक्षन्ते इति भावः।

(य) आर्य्याय मान्याय भवते।

(र) अनुभूतं वर्णितम्।

(ल) संस्कृतमिति।—चेटीनां क्वचित् संस्कृतभाषणमुक्तं भरतेन, यथा—
"संस्कृतभाषाचाराः प्रायो नाट्येषु न स्त्रियः श्राव्याः। क्वचिदपि नृपःप्रमाणात्

अनाकूतैरेव प्रियसहचरीणां शिशुतया
वचोभिः पाञ्चालीमिथुनमधुना सङ्गमयितुम् ।
उपादत्ते नो वा विरमति न वा केवलमियं
कपोलौ कल्याणी पुलकमुकुलैर्दन्तुरयति ॥ ५ ॥

कञ्चुकी । (सहर्षम्) । दिष्ट्या चिरस्य जीवद्भिरस्माभिर्यौवनवती वत्सा जानकी दृष्टा । (सस्मितम्) । ततस्ततः ?

कलहंसिका । तदो अ पुणो पुणो वि ताहिं उज्जुआहिं णिब्बंधिज्जमाणा लज्जिदुं (व) वि लज्जेदि । *

कञ्चुकी । (विहस्य) । वत्से ! सङ्कीर्णे (श) वयसि खल्वियं वर्त्तते । अत्र हि—

---

* ततश्च पुनः पुनरपि ताभिः ऋजुकाभिः निर्बध्यमाना लज्जितुमपि लज्जते ।

---

विदग्धतावोधनाय प्रयुञ्जते ॥" इति । अन्यच्च—"चेटी प्राकृतभाषिणी स्याच्च संस्कृतभाषिणी" इति ।

अनाकूतैरिति ।—इयं कल्याणी कल्याणभाजनं सीता, प्रियसहचरीणां प्रियवयस्यानां, शिशुतया बालत्वेन हेतुना, मुग्धत्वेन भावानभिज्ञतयेति भावः, नास्ति आकूतम् अभिप्रायो येषु तथाभूतैः, भावशून्यैरित्यर्थः, मिथुनधर्मानभिज्ञतया उद्देश्यविरहितैरिति यावत्, वचोभिः एतौ परिणाय्य एकशय्यायां शायय इत्यादिरूपैर्वाक्यैः, उपलक्षितेति शेषः, विशेषणे तृतीया, अधुना इदानीम्, अधुना इत्यनेन प्रागेव बहुशः कृतमित्यवगम्यते ; पाञ्चालीमिथुनं कृत्रिमपुत्तलिकायुगलं, सङ्गमयितुम् एकत्र मेलयितुं शाययितुं वा, नो वा उपादत्ते न वा गृह्णाति, लज्जावशादिति भावः, न वा विरमति न वा निवर्त्तते, बालसुलभकौतूहलादिति भावः, केवलं कपोलौ गण्डदेशौ, पुलकमुकुलैः रोमाञ्चकलिकाभिः, दन्तुरयति उन्नतानतौ करोति, "दन्तुरौ तून्नतानतौ" इत्यमरः, सत्त्वोद्रेकादिति भावः । शिखरिणी वृत्तम् ॥ ५ ॥

(व) ताभिः सहचरीभिः । ऋजुकाभिः सरलाभिः । निर्बध्यमाना आग्रहातिशयेन गृह्यमाणा । लज्जितुं लज्जां प्रकटयितुम् ।

(श) सङ्कीर्णे सम्मिश्रिते, बाल्ययौवनाभ्यामिति शेषः, बाल्ययौवनयोः सन्धौ [illegible] भावः ।

मनोऽपि शङ्कमानाभिर्बालाभिरुपजीव्यते ।

अषड्क्षीणषाड्गुण्य मन्त्रो मकरकेतनः ॥ ६ ॥

काञ्चनमाला। (सखेदम्)। अज्ज ! रमणीअं मतेसि, सव्वस्स वि अणुहवसंवादिणी (ख) दे वाआ ।*

कञ्चुकी। किन्तु, वत्से !—

तदात्वप्रोन्मीलन्म्रदिमरमणीयात् कठिनतां

निचित्य प्रत्यङ्गादिव तरुणभावेन घटितौ ।

स्तनौ सम्बिभ्राणाः स्तनविनयवैयात्यमसृण-

स्मरोन्मेषाः केषामुपरि न रसानां युवतयः ? ॥ ७ ॥

काञ्चनमाला। (विहस्य)। भोदु, ता ण किं वि तुम्हेहिं सुदं ? †

---

* आर्य ! रमणीय मन्त्रयसि ; सर्वस्यापि अनुभवसंवादिनी ते वाक् ।

† भवतु, तत् न किमपि युष्माभिः श्रुतम् ?

---

मन इति ।—मनः चित्तमपि, शङ्कमानाभिः सन्दिहानाभिः, मनो जानाति यत् भावमिति ततोऽपि बिभ्यतीभिरिति भावः, बालाभिः कुमारीभिः, न सन्ति षट् अक्षीणि यत्र तत् तथोक्तं, षट् गुणाः सन्ध्यादयः ते एव षाड्गुण्यं, "सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षट्गुणाः—" इत्यमरः ; अषडक्षीणं तृतीयाद्यगोचरं, द्वाभ्यामेव कृतमित्यर्थः, "अषडक्षीणो यस्तृतीयाद्यगोचरः" इत्यमरः, तच्च तत् षाड्गुण्यञ्चेति अषडक्षीणषाड्गुण्यं तृतीयाद्यगोचरसन्ध्यादिगुणषट्कं, मन्त्रमन्त्रणा यस्य तादृशः, (कर्मधारयः) तृतीयाद्यगोचरसन्ध्यादिगुणषट्कमन्त्रणाकारी, मकरकेतनः कामः, उपजीव्यते सेव्यते, कामः सेव्यते, परं न केनापि तत् बुध्यते इति भावः । अनुष्टुप् वृत्तम् ॥ ६ ॥

(ख) अनुभवेति ।—अनुभवसंवादिनी अनुभवानुसारिणीत्यर्थः ।

तदात्वेति ।—तदात्वे तत्काले, यौवनोन्मेषसमये इत्यर्थः, "तत्कालस्तु तदात्वं स्यात्" इत्यमरः ; प्रकर्षेण उन्मीलन् प्रादुर्भवन्, यः म्रदिमा मार्दवं, तेन रमणीयात् मनोज्ञात्, प्रत्यङ्गात् अङ्गात् अङ्गात्, कठिनतां काठिन्यं, यौवनोद्भेदात् प्राक् अङ्गेषु यत् किञ्चित् काठिन्यमासीत् तत् काठिन्यमिति भावः, निचित्य समाहृत्य, तरुणभावेन

कञ्चुकी। वत्से! न तावदर्थोऽयमद्यापि राजगोचरीभवति, यदि च स्यात्, किमेतावता ? (ख)

अवहित्थिका। तदा हदासो रावणो देवीं (ग) परिणेदि ।*

कञ्चुकी। (विहस्य)—

हस्ते-करिष्यति जगत्त्रयजित्वरोऽपि
कस्तादृशो दुहितरं जनकेश्वरस्य ? ।
प्राणाधिकं विपुलबाहुभृतामपीदं
त्रैयम्बकं किमपि कार्मुकमन्तरायः ॥ ८ ॥

नापि दशकन्धरानुरोधेन स्वयं प्रतिज्ञातमन्यथा करिष्यति महाक्षत्रियो विदेहराजः ; तन्न किञ्चिदेतत् ।

---

* तदा हताशो रावणः देवीं परिणयति ।

---

यौवनेन, अभिनवभावेनेत्यर्थो वा, घटितौ निर्मितौ, स्तनौ सन्निभाणाः धारयन्त्यः, तथा चक्षे प्रतिचक्षणमित्यर्थः, विनयः प्रश्रयः, शान्तता इत्यर्थः, मनोज्ञत्वमिति यावत्, 'वैयात्यम' इत्यत्रापि 'चक्षे' इति पदमाकृष्य अन्वयः कर्त्तव्यः, एवञ्च, चक्षे च वैयात्यं धार्ष्ट्यं, चापल्यमित्यर्थः, ताभ्यां मसृणः मधुरः, स्मरोन्मेषः मदनावेशः यासां तादृश्यः, युवतयः तरुण्यः, केषां रसानाम् आस्वादानाम्, उपरि न वर्त्तन्ते ? इति शेषः, अपि तु सर्वरसोपरिवर्त्तिन्यः भवन्तीत्यर्थः । शिखरिणी वृत्तम् ॥ ७ ॥

(ख) अयमर्थः एष विषयः, रावणपुरोहितागमनरूप इति भाव । राजगोचरीभवति राज्ञा विदितो भवतीत्यर्थः । यदि च स्यात् यद्यपि राजगोचरीभवेदित्यर्थः । एतावता एतेन, राजगोचरीभवनेनेत्यर्थः ।

(ग) देवीं सीताम् ।

हस्ते इति ।—जगत्त्रयस्य त्रिभुवनस्य, जित्वरोऽपि विजेताऽपि, तादृशः तथाविधः, सीतापाणिग्रहणयोग्य इति भावः, कः जनकेश्वरस्य जनकराजस्य, दुहितरं कन्यां, हस्ते-करिष्यति ? पाणौ ग्रहीष्यति ? परिणेष्यति ? इत्यर्थः, न कोऽपीति भावः ; कथमित्याह—प्राणाधिकमिति । विपुलबाहुभृतां महाभुजानां, महाधनुर्धराणामपीति यावत्, प्राणाधिकं बलाधिकम्, अतिदुर्द्धर्षमिति यावत्, किमपि अनिर्वचनीयम्, इदं त्रैयम्बकं शाम्भवं, कार्मुकं धनुः, अन्तरायः विघ्नः, विघ्नस्वरूप इत्यर्थः,

कलहंसिका। (विहस्य)। एव्व भोदु। अज्ज! संपदि कहिं ते राम-लक्खणा? *

कञ्चुकी। नन्वेतावेव देवताऽऽगारवेदिकायाम् (क)—

मुनीन् कौशिकवैदेह-गौतमानभिराध्यतः।
ढौकितौ ज्ञानकर्मभ्यां मोक्षस्वर्गाविव स्वयम्॥ ९॥

तदेहि, महच्चिरमागतानामस्माकम् (ख)। कन्याऽन्तःपुरमेव गच्छामः।

(इति निष्क्रान्तौ)।

(विष्कम्भकः)।

(ततः प्रविशति जनको विश्वामित्रः शतानन्दो राम-लक्ष्मणौ च)।

जनकः। (सहर्षम्)। भगवन् विश्वामित्र!—

लुम्पन्नदृष्टजामातृ-सम्पदा शुचमद्य नः।
त्वदागमनजन्माऽयमानन्दः सुदिनायते॥ १०॥

---

* एवं भवतु। आर्य्य! सम्प्रति कुत्र ते राम-लक्ष्मणौ?

---

भविष्यतीति शेषः, हरधनुषि अभग्ने न कोऽपि तां परिणेतुं शक्नोतीति निष्कर्षः। वसन्ततिलकं वृत्तम्॥ ८॥

(क) एतावेव राम-लक्ष्मणावित्यर्थः। देवताऽऽगारवेदिकायां देवालयसम्मुखस्थ-परिष्कृतभूमौ।

मुनीनिति।—ज्ञान-कर्मभ्याम् आत्मतत्त्वविज्ञान यागादिक्रियाभ्यां, ढौकितौ प्रवेशितौ, समाश्रितौ इत्यर्थः, स्वयं मूर्त्तिमन्तौ, मोक्षस्वर्गाविव मुक्ति-सुखलोकाविव, कौशिक वैदेह-गौतमान् विश्वामित्र-जनक-शतानन्दान्, मुनीन्, अभिराध्यतः सेवेते। अनुष्टुप् वृत्तम्॥ ९॥

(ख) महदिति।—आगतानाम् अन्तःपुरात् बहिरायातानाम्, अत्र समेताना-मिति यावत्, अस्माकं आवयोः, महत् चिर भूयान् विलम्बो जात इति यावत्।

लुम्पन्निति।—अद्य न दृष्टा न प्राप्ता इति यावत् जामातृसम्पत् जामातृलाभ-रूपसम्पद्धिः यैः तथाभूतानाम् अप्राप्तदृष्टजामातृकाणामित्यर्थः, अनास्वादित-जामातृलाभानन्दानामिति यावत्, हरधनुर्भङ्क्ता केनापि मम पणपूरणासम्भवादिति

अपि च—

> अद्य प्रदक्षिणशिखावलयः कृशानु-
> रश्नाति मे जनपदेषु वषट्कृतानि ।
> त्वत्तेजसि स्फुरति शान्तिक-पौष्टिकेषु
> स्वां च स्रुचं शिथिलमाङ्गिरसो बिभर्त्ति ॥ ११ ॥

विश्वामित्रः। सखे सीरध्वज! चिरस्य शान्तः पुष्टश्च (ग) तवायं जनपदः,—

> यत्र त्वं ब्रह्ममीमांसा-तत्त्वज्ञो दण्डधारकः ।
> पुरोधास्तेव यस्यासावङ्गिरःप्रपितामहः ॥ १२ ॥

---

भावः, [इ]नः अस्माकं, शुचं शोकं, तदलाभनिमित्तं मनोदुःखमित्यर्थः, लुम्पन् हरन्, तव आगमनात् जन्म उत्पत्तिर्यस्य तादृशः, प्रथम अनुभूयमानः, आनन्दः सुदिनायते शुभदिनमिवाचरति। अनुष्टुप् वृत्तम् ॥ १० ॥

अद्येति।—अद्य मे मम, जनपदेषु देशेषु, अधिकृतराज्येषु इत्यर्थः, कृशानुरग्निः, यज्ञीयाग्निरिति यावत्, प्रदक्षिणा प्रकर्षेण दक्षिणा दिशं गता, दक्षिणावर्त्तेनोद्गता इत्यर्थः, शिखा एव वलयं वेष्टनं यस्य तथाभूतः सन्, वषट्कृतानि "वषट्" इति मन्त्रेण अग्नौ हुतानि, "अग्नौ तु हुतं त्रिषु वषट्कृतम्" इत्यमरः, अश्नाति भुनक्ति, मम जनपदस्य सर्वथा कल्याणसूचकमेतत्, दक्षिणावर्त्तेनोद्गताया होमानलशिखायाः सर्वथा कल्याणसूचकत्वात्, परन्तु एतत् तवैव प्रभावादिति भावः ; किञ्च, शान्तिक-पौष्टिकेषु शान्तिकर्मसु पुष्टिसाधनकर्मसु च, तव तेजसि प्रभावे, स्फुरति राजति सति, तव प्रभावेणैव शान्तिकपौष्टिककर्मसु संसाधितेष्विति भावः, आङ्गिरसः अङ्गिरोगोत्रसम्भूतः शतानन्दः, स्वां स्रुचं यज्ञीयपात्रविशेषं, शिथिलम् अदृढं यथा तथा, अनावश्यकत्वादिति भावः, बिभर्त्ति धारयति। वसन्ततिलकं वृत्तम् ॥ ११ ॥

(ग) चिरस्य दीर्घकालं व्याप्य इत्यर्थः। शान्तः शान्तियुक्तः, निरापदित्यर्थः। पुष्टः पुष्टियुक्तः, समृद्ध इति यावत् ।

यत्रेति।—यत्र यस्मिन् जनपदे, ब्रह्मणः वेदस्य, मीमांसायाः विचारपूर्वकसिद्धान्तस्य, तत्त्वज्ञः यथार्थवित्, वेदस्य निगूढतत्त्वाभिज्ञ इत्यर्थः, ब्रह्मपारायण इति यावत् ; यद्वा—ब्रह्ममीमांसायाः ब्रह्मविषयकसंशयनिरासकस्य वेदान्तशास्त्रस्येत्यर्थः, तत्त्वज्ञः रहस्यवित्, त्वं दण्डधारकः शास्ता, तथा अङ्गिराः तन्नामा ऋषिः, प्रपितामहः

(स्मितं कृत्वा)। जामातुरदर्शनजन्मा शोकः पुनरस्माकमुपशम-यितुमवशिष्यते (घ)। किञ्च, शोक-हर्षौ नाम लोकयात्रेयं भवतः (ङ)। तथा हि—

यजूंषि तैत्तिरीयाणि मूर्त्तानि वमति स्म यः।
स योगी याज्ञवल्क्यस्त्वां वेदान्तानध्यजीगपत्॥ १३॥

---

अस्य तथोक्तः, अङ्गिरसः प्रपौत्र इत्यर्थः, असौ शतानन्दः, पुरोधाः पुरोहितश्च, वर्त्तते इति शेषः, तस्य तव जनपदस्य शान्ति पुष्टत्वे किं वक्तव्यमिति भावः। अनुष्टुप् वृत्तम्॥ १२॥

(घ) अस्माकमित्यनेन मैथिलेन स्वस्यात्मीयभावप्रकटनम्। उपशमयितुं नाशयि-तुम्। अवशिष्यते अवशिष्टो वर्त्तते, अन्यस्मिन् विषये अस्माकं शोको नास्ति, केवलं सुहृज्जामातृलाभाभावादेव शोको वर्त्तते इति भावः।

(ङ) किञ्चेति।—भवतस्तत्त्वज्ञस्य, शोक-हर्षौ शोक हर्षप्रकटनं, केवलं लोक-यात्रा लौकिकजीवनयापनमात्रं, सांसारिकभावेषु वर्त्तमानस्य भवतः संसारधर्मयोः शोक-हर्षयोः प्रकटनं, न त्वेतत् ब्रह्मपरस्य तव तात्त्विकमिति भावः; "यात्रा तु यापनोपाये गतौ देवार्चनोत्सवे" इति विश्वः।

यजूंषीति।—यः याज्ञवल्क्य इति भावः, मूर्त्तानि मूर्त्तिमन्ति, यजूंषि यजुर्वेद-मन्त्रान्, तैत्तिरीयाणि तित्तिरिरूपिभ्यो विप्रेभ्योऽधिगतानि, याज्ञवल्क्येन उद्गिरणानन्तरं तित्तिरिरूपिभिः विप्रैः भक्षितानि, ततश्च तेभ्य एव विप्रान्तरैर्गृहीतानीति भावः, वमति स्म उद्गिरति स्म, स योगी याज्ञवल्क्यः त्वां वेदान्तान् उपनिषदः, अध्यजीगपत् अध्यापितवान्, ब्रह्मतत्त्वप्रतिपादिकानाम् उपनिषदां तात्पर्य्यावबोधात् तव शोक-हर्षयोरनवसर इति भावः। पुरा याज्ञवल्क्यः शाकल्यमुनेः सकाशात् यजुर्वेदमधीत्य गुरुदक्षिणार्थमुक्तम्। गुरुणा च शाकल्येन दक्षिणा न गृहीता। ततश्च याज्ञवल्क्यस्य निर्बन्धेन जातकोपो मुनिर्मम विद्या दीयतामित्युवाच। याज्ञवल्क्येन च सकोपेन अधीतयजुर्वेदः उद्गीर्य्य दत्तः। ततश्च तच्छात्रैरन्तेवासिभिः तदन्यैः तित्तिरिपक्षिरूपं परिगृह्य स वान्तो वेदः भक्षितः। तेभ्यश्च तित्तिरिरूपिभ्यः अन्तेवासिभ्यो विप्रेभ्यः या शाखा प्रचारिता सा तैत्तिरीया शाखेति कृष्णयजुरिति संज्ञया च प्रसिद्धमभूत्। याज्ञ-वल्क्यश्च पुनः सूर्य्यात् यजुर्वेदमधीतवान्, तद्भागस्य च शुक्लयजुःसंज्ञा प्रसिद्धैव शास्त्रेऽनुसन्धेया। अनुष्टुप् वृत्तम्॥ १३॥

लक्ष्मणः। (जनान्तिकम् (च))। आर्य्य ! अयमयं स राजा वैदेहः, प्रविरलमपरिमेयाश्चर्य्यं यस्यावदानम् (छ) उपाध्यायादनुश्रूयते।

रामः। (सप्रमोदानुरागम्)। वत्स ! स एवायं शतपथकथाऽधिकारी (ज) पुरुषः, प्रणाय्यायान्तेवासिने (झ) यस्मै वाजसनेयो (ञ) याज्ञवल्क्यः सूक्तानि (ट) यजूंषि प्रोवाच।

विश्वामित्रः। (सुहूर्त्तं निर्वर्ण्य)—

निजाय तस्मै गुरवे यतीनां
जैत्राय विश्राणितगोसहस्रम्।
तं गोसहस्राधिपतेः प्रशिष्य-
मुपास्महे मैथिलमातिथेयम्॥ १४॥

---

(च) जनान्तिकं "त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम्। अन्योऽन्यामन्त्रणं यत् स्यात् जनान्ते तज्जनान्तिकम्" इति भरतः।

(छ) अवदानं पूर्व्वकृतं कर्म्म, शुद्ध कर्म्म वा, "अवदानं वृत्तकर्म्म शुद्ध कर्म्म च कीर्त्तितम्" इति विश्वः।

(ज) शतपथेति।—शतं पन्थानो यस्य स शतपथः शतशाख इति यावत्, शतपथब्राह्मण इति प्रसिद्धयजुर्वेदीयग्रन्थविशेषः, यजुर्वेदस्य शतशाखत्वादिति भावः, तस्य कथाया वार्त्तायाम्, अधिकारी अधिकारवान्, व्युत्पन्न इति यावत्।

(झ) प्रणाय्याय निरभिलाषाय, वासनारहिताय इत्यर्थः, मुमुक्षवे इति यावत्, "प्रणाय्योऽभिलाषशून्यः स्यात्" इति हारावल्याम्। अन्तेवासिने शिष्याय, "छात्रान्तेवासिनौ शिष्ये" इत्यमरः।

(ञ) वाजसनेयः यजुर्वेदवित्।

(ट) सूक्तानि सुष्ठु उक्तानि, समीचीनतया विरचितानीत्यर्थः।

निजायेति।—यतीनां योगिनां, जैत्राय जेता एव जैत्रः तस्मै, योगिप्रवरायेति यावत्, निजाय स्वकीयाय, गुरवे आचार्य्याय, तस्मै याज्ञवल्क्याय, विश्राणितं दत्तं, गवां सहस्रं येन तथोक्तं, "त्यागो विहापितं दानमुत्सर्जन-विसर्जने। विश्राणनम्—" इत्यमरः; गवां घृणीनां, किरणानामित्यर्थः, सहस्रं गोसहस्रं सहस्रसंख्यककिरणानि, "स्वर्गेषुपशुवाग्वज्र दिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः—" इत्यमरः; तस्य अधिपतेः ईश्वरस्य, सूर्य्यस्येत्यर्थः, प्रशिष्यं शिष्यशिष्यं,

जनकः। (सप्रश्रयम् (ठ))। भगवन्! यदन्यत् किञ्चिदभिदधाति, (ड) तत्र प्रभविष्णु (ढ)र्भवान्। तत्रभवतः सहस्रमयूखान्तेवासिनो योगीश्वरात् (ण)अध्ययनमिति महीयसी(त) इयमस्माकं यशःपताका।

विश्वामित्रः। (विहस्य)। भो महायोगिन्!—

किं याज्ञवल्क्यो जनकः किमेवं<br>
न वः स्वरूपं कवयोऽपि विद्युः।<br>
प्रवाहनित्यानधिकृत्य युष्मान्<br>
सहस्रशाखाः श्रुतयः प्रथन्ते ॥ १५ ॥

---

सूर्य्यशिष्यस्य याज्ञवल्क्यस्य शिष्यमित्यर्थः, आतिथेयम् अतिथिषु साधुः तम्, अतिथि-सेवापरायणमित्यर्थः, मैथिलं मिथिलाधीश्वर, तं प्रथित, वीरध्वजम्, उपास्महे उपगच्छामः। उपजातिवृत्तम् ॥ १४ ॥

(ठ) सप्रश्रयं सविनयम्।

(ड) अभिदधाति वदति।

(ढ) प्रभविष्णुः समर्थः। विविधप्रशंसावादे भवान् पटुः, परमहं तद्भाजनं नेति भावः, यद्वा—मद्विषयकं यत् किञ्चित् प्रशंसावचनं भवता उक्तं, तत् सर्वं भवत्प्रभावादेव मयि सम्भाव्यते, नान्यथेति भावः।

(ण) तत्रभवतः पूज्यात्। सहस्रमयूखान्तेवासिनः सूर्य्यशिष्यात्। योगीश्वरात् योगिनां प्रधानात्, याज्ञवल्क्यादित्यर्थः।

(त) महीयसी अतिमहती।

किमिति।—याज्ञवल्क्यः किम्? वस्त्विति शेषः, जनको वा किम्? वस्त्विति शेषः, कवयोऽपि विद्वांसोऽपि, वः युष्माकं, स्वरूपं तत्त्वम्, एवम् इत्थं, न विद्युः न जानीयुः, किमपरे? इति भावः, याज्ञवल्क्य-जनकयोर्न विशेषोऽस्तीति तात्पर्य्यं, प्रवाहेण सन्तत्या, गुरु-शिष्यपरम्परया इति यावत्, नित्यान् अविनाशिनः, युष्मान् अधिकृत्य अवलम्ब्येत्यर्थः, सहस्रशाखाः सहस्रं शाखाः यासां तादृश्यः, श्रुतयः वेदाः, प्रथन्ते प्रख्याता भवन्ति। यद्यपि सामवेदस्य सहस्रशाखत्वं, यजुषां शतशाखत्वम्, ऋचामेकविंशतिशाखत्वमिति वेदानां सहस्राधिकशाखत्वमुक्तं, तथाऽप्यत्र सहस्रशाखा इति वचनं शाखाबाहुल्यमात्रज्ञापनार्थमिति न दोषः। उपजातिवृत्तम् ॥ १५ ॥

शतानन्दः। भगवन् कौशिक! एवमीदृशाः खल्वमी त्रिभुवनमहनीयमहिमानो मनीषिणः (थ)।

जनकः। (वसन्ततिलकम् (द))—

निर्माय कार्मणमृचामघमर्षणीना-
मुन्मार्जनीर्जगदघानि तवास्य वाचः।
श्रोतुं चिरप्रणयि कौतुकमस्ति चेतो
दुःखाकरोति पुनरेष ममार्थवादः॥ १६॥

सहितम। (इति शिरसाञ्जलिं घटयति (ध))।

विश्वामित्रः। (सांप्रतमस्याञ्जलिमुद्घाटयन्)। सखे सीरध्वज! संह्रियताम् (न) अञ्जलिः, अमी तूष्णीम्भूताः (प) स्मः। कात्यायनीकामुककार्मुकारोपणपणप्रणयप्रवीणेन दुहितुः पत्या (फ) सम्प्रत्यपर्य्युषितप्रतिज्ञो (ब) भूयाः।

---

(थ) त्रिभुवनेति।—त्रिभुवने महनीयः पूजनीयः, आदरणीय इति यावत्, महिमा प्रभावः येषां तथोक्ताः। मनीषिणः विद्वांसः, तत्त्वज्ञानसम्पन्नाः महानुभावाः इति यावत्।

(द) वसन्ततिलकं वृत्तमन्ददासम्।

निर्मायेति।—अघमर्षणीनां पापहारिणीनाम्, ऋचाम ऋग्वेदीयमन्त्रविशेषाणां, कार्मणं कर्मणे हितं कार्मणं कर्मठ, सुष्ठुतया कर्मानुष्ठानार्हं संस्कारविशेषमित्यर्थः, "कार्मणं मन्त्रतन्त्रादि-योजने कर्मठेऽपि च" इति मेदिनी, निर्माय कृत्वा, जगतां जगद्वासिनाम्, अघानि पापानि, अघानीति कृद्योगे कर्मणि षष्ठीबाधश्चिन्त्यः; उन्मार्जनीः संशोधनीः, तव वाचः वचनानि, श्रोतुम् अद्य मम कौतुकं कौतूहलम्, अभिलाष इति यावत्, अस्ति, पुनः किन्तु, एषः त्वत्प्रयुक्तः, अर्थवादः स्तुतिः, प्रशंसेत्यर्थः, मम चिरप्रणयि चिरं त्वयि बद्धानुरागं, चेतः मनः, दुःखाकरोति दुःखितं करोति। वसन्ततिलकं वृत्तम्॥ १६॥

(ध) घटयति योजयति।

(न) संह्रियताम् अपनीयताम्, उन्मुच्यतामिति यावत्।

(प) तूष्णीम्भूताः मौनिनः।

(फ) कात्यायनीति।—कात्यायन्याः गौर्य्याः, कामुकः अभिलाषुकः, हरः

लक्ष्मणः । ( अपवार्य्य(भ) ) । आर्य्ये ! परस्परेषां पौरुषोत्कर्ष-प्रशंसारमणीयः पावनोऽयममीषां समवायः (म) ।

रामः । वत्स ! यदात्थ (य)—

स्मरन्ति लोकार्थममी किल श्रुती-
रिति प्रतिष्ठामधिगन्तुमीश्महे ।
परं यदेषां पुनरस्ति वैभवं
तदेत एव व्यतिविद्रते यदि ॥ १७ ॥

---

इत्यर्थः, तस्य कार्मुके धनुषि, आरोपणं मौर्वीयोजनमेव, पणः प्रतिज्ञा इत्यर्थः, तत्र प्रणये अनुरागे, तत्पूरणाग्रहे इत्यर्थः, प्रवीणः निपुणः, अविचलितमतिरिति भावः तथाभूतेन, भवता इति शेषः, दुहितुः पत्या जामात्रा, जामातृलाभेनेत्यर्थः ।

(ब) अपर्य्युषितप्रतिज्ञः पूर्णप्रतिज्ञः ।

(भ) अपवार्य्य अपवारितं कृत्वा, अन्यतो मुखं कृत्वेत्यर्थः, पराङ्मुखीभूयेति यावत् । तल्लक्षणमुक्तं विश्वनाथेन—"तद्भवेदपवारितम् । रहस्यन्तु यदन्यस्य पराहत्य प्रकाश्यते ॥" इति ।

(म) परस्परेषाम् अन्योऽन्येषाम् । पौरुषेति ।—पौरुषस्य पुरुषकारस्य, यः उत्कर्षः अतिशयः, तस्य प्रशंसया स्तुतिवादेन, रमणीयः मनोज्ञः । पावनः पापनाशनः । समवायः सम्मेलनम् ।

(य) आत्थ ब्रवीषि ।

स्मरन्तीति ।—अमी ऋषयः, लोकार्थं जगदुपकारार्थं, श्रुतीः वेदान्, स्मरन्ति स्मृतिविषयीभूताः कुर्वन्ति, किलेति प्रसिद्धौ, स्मृतिनिबन्धरूपेण परिणमयन्तीति प्रसिद्धिः, वेदार्थसारसङ्कलनानाम ऋषिवाक्यानामेव स्मृतित्वात्, अत एव तेषां स्मृतिसंज्ञेति भावः, इति अस्माद्धेतोः, प्रतिष्ठा गौरवं, ख्यातिमिति यावत्, अधिगन्तु लब्धुम्, ईश्महे प्रभवामः, शक्नुमः इत्यर्थः, एतेषां स्मृत्यनुसारेण अनुष्ठानादिकं कृत्वा जगति ख्यातिं लभामहे इति भावः, पुनः किन्तु, एषाम् ऋषीणां, यत् परं महत्, वैभवं माहात्म्यम्, अस्ति वर्त्तते, तत् एते एव ऋषय एव, यदि सम्भावनायां, व्यतिविद्रते परस्परं जानन्ति, एतेषां वैभवम् एते एव जानन्तीति सम्भाव्यते, नान्ये इति भावः ; एतेषामादेशानुपालनमेवास्माकं गौरवसम्पादकं, परन्तु माहात्म्यनिर्णये अक्षमा वयमिति निष्कर्षः । वंशस्थविलं वृत्तम् ॥ १७ ॥

जनकः। (सहर्षम्)। भगवन्! परमनुगृहीतोऽस्मि। यतः,—

समस्या वा साम्नां बहिरबहिरंहःपरिमृजा-
मृचां वा संवादः किमपि यजुषां वा परिपणः।
त्वदाशीर्वादोऽयं बहुविषयसाक्षात्कृतफलो
वरं मे वत्सायाः प्रथयति पुरोवर्त्तिनमिव ॥ १८ ॥

विश्वामित्रः। (साकूतस्मितम् (२))। सखे सीरध्वज! एवमेतत्—

दवीयस्यो दूरादपथमिह चामुत्र च शुचां
त्रिवेदीवाक्यानामनतिचिरभग्ना इव खिलाः।
श्रुतिग्राह्यं ज्योतिः किमपि बहिरन्तर्मलमुषो
मृजाया मज्जानः क्व नु विपरियन्ति द्विजगिरः ? ॥१९॥

---

समस्येति।—बहिः बाह्यदेशेषु, अबहिः अभ्यन्तरेषु च, अंहःपरिमृजा पापापनोदिना, साम्नां समस्या समाहारः सङ्क्षेपो वा, "समस्या तु समासार्था" इत्यमरः; ऋचां ऋग्वेदानां, संवादः सम्भाषणं वा, किमपि अनिर्वचनीयस्वरूप इत्यर्थः, यजुषां परिपणः मूलधनं वा, "नीवी परिपणो मूलधनम्" इत्यमरः; वा शब्दत्रयमुपमावाचकं विकल्पार्थे वा, "वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये" इत्यमरः; बहुषु विषयेषु साक्षात्कृतं प्रत्यक्षीभूतं, फलं यस्य तथाभूतः, अयं तव आशीर्वादः "दुहितुः पत्या सम्प्रत्यपर्य्युषितप्रतिज्ञो भूयाः" इत्याशीर्वचनं, मे मम, वत्सायाः सीतायाः, वरं पतिं, पुरोवर्त्तिनमिव अग्रतास्तिष्ठन्तमिव, प्रथयति प्रकटयति। शिखरिणी वृत्तम् ॥ १८ ॥

(२) साकूतस्मितं साभिप्रायमन्दहासम्।

दवीयस्य इति।—दूरात् अन्तशयेनेत्यर्थः, दवीयस्यः महत्य इत्यर्थः, यद्वा—दूरादपि दवीयस्यः अतिदूरवर्त्तिन्यः, सर्वथा अलङ्घ्या इति भावः, इह च अस्मिन् लोके च, अमुत्र च परस्मिन् लोके च, शुचां शोकानाम्, अपथम् अमार्गं, शोकाविषयीभूता इत्यर्थः, शोकनाशहेतुभूता इति यावत्, त्रिवेदीवाक्यानां वेदत्रयवचसाम्, अनतिचिरभग्नाः तत्क्षणप्रकटिता इत्यर्थः, खिला इव अप्रहतभूमय इव, कुत्राप्यप्रतिहतवेदवाक्यानीव इत्यर्थः, "द्वे खिलाप्रहते समे" इत्यमरः; श्रुतिग्राह्यं श्रवणेन्द्रियग्रहणीयं, किमपि अनिर्वचनीयं, ज्योतिः तेजोमय्य इति भावः, बहिरन्तर्मलमुषः बाह्याभ्यन्तरपापहारिण्य इत्यर्थः, मृजायाः शुद्धेः, मज्जानः सारभागाः, "सारो मज्जा नरि" इत्यमरः; द्विजगिरः ब्राह्मणवाचः, क्व नु कुत्र खलु, विपरियन्ति ?

शतानन्दः। (स्वगतम्)। नूनं रामभद्रमेव जामातरमभिसन्धाय (ल) भगवानयं पुनः पुनर्वक्रोक्तिभिः (व) सीरध्वजं परिमोहयते (श)। भवतु, अहमस्य प्ररोचनार्थमसंविदान इव (ष) पृच्छामि। (प्रकाशम्)। भगवन्! कस्येदं शकुन्तराजकेतोरिव (स) कौस्तुभ-श्रीवत्सौ रत्नद्वयम्? (ह)।

विश्वामित्रः। (विहस्य स्वगतम्)। साधु वत्स शतानन्द! साधु, यदेतत् कृतं तीर्थं विवक्षितस्य वस्तुनः सुखावताराय (क)। (प्रकाशम्)। वत्स गौतम! काकुत्स्थकुलसम्भवौ कुमारावेतौ।

शतानन्दः। (सप्रत्यभिज्ञमिव) (ख)—

पुत्रार्थं जगदेकजाङ्घिकयदुद्दामभ्रमत्कीर्त्तिना
चातुर्होत्रवितीर्णविश्ववसुधाचक्रेण चक्रे मखः।

---

विपरिवर्त्तन्ते? नैव कुत्रापि विपरीतानि भवन्तीत्यर्थः, सत्याशिषो ब्राह्मणा इति भावः। शिखरिणी वृत्तम् ॥ १९ ॥

(ल) अभिसन्धाय अभिप्रेत्य, मनस्याधायेत्यर्थः।

(व) वक्रोक्तिभिः अनतिव्यक्तैर्वचनैरिति यावत्।

(श) परिमोहयते विमुग्ध करोति।

(ष) प्ररोचनार्थं स्फुटतया वक्तुम् अवसरदानार्थमित्यर्थः। असंविदान इव अजानन्निव।

(स) शकुन्तेति।—शकुन्तराजः पक्षिराजः गरुडः, केतुर्यस्य स शकुन्तराजकेतुः गरुड़ध्वजः, विष्णुरित्यर्थः तस्येव।

(ह) कौस्तुभ-श्रीवत्सौ विष्णोर्वक्षोभूषणद्वयं, तत्स्वरूपौ। रत्नद्वयं महामूल्यधनभूतं बालकद्वयम्। "दारकद्वयम्" इति पाठान्तरम्।

(क) तीर्थं सोपानं, "तीर्थं सोपानपङ्क्तौ स्यात्" इति धरणिः। विवक्षितस्य वक्तुमिष्टस्य, वस्तुनः विषयस्य, सुखावताराय सुखेन अवतारणाय उत्थापनायेत्यर्थः, सूचनायै इति यावत्।

(ख) सप्रत्यभिज्ञमिव पूर्वानुभूतस्य ज्ञानं प्रत्यभिज्ञा तत्सहितमिव, पूर्वानुभूतविषयं स्मरन्निवेत्यर्थः।

राज्ञा पङ्क्तिरथेन यत्र सकलस्वर्वासिसर्वातिथौ
स स्वेनैव फलप्रदः फलमपि स्वेनैव नारायणः ॥ २० ॥

तत्किमेतावेव तौ दाशरथी, यौ किल राम-लक्ष्मणौ ताड़का-मथनमङ्गलोद्घातवितीर्णदिव्यास्त्रमन्त्रपारायणेन (ग) भगवतेव विनीतौ वैतानिकस्य (घ) कर्मणश्छिद्रापिधानदक्षिणया (ङ) भगवन्तमुपासाम्बभूवतुः ? (च)

---

पुत्रार्थे इति।—जगति भुवने, एकः अद्वितीयः, आङ्गिकः जङ्घाबलशाली, अति-वेगगामीत्यर्थः, ययुरेव अश्वमेधीयोऽश्व एव, "ययुरश्वोऽश्वमेधीयः" इत्यमरः; उद्दामा उत्कटा, भ्रमन्ती चरन्ती, कीर्तिर्यस्य तथाभूतेन, चत्वारः होतारः चतुर्होतारः, ते एव चातुर्होत्राः, स्वार्थे ष्य-प्रत्ययः; ऋग्वेदी एकः, सामवेदी द्वितीयः, यजुर्वेदी तृतीयः, अथर्ववेदी चतुर्थः इति चत्वारः होतार इति यावत् तेभ्यः, वितीर्णं दक्षिणात्वेन दत्तं, विश्वं समस्तं, वसुधाचक्रं भूमण्डलं येन तादृशेन, राज्ञा पङ्क्तिरथेन पङ्क्तिः दश, पङ्क्तिषु दशसु दिक्षु, रथः यस्य तादृशेन, रथमारुह्य दशदिग्विजयिना दशरथेन इत्यर्थः, "पङ्क्तिर्दशाक्षरच्छन्दो-दशसङ्ख्यादिषु स्त्रियाम्" इति मेदिनी; मख यज्ञः, चक्रे कृतः, सकलाः सर्वे, स्वर्वासिनः स्वर्गवासिनः देवाः, सर्वे निःशेषाः, अतिथयः अभ्यागताः यत्र तथाभूते, यद्वा—सकलाः कलाभिः सहिताः, सपरिवारा इत्यर्थः, स्वर्वासिनः सर्वे अतिथयो यत्र तादृशे, "अतिथिर्ना गृहागते" इत्यमरः; यत्र मखे, स प्रसिद्धः, स्वेनैव स्वयमेव, फलप्रदः यज्ञफलदाता, नारायणः स्वेनैव स्वयमेव, फलमपि, अभूदिति शेषः, नारायण एव यज्ञीयफलरूपेणास्य गृहे चतुर्धा विभक्तः समवातरदिति फलितार्थः। शार्दूलविक्रीडितं वृत्तम् ॥ २० ॥

(ग) ताड़केति।—ताड़कायाः मथनं निधनमेव, मङ्गलं तस्य उद्घाते उपक्रमे, "उद्घातस्तु पुमान् पाद-स्खलने समुपक्रमे" इति मेदिनी; वितीर्णं दत्तं, दिव्यास्त्राणां मन्त्रपारायणं मन्त्ररूपमभीष्टं येन तथाभूतेन, "पारायणमभीष्टं स्यात् तत्परायणयोरपि" इति मेदिनी।

(घ) विनीतौ शिक्षितौ। वैतानिकस्य यज्ञीयस्य।

(ङ) छिद्रापिधानदक्षिणया छिद्रमन्तरायः, तस्य अपिधानं तिरोधानं, निरा-करणमित्यर्थः, तदेव दक्षिणा गुरवे निष्क्रयत्वेन दत्तं वस्तु तया।

(च) उपासाम्बभूवतुः आराधयामासतुः।

विश्वामित्रः । (सकौतुकम्) । अथ किम् ।

(जनकशतानन्दौ सस्नेहबहुमानं पश्यतः) ।

शतानन्दः । तदनयोः कतरो रामभद्रः ? कतरश्च लक्ष्मणः ?

विश्वामित्रः । (रामं निर्दिश्य) । वत्स आङ्गिरस !—

ये चत्वारो दिनकरकुलक्षत्रसन्तानमल्ली-
मालाऽम्लानस्तवकमधुरा जज्ञिरे राजपुत्राः ।
रामस्तेषामचरमभवस्ताड़काकालरात्रि-
प्रत्यूषोऽयं सुचरितकथाकन्दलीमूलकन्दः ॥ २१ ॥

शतानन्दः । (लक्ष्मणं निर्दिश्य) । अयं चापरो लक्ष्मणः ? दिष्ट्या भगवद्वशिष्ठप्रसूतं (ञ) क्षत्रकुलमृध्यते (ट) ।

जनकः । (विहस्य) । साधु भगवन् ! अस्माद्दशीषु प्रजासु प्रविश्य क्रीड़सि (ठ)—

क्रोधाग्नौ पुरुहूतहुङ्कृतिपराभूतत्रिशङ्कुत्रपा-
सम्पातज्वलिते जगत्त्रयमयीं त्वय्याहुतिं जुह्वति ।

ये इति ।—दिनकरस्य सूर्य्यस्य, कुले वंशे, ये क्षत्रसन्तानाः क्षत्रियसमूहाः, त एव मल्लीमालाः मल्लिकापुष्पस्रजः, मल्लिकाश्रेणयो वा इत्यर्थो वा, "माला तु पङ्क्तौ पुष्पादिदामनि" इति हैमः ; तासाम् अम्लानस्तवकाः अभिनवोद्भिन्नगुच्छा इव, मधुराः मनोहराः, रमणीयदर्शना इति यावत्, ये चत्वारः राजपुत्रा जज्ञिरे जाताः, ताड़का एव कालरात्रिः प्रलयरजनी, तस्याः प्रत्यूषः प्रभातं, तस्याः संहर्त्तेति भावः, सुचरितस्य कथा आलाप एव, कन्दली कदल्याख्यः वृक्षविशेषः, तस्याः मूलं प्रधानं, कन्दः मूलं, यमाश्रित्य सुचरितकथा प्रवर्त्तते इति भावः, अयं रामः तेषां राजपुत्राणाम्, अचरमभवः अग्रजः । मन्दाक्रान्ता वृत्तं—"मन्दाक्रान्ताऽम्बुधिरस नगैर्मो भ नौ तौ गयुग्मम्" इति तल्लक्षणात् ॥ २१ ॥

(ञ) भगवदिति ।—भगवता वशिष्ठेन प्रसूतं संस्कृतमित्यर्थः ।

(ट) ऋध्यते वर्द्धते ।

(ठ) प्रजासु सन्तानेषु, "प्रजा स्यात् सन्ततौ जने" इत्यमरः ; प्रविश्य क्रीड़सि अस्माकं सहस्याद्युपायैरेव तत्तत्सङ्कल्पितार्थसिद्ध्यर्थं विचरसीति भावः ।

सम्भ्रान्तोपनतस्य नाटितजरावैक्लव्यशीर्णाक्षराः
प्रत्यूहाय बभूवुरम्बुजभुवो देवस्य चाटूक्तयः ॥ २२ ॥

तमपि नाम भगवन्तं यजमानमन्ये गोपायितारः !! (ञ)।

शतानन्दः। राजर्षे! एवमेतत्। किं पुनर्न दीक्षिष्यमाणाः (ट) क्रुध्यन्तीति रक्षितारं क्षत्रियमुपाददते (ठ)।

जनकः। (सहर्षं राम-लक्ष्मणौ निर्वर्ण्य सानन्दम्) भगवन् शतानन्द!—

भवति न तथा भानोः शिष्ये गुरौ रसतो न च
स्वयमपि मुनौ विश्वामित्रे गृहानधितिष्ठति।
दशरथसुतावेतौ दृष्ट्वा यथोच्छ्वसितं मनः
शिथिलयति मे प्रत्यग्ज्योतिःप्रबोधसुखासिकाम् ॥ २३ ॥

---

कोपाग्नाविति।—पुरुहूतस्य इन्द्रस्य, हुङ्कृत्या हुङ्कारेण, पराभूतः स्वर्गात् भ्रंशितः, यस्त्रिशङ्कुः तस्य त्रपायाः लज्जायाः, सम्पातेन सम्पादनेन, ज्वलिते उद्दीपिते, कोपाग्नौ कोपानले, जगत्त्रयमयीं त्रिभुवनमयीम्, लोकत्रयरूपिणीमित्यर्थः, आहुतिं त्वयि जुह्वति सति, त्रिशङ्कोः स्वर्गात् भ्रंशनरूपया प्रवृद्धकोपे त्वयि सृष्टिसंहारं कर्तुमुपक्रममाणे सतीति भावः, सम्भ्रान्तः सत्वरः सन्, उद्विग्नः सन् इति वा, उपगतः समीपोपस्थितः तस्य, देवस्य अम्बुजभुवः पद्मयोनेः, नाटितेन सञ्जातेनेति यावत्, जरावैक्लव्येन वार्द्धक्यविह्वलतया, शीर्णानि स्खलितानि, अक्षराणि वर्णाः यासु तथाभूताः, चाटूक्तयः प्रियभाषणानि, त्वत्सन्तोषकराणि वचनानीति यावत्, प्रत्यूहाय विघ्नाय, बभूवुः, प्रियभाषणेन त्वां भगवान् कमलयोनिर्जगत्संहारात् निवारयामासेति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ २२ ॥

(ञ) यजमानं यज्ञं कुर्वन्तम्। गोपायितारः रक्षितारः।

(ट) दीक्षिष्यमाणाः यक्ष्यमाणाः।

(ठ) उपाददते गृह्णन्ति, आश्रयन्ति।

भवतीति।—एतौ दशरथसुतौ राम लक्ष्मणौ, दृष्ट्वा उच्छ्वसितम् उल्लसितं, मे मनः यथा प्रत्यग्ज्योतिषः परज्योतिःस्वरूपस्य परात्मनः, प्रबोधे ज्ञाने, सुखासिका सुखावस्थानं, निरतिशयानन्देन स्थितिमिति यावत्, शिथिलयति मन्दीकरोति, भानोः सूर्यस्य, शिष्ये गुरौ याज्ञवल्क्ये, रसतः अनुरागात्, तथा तादृक्, न भवति; किञ्च,

शतानन्दः। राजर्षे वैदेह! एवमेतत्। ममापि राजपुत्राविमौ साक्षात्कुर्वतो वत्से सीतोर्मिले न हृदयादवरोहतः (ङ)।

जनकः। (विश्वामित्रं प्रति)। भगवन्!—

इदं वयो मूर्त्तिरियं मनोज्ञा
वीराद्भुतोऽयं चरितप्ररोहः।
इमौ कुमारौ बत पश्यतो मे
कृतार्थमन्तर्नटतीव चेतः॥ २४॥

विश्वामित्रः। (सोत्प्रासम् (ढ))। सखे सीरध्वज! हृदयमिवामन्त्रयस्व, (ण) किमर्थं कृतार्थमसीति।

जनकः। (सखेदस्मितम्)—

यद्दोतस्य प्रथमपुरुषस्तेजसामीश्वरोऽयं
येषां धर्मप्रवचनगुरुर्ब्रह्मवादी वशिष्ठः।

---

त्वयं मुनौ विश्वामित्रे गृहान् पथितिष्ठत्यपि समागत्य वर्त्तमानेऽपि, न च, तथा भवतीति पूर्वेणान्वयः, तद्दत उच्छ्वसितं मन: प्रत्यग्ज्योति:प्रबोधसुखासिका न मिमिलयतीत्यर्थ:; यद्वा—भवति त्वयि, तथा भानो: स्थित्ये इति वाऽर्थ:। "स्थत:" इत्यत्र "वसत." इति पाठे—गुरौ गुरुसमीपे, वसत: तिष्ठत:, ममेत्यनेन सम्बन्ध:। एतौ दृष्ट्वा आत्मतत्त्वं मया विस्मृतमिति, एतद्दर्शनजनितानन्दात् आत्मतत्त्वज्ञानजनितानन्द: अधरीभूत इति वा भाव:। हरिणी वृत्तम्॥ २३॥

(ङ) अवरोहत: अवतरत:, अपगच्छत इति भाव:।

इदमिति।—इदं शैशव यौवनयो: सन्धिरूपमिति भाव:, वय:, मनोज्ञा मनोहारिणी, इयं मूर्त्ति: आकृति:, वीराद्भुत: वीररसेन सह अद्भुत: चमत्कारी, अयं चरितप्ररोह: चरित्राङ्कुर:, अभिनवप्रकाशितचरित्रविशेष: इति भाव:, अनयोरिति सर्वत्र ऊहनीय:, बत हर्षे, इमौ कुमारौ पश्यत: अवलोकयत:, मे मम, चेत: कृतार्थं सिद्धमनोरथं सत्, अन्त: अभ्यन्तरे, नटतीव नृत्यतीव। उपजाति वृत्तम्॥ २४॥

(ढ) सोत्प्रासम् ईषद्धास्यसहितम्, "उत्प्रास: स्यात् मनाक् स्मितम्" इत्यमर:।

(ण) आमन्त्रयस्व पृच्छ।

ये वर्त्तन्ते तव च हृदये सुष्ठु सम्बन्धयोग्या-
स्ते राजानो मम पुनरसौ दारुणः शुल्कसेतुः ॥ २५ ॥

राम-लक्ष्मणौ। (सविमर्शम् (त))। कथमस्मदीयाः कथाः प्रस्तूयन्ते।

विश्वामित्रः। (सस्मितम्)। राजर्षे! यदि शुल्कसंस्थेव (थ) केवलमन्तरायः, (द) तन्न किञ्चिदेतत्।

जनकः। (सखेदं विस्मयम् (ध) अपवार्य्य)। भगवन्नाङ्गिरस!—

यद्विदन्नपि विदेहनन्दिनी-
पाणिपीडनविधेर्महार्घताम्।
एवमाह मुनिरेष कौशिक-
स्तेन मुह्यति चिराय मे मनः ॥ २६ ॥

---

ये इति।—तेजसाम् ईश्वरः श्रेष्ठः, अयम् ऊर्द्धं परिदृश्यमानः, सूर्य्यः, येषां गोत्रस्य कुलस्य, प्रथमपुरुषः आदिपुरुषः, ब्रह्मवादी वेदवित् तत्त्वज्ञो वा, "वेदस्तत्त्वं तपो ब्रह्म" इत्यमरः; वशिष्ठः येषां धर्म्मप्रवचने धर्म्मशिक्षायां गुरुः आचार्य्यः, ये च तव हृदये मनसि, वर्त्तन्ते सदैव अवतिष्ठन्ते, तव हृदयं येषां हिताय जागर्त्ति इति भावः, ते पूर्व्वोक्तरूपाः, राजानः सुष्ठु सम्यक्, सम्बन्धयोग्याः वैवाहिकसम्बन्धार्हाः, पुनः किन्तु, मम असौ शुल्कसेतुः पणबन्धः, दारुणः कठिनः, प्रतिबन्धक इति यावत्। मन्दाक्रान्ता वृत्तम् ॥ २५ ॥

(त) सविमर्शं सवितर्कम्।

(थ) शुल्कसंस्था पणव्यवस्था।

(द) अन्तरायः विघ्नः, कन्यादाने प्रतीति शेषः।

(ध) विस्मयम् विचिन्तयन्।

यदिति।—विदेहनन्दिन्याः सीतायाः, पाणिपीडनमेव परिणय एव, विधिः व्यापारः तस्य, यद्वा—पाणिपीडनस्य पाणिग्रहणस्य, यः विधिः विधानं, नियम इत्यर्थः तस्य, महार्घतां महामूल्यताम्, अलौकिक्यमिति भावः, विदन्नपि जानन्नपि, एष मुनिः कौशिकः विश्वामित्रः, यत् एवम् इत्थं, "न किञ्चित्" इत्येवं रूपम्, आह ब्रवीति, तेन वचनेन, मे मम, मनः चिराय मुह्यति मोहं प्राप्नोति, नास्य भावमवधारयतीति भावः। रथोद्धता वृत्तम् ॥ २६ ॥

तदेव स्यात्पवीयं वा धनुः स्यादिदमीदृशम् ? ।
एतदारोपणं नाम पणो वा मम जर्जरः ? ॥ २७ ॥

शतानन्दः । शान्तं शान्तं (न)—
दुर्लङ्घमीश्वरशरासनमप्रमोच्य-
शुल्कग्रहस्त्वमसि सर्वमिदं तथैव ।
किं त्वस्य राघवशिशोः सहजानुभाव-
गम्भीरभीषणमतिस्फुटमेव वृत्तम् ॥ २८ ॥

जनकः । (मुनिं प्रति) । भगवन् कौशिक ! चिरमपि

---

तदिति ।—तदेव सुप्रसिद्धम्, इदं पणविषयीभूतं, स्थापवीयं शाम्भवं, धनुः कार्मुकम्, ईदृशम् अनेन बालकेन आरोपणीयमिति भावः, वा स्यात् ? एतस्य धनुषः, एतस्मिन् वा, आरोपण ज्यायोजन, नाम मम पणः जर्जरः जीर्णः, विफल इति यावत्, वा, स्यात् ? इति शेषः, अस्य बालकस्य तादृशं सामर्थ्यं विदित्वा विश्वामित्रेण तथोक्तम्, अथवा चिरकृतस्य पणबन्धस्यानुरोधेन वयःस्था कन्या कथं रक्ष्यते ? दीयतामस्मै कुमारायेति विश्वामित्रादेशे पणो मम वितथः स्यात् इति भावः । यद्वा—तदेव इदं स्थापवीयं धनुः ईदृशम् एवम्भूतं, यथापूर्वमविकृतमेव इति भावः, वा स्यात् ? वा अथवा, एतदारोपणं नाम मम पणः जर्जरः भग्नः स्यात् ? बालोऽयं धनुरिदं भङ्क्त्वा मम पणभङ्गं कुर्य्यादिति भावः । अनुष्टुप् वृत्तम् ॥ २७ ॥

(न) शान्तं शान्त निवृत्त निवृत्तम्, एवं न वक्तव्यमित्यर्थः, तव मनस्तापः शाम्यतु शाम्यत्विति भावः ।

दुर्लङ्घ्यमिति ।—ईश्वरस्य हरस्य, शरासनं धनुः, दुर्लङ्घ्यं दुरतिक्रमं, दुरारोपणीयमित्यर्थः, त्वञ्च अप्रमोच्यः अत्याज्य, शुल्कग्रहः पणबन्धः यस्य तथाभूतः, असि, इदं सर्वं धनुषः दुर्लङ्घ्यत्वं तव च अमोच्यशुल्कग्रहत्वं, तथैव पूर्ववदेव, तथ्यमेवेत्यर्थः, किन्तु अस्य राघवशिशोः रघुकुलकुमारस्य, रामस्य इत्यर्थः, सहजेन स्वाभाविकेन, अनुभावेन प्रभावेण, गम्भीरं दुरवगाह, भीषणं भयङ्करम्, अत्यद्भुतमिति यावत, वृत्तं चरितं, ताड़कावधादिरूपमिति भावः, अतिस्फुटमेव सुव्यक्तमेव, यतोऽयं महाप्रभावः, तस्मात् सम्भाव्यते अनेन ते पणबन्धः सफलो भविष्यते इति भावः । वसन्ततिलकं वृत्तम् ॥ २८ ॥

विकल्पयन् ( प ) न भवद्गिरामभिधेयम् ( फ ) अद्यापि निश्चिनोमि ।

विश्वामित्रः । ( विहस्य ) । तदुपदर्श्य कार्मुकमैन्दुशेखरं ( ब ) रामभद्र एव व्याकरोतु ( भ ) ।

रामः । ( स्वगतम् ) । कथमलीकविकल्पैः ( म ) आत्मानं प्रमोहयामि ( य ) । नन्वयं ममैव कौतुकं ( र ) पूरयितुमैश्वरं धनुरभ्यर्थयते भगवान् । ( जनकं च दृष्ट्वा सविमर्शम् ( ल ) ) । अहह !!—

बालेन सम्भाव्यमिदं च कर्म
ब्रवीति च प्रत्ययितो महर्षिः ।
इति ध्रुवं मन्त्रयते नृपोऽयं
दत्ते किमत्रोत्तरमाकुलोऽस्मि ॥ २९ ॥

जनकः । ( मुहूर्तमिव स्थित्वा दीर्घमुष्णं च निःश्वस्य ) । भगवन् ! क्व

---

(प) विकल्पयन् विचारयन्, विचिन्तयन् इति यावत् ।

(फ) अभिधेयं प्रतिपाद्यम् ।

(ब) कार्मुकं धनुः । ऐन्दुशेखरं शाम्भवम् ।

(भ) व्याकरोतु व्यक्तीकरोतु ।

(म) अलीकविकल्पैः वृथासंशयैः, मिथ्याकल्पनाभिरिति वा ।

(य) प्रमोहयामि ? विमुग्धं करोमि ? भ्रमान्वितं करोमीत्यर्थः ।

(र) कौतुकं कौतूहलं, धनुर्दर्शनार्थम् औत्सुक्यम् इत्यर्थः ।

(ल) सविमर्शं सवितर्कम् ।

बालेनेति ।—प्रत्ययितः सञ्जातप्रत्ययः, विश्वस्त इत्यर्थः, महर्षिः विश्वामित्रः, बालेन मया, इदं कर्म ऐश्वरधनुषि गुणारोपणरूपं, सम्भाव्यं साध्यं, ब्रवीति च कथयति च ; यद्वा—इदञ्च कर्म बालेन अनेन, सम्भाव्यम्, किम् ? इति शेषः, च अपि च, प्रत्ययितो महर्षिः ब्रवीति, अयं नृपः ध्रुवं निश्चितम्, इति इत्थं, मन्त्रयते विचारयति, तदत्र धनुरानयनविषये, किम् उत्तरं दत्ते, तत आकुलः व्याकुलः, अस्मि भवामि, यदि धनुरसम्भवारोपणं बुद्ध्वा नानयेदित्याकुलताहेतुरिति भावः । उपजातिवृत्तम् ॥ २९ ॥

तादृशं भागधेयमस्माकं, येन भगवता विश्वामित्रेण नाथवन्तो (व) वयं मैथिलीमेतस्मै रघुकुलकुमाराय प्रतिपाद्य चिराय कृतार्थीभवामः ।

(रामो लज्जते) ।

जनकः । किं च भगवन् !—

येषां चापसमर्पितत्रिभुवनच्छिद्रापिधानव्रतं
जातं रोहितमेव केवलमपज्यावस्थमैन्द्रं धनुः ।
तेऽपि प्रेक्ष्य पुरा शरासनमिदं मौर्वीकिणश्यामिका-
कस्तूरीसुरभीकृतानविभजन्व्यर्थं भुजान् भूभुजः ॥ १० ॥

विश्वामित्रः । (विहस्य) । सखे सीरध्वज ! कथं महापुण्य-राशिमात्मानमवमन्यसे ?—

त्वद्भागधेयमपि तादृशमुन्नवाना-
मेतादृशां वयमपि प्रममोद्धतारः ।

(व) नाथवन्तः आश्रयवन्तः, सनाथा इत्यर्थः, ससहाया इति यावत् ।

येषामिति ।—चापसमर्पितत्रिभुवनच्छिद्रापिधानव्रतमिति समस्तं पदम् । ऐन्द्रम् इन्द्रसम्बन्धि, धनुः कार्मुकं, येषां भूभुजां, चापेषु धनुःषु, समर्पितं न्यस्तं, त्रिभुवनस्य लोकत्रयस्य छिद्रापिधानम् अन्तरायदूरीकरणमेव व्रतं नियमः, व्यापार इति यावत् येन तथाभूतम्, अत एव अपगतः परित्यक्तः, ज्यावस्थः मौर्व्यारोपणं यस्य तादृशं सत्, केवलं रोहितमेव ऋजु एव, सरलमेव इत्यर्थः, "रोहितं कुङ्कुमे रक्ते ऋजुशक्र-शरासने" इति विश्वः, "इन्द्रायुधं शक्रधनुस्तदेव ऋजु रोहितम्" इत्यमरश्च ; जातं, न तु कदाचित् ज्याऽऽरोपणाय नमितमिति भावः, ये इन्द्रकार्य्यमसुरवधादिकं बाहुबलेन चक्रुरिति फलितार्थः, तेऽपि भूभुजः राजानः, पुरा पूर्वम्, इदं शरासनं धनुः, प्रेक्ष्य अवलोक्य, मौर्वीभिः धनुर्ज्याभिः, ज्याऽऽकर्षणैरिति भावः, यः किणः मांसग्रन्थिः, "कडा" इति प्रसिद्धः, तस्य श्यामिका कालिमा एव, कस्तूरी मृगमदः, तया सुरभीकृतान् सुगन्धीकृतान्, सुख्यातिभाजनीकृतानिति भावः, भुजान् बाहून्, व्यर्थं निष्फलं यथा तथा, अविभजः विभजति स्म । शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

त्वदिति ।—तव भागधेयमपि भाग्यमपि, तादृशं रघुकुलकुमाराय जानकीदानेन

सन्त्येव विश्वभुवनाभयदानशौण्डाः
क्षौणीभुजः परमभी तु न रामभद्रः ॥ २१ ॥

जनकः। (स्वगतम्)। कथमुपाध्यायेनैवैतदभिहितं यदस्मि वक्तुकामः।

जनकः। भगवन्! सत्यमचिन्त्यो (अ) मणिमन्त्रौषधीनामिव रघुकुलकुटुम्बकानामनुभावः। परम् (ब) एतत् ब्रवीमि—

गिरीशेनाराद्धस्त्रिजगदवजैत्रं दिविषदा-
मुपादाय ज्योतिः सरसिरुहजन्मा यदसृजत्।
हृषीकेशो यस्मिन्निषुरजनि मौर्वी फणिपतिः
पुरस्तिस्रो लक्ष्यं धनुरिति किमप्यद्भुतमिदम् ॥ २२ ॥

---

कृतार्थीभवनरूपं महोत्सवभाजनमिति भावः, वयमपि एतादृशौ सीता रामयोः परिणयरूपाणाम्, उत्सवानां, त्वदीयानामिति शेषः, प्रसभोच्चितारः द्रष्टारः, तवोत्सवदर्शनेनैव वयं सुखीभविष्याम इति भावः, विश्वभुवनानां सर्वजगताम्, अभयदाने निर्भयत्वसम्पादने, भयनिवारणे इत्यर्थः, शौण्डाः विख्याताः, शरणागतरक्षकत्वेन प्रसिद्धा इत्यर्थः, "शौण्डो मत्ते च विख्याते पिप्पल्याञ्च भवेत् स्त्रियाम्" इति मेदिनी; क्षौणीभुजः राजानः, सन्ति एव विद्यन्ते एव, परं किन्तु, अमी राजानः, रामभद्रः न, ते रामभद्रसदृशा नेति भावः। वसन्ततिलकं वृत्तम् ॥ २१ ॥

(अ) अचिन्त्यः चिन्तयाऽपि अज्ञेयः, अतर्कणीयः इत्यर्थः।

(ब) रघुकुलकुटुम्बकानां रघुवंशीयानामित्यर्थः। अनुभावः प्रभावः। परं किन्तु।

गिरीशेनेति।—गिरीशेन हरेण, आराद्धः सेवितः, प्रार्थित इति यावत्, सरसिरुहजन्मा ब्रह्मा, दिविषदां देवानां, ज्योतिः तेजः, उपादाय समाहृत्य, त्रिजगतां त्रिलोकानाम्, अवजैत्रं जयशीलं, विध्वंसकमिति यावत्, यत् धनुः असृजत् निर्मितवान्, यस्मिन् धनुषि, हृषीकेशः नारायणः, इषुः शरः, तथा फणिपतिः सर्पाधीश्वरः वासुकिः, मौर्वी शिञ्जिनी, अजनि अभूत्, तथा तिस्रः पुरः त्रिपुरासुरनगर्यः, लक्ष्यं वेध्यं, यस्य धनुष इति शेषः, इतीत्थम्, इदम् अद्भुतम् आश्चर्यं, धनुः किमपि अनिर्वचनीयरूपं, वर्त्तत इति शेषः। शिखरिणी वृत्तम् ॥ २२ ॥

शतानन्दः। आः !! (स) किमनया पुनःपुनः पिनाकप्रशस्ति-पञ्जिकया ? (ह)। तदेतत् कौशिकमेव प्रमाणयन्तो (क) बहुमन्यामहे। अपि च, किमशक्यं रामभद्रस्य—

उत्पादयन् कमपि कौणपकोटिहोमं
तेजोहुताशनसमिन्धनसामिधेनीम्।
यस्ताडकामकृत बालसखैः पृषत्कै-
रीषज्जयः स्फुटमनेन दशाननोऽपि ॥ ३२ ॥

(नेपथ्येऽर्द्धप्रविष्टः)।

पुरुषः। दशाननपुरोहितः शौष्कलो महाराजं दिदृक्षते।

शतानन्दः। (सोद्वेगम्)। आः !! आगच्छतु।

(पुरुषो निष्क्रान्तः)।

रामः। (सस्पृहं जनान्तिकम्)। वत्स लक्ष्मण! कथमन्तरितः (ख) अयमनेन दुरात्मना राक्षसेन कामारिकार्मुकपरिचर्य्यामहोत्सवः (ग)।

---

(स) आः इति विरक्तिसूचकमव्ययम्।

(ह) पिनाकप्रशस्तिपञ्जिकया ऐश्वरधनुषः प्रशंसाविस्तारेण।

(क) प्रमाणयन्तः प्रमाणं कुर्वन्तः, विश्वस्तत्वेन गृह्णन्तः इत्यर्थः, कौशिकवाक्ये आस्थां स्थापयन्त इति भावः।

उत्पादयन्निति।—यः रामः, कमपि अनिर्वचनीयं, कौणपकोटिहोमं राक्षसकोटिहोमं, "राक्षसः कौणपः क्रव्यात्" इत्यमरः, उत्पादयन् कुर्वन्नित्यर्थः, कर्त्तुमिच्छन्निति यावत्, बालसखैः बाल्यस्य सखायः तैः शैशवसहचरैरित्यर्थः, पृषत्कैः बाणैः "पृषत्क-बाण-विशिखाः" इत्यमरः; ताडकां, तेज एव स्वप्रताप एव, हुताशनः अग्निः, तस्य समिन्धने सम्यक् ज्वालने, सामिधेनीम् अग्निसन्धुक्षण ऋचम्, "ऋक् सामिधेनी धाय्या च या स्यादग्निसमिन्धने" इत्यमरः; अकृत कृतवान्, अनेन रामेण, दशाननोऽपि स्फुटं सुव्यक्तम्, ईषज्जयः प्रायेण जेतव्य इति यावत्। वसन्ततिलकं वृत्तम् ॥ ३२ ॥

(ख) अन्तरितः दूरीकृतः, विघ्नीकृत इत्यर्थः।

(ग) कामारीति।—कामस्य अरिः हरः, तस्य कार्मुकं धनुः, तस्य परिचर्य्या आकर्षणरूपा सेवा, सैव महान् उत्सवः आनन्दजनकव्यापारः।

लक्ष्मणः। आर्य्ये! न केवलमयम्—(घ) (इत्यर्द्धोक्ते विरमति)।

(रामः सप्रणय-रोष-स्मितं नयनापाङ्गेन पश्यति)।

(प्रविश्य)।

शौष्कलः। (प्रत्येकमवलोक्यात्मगतम्)। कथमत्रैव जनकशता-नन्दाभ्यां पुरस्कृतो विश्वेषाम् (ङ) अस्माकममित्रो (च) विश्वामित्रः। (विचिन्त्य)। तिष्ठतु,कोऽयम्? (छ) (दक्षदक्षिणेन (ज) दृष्ट्वा)। अये! कावेतौ क्षत्रियब्रह्मचारिणौ?—

पुण्यलक्ष्मीकयोः कोऽयमनयोः प्रतिभासते।
मौञ्ज्यादिव्यञ्जनः शान्तो वीरोपकरणो रसः॥ २४॥

निसर्गोदग्रम् (झ) इदं च कुमारद्वयम्!!—

पार्श्वे त्रयाणामेतेषामृक्सामयजुषामिव।
रूपाभ्यां विधिमन्त्राभ्यामथर्वेव प्रदीप्यते॥ २५॥

---

(घ) न केवलमयं केवलम् अयं महोत्सवः न,अन्तरित इति शेषः, सीतापरिणय-महोत्सवोऽपि अन्तरित इति भावः।

(ङ) विश्वेषां सर्वेषाम्।

(च) अमित्रः शत्रुः।

(छ) कोऽयम अयं विश्वामित्रः कः? न किमपि कर्त्तुं समर्थ इति भावः।

(ज) दक्षदक्षिणेन दक्षस्य दक्षिणदिशा।

पुण्येति।—पुण्या पवित्रा, लक्ष्मीः श्रीः ययोः तथाभूतयोः, अनयोः ब्रह्मचारिणो-र्मध्ये इत्यर्थः, कः अयं मौञ्जी मुञ्जतृणनिर्मिता मेखला, आदिपदेन वटदण्डादीनां ग्रहणं, मौञ्ज्यादिः व्यञ्जनं चिह्नं यस्य तादृशः, वीरोपकरणः वीररसपरिपोषितः, शान्तः रसः भावविशेषः, अयं कः प्रतिभासते? स्फुरति? अनुष्टुप् वृत्तम्॥ २४॥

(झ) निसर्गेति।—निसर्गेण स्वभावेन, उदग्रम् उन्नतं, महाप्रभावमित्यर्थः।

पार्श्वे इति।—ऋक्-साम-यजुषामिव एतेषां जनक-शतानन्द-विश्वामित्राणा-मित्यर्थः, त्रयाणां पार्श्वे विधिरनुष्ठानं, मन्त्रश्च ताभ्याम् अथर्वेव चतुर्थवेद इव, रूपाभ्याम् आकृतिभ्यां, प्रदीप्यते प्रकर्षेण ज्वलति, कुमारद्वयमिति मध्यस्थेनान्वयः। अनुष्टुप् वृत्तम्॥ २५॥

(विमृश्य ।) आः !! नूनं स एव लक्ष्मणद्वितीयो रामहतकः कौशिकमृषिमनुप्लवमानो (ञ) मिथिलामुपस्थितः । (सक्रोधशोकम्) । हा वत्से सुकेतुनन्दिनि ताड़के ! कथमीदृशान्मनुष्यडिम्भात् (ट) तादृशो दैवदुर्विपाकः (ठ) ते संवृत्तः !! कष्टमनरण्यवंशजन्मनः (ड) क्षत्रियशिशोरनात्मवेदिता (ढ)—

सुन्दासुरेन्द्रसुतशोणितशीधुपान-
दुर्मत्तमार्गणनिरर्गलवीरशब्दः ।
द्रोहं चकार दशकण्ठकुटुम्बकेऽपि
सोऽयं बटुः कुशिकनन्दनयज्ञबन्धुः ॥ १६ ॥

---

(ञ) अनुप्लवमानः अनुगच्छन् ।

(ट) मनुष्यडिम्भात् मानवशिशोः, "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः ।

(ठ) दैवदुर्विपाकः दैवात् नियतिवशात्, दुष्टो विपाकः परिणामः, विसदृशं फलमिति यावत्, मृत्युरिति भावः, "विपाकः पटले स्वेदे कर्मणो विसदृक्फले" इति मेदिनी ।

(ड) अनरण्यवंशजन्मनः अनरण्यः दशरथस्य पूर्वपुरुषः कश्चित् राजा प्राक् रावणेन निहतः, तस्य वंशे जन्म यस्य तथाभूतस्य, रावणनिर्जितवंशोद्भूततया अतितुच्छस्येति भावः ।

(ढ) अनात्मवेदिता आत्मज्ञानानभिज्ञता, स्वस्वरूपस्य सामान्यज्ञानाभाव इति यावत् ।

सुन्देति ।—कुशिकनन्दनस्य विश्वामित्रस्य, यज्ञबन्धुः यज्ञरक्षी सहायभूतः, सः अयं बटुः ब्रह्मचारी, राम इति भावः, सुन्दो नाम असुरेन्द्रः, तस्य सुतः सुबाहुः, तस्य शोणितमेव शीधुः आसवः, मद्यविशेष इत्यर्थः, "मैरेयमासवः शीधुः" इत्यमरः ; तस्य पानेन दुर्मत्ता अतिशयेन मत्ताः, ये मार्गणाः शराः, "कलम्ब-मार्गण शराः" इत्यमरः ; तैः निरर्गलः अप्रतिबद्धः, वीरशब्दः अयं वीर इति आख्या यस्य तथाभूतः सन्, दशकण्ठकुटुम्बकेऽपि रावणपरिवारेऽपि, द्रोहम् अनिष्टं, चकार, अहो ! मानवडिम्भस्य आहो इति भावः । वसन्ततिलकं वृत्तम् ॥ १६ ॥

भवतु, द्रष्टव्यमस्य भुजाशौण्डीर्य्यम् (थ)। (उपहत्य)। अपि सुखिनो यूयं जनकमिश्राः ?

जनकः। स्वागतं पौलस्त्यपुरोहितस्य। इत आस्यताम् (त)।

(शौष्कलस्तथा करोति)।

जनकः। अपि कुशलं ते राज्ञो रावणस्य ? अथवा—

विपदां प्रतिकर्त्तारो यस्योपायैरथर्वभिः।

त्वादृशाः सन्ति किं तस्य कल्याणमनुयुज्यते ?॥ १७॥

शौष्कलः। (विहस्य)। श्रोत्रिय सीरध्वज! प्रत्यकरिष्यामेव (द) वयं यदि स्वभुजमण्डलीमत्तवारणावलीवलयितोरः-प्रासादसुस्थितचतुर्दशलोककलत्रमहान्तःपुरे लङ्कापतौ किमपि प्रतिकार्य्यमभविष्यत् (ध)। पश्य—

---

(थ) भुजाशौण्डीर्य्यं बाहुवीर्य्यम्।

(त) आस्यताम् उपविश्यताम्।

विपदामिति।—त्वादृशाः भवद्विधाः, महात्मान इति भावः, अथर्वभिः अथर्ववेदविहितैरित्यर्थः, उपायैः प्रक्रियाभिः, मारणवशीकरणादिभिरिति भावः, यस्य विपदाम् अनर्थानां, प्रतिकर्त्तारः प्रतिकारिणः, सन्ति विद्यन्ते, तस्य रावणस्य, कल्याणं मङ्गलं, किम् अनुयुज्यते ? पृच्छ्यते ? अनुयोग एव अनावश्यकः, तस्य सततमेव कल्याणशीलत्वादिति भावः। यद्वा—त्वादृशा दुरात्मान इति भावः, अथर्वभिः उपायैः यस्य विपदां प्रति, प्रति-योगे द्वितीया ; कर्त्तारः विपत्कर्त्तार इत्यर्थः, तस्य कल्याणं किम अनुयुज्यते ? पृच्छ्यते ? न कदाऽपि कल्याणं तस्य सम्भवतीति भावः। "प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः। अनुष्टुप् वृत्तम्॥ १७॥

(द) प्रत्यकरिष्याम प्रतीकारम् अकरिष्याम।

(ध) स्वभुजेति।—स्वस्य भुजानां बाहूनां, विंशतिसङ्ख्यकानामिति भावः, मण्डल्यः समूहा एव, मत्तानां मदशालिनां, वारणानां हस्तिनाम्, आवल्यः समूहाः, ताभिः वलयिते वेष्टिते, उरःप्रासादे वक्षःस्थलरूपराजसद्मनि, "प्रासादो देवभूभुजाम्" इत्यमरः ; सुस्थिता सुखेन अवस्थिता, चतुर्दशानां चतुर्दशसङ्ख्यकानां, लोकानां भूरादीनां भुवनानां, कलत्रैरेव स्त्रीभिरेव, महत् अन्तःपुरम् अन्तःपुरिका, राजमहिषीति यावत् यस्य तथाभूते। लङ्कापतौ रावणे। एतादृशस्य रावणस्य किमपि प्रतिकार्य्यं स्यात् ? इति भावः।

यच्चेष्टाः समनीकसीमनि परिवृत्तः पराञ्चन्नपि
प्रत्यक्षीकुरुते सहस्रनयनः पृष्ठोद्भवै रश्मिभिः।
चक्रे वर्त्म च नागलोकजयिनीं यात्रामिव प्रस्तुवन्
यः कैलासमुदस्य कीदृशमपादानं तु तस्यापदाम्? ॥ १८ ॥

लक्ष्मणः। (सामर्षं सग्लानिकम्)। आर्य! कथमसौ सहस्रार्जुन-वालिभ्यामवलीढशौर्य्यसारो (ध) दुरात्मा रावणः प्रस्तूयते (न)।

रामः। वत्स! न वक्तव्यमिदं, महान्तो हि तादृशाः। किन्तु—

ख्यातां नाम कपीन्द्र हैहयपती तस्यावगाढान्तर-
स्थामानौ दशकन्धरस्य महतौ स्कन्धप्रतिष्ठा पुनः।

---

यच्चेष्टा इति।—समनीकसीमनि सङ्ग्रामक्षेत्रे, "अनीकोऽस्त्री रणे सैन्ये" इति विश्वः; परिवृत्तः परितः आकं गतः, अत एव पराञ्चन् पराङ्मुखीभवन्नपि, सहस्रनयनः इन्द्रः, पृष्ठोद्भवैः पृष्ठदेशजातैः, रश्मिभिः नेत्रैः, अस्य सहस्रनयनत्वात् पृष्ठेऽपि चक्षुःसद्भावादिति भावः, यस्य रावणस्य, चेष्टाः रणव्यापारान्, प्रत्यक्षीकुरुते साक्षात् पश्यति, यश्च नागलोकजयिनीं पातालजयसाधनीं, यात्रां युद्धार्थं प्रयाणं, प्रस्तुवन्निव कुर्वन्निव, कैलासं तदाख्यपर्वतम्, उदस्य उत्क्षिप्य, वर्त्म मार्गं, नागलोकस्येति भावः, चक्रे कृतवान्, तस्य रावणस्य, आपदाम् अपादानं प्राप्तिः, कीदृशन्तु? किम्प्रकारमेव? नैव तथाविधं सम्भवति, याऽस्माभिः प्रतिकार्य्येति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

(ध) सहस्रार्जुन-वालिभ्यां सहस्रार्जुनः सहस्रबाहुरर्जुनः, कार्त्तवीर्य्यार्जुनः इत्यर्थः, यः रणे सहस्रबाहुर्भवतीति तस्य सहस्रार्जुन इति संज्ञा, वाली वानरराजः ताभ्याम्, अवलीढः भक्षितः, नाशित इति यावत्, शौर्य्यसारः शौर्य्यरूपं बलं यस्य तथाभूतः।

(न) प्रस्तूयते प्रकर्षेण स्तूयते, प्रशस्यते इति यावत्।

ख्यातामिति।—कपीन्द्र-हैहयपती वालि-सहस्रार्जुनौ, तस्य दशकन्धरस्य रावणस्य, अवगाढं गभीरं, गभीरभावेन ख्यातमिति यावत्, आन्तरस्थाम आन्तरं बलं सामर्थ्यं वा याभ्यां तथाभूतौ, ख्याता नाम, पुनः किन्तु, स्कन्धप्रतिष्ठा आश्रयख्यातिः,

सद्यःपाटितकण्ठकीकसकणाकीर्णा यदंसस्थलीः
स्वेनेभाजिनपल्लवेन मुदितः प्रास्फोटयत् धूर्जटिः ॥ ३९ ॥

अपि च—

मघोनस्तद्घोरं कुलिशमलसीकृत्य समरे
भुनक्ति स्वाराज्यं त्रिभुवनभटोऽयं दशमुखः ।
श्रियो नानास्थानभ्रमणरमणीया चपलता-
मवच्छिद्य स्वस्मिन्नपि भुजवने पूरयति यः ॥ ४० ॥

जनकः । (शौष्कलं प्रति) । ब्रह्मन्! सत्यमीदृशो राक्षसराजः ।

शौष्कलः । राजर्षे जनक !—

सन्तुष्टे तिसृणां पुरामपि रिपौ कण्डूलदोर्मण्डली-
क्रीडाकृत्तपुनःप्ररूढशिरसो वीरस्य लिप्सोर्वरम् ।

---

अंसदेशस्य दृढता इत्यर्थो वा, "स्कन्धः कायेंऽसे भूपतावपि" इति विश्वः; महतो भूयसो, धूर्जटिः शम्भुः, मुदितः प्रीतः सन्, स्वेन निजेन, इभाजिनपल्लवेन गजचर्माञ्चलेन, सद्यः तत्क्षणं, पाटितानां भिन्नानां, कण्ठानां गलदेशानां, नवसङ्गतानामिति भावः, कीकसकणैः अस्थिखण्डैः, क्षुद्रास्थिभिरित्यर्थः, "कीकसं कुल्यमस्थि च" इत्यमरः, आकीर्णाः व्याप्ताः, यस्य रावणस्य, अंसस्थलीः स्कन्धदेशान्, प्रास्फोटयत् शोधयति स्मेत्यर्थः, महासाहसिकोऽयं शिवभक्तश्चेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ३९ ॥

मघोन इति ।—त्रिभुवनभटः त्रिलोकीवीरः, अयं दशमुखः रावणः, समरे युद्धे, मघोनः इन्द्रस्य, तत् प्रसिद्धं, घोरं भीषणं, कुलिशं वज्रम्, अलसीकृत्य निश्चेष्टीकृत्य, मघवन्तं जित्वेति भावः, स्वाराज्यं स्वर्गराज्यं, भुनक्ति, तथा यः रावणः, श्रियः लक्ष्म्याः, नानास्थानेषु भ्रमणेन विचरणेन, रमणीयां विस्मयजनिकामित्यर्थः, चपलतां चापल्यम्, अवच्छिद्य निरस्य, लक्ष्मीश्चञ्चला इति नाम दूरीकृत्येति भावः, स्वस्मिन् आत्मीये, भुजवने भुजारण्ये, विंशतिसङ्ख्यकभुजेषु इत्यर्थः, पूरयति स्थापयति अपि, चञ्चलां श्रियं भुनक्ति चेति भावः । शिखरिणी वृत्तम् ॥ ४० ॥

सन्तुष्टे इति ।—तिसृणां पुरां रिपौ त्रिपुरारौ शम्भौ, सन्तुष्टेऽपि प्रीतेऽपि, तपःप्रभावादिति भावः, कण्डूला कण्डूयुता, या दोर्मण्डली भुजावली, तस्याः क्रीडया लीलया, क्रीडामदनायासेनेति भावः; कृत्तानि छिन्नानि, पुनः प्ररूढानि उत्पन्नानि,

याञ्चादैन्यपराञ्चि यस्य कलहायन्ते मिथस्त्वं वृणु
त्वं वृणवित्यभितो मुखानि स दशग्रीवः कथं वर्ण्यताम् ?॥ ४१॥
सोऽपि—

कन्यामयोनिजन्मानं वरीतुं प्रजिघाय माम् ।
पुरोधसा गौतमेन गुप्तस्य भवतो गृहान् ॥ ४२ ॥

विश्वामित्रः । सखे सीरध्वज ! पश्य, पिनाकदर्शनोल्लासिका-विसंष्ठुलचित्तवृत्तिरिव ( प ) वत्सो रामभद्रः ।

जनकः । ( विहस्य )—

किमेतदेव भगवन्नभिधीये पुनस्तराम् ।
इक्ष्वाकवो विदेहाश्च परवन्तस्त्वया वयम् ॥ ४३ ॥

गौतमः । भोः सीरध्वज ! किमिदमस्माकमाकाशवचनम् ? (फ)

---

उत्थितानीति यावत्, शिरांसि यस्य तथाभूतस्य, वर देवादभीष्टं, जिष्णोः कम्बुनिभ्नोः, यस्य वीरस्य याञ्चायां प्रार्थनायां, यत् दैन्यं कातर्य्यं, तेन पराङ्मुखानि, विमुखानि, पश्चादावर्त्तितानीति यावत्, मुखानि दशसङ्ख्यकानि, मिथः परस्परम्, अभितः समन्तात्, त्वं वृणु त्वं वृणु इतीत्थं, कलहायन्ते कलहं कुर्वन्ति, स दशग्रीवः दशाननः, कथं केन प्रकारेण, वर्ण्यताम् ? व्याख्यायताम् ? न केनापि प्रकारेण वर्णयितुं शक्यते इत्यर्थः । "वर्ण्यताम्" इत्यत्र "कथ्यताम्" इति पाठान्तरम् । शार्दूलविक्रीडितं वृत्तम् ॥ ४१ ॥

कन्यामिति ।—अयोनिजन्मानम् अगर्भसम्भवां, कन्यां सीतामित्यर्थः वरीतुं प्रार्थयितुं, पुरोधसा पुरोहितेन, गौतमेन शतानन्देन, गुप्तस्य रक्षितस्य, भवतः तव, गृहान् मां प्रजिघाय प्रेषितवान्, स इति गद्यस्थेनान्वयः । अनुष्टुप् वृत्तम् ॥ ४२ ॥

(प) पिनाकेति ।—पिनाकस्य ऐश्वरधनुषः, दर्शने या उल्लासिका औत्सुक्य, तया विसंष्ठुला चञ्चला, चित्तवृत्तिः यस्य तथाभूत इव ।

किमिति ।—हे भगवन् ! एतदेव पुनस्तरां पुनः पुनरित्यर्थः, किं कथम्, अभिधीये ? उच्ये ? भवता अहमिति शेषः, मा पुनः पुनः कथं ब्रवीषि ? इत्यर्थः, इक्ष्वाकवः इक्ष्वाकुवंशीयाः, विदेहाश्च विदेहाधिपाश्च, वयं त्वया परवन्तः पराधीनाः, त्वदधीना इत्यर्थः, त्वं यथाऽऽज्ञापयसि तथैव करोमीति भावः । अनुष्टुप् वृत्तम् ॥ ४३ ॥

(फ) आकाशवचनम् आकाशे शून्यदेशे, शून्यं अलीकमित्यर्थः, वचनं कथा प्रयुक्तम् ? इति भावः ।

उत दुष्परिच्छेद्य (ब) एवायमर्थः? यदुत्तरमपि न प्रतिपद्यसे (भ)। पश्य—

दातव्येयमवश्यमेव दुहिता कस्मैचिदेनामसौ
दोर्लीलामस्तृणीकृतत्रिभुवनो लङ्कापतिर्याचते।
तत् किं मूढवदीक्षसे ननु कथागोष्ठीषु नः शासति
त्वद्वृत्तानि परोरजांसि मुनयः प्राच्या मरीच्यादयः॥ ४४॥

शतानन्दः। ब्रह्मन्! चिराय दत्तमेवोत्तरमस्माभिः।

शौष्कलः। हन्त! राजपुत्रीसमर्पणादन्यत् कीदृशं तत्?

शतानन्दः। शृणु—

शाम्भवं चापमारोप्य योऽस्मानानन्दयिष्यति।
पूर्णपात्रमियं तस्मै मैथिली कल्पयिष्यते॥ ४५॥

शौष्कलः। (विहस्य)। शान्तम्। अहह!! युष्माकमप्यमून्यक्षराणि (म)—

---

(ब) दुष्परिच्छेद्यः दुर्बोधः।

(भ) प्रतिपद्यसे ददासीत्यर्थः।

दातव्येति।—इयम् अयोनिजा एषा, दुहिता कस्मैचित् वराय, अवश्यमेव दातव्या, न तु गृहे रक्षणीयेति भावः, दोर्लीलया भुजविलासेन, भुजयोः क्रीडाकर्मणेन इत्यर्थः, अस्तृणीकृतं अतृणीकृतं, सतृणीकृतमित्यर्थः, एकायत्तीकृतमिति भावः, त्रिभुवनं येन तथाभूतः, असौ लङ्कापतिः रावणः, एनां कन्यां, याचते प्रार्थयते, तत् तर्हि, मूढवत् इतिकर्तव्यविमूढ इव, किं कथम्, ईक्षसे? पश्यसि? ननु भोः। कथागोष्ठीषु विविधालापेषु, प्राच्याः पुरातनाः, मरीच्यादयः मुनयः परोरजांसि रजोगुणात् पराणि, सात्त्विकानीति यावत्, तव वृत्तानि चरितानि, नः अस्मान्, शासति कथयन्ति, एतादृशस्य गर्हणीयचरितस्य तव तादृशसत्पात्रे कन्यादानं युक्तमिति भावः। शार्दूलविक्रीडितं वृत्तम्॥ ४४॥

शाम्भवमिति।—यः शाम्भवं शैवं, चापं धनुः, आरोप्य मौर्व्यां संयोज्येत्यर्थः, अस्मान् आनन्दयिष्यति प्रीणयिष्यति, तस्मै पूर्णपात्रं व्रतादिसमापनकाले देयं धनादिपूर्णभाजनरूपम्, इयं मैथिली कल्पयिष्यते दास्यते। अनुष्टुप् वृत्तम्॥ ४५॥

(म) अक्षराणि हरकार्मुकारोपणविषयाणि, रावणं प्रतीति भावः, शान्तानि भवन्तु इति शेषः।

तेनाङ्गुलीशतनिघृष्टकुबेरशैल-
कण्ठोक्तदोःकुलिशकन्दलविक्रमेण।
माहेश्वरेण महता दशकन्धरेण
कर्मेदृशं कथमनार्य्यमधिक्रियेत ? ॥ ४६ ॥

शतानन्दः। (विहस्य)। ब्रह्मन्!—

अयं महाक्षत्रियगोत्रजन्मा
दृढप्रतिज्ञो जनकाधिराजः।
न चापमारोपयिता दशास्य-
स्तथाऽपि जानासि यदुत्तरं नः ॥ ४७ ॥

शौष्कलः। (सहासम्)—

अङ्गिराश्च पुलस्त्यश्च प्रसवौ परमेष्ठिनः।
पौलस्त्ये ज्ञातिधर्म्मोऽयं तत् किमाङ्गिरसस्य ते ? ॥ ४८ ॥

---

तेनेति।—अङ्गुलीनां शतं तेन, विंशतिभुजत्वात् प्रत्येकं भुजे पञ्चानामङ्गुलीनां सद्भावात् साकल्येन अङ्गुलीनां शतसङ्ख्यकत्वमिति द्रष्टव्यं, निघृष्टः निष्पिष्टः, उत्पाटनात् निपीडित इति भावः, यः कुबेरशैलः कैलासः, तेन हेतुना कण्ठेन उक्तः सुस्पष्टतया प्रकटितः इत्यर्थः, दोष्णां भुजानां, कुलिशकन्दलवत् वज्रप्ररोहवत्, अभिनववज्रवदित्यर्थः, विक्रमः शौर्य्यं यस्य तथाभूतेन, महता महात्मना, माहेश्वरेण शैवेन, दशकन्धरेण रावणेन, ईदृशम् इष्टदेवचापभङ्गरूपमिति भावः, अनार्य्यम् असत् कर्म, कथं केन प्रकारेण अधिक्रियेत ? स्वीक्रियेत ? न कथमपि स्वेष्टदेवस्य अवमाननाजनकं कर्म सेवकेन कर्त्तुं शक्यते इति भावः। वसन्ततिलकं वृत्तम् ॥ ४६ ॥

अयमिति।—महतां महिमशालिनां, क्षत्रियाणां गोत्रे कुले, जन्म यस्य तथाभूतः महाकुलीन इत्यर्थः, अयं जनकाधिराजः जनकवंशीयानामधिपतिः सीरध्वजः, दृढप्रतिज्ञः निश्चलसङ्कल्पः, प्रतिज्ञाम् अन्यथा कर्त्तुमशक्त इति यावत्, तथाऽपि दशास्यः रावणः, चापं धनुः, न आरोपयिता न आरोपयिष्यति, चेदिति शेषः, तदा नः अस्माकं, यत् उत्तरं पूर्व्वमुक्तं, तत् जानासि। उपेन्द्रवज्रा वृत्तम् ॥ ४७ ॥

अङ्गिरा इति।—अङ्गिराश्च पुलस्त्यश्च एतौ द्वौ, परमेष्ठिनः ब्रह्मणः, प्रसवौ पुत्रौ, तत् तस्मात्, आङ्गिरसस्य आङ्गिरःप्रपौत्रस्य, ते तव, पौलस्त्ये पुलस्त्यपौत्रे रावणे, अयं ज्ञातिधर्म्मः ज्ञातित्वनिबन्धनः विरोध इति यावत्, किम् ? अनुष्टुप् वृत्तम् ॥ ४८ ॥

(सामर्षम् (य))—

माहेश्वरो दशग्रीवः क्षुद्राश्चान्ये महीभुजः ।
पिनाकारोपणं शुल्कं हा सीते ! किं भविष्यसि ॥ ४९ ॥

शतानन्दः। (सरोष-स्मितम्)। ब्रह्मन् ! एवमनेन धनुषा किमपि विनयाधिकारिकमध्याप्यते, (र) यदद्य परममाहेश्वरस्ते रावणोऽपि (ल) संवृत्तः,—

शम्भोराधारमचलमुत्क्षेप्तुं भुजकौतुकी ।
माहेश्वरो धनुः कष्टमहो ! ते दशकन्धरः !! ॥ ५० ॥

(शौष्कलवर्जमन्ये स्मयन्ते (व))।

शतानन्दः। (सरोषावहित्थम् (श))। रामभद्र !—

---

(य) सामर्षं सक्रोधम् ।

माहेश्वर इति।—दशग्रीवः माहेश्वरः महेश्वरभक्त इति यावत् ; यद्वा—महेश्वर एव माहेश्वरः त्रिजगत्पतिरित्यर्थः, अन्ये अपरे, महीभुजः राजानः, क्षुद्राः नीचाः अल्पप्राणा इत्यर्थः, पिनाकस्य शैवधनुषः, आरोपणं मौर्वीयोजनं, शुल्कं पणः, हा इति खेदे सीते ! किं भविष्यसि ? त्वमिति शेषः, क्षुद्रा राजानः पिनाके गुणयोजनं कर्तुं कदाऽपि न शक्नुयुः, अतस्तव भाग्ये परिणयो नास्तीति हा ! तव दुर्भाग्यमिति भावः। अनुष्टुप् वृत्तम् ॥ ४९ ॥

(र) विनयाधिकारिकं विनयस्य अधिकारी विनयाधिकारी विनयीत्यर्थः, तस्य भाव विनयाधिकारिकं विनयित्वमित्यर्थः, भावे वुन्-प्रत्ययः, अध्याप्यते शिक्ष्यते

(ल) रावणोऽपि तथाविधदुराचारोऽपीति भावः, परममाहेश्वरः महाशैवः अस्य धनुरारोपणस्य अशक्यत्वादेव महेश्वरे विनयित्वं रावणस्येति भावः।

शम्भोरिति।—ते तव, दशकन्धरः रावणः, शम्भोः शिवस्य, आधारं निवासचैवम् अचलं पर्वतं, कैलासमित्यर्थः, उत्क्षेप्तुं स्थानात् उत्पाटयितुमित्यर्थः, भुजकौतुकी बाहुवीर्य्यप्रदर्शनार्थे कौतुकवान् अभूदिति शेषः, तदा माहेश्वर नेति भावः, अद्य धनुः कष्टम् आरोपयितुं, माहेश्वरः महेश्वरभक्तः, संवृत्त इति शेषः, अहो ! आश्चर्य्यम्। अनुष्टुप् वृत्तम् ॥ ५० ॥

(व) स्मयन्ते मन्दं मन्दं हसन्ति।

(श) सरोषावहित्थं रोषस्य क्रोधस्य, अवहित्था आकारगोपनं तत्सहितं क्रुद्धेऽपि तद्भावगोपनं कृत्वेत्यर्थः, "अवहित्थाऽऽकारगुप्तिः" इत्यमरः।

तदेतदारोपय चापमीश-
प्रकोष्ठभग्नप्रतिकषितज्यम्।
शौर्य्योष्मभाजां भजतां सुखानि
स्वबाहुमौर्वीकिणकालिकेव ॥ ५१ ॥

[illegible]। (सक्रोधम्)। अरे रे शतानन्द! किमुद्भ्रान्तः (च) असि, यदेवमस्मदग्रे पौलस्त्यं महाराजमधिक्षिपसि? (छ) अथमयं ते माणिक्यपरिहारेण गैरिकपरिग्रहः (ज), यदेवं दशग्रीवमवमन्यमानस्य मनुष्यपोते (झ) अनुरागः। यदिवा तत्रभवन्तं (ञ) गौतममपहाय दुश्चक्षुषि सहस्राक्षे भवतो मातुरहल्यायाः (ट)।

---

तदिति।—ईशस्य शिवस्य, प्रकोष्ठः कफोणेरधो मणिबन्धपर्य्यन्तहस्तविभागः, "स्यात् कफोणिस्तु कूर्परः। तस्योपरि प्रगण्डः स्यात् प्रकोष्ठस्तस्य चाप्यधः॥" इत्यमरः; तत्र भग्ना प्रकोष्ठे विलग्नेन भग्नेत्यर्थः, महेश्वरस्य भग्नभूयस्त्वादिति भावः, प्रति-कषिता रञ्जिता, ज्या मौर्वी यस्य तादृशं, हस्ते धारणसमये चाकर्षणसमये च ज्यायाः प्रकोष्ठेन संघर्षादिति भावः, तत् प्रसिद्धम्, एतत् चापं धनुः, आरोपय ज्यया संयोजय, स्वस्य निजस्य, तवेति भावः, बाहौ भुजे, यो मौर्वीकिणः पुनःपुनः ज्याऽऽकर्षण घर्षण-जनितमांसग्रन्थिरित्यर्थः, तस्य कालिकेव श्यामिकेव, शौर्य्यस्य पराक्रमस्य हेतुना, यः ऊष्मा गर्वः, तं भजन्ते इति तथाभूतानां, नृपतीनामिति शेषः, वृथा शूरत्वाभि-मानिनामिति भावः, सुखानि भजतां गच्छतु, तव शौर्य्येण राज्ञां सुखानि मलिनानि भवन्त्विति भावः। उपजातिवृत्तम् ॥ ५१ ॥

(च) उद्भ्रान्तः मोहं गतः, उन्मत्त इति यावत्।

(छ) अधिक्षिपसि निन्दसि।

(ज) माणिक्यपरिहारेण माणिक्यं महारत्नविशेषः, तस्य परिहारेण परि-त्यागेन, गैरिकपरिग्रहः गैरिकं पार्वतीयरक्तवर्णधातुविशेषः, तस्य परिग्रहः स्वीकरणम्।

(झ) अवमन्यमानस्य अवजानतः। मनुष्यपोते मानवशिशौ।

(ञ) यदिवा अथवा। तत्रभवन्तं पूज्यम्।

(ट) दुश्चक्षुषि दुश्चरितम् [illegible], चक्षूंषि यस्य तथाभूते, "सहस्रो

शतानन्दः । (सरोष-हासम्) । किमात्थ रे ! किमात्थ अस्मदग्रे ? इति ।

विश्वामित्रः । (सप्रश्रय-रोषमिव) । वत्स गौतम ! विरम विरम शुष्ककलहात् (घ) । अतिथिरयमस्माकमुपाध्यायो दशकण्ठस्य । (अवमानौ राम-लक्ष्मणौ च दृष्ट्वा विहस्य) । वत्स रामभद्र ! धनुर्गृहोपसर्पणम् (ङ) अभ्यनुजानाति ते जनकान्वयपुरोधाः (च) ।

रामः । यदादिशन्ति गुरवः । (इति सविनय-लज्जा-कौतुकं परिक्रम्य लक्ष्मणेन सह निष्क्रान्तः) ।

कौशिकः । राजर्षे सीरध्वज ! धन्योऽसि । पुरा किल महेश्वरपरिचर्य्याऽवदाने निकृत्तेषु नवमूर्द्धसु (छ)—

वरं तादृक्कर्माद्भुतसदृशमप्रेक्ष्य किमपि
प्ररोहद्वैलक्ष्यं पुरविजयिनो येन ददृशे ।

---

तुषि।" इत्यमरः, कमठीना चक्षुः पिङ्गलं भवति, इन्द्रस्यापि तथा, तथा च श्रुतिः, "अक्षीणि ते इन्द्र ! पिङ्गलानि" इति । अहल्यायाः, अनुराग इति शेषः ; यथा गौतमं परित्यज्य तव माता सहस्राक्षं प्रति अनुरक्ता, तथा तत्पुत्रस्त्वं रावणमपहाय मनुष्यपोतं प्रति अनुरज्यसीति युक्तमेवेति भावः ।

(घ) शुष्ककलहात् निष्फलविवादादिति भावः ।

(ङ) धनु इति ।—धनुषः गृहं यत्र गृहे धनुर्विद्यते तद्गृहं, तत्र उपसर्पणं समुपगमनम् ।

(च) अभ्यनुजानाति अनुमन्यते । जनकान्वयपुरोधाः जनकवंशपुरोहितः शतानन्दः ।

(छ) महेश्वरेति ।—महेश्वरस्य परिचर्य्या समाराधनं, सैव अवदानं वृत्तं कर्म तस्मिन्, "अवदानं कर्म वृत्तम्" इत्यमरः ; निकृत्तेषु छिन्नेषु । नवमूर्द्धसु नवसङ्ख्यकेषु शिरःसु ।

वरमिति ।—येन तादृक् कर्माद्भुतस्य अद्भुतस्य कर्मणः, नवसङ्ख्यकशिरःकर्त्तनरूपस्येति भावः, सदृशम् अनुरूपं, वरं किमपि किञ्चिदपि, अप्रेक्ष्य अदृष्ट्वा, चित्तस्थलक्ष्या-र्थ्यं, पुरविजयिनः त्रिपुरविध्वंसिनः हरस्य, प्ररोहत् जायमानं, वैलक्ष्यं लज्जाविशेषः

तदुन्मार्ष्टुं त्रिभुवनमपि प्रार्थितमिदं
तदेव त्वय्यर्थीभवति दशमं रावणमुखम् ॥ ५२ ॥

शतानन्दः। (उत्थाय नेपथ्याभिमुखमवलोक्य सहर्षाद्भुतम्)।

पश्यन्तु भवन्तः,—

यस्मिन्नेकधनुष्मतो भगवतः खट्वाङ्गपाणेरसा-
वाकृष्टो गुणतां गतोऽप्यहिपतिः कर्णावतंसायते।
उन्मुक्तः पुनरेव भूषणपदं याति प्रकोष्ठान्तरे

(जनकः औत्सुक्यं नाटयति)।

शतानन्दः।

काकुत्स्थेन तदेव भार्गवगुरोः कोदण्डमाकृष्यते ॥ ५३ ॥

(नेपथ्ये)।

कलकलः।—

रुन्धन्नष्ट विधेः श्रुतीर्मुखरयन्नष्टौ दिशः क्रोडयन्
मूर्त्तीरष्ट महेश्वरस्य दलयन्नष्टौ कुलक्ष्माभृतः।
तान्यह्ना बधिराणि पन्नगकुलान्यष्टौ च सम्पादय-
न्नुन्मीलत्ययमार्य्यदोर्बलदलत्कोदण्डकोलाहलः ॥ ५४ ॥

---

कुण्ठितभावं, दृष्टवा दृष्टं, ततश्च तत् वैलक्ष्यम्, उन्मार्ष्टुं दूरीकर्तुमिति यावत्, इदं त्रिभुवनं त्रिलोकाधिपत्यमिति भावः, प्रार्थितं याचितं, तदेव दशमं रावणमुखं त्वयि अपि त्वत्सनीपेऽपि, अर्थीभवति याचकं भवति, किमतः परं ते भाग्यम्? इति भावः। शिखरिणी वृत्तम् ॥ ५२ ॥

यस्मिन्निति।—एकधनुष्मतः एकधनुर्धरस्य, भगवतः षडैश्वर्य्यसम्पन्नस्य, खट्वाङ्गपाणेः हरस्य, यस्मिन् धनुषि, गुणतां मौर्वीत्वं, गतः प्राप्तः, असौ परिदृश्यमानः, अहिपतिः शेषनागः, वासुकिर्वा, आकृष्टः सन् कर्णावतंसायते कर्णालङ्कार इव आचरति, आ-कर्णमाकर्षणादिति भावः, उन्मुक्तः त्यक्तः सन्, आकर्षणादिति शेषः, पुनरेव भूयोऽपि, प्रकोष्ठान्तरे मणिबन्धोपरिभागमध्ये, भूषणपदम् अलङ्कारस्थानम्, अलङ्कारवत् स्थितिमिति यावत्, याति प्राप्नोति, काकुत्स्थेन रामेण, भार्गवगुरोः जामदग्न्याचार्य्यस्य हरस्य, तदेव कोदण्डं धनुः, आकृष्यते। शार्दूलविक्रीडितं वृत्तम् ॥ ५३ ॥

रुन्धन्निति।—आर्य्यस्य रामस्य, दोर्बलेन बाहुवीर्य्येण, दलतः भज्यमानस्य, कोदण्डस्य धनुषः, अयं श्रूयमाण इत्यर्थः, कोलाहलः कलरवः, भीषणशब्द इति

जनकः। (कुशध्वजं पादयोर्निवेश्य)। भगवन् कुशिकनन्दन!—

इयमात्मगुणेनैव क्रीता रामेण मैथिली।
स्वगृहव्यवहारस्तु लक्ष्मणायोर्मिलाऽस्तु नः ॥ ५६ ॥

विश्वामित्रः। (सस्मितम्)। सखे सीरध्वज! यदभिरुचितं भवते।

शतानन्दः। (जनकवचनमेवमेव कथयित्वा)। भगवन् विश्वामित्र! ममापि चन्द्रशेखरशरासनारोपणप्रथमप्रियवादिनः पारितोषिकं धारयसि (ट)।

विश्वामित्रः। (विहस्य)। वत्स! दीयते। किमभिप्रैषि? (ठ)

शतानन्दः। कुशध्वजदुहितृभ्यां माण्डवी-श्रुतकीर्त्तिभ्यां भरत-शत्रुघ्नावभ्यर्थये।

विश्वामित्रः। एवमस्तु। (शतानन्दं हस्ते गृहीत्वा सस्मितम्)। वत्स! सर्वमस्माभिर्विधातव्यम्। आगमयस्व (ड) तावद्दशरथम्।

---

अविश्रमिणोरित्यर्थः। सर्वकर्मीण सर्वेषु कर्मसु कुशलं, सर्वकर्मक्षममिति यावत्। कर्माश्रितं तेजस्वित्वम्।

इयमिति।—इयं मैथिली सीता, रामेण आत्मगुणेनैव निजसामर्थ्येनैव, क्रीता आयत्तीकृतेति यावत्, न तु मया दत्तेति भावः; स्वगृहस्य निजगृहस्य, गार्हस्थ्यस्येति भावः, व्यवहारः कन्यादानरूप इति भावः, तु किन्तु, अयं भवत्विति शेषः, यथा नः अस्माकम्, ऊर्मिला लक्ष्मणाय लक्ष्मणार्थम्, अस्तु भवतु, लक्ष्मणाय दीयते इति भावः। अनुष्टुप् वृत्तम् ॥ ५६ ॥

(ट) चन्द्रशेखरेति।—चन्द्रशेखरस्य शिवस्य, शरासनं धनुः, तस्य आरोपणं रामेण मौर्व्यां संयोजनं, तदेव प्रथमं प्रियं वदतीति तथोक्तस्य, आदावेव हरशरासनारोपणरूपप्रियसंवादप्रदस्य इत्यर्थः। पारितोषिकं पुरस्कारार्थं धनमिति यावत्। धारयसि दातुमर्हसीति भावः।

(ठ) अभिप्रैषि इच्छसि।

(ड) आगमयस्व आनय।

जनकः। तर्हि प्रहीयतामिष एव भगवानाङ्गिरसः प्रियसुहृदमुत्तरकोशलेश्वरमानेतुम्।

विश्वामित्रः। एवमस्तु।

शतानन्दः। (उत्थाय)। भगवन्! किमन्यदधिकमस्ति वाचिकम्? (ढ)।

विश्वामित्रः। वत्स! निसृष्टार्थः (ण) असि। गम्यताम्।

(इति शतानन्दो निष्क्रान्तः)।

विश्वामित्रः। (हर्षं नाटयन्नात्मगतम्)—

दोर्लीलादलितेन्दुशेखरधनुर्विख्यातविक्रान्तिना
काकुत्स्थेन कृतो विदेहनृपतिः पूर्णप्रतिज्ञाभरः।
पश्यामश्च सुहृद्गृहान्नवनवोन्मीलद्विवाहोत्सवा-
नैक्ष्वाकेषु च मैथिलेषु च फलन्त्यस्माकमद्याशिषः॥५७॥

शौष्कलः। (वैलक्ष्य रोषाभ्यां स्मयमानः (त))। भोः सीरध्वज!

---

(ढ) वाचिक मन्दशवाक्, "मन्दशवाक् वाचिक स्यात्" इत्यमरः।

(ण) निसृष्टार्थः स्वयमूहापोहसमर्थः दूतविशेषः, तथा चोक्त दर्पणे—"उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम्। सुश्लिष्टं कुरुते कार्य्यं निसृष्टार्थस्तु स स्मृतः॥" इति।

दोर्लीलेति।—दोर्लीलया भुजविलासेन, यद्वा—दोर्भ्यां बाहुभ्यां, लीलया क्रीडाच्छलेन, अवहेलयेत्यर्थः, दलितं भग्नं, यत् इन्दुशेखरस्य हरस्य, धनुः तेन विख्याता विशेषेण प्रकटिता, विक्रान्तिः पराक्रमः यस्य तथाभूतेन, काकुत्स्थेन रामेण, विदेहनृपतिर्जनकः, पूर्णः सफल इत्यर्थः, प्रतिज्ञाभरः यस्य तादृशः सफलप्रतिज्ञाभार इत्यर्थः, कृतः विहितः, च किञ्च, अद्य इदानीं, सुहृदां मित्राणाम्, ऐक्ष्वाकाणां मैथिलानाञ्चेति भावः, गृहान् नवं नवं प्रत्यहं नूतनं यथा तथा, उन्मीलन् प्रस्फुरन्, विवाहोत्सवः येषु तथाभूतान्, पश्यामः, ऐक्ष्वाकेषु इक्ष्वाकुवंशीयेषु च, मैथिलेषु मिथिलाराजवंशीयेषु च, अस्माकम् आशिषः आशीर्वादाः, फलन्ति सफला भवन्ति। शार्दूलविक्रीडितं वृत्तम्॥५७॥

(त) वैलक्ष्य-रोषाभ्यां वैलक्ष्यं रावणमपहाय रामे सीताप्रदानकीर्त्तनेन प्रभोरवमाननात् लज्जितभावः, रोषः ताम्रबन्धनः कोपश्च ताभ्याम्। स्मयमानः मन्दं हसन्।

पुरुषप्रकर्षाधाने हि विद्यावृद्धसंयोगाद्बहिरङ्गानि वयांसि; (थ) यदनया प्रहीणलब्धकन्यया यौनसम्बन्धोपस्थितं (द) पुलस्त्यकुलमुपेक्षमाणो वर्षीयानपि कोमलप्रज्ञः (ध) असि। (मुनिं प्रति)। कौशिक! नाद्यापि किञ्चिदतिक्रामति (न)। तवापि लङ्कापतौ ताड़कावधापराधमपमार्ष्टुमयमेवावसरः (प)। (कौशिकस्तवावज्ञां नाटयति)।

जनकः। भगवन्! एहि; स्वयमुपेत्य रामभद्रवदनचन्द्रचन्द्रिकाप्रवाहेण निर्वापयामि (फ) तावदलोकधनुर्धरसहस्रप्रार्थ्यमानमैथिलीकदर्थितम् (ब) आत्मानम्। न हि मिहिर-

---

(थ) पुरुषेति।—पुरुषस्य प्रकर्षः उत्कर्षः, श्रेष्ठता इत्यर्थः, तस्य आधाने सम्पादने, प्रतिपादने इत्यर्थः। हि-शब्दोऽवधारणार्थः। विद्यावृद्धेति।—विद्यया ज्ञानेन, वृद्धः प्रवीणः, तत्संयोगात् तत्सम्बन्धात्, यवर्थे पञ्चमी; विद्यावृद्धसम्बन्धमपेक्ष्येत्यर्थः, वयांसि वयोबाहुल्यानि, वार्द्धकानीति यावत्, बहिरङ्गाणि बाह्यानि, पृथग्भूतानीत्यर्थः, दुर्बलानीति भावः, वयोवृद्धत्वेऽपि तव विद्यावृद्धत्वाभावात् पुरुषप्रकर्षज्ञानं नास्तीति भावः।

(द) प्रहीणलब्धकन्यया प्रहीणं हलपद्धतिः तत्र, यद्वा—प्रहीणेन हीनोपायेन, लाङ्गलकर्षणरूपनिन्द्योपायेनेत्यर्थः, लब्धया कन्यया अयोनिजयेति यावत्, यद्वा—प्रहीणा भूमौ लब्धत्वेन माता-पितृविहीना, लब्धा कन्या तया, पितृपरिचयविहीनत्वात् निन्दनीयया इति भावः। यौनसम्बन्धेन विवाहार्थितया, उपस्थितं स्वयमागतमित्यर्थः।

(ध) उपेक्षमाणः अनाद्रियमाणः। वर्षीयानपि अतिवृद्धोऽपि। कोमलप्रज्ञः मृदुबुद्धिः, अल्पज्ञ इति यावत्, निर्बोध इति भावः।

(न) न अतिक्रामति न अतिवर्त्तते, समयो न अतिक्रान्त इत्यर्थः, इदानीमपि परिणयो न सम्पन्न इति भावः।

(प) अपमार्ष्टुं क्षालयितुम्। अवसरः समयः, अस्तीति शेषः, रामाय सीतामदत्त्वा रावणाय एतां दातुं यत्नः क्रियतां, तथा सति रावणस्तव ताडकावधापराधं क्षमिष्यते इति भावः।

(फ) रामभद्रेति।—रामभद्रस्य वदनमेव चन्द्रः तस्य चन्द्रिकाप्रवाहेण ज्योत्स्नाधारया। निर्वापयामि शीतलयामि।

(ब) अलोकेति।—अलोकधनुर्धराणां अयाथगुणताम्, अहं धनुर्विशारद इति

मरीचिनिचयपचेलिमस्य (भ) तुहिनकरबिम्बसंवादादरपरोऽपि कश्चिदगदङ्कारः कैरवाकरस्य (म)।

(उत्थाय परिक्रामतः)।

सीरध्वजः। (सखेदमात्मगतम्)। हा तपस्विनि (य) सीते! छलिताऽसि। पौलस्त्यप्रार्थिताऽपि विचार्य्यसे—

त्रिभुवनविजयश्रियः सपत्नीं
जनयतु को भवतीमनात्मतन्त्राम्?।
स्वजनमपि न ते निरूपयामः
त्वमपि विपाट्य भुवं विनिर्गताऽसि ॥ ५८ ॥

(परोक्षं जनकं प्रति)। सीरध्वज!—

पौराणीभिरनेकविक्रमकथागाथाभिरर्थापिता-
स्ते वीरस्य जयन्ति राक्षसपतेर्दोःस्तम्भदम्भोलयः।

---

दशाऽभिमानवतामित्यर्थः, यदस्येव प्रार्थ्यमानया याच्यमानया, मैथिल्या सीतया हेतुभूतया, यदार्हत विरक्तीकृतम्।

(भ) मिहिरेति।—मिहिरस्य सूर्य्यस्य, मरीचीनां मयूखानां, निचयः समूहः, तेन पचेलिमस्य पच्यमानस्य, सन्तप्यमानस्येत्यर्थः।

(म) तुहिनेति।—तुहिनकरश्चन्द्रः, तस्य बिम्बं मण्डलं, किरणमिति भावः, तस्य संवादात् सम्पर्कात्, संस्पर्शादिति यावत्। अगदङ्कारः चिकित्सकः, "रोगहार्य्यगदङ्कारो भिषग्वैद्यौ चिकित्सके" इत्यमरः। कैरवाकरस्य कुमुदसङ्घातस्य।

(य) तपस्विनि! वराकि! अनुकम्पनीये! इति यावत्।

त्रिभुवनेति।—कः जनः, अनात्मतन्त्रां पराधीनां, भवतीं त्रिभुवनविजयश्रियः त्रिलोकीविजयलक्ष्म्याः, सपत्नीं जनयतु? करोतु? ते तव, स्वमपि स्वजनमपि आत्मीयजनमपि, न निरूपयामः न पश्यामः, यस्ते हितं चिन्तयेदिति भावः, यतः भुवं विपाट्य विदार्य्य, विभिद्य इत्यर्थः, विनिर्गता असि प्रादुर्भूताऽसीत्यर्थः, अतस्ते माता पित्रादीनामभावात् स्वजनसम्बन्धो नास्ति, येन पात्रापात्रविवेकः क्रियते इति भावः। पुष्पिताग्रा वृत्तम् ॥ ५८ ॥

पौराणीभिरिति।—पौराणीभिः पुरातनीभिः, अनेकाभिः विक्रमकथागाथाभिः पराक्रमसूचककथाविस्तारैः, अर्थापिताः प्रकाशीकृताः, ख्यापिता इति यावत्, ते

यानुत्प्रेक्ष्य विशोषयन्मदमयं मैरेयमैरावणो
भूषास्रग्भिरभूदमात्यमधुपश्रेणीषु साधारणः ॥ ५९ ॥

तेषु च सत्सु—

वृथा सज्जनसम्बन्ध-सत्कारेणासि वञ्चितः ।
पौलस्त्यहस्तवर्त्तिन्या सीतया तु भविष्यते ॥ ६० ॥

( साक्षेपं (र) च नेपथ्याभिमुखमवलोक्य ) ।

समन्तादुत्तालैः सुरवहवधूचामरमरु-
त्तरङ्गैरुन्मीलद्भुजपरिघसौरभ्यशुचिना ।
स्वयं पौलस्त्येन त्रिभुवनभुजा चेतसि कृता-
मरे राम ! त्वं मा जनकपतिपुत्रीमुपयथाः ॥ ६१ ॥

---

प्रसिद्धाः, वीरस्य शूरस्य, राक्षसपतेः रावणस्य, दोःस्तम्भदम्भोलयः स्तम्भसदृशमहद्बाहु-वज्राणि, जयन्ति सर्वोत्कर्षेण वर्त्तन्ते, ऐरावणः इन्द्रहस्ती ऐरावतः, यान् दोःस्तम्भ-दम्भोलीन्, उत्प्रेक्ष्य दृष्ट्वा, मदमयं गर्वमयं, मैरेयं मद्यवारि, विशोषयन् भूषास्रग्भिः अलङ्कारभूतपुष्पमालाभिः, अमात्यमधुपश्रेणीषु अनुचरभ्रमरसमूहेषु साधारणः सामान्यः, मदशोषणात् भ्रमरगणतुल्य इति यावत्, अभूत्, एतानपि सीतां राघवो बाहुबलेन हरिष्यतीति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ५९ ॥

वृथेति ।—वृथा निरर्थकमेवेति यावत्, सज्जनैः साधुजनैः, सम्बन्धः संयोगः, तेन सत्कारः पूजा, जनकः सत्यप्रतिज्ञ इत्येवंरूपा प्रशंसा इति भावः तेन, यद्वा—सज्जनेन भुवनविश्रुतकीर्त्तिना रावणेन, यः सम्बन्धः सम्पर्कः, तेन यः सत्कारः समादरः, त्रिभुवनैकवीररावणश्वशुरो जनक इति सम्माननेति भावः तेन, वृथा वञ्चितः प्रतारितः, असि, तु किन्तु, सीतया, अन्यस्य हस्तगताऽपीति भावः, पौलस्त्यस्य रावणस्य, हस्तवर्त्तिन्या हस्तगतया, भविष्यते, रावण एनां हरिष्यत्येवेति भावः । अनुष्टुप् वृत्तम् ॥ ६० ॥

(र) साक्षेपं सतिरस्कारम् ।

समन्तादिति ।—अरे राम ! उत्तालैः महद्भिः, अतिप्रवृद्धैरित्यर्थः, सुरवहवधूभिः देवाङ्गनाभिः, रावणहृताभिरिति भावः, चामरमरुतां चामरव्यजनपवनानां, तरङ्गैः प्रवाहैरिति यावत्, समन्तात् सर्वतः, उन्मीलत् प्रसरत्, यत् भुजपरिघाणां बाहुपरिघाणां, सौरभ्य सौगन्ध्यं, तेन शुचिः सौरभ्यान्वितः तेन, त्रिभुवनभुजा

(सविमर्शमात्मगतम्)। अहो! गम्भीरम् (ञ) इदमुपस्थितं वस्तु; तस्मादिदं माल्यवन्तमेव पुरस्कृत्य लङ्केश्वरस्य निवेदयामि।

(इति निष्क्रान्ताः सर्वे)।

इति पिनाकभङ्गो नाम तृतीयोऽङ्कः।

---

## चतुर्थोऽङ्कः।

(ततः प्रविशति माल्यवान्)।

माल्यवान्। (कृष्णमाल्यमुखो परिसृज्य)। अये! विभातैव विभावरी। तथा हि—

स्तोकोन्निद्रनिदाघदीधितिमहस्तन्द्रालुचन्द्रातपा-
स्तायन्ते ककुभो रथाङ्गगृहिणीगार्हस्थ्यगर्हाभिदः।
अद्यापि स्वकुलायशाखिशिरसि स्थित्वा रुवन्तो मुहु-
स्तूष्णीं प्रत्यभिजानते बलिभुजो भीताः स्वयूथ्यस्वरान्॥ १॥

---

त्रिलोकीश्वरेण, पौलस्त्येन रावणेन, स्वयम् आत्मना, चेतसि मनसि, कृता भार्य्यात्वेन सङ्कल्पितामित्यर्थः, जनकपतिपुत्रीं मैथिलीं, त्वं मा उपयथाः न परिणय, तथा कृते तव विपत्तिरनिवार्य्येति भावः। "उपयमो विवाहे" इत्यात्मनेपदम्। शिखरिणी वृत्तम्॥ ६१॥

(ञ) गम्भीरम् अतिमहदित्यर्थः।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
अनर्घराघवतृतीयाङ्कव्याख्या समाप्ता॥ ३॥

---

स्तोकेति।—स्तोकेन अल्पशः, उन्निद्रं प्रबुद्धं, प्रसृतमित्यर्थः, यत् निदाघदीधितिमहः निदाघदीधितेः उष्णकिरणस्य, सूर्य्यस्येत्यर्थः, महः तेजः, तेन तन्द्रालवः निद्रालसाः, निष्प्रभा इति यावत्, चन्द्रातपाश्चन्द्ररश्मयः यासु तथोक्ताः, "आतपो रश्मिमात्रे च सूर्य्यरश्मौ च दृश्यते" इति धरणिः; रथाङ्गगृहिणीनां चक्रवाकीणां, गार्हस्थ्ये संसारे, या गर्हा निन्दा, रात्रिविरहजनितेति भावः, तस्या भिदः अप-

अपि च—

प्राचीं वासकसज्जिकामुपगते भानौ दिशां वल्लभे
पश्येता हचयः पतङ्गदृषदामाग्नेयनाडिन्धमाः।
लोकस्य च्क्षणदानिरङ्कुशरसौ सम्भोग-निद्रागमौ
कोकस्तोम-कुमुद्वतीविपिनयोर्निक्षेपमातन्वते ॥ २ ॥

( सर्वतो निरूप्य )। हन्त ! समन्तादामोदमानपौरसम्भोगमयी (क) खल्वियं दशग्रीवभुजार्गलापरिपालिता ( ख ) राजधानी—

---

मोदिकाः, सूर्य्योदये पुनः सङ्गमादिति भावः, ककुभः दिशः, "दिशस्तु ककुभः काष्ठाः" इत्यमरः ; तायन्ते विस्तृता भवन्ति, क्रमशः प्रकाशन्ते इति यावत् , अद्यापि इदानीमपि, बलिभुजः काकाः, "काके तु करटारिष्ट···। बलिभुग्वायसा अपि" इत्यमरः ; स्वकुलाय: निजनीडम, आत्मनो वासस्थानमित्यर्थः, "कुलायो नीडमस्त्रियाम्" इत्यमरः ; य आश्रो वृक्षः, तस्य शिरसि अग्रशाखायां, स्थित्वा मुहु पुनः पुनः, रवन्तः शब्दं कुर्वन्त, पुनश्च मौनाः सन्तः तूष्णीं भीन, स्थितेति शेषः, मूकीभूयेत्यर्थः, स्वहूयस्वरान् स्ववर्गीयरवान्, प्रत्यभिजानते पूर्वानुभूतान् स्मरन्ति, श्रोतु सावहिताः प्रतीक्षन्ते इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

प्राचीमिति।—दिशां वल्लभे प्रिये, भर्त्तरि इति यावत्, भानौ सूर्य्ये, वासकसज्जिका "कुरुते मण्डनं यस्याः सज्जिते वासवेश्मनि। सा तु वासकसज्जा स्यात् विदितप्रियसङ्गमा ॥" इत्युक्तलक्षणां, प्राचीं पूर्वां दिशम, उपगते प्राप्ते सति, "वासकसज्जिकाम" इत्यत्र "वासवदीक्षिताम" इति पाठे—वासवेन इन्द्रेण, दीक्षितां स्वीकृतां, पालितामिति यावत्, "दीक्षा स्वीकार आदेशे" इति विश्वः ; पतङ्गदृषदां सूर्य्यकान्तोपलानाम्, आग्नेयनाडिन्धमाः आग्नेयनाडीं सूर्य्यातपप्रतिफलनोपायभूतमार्गविशेषमित्यर्थः, धमन्ति अग्निमयीं कुर्वन्तीति तथोक्ताः, एताः निःसरन्त्यः, रुचयः मयूखाः, लोकस्य जगतः, जगद्वासिनो जनस्य इत्यर्थः, क्षणदायां रजन्यां, निरङ्कुशः निरर्गलः, रसः स्वादः ययोः तथाभूतौ, सम्भोग-निद्रागमौ रमण-स्वापौ, कोकानां चक्रवाकानां, स्तोमः समूहः, कुमुद्वतीविपिनं कैरववनं तयोः, निक्षेपं न्यास, कोकस्तोमे सम्भोग मिथुनभावं, कुमुद्वतीविपिने निद्रागमं सङ्कोचनमिति यावत्, आतन्वते विस्तारयन्ति, पश्य वाक्यार्थः कर्मेति बोध्यम। शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

(क) आमोदेति।—आमोदमानानां हृष्यतामित्यर्थः, पौराणां पुरवासिनां, सम्भोगमयी सुखभोगशालिनी।

इतः पौरस्त्यायां ककुभि विवृणोति क्रमदल-
त्तमिस्रामर्माणं किरणकणिकामम्बरमणिः।
इतो निष्क्रामन्ती नवरतिगुरोः प्रोञ्छति वधूः
स्वकस्तूरीपत्राङ्कुरमकरिकामुद्रितमुरः ॥ ३ ॥

अपि च—

अयं मृदुमृणालिनीवनविलासवैहासिक-
स्त्विषां वितपते पतिः सपदि हन्यमाना निशाः।
स्तनौ पुलकयन्ति चोत्पलदृशां प्रियोरःस्थले
विपर्य्ययितवृत्तयो घुसृणपङ्कपत्राङ्कुराः ॥ ४ ॥

---

(ख) दशग्रीवेति।—दशग्रीवस्य रावणस्य, भुजा एव अर्गलाः परिघाः, ताभिः परिपालिता सुरक्षिता।

इत इति।—इतः अस्यां, पौरस्त्यायां प्राच्यां, ककुभि दिशि, अम्बरमणिः सूर्य्यः, क्रमेण शनैः शनैरित्यर्थः, दलत् विदीर्य्यमाणं, तमिस्रायास्तामस्या रजन्याः, "तमिस्रा तामसी रात्रिः" इत्यमरः; मर्म जीवस्थानम्, अतिनिबिडमध्यमिति भावः यया तथाभूता, किरणकणिकां मयूखाङ्कुरम्, अभिनवनिःसृतकिरणमित्यर्थः, विवृणोति प्रकटयति; इतः अस्मिन् प्रदेशे, अस्मात् प्रदेशात् वा, निष्क्रामन्ती निर्गच्छन्ती, शयनगृहादिति भावः, वधूः नवोढा भार्य्या, नवरतिगुरोः नवस्य नवीनस्य, रतिगुरोः सुरताचार्य्यस्य, भर्त्तुरित्यर्थः, स्वकस्तूरीपत्राङ्कुरमकरिकया निजमृगमदरचितपत्राङ्कुररूपमकराकृत्या, स्तनदेशे विरचितमकराकृतितिलकविशेषेण इत्यर्थः, मुद्रितं चिह्नितम्, अङ्कितमिति यावत्, उरः वक्षःस्थलं, प्रोञ्छति मार्जयति, तच्चिह्नरहितं करोतीत्यर्थः, तत्र गुर्वादिसमीपे वक्षसि तच्चिह्नप्रकाशेन लज्जा मा भूदिति हेतोरिति भावः; यद्वा—नवरतिगुरोरिति पञ्चम्यन्तं पदं, ततश्च नवरतिगुरोः आरात्, तत्सकाशादिति यावत्, निष्क्रामन्ती तादृशम् उरः, स्वकीयमिति शेषः, प्रोञ्छति, उरसि तच्चिह्नस्य आरक्तत्वेन श्वश्रूननान्द्रादीनां तज्ज्ञानं मा भूदित्याशयेनेति भावः। शिखरिणी वृत्तम् ॥ ३ ॥

अयमिति।—मृदु कोमलं, यत् मृणालिनीवनं पद्मिनीवनं, तस्य विलासः विकाशः, तस्य वैहासिकः कौतुककरः, विदूषक इति यावत्, "वैहासिकः कौतुककरः प्रहासी च विदूषकः" इति भरतः; अयं त्विषां पतिः सूर्य्यः, वितपते प्रकाशमाप्नोतीति यावत्, सपदि सम्प्रतीति यावत्, उत्पलदृशां कमललोचनानां, प्रियोरःस्थले प्रियवक्षसि, हन्यमानाः

इतश्च—

प्रियवसतेरपयान्त्यो मिथः करम्बितकराम्बुजन्मानः।
करजव्रणविरलस्तनपुलकममूः किमपि विवदन्ते ॥ ५ ॥

( अन्यतश्च दृष्ट्वा )। इतो रम्यतरं वर्त्तते—

प्रभाते पृच्छन्तीरनुरहसवृत्तं सहचरी-
र्नवोढा न व्रीडामुकुलितमुखीयं सुखयति।
लिखन्तीनां पत्राङ्कुरमनिशमस्यास्तु कुचयो-
श्चमत्कारो गूढं करजपदमासां कथयति ॥ ६ ॥

विपर्य्ययिता विपर्य्ययं प्राप्ता, व्रत्तिः स्थितिर्येषां तादृशाः, पुरुषायिते हि स्त्रीणामधोमुखतया प्रियतमवक्षसि वाम-दक्षिणस्तनयोर्वैपरीत्येन पत्रावल्लीनां सङ्क्रमणादिति, नायिकावक्षोदेशात नायकवक्षसि मुद्राक्षरवत ( मोहर ) प्रतिलोमभावेन सङ्क्रमिता इति वा भावः, निजाः स्वकीयाः, घुसृणपङ्कपत्राङ्कुराः घृष्टकुङ्कुमविरचितपत्रावल्यः, स्तनौ पुलकयन्ति रोमाञ्चितौ कुर्वन्ति, सम्भोगस्मरणादिति भावः। पृथ्वीवृत्तं—"ज-सौ ज-स य-ला वसुग्रहयतिश्च पृथ्वी गुरुः" इति तल्लक्षणात् ॥ ४ ॥

प्रियवसतेरिति।—प्रियवसतेः कान्तवेश्मनः, भर्त्तुः जारस्य वा गृहादित्यर्थः, "वसती रात्रिवेश्मनोः" इत्यमरः, अपयान्त्यः निर्गच्छन्त्यः, अमूः नार्य्यः, करम्बितानि मिलितानि, करा हस्ता एव, अम्बुजन्मानि पद्मानि यासां तथाभूताः, परस्परं गृहीतपाणिकमलाः सत्यः इत्यर्थः, करजव्रणेन नखक्षतेन हेतुना, "करजं स्यात व्याघ्रनखे करजः नखयोः पुमान्" इति मेदिनी, विरलम् अल्पाल्पम्, अल्पतया दृश्यमानमित्यर्थ, स्तनयोः पुलकं रोमाञ्चः यत्र तत् यथा तथा, मिथः परस्परं, विवदन्ते कलहायन्ते, काचित् वदति तव स्तनयोरेतावत् नखक्षतं यत् सम्भोगस्मरणजं पुलकमपि अल्पं दृश्यते, अन्या वदति नैव मम, तवैवैतादृक् दृश्यते इत्येवं कलहं कुर्वन्तीत्यर्थः। सामान्यनायिकावर्णनमिदम्। आर्य्या वृत्तं—"यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये पञ्चदश चतुर्थके साऽऽर्य्या॥" इति तल्लक्षणात् ॥ ५ ॥

प्रभाते इति।—व्रीड़या लज्जया, मुकुलितं मुद्रितम्, अविकसितमित्यर्थः, नतमिति यावत्, मुखं यस्याः तादृशी, इयं नवोढा नवपरिणीता, वधूरिति शेषः, प्रभाते प्रातःकाले, अनुरहसवृत्तं रहोवृत्तं रात्रिकालीनगोपनीयविषयम्, अनु लक्ष्यीकृत्येत्यर्थः,

(मुहूर्त्तमनुध्याय)। अहो! यतः प्रभृति वैदेहीवरणाय प्रहितेन पुरोधसा कथ्यमानं ककुत्स्थकुलकुमारस्य मानुष्यकातिशयम् (ग) अशृणवं, ततः प्रभृति कष्टां दशामनुभवामि। तथा हि—

तत्तादृशं कथमुदेति मनुष्यलोके
तेजोऽद्भुतम्? निरभिसन्धि न तावदेतत्।
तान्येव चास्य चरितानि दशाननस्य
धिक्! चिन्तया रजनिरक्षिषु नः प्रभाति॥ ७॥

अपि च—

श्रुत्वा दुःश्रवमद्भुतञ्च मिथिलावृत्तान्तमन्तःपत-
च्छिन्नाऽपक्कवमावाहस्थवदनत्वग्विप्रकीर्णस्मितः।

---

सुरतादिव्यापारं विषयीकृत्येति यावत, पृच्छन्तीः जिज्ञासमानाः, सहचरीः वयस्याः, न सुखयति न प्रीणयति, रहस्याख्यानविरहय्येति भावः, तु किन्तु, अस्याः वध्वाः, कुचयोः स्तनयोः, चमत्कार वैचित्र्यम्, अनिशं सततं, पुनः पुनरिति यावत, पत्राङ्कुरं क्षुद्रपत्रलेखां, लिखन्तीनां रचयन्तीनां, कुर्वतीनामित्यर्थः, आसां सहचरीणां, गूढं अप्रकटमित्यर्थः, करजपदं नखचिह्नं, नखक्षतमित्यर्थः, कथयति ज्ञापयतीत्यर्थः, रहोवृत्तमिति शेषः, लज्जावशात् अकथितेऽपि रहोवृत्ते स्तनयोः पत्रावलीरचनसमये तासां गूढनखक्षत-दर्शनात् तज्ज्ञानमभूदिति भावः। शिखरिणी वृत्तम्॥ ६॥

(ग) मानुष्यकातिशयम् अमानुषचारितप्रकर्षमिति यावत्।

तदिति।—मनुष्यलोके नरलोके, तत् सर्वत्र विश्रुतं, तादृशं ताडकावधादिरूपम्, अद्भुतम् आश्चर्यं, तेजः ज्योतिः, ज्योतिर्मयं रामरूप वस्तु इति भावः, कथम् उदेति? उदयं प्राप्नोति? एतत् तावत न निरभिसन्धि न निरभिप्रायम्, अत्र कोऽपि अभिसन्धि-रस्तीति भावः, अस्य दशाननस्य तानि लोकविख्यातानि, चरितानि वृत्तानि, त्रिभुवन-विजयादीनि इति भावः, धिक् एव निन्दास्येव, "धिङ्निर्भर्त्सननिन्दयोः" इत्यमरः; वैदेह्या हस्तान्तरजनितावमाननासहनादिति भावः, चिन्तया एतद्विषयकस्मरणेन, नः अस्माकम्, अक्षिषु नेत्रेषु, रजनिः रात्रिः, प्रभाति प्रकर्षेण दीप्यते, सततमन्धकारं पश्यामीति भावः। वसन्ततिलकं वृत्तम्॥ ७॥

हेलाऽऽकृष्टसुरावरोधरमणीसीमन्तसन्तानक-
स्रग्वासोज्ज्वलपाणिरप्यवति मां वत्सो न लङ्केश्वरः ॥ ८ ॥

(निःश्वस्य आकाशे)। अहह! दारुणेयम् (घ) अस्माकं चिर-
जीविता—

प्रीते विधातरि पुरा परिभूय मर्त्त्यान्
वव्रेऽन्यतो यदभयं स भवानहंयुः।
तन्मर्म्माणि स्पृशति मामतिमात्रमद्य
हा वत्स! शान्तमथवा दशकन्धरोऽसि ॥ ९ ॥

श्रुत्वेति।—दुःश्रवं श्रोतुमशक्यं, श्रवणपीडाकरमित्यर्थः, अद्भुतं विस्मयजनकं, निखिलवृत्तान्तं श्रुत्वा आकर्ण्य, अन्तः पतन्ती अन्तर्मनसि, पतन्ती आविर्भवन्ती, या चिन्ता तस्याः अपह्नवेन गोपनेन, सावहित्थानि आकारगुप्तिसहितानि, यानि वदनानि मुखानि, दशसङ्ख्यकानीति भावः, तेषां त्वचि चर्म्मणि, उपरिभागे इति भावः, विप्रकीर्णं विस्तृतं, स्मितं मन्दहासः यस्य तथाभूतः, लोकेषु निश्चिन्तभावप्रदर्शनार्थं सहास्यवदनः इत्यर्थः, वत्सः स्नेहास्पदः, लङ्केश्वरः रावणः, हेलया अनायासेन, आकृष्टानाम् आनीतानां, हृतानामिति यावत्, सुरावरोधरमणीनां देवान्तःपुरिकाणां, सीमन्तेषु विन्यस्तकेशेषु, याः सन्तानकस्रजः, देवतरुविशेषपुष्पमालाः, तासां वासेन सौरभेण, उज्ज्वलः सुरभीकृत इति यावत्, पाणिर्यस्य तथाभूतोऽपि, पाणिना तासां केशाकर्षणादिति भावः, मां न अवति प्रीणाति, तर्पयतीत्यर्थः, तृप्त्यर्थक-अवधातोः रूपमिदम्, यद्वा—अवति पालयति, न निर्भयं करोतीत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ८ ॥

(घ) दारुणा अतिक्लेशकरीति यावत्, स्वल्पजीवने एतादृशं दुःखं न स्यादिति भावः।

प्रीते इति।—स पुरा तपश्चरन्, भवान् अहंयुः अहङ्कारवान् सन्, पुरा प्राक्, विधातरि ब्रह्मणि, प्रीते सन्तुष्टे सति, तपसेति शेषः, मर्त्त्यान् मानवान्, परिभूय अनादृत्य, तुच्छीकृत्येति यावत्, अन्यतः मनुष्यव्यतिरिक्तेभ्य इत्यर्थः, यत् अभयं भयाभावं, वव्रे वृतवान्, प्रार्थितवानित्यर्थः, अद्य तत् वरणं, माम् अतिमात्रम् अतिशयेन, मर्म्मणि मर्मस्थाने, स्पृशति मम मर्म्म पीडयतीति यावत्, हा वत्स! अथवा शान्तम् अमङ्गलं दूरीभवत्विति भावः, त्वं दशकन्धरः दशग्रीवः, असि भवसि, एककन्धरो रामः त्वया दशकन्धरेणावश्यं हनिष्यते इति शङ्कैव नास्तीति भावः। वसन्ततिलकं वृत्तम् ॥ ९ ॥

(सविमर्शम् (ङ))। अहो! मैथिलनृपतेरकार्य्यज्ञता (च)—

विश्वामित्रवशीकृते हृदि वयं मा भूम सम्बन्धिन-
स्ते दृष्टा न कथं पुराणमुनयो मान्याः पुलस्त्यादयः ?।
जामाताऽपि महेन्द्रमौलिवलभीपर्य्यङ्करत्नाङ्कुर-
ज्योत्स्नापुष्टनखेन्दुदीधितिरयं नापेक्षितो रावणः !! ॥१०॥

(पुरोऽवलोक्य)। कथं मिथिलाचरितानि चरितुम् (छ) अनुप्रहिता चिरयति वत्सा शूर्पणखा ?

(प्रविश्य शूर्पणखा)।

शूर्पणखा। (सहर्षम्)। अम्महे! सोम्मसुंदरविआहणेवच्छ-

---

(ङ) सविमर्शं सवितर्कम्।

(च) अकार्य्यज्ञता कार्य्यानभिज्ञता, अविवेकिता इत्यर्थः।

विश्वामित्रेति।—विश्वामित्रेण वशीकृते आयत्तीकृते, हृदि चित्ते, तवेति शेषः, वयं सम्बन्धिनः सम्पर्कार्हाः, यौनसम्बन्धयोग्याः इत्यर्थः, मा भूम न भवाम, किन्तु ते प्रसिद्धाः, मान्याः पूजार्हाः, पुराणमुनयः प्राचीनऋषयः, ब्रह्मणो मनसः प्राक् उत्पन्नत्वादिति भावः, पुलस्त्यादयः पुलस्त्यप्रभृतयः, रावणपूर्वपुरुषा इति भावः, कथं न दृष्टाः? न गणिताः? विश्वामित्रादपि श्रेष्ठानां पुलस्त्यादीनां कुलजो रावणस्त्वया अवश्यमेव वरणीय इति भावः, अयं रावणः महेन्द्रस्य देवराजस्य, मौलिरेव शिर एव, किरीटमेव वा, "चूडा किरीटं केशाश्च संयताः मौलयस्त्रयः" इत्यमरः; वलभी प्रासादोपरिगृहं, "शुद्धान्ते वलभी चन्द्रशाले सौधोर्द्ध्ववेश्मनि" इति रभसः; तदेव पर्य्यङ्कः खट्वा, यद्वा—मौलिरेव वलभीपर्य्यङ्कः वलभीस्थखट्वा इत्यर्थः, तत्र ये रत्नाङ्कुराः मणिप्ररोहाः, क्षुद्राकृतिमणिसमूहा इत्यर्थः, तेषां ज्योत्स्नाभिः किरणैरित्यर्थः, पुष्टाः वृद्धिं नीताः, नखेन्दूनां नखचन्द्राणां, दीधितयः किरणाः यस्य तादृशः, देवेन्द्रमस्तकचुम्बितचरण इति यावत्, जामाता अपि न अपेक्षितः? न प्रतीक्षितः? स्पृहणीयजामातृत्वेन न गणितः? इति यावत्। शार्दूलविक्रीडितं वृत्तम् ॥१०॥

(छ) चरितुं पर्य्यवेक्षितुमिति यावत्।

लच्छीविच्छुरिदकांतिपब्भाराइं (ज) रहुउलकुमाराणं मुहपुंडरीआइं पेक्खंतो जुउच्छिदेणावि माआमाणुसी-भावेण (झ) किदत्थीकिदम्हि। अम्मो! सा तारिसी गुणाणं पकिदी, (ञ) जा विपक्खहत्थपडिदावि (ट) सुहावेदि। *

माल्यवान्। (दृष्ट्वा सस्नेहम्)। कथं वत्सा शूर्पणखा? वत्से! अयमहम्। इत इतो भवती।

शूर्पणखा। कधं इह ज्जेव्व अट्टालअसिहरपग्गीवे (ठ) मादामहो। अम्मो! दुस्सिलिट्टता (ड) दइकज्जाणं, जं दाणिं पजागरकिलिन्तलोअणो पडिक्खणजिंभिआपसारिद-मुहकुहरदिट्टहिअअट्ठिदकाठणकज्जभारो (ढ) असो विअ

* अम्महे! सौम्यसुन्दरविवाहनेपथ्यलक्ष्मीविच्छुरितकान्तिप्राग्भाराणि रघुकुल-कुमाराणां मुखपुण्डरीकाणि प्रेक्षमाणा जुगुप्सितेनापि मायामानुषीभावेन कृतार्थी-कृताऽस्मि। अम्मो! सा तादृशी गुणानां प्रकृतिः, या विपक्षहस्तपतिताऽपि सुखयति।

(ज) अम्महे! आश्चर्यम्, "अम्मो अम्महे इति पदं कुर्यात् स्त्रीणान्तु विस्मये" इति भरतः। सौम्येति।—सौम्या प्रियदर्शना, सुन्दरी शोभना च, या विवाहनेपथ्यलक्ष्मीः वैवाहिकपरिच्छदशोभा, तया विच्छुरितः विस्फुरितः, कान्तिप्राग्भारः लावण्यातिशयः येषां तथाभूतानि।

(झ) जुगुप्सितेनापि निन्दितेनापि, सुदर्शनरूपधारणात् दूषितेनापि इति यावत्, मायामानुषीभावेन मायया कपटेन गृहीत इत्यर्थः, मानुषीभावः मानुषदेहः तेन।

(ञ) प्रकृतिः स्वभावः।

(ट) विपक्षेति।—विपक्षस्य शत्रोः, हस्ते पतिताऽपि विपक्षगामिनी अपीत्यर्थः, अस्माकं शत्रोः सम्बन्धिनी अपीति भावः।

(ठ) अट्टालकशिखरप्रग्रीवे अट्टालकस्य प्रासादस्य, शिखरम् उपरिभागः, तस्य प्रग्रीवे प्रान्तभागे इति यावत्।

(ड) दुःश्लिष्टता दुःखसंयोगिता, दुःखदायकता इत्यर्थः, दुरवगाहता इत्यर्थो वा।

(ढ) प्रजागरेति।—प्रजागरेण प्रकृष्टेन जागरणेन, दुश्चिन्ताजनितया अनिद्रयेति यावत्, क्लान्ते श्रान्ते, कातरे इत्यर्थः, कलुषिते इत्यर्थो वा, लोचने यस्य तथोक्तः।

को वि दीसदि। अहवा सामसा वि गुरुश्रो (ण) मंतिभावो, विसेसेण साहसेक्करसव्ववसाअस्स चंडचरिदस्स (त) अम्हसामिणो रावणस्स। जाणामि, (थ) मं ज्जेव्व पडि-पालअंतो (द) चिट्ठदि। जाव णं उवसप्पामि। (उपविष्टादमुप-सृत्य)। अज्ज! बंदे। *

माल्यवान्। वत्से! कल्याणिनी भूयाः। इहास्यताम्। अपि भरत-शत्रुघ्नाभ्यां मिथिलामुपस्थितो दशरथः?

शूर्पणखा। (उपविश्य)। अज्ज! दसरहे आअदे कुमाराणं गोदाणमंगले (ध) अ संवुत्ते दाव मए पत्तं मिहिला-णअरं। †

* कार्यान्तरेऽव्याक्षिप्तशिखरप्रयोवे मातामह:। धम्मो! दुःश्लिष्टता दग्धकार्याणां, खदिटाग्नौ प्रजागरक्लान्तलोचन: प्रतिक्षणजृम्भाप्रसारितमुखकुहरदृष्टहृदयस्थितकाठिन-कार्यभारोऽन्य इव कोऽपि दृश्यते। अथवा सामान्योऽपि गुरुको मान्त्रभाव:, विशेषेण साहसैकरसव्यवसायस्य चण्डचरितस्यास्माकं स्वामिनो रावणस्य। जानामि, मामेव प्रतिपालयंस्तिष्ठति। यावदेनमुपसर्पामि। आर्य्ये! वन्दे।

† आर्य्ये! दशरथे आगते कुमाराणां गोदानमङ्गले च संवृत्ते तावन्मया प्राप्तं मिथिलानगरम्।

प्रतिक्षणेति।—प्रतिक्षणं क्षणे क्षणे, या जृम्भा जृम्भणं, मुखव्यादानपूर्वकवायु-ग्रहणानन्तरनि:सारणमित्यर्थ:, "हाइ" इति प्रसिद्धा, तया प्रसारितं विवृतीभूतं, यत् मुखकुहरं वदनविवरं, तेन दृष्ट: हृदयस्थित: काठिन: कठोर:, दुर्वह: इति यावत्, कार्य्यभार: कर्मबाहुल्यं यस्य तादृश:।

(ण) गुरुक: गुरुरेव गुरुक: महानित्यर्थ:। स्वार्थे कन् प्रत्यय:।

(त) साहसैकरसेति।—साहसे सहसा बलेन क्रियमाणे कर्मणि, एकरस: एकान्तानुरागसम्पन्न इत्यर्थ:, एकमात्र इत्यर्थो वा, व्यवसाय: उद्योग: यस्य तथाभूतस्य। चण्डचरितस्य उग्रस्वभावस्य, तीव्रपराक्रमस्य इति भाव:।

(थ) जानामि मन्ये।

(द) प्रतिपालयन् प्रतीक्षमाण:।

(ध) गोदानमङ्गले गोदानरूपं मङ्गलं माङ्गलिककार्य्यं, क्षत्रियाणां समाव-र्त

माल्यवान्। (निःश्वस्य)। अतिप्रकाशोऽयमर्थो (न) यथा निर्वृत्तस्वीकरणा (प) जानकीति।

सूर्पणखा। अध इं। *

माल्यवान्। (विमृश्य)। अहो! दुरात्मनः क्षत्रियब्राह्मणस्य कुशिकजन्मनो दुर्नाटकम् (फ)—

यज्ञोपप्लवशान्तये परिणतो राजा सुतं याचित-
स्तं चानीय विनीय चायुधविधौ ते जघ्निरे राक्षसाः।
त्रैयक्षं विदलय्य कार्मुकमथ स्वीकार्य्य सीतामितो
नो विद्मः कुहनाविटेन वटुना किं तेन कारिष्यते? ॥११॥

* अथ किम।

सिद्धमिति भाव तस्मिन्। केचित्तु गवा लोम्ना, केशानामित्यर्थः, "गोनाऽऽदित्ये बलीवर्दे ‥। रश्मिदृग्बाणलोमसु॥" इति केशवः, दान छेदनरूपं संस्कारकर्म, तदेव मङ्गलं तस्मिन्। "दो य च्छेदे" इत्यस्मात् भावे ल्युट्-प्रत्ययः।

(न) अर्थः विषयः।

(प) निर्वृत्तस्वीकरणा निर्वृत्त समाप्त, स्वीकरणम आत्मीकरणं, पत्नीत्वेन परिग्रहणमित्यर्थः यस्याः सा तादृशी, समाप्तपरिणयेत्यर्थः। "निर्वृत्तस्वीकरणा" इत्यत्र "निर्वृत्तस्वीकरणा" इति पाठ साधु, निर्वृत्त सिद्ध, निष्पन्नमित्यर्थ.. "सिद्धे निर्वृत्त-निष्पन्नौ" इत्यमरः, अन्यत् समानम।

(फ) दुर्नाटक दुष्टाभिनयः, दुश्चेष्टेति यावत।

यज्ञेति।—यज्ञस्य उपप्लव विघ्नः, तस्य शान्तये निवारणाय, परिणतः वृद्धः, राजा दशरथः, सुतं पुत्रं, राममित्यर्थः, याचितः प्रार्थितः, विश्वामित्रेणेति शेषः, तञ्च सुतं रामम्, आनीय, स्वाश्रममिति शेषः, आयुधविधौ अस्त्रविधाने, विनीय शिक्षयित्वा च, ते महावीरत्वेन प्रसिद्धाः, राक्षसाः सुबाहुप्रभृतय इति यावत, जघ्निरे निहताः; अथापि विश्वामित्रेणेति शेषः, अथानन्तरं, त्रैयक्षं शाम्भवं, कार्मुकं धनुः, विदलय्य भञ्जयित्वा, सीतां स्वीकार्य्य परिणाय्य, कुहनाविटेन कुहनाया छलकर्मणि, विटः धूर्त्त. तथाविधेन, वञ्चनाचतुरेणेत्यर्थः, तेन वटुना ब्राह्मणेन, कौशिकेनेत्यर्थः. इतः अस्यां लङ्कायां, किं कारिष्यते, रामेणेति शेषः, तत् नो विद्मः न जानीमः। शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

शूर्पणखा। अज्ज! एव्वं णेदम्। सो मए तत्थ बम्हणो वसिट्ठमहेसिणो वि फुरंतो (ब) दिट्ठो। *

माल्यवान्। (विहस्य)। वत्से! तपोभिरस्य ब्राह्मणादेशोऽपि स्थानिवद्भावेन क्षत्रकार्य्यं न जहाति (भ)। किञ्च, स्वभावमधुरोऽपि काकुत्स्थवटुरौत्पत्तिकेन क्षात्रेण ब्राह्मण्येन च जन्मना त्रिजातकादस्मान्मुनेरधीयानोऽधरीणं परिणंस्यते (म)। तथा हि—

* आर्य्ये! एवमेतत्। स मया तत्र ब्राह्मणो वशिष्ठमहर्षेरपि स्फुरन् दृष्टः।

(ब) स ब्राह्मणः कौशिक इति यावत्। वशिष्ठमहर्षेरपि वशिष्ठ महर्षिमपेक्ष्यापीत्यर्थः, ल्यबर्थे पञ्चमी। स्फुरन् दीप्यमानः।

(भ) ब्राह्मणादेशः क्षत्रियस्यापि ब्राह्मणत्वेनातिदेशः, ब्रह्मण्ये स्थितिरिति भावः, स्थानिवद्भावेन स्थाने स्थितिः, प्राकृतधर्मः इत्यर्थः अस्यास्तीति स्थानी, स चात्र क्षत्रजातिः, तेन तुल्यं स्थानिवत्, तस्य भावस्तेन, उक्तञ्च मुग्धबोधे बोपदेवगोस्वामिना "स्थानिवदादेशः" इति। क्षत्रकार्य्यं क्षत्रियोचितमारणादिरूपं, न जहाति न त्यजति।

(म) स्वभावमधुरः निसर्गसुन्दरः। काकुत्स्थवटुः काकुत्स्थवंशीयब्रह्मचारी, राम इत्यर्थः। औत्पत्तिकेन उत्पत्तिर्जन्म तत्सम्बन्धिना, क्षात्रेण क्षत्रतेजसेत्यर्थः, ब्राह्मण्येन ब्रह्मतेजसा च, ततश्च ब्राह्मण्येन जन्मना तपोर्जितेन ब्राह्मण्यलाभेनेति भावः, त्रिजातकात् जन्मत्रययोगिनः, अथ च त्रिभिर्जातादिति वाक्पारुष्यमिति बोध्यं, मुनेर्विश्वामित्रात्, अधीयानः अध्ययनं कुर्वन्, अधरीणं धिक्कृतं, निन्दितं यथा तथा इत्यर्थः, "अधरीणो धिक्कृतः" इति अमरः; "अधरीणः" इति पाठान्तरम्; परिणंस्यते निन्दितरूपेण परिणतो भविष्यति, असत्सङ्गादसदेव जायते इति भावः। पुरा श्वशुरस्य गाधिनृपतेः स्वस्य च पुत्रार्थं जमदग्निर्महर्षिश्चरुं कृतवान्। ततश्च यज्ञीयचरोरेकमंशं ब्रह्मतेजसा अपरमंशं क्षत्रतेजसा अभिमन्त्रितमासीत्। तयोश्च ब्रह्मतेजोऽभिमन्त्रितं चरुभागं गाधिमहिषी अनवधानात् भक्षितवती। अपरं क्षात्रतेजोऽभिमन्त्रितं तत्कान्ता रेणुका भक्षितवती। ततश्च गाधिसुतो विश्वामित्रः ब्रह्मतेजोऽभिमन्त्रितचरोरुत्पन्नत्वात् क्षात्रं ब्राह्मण्यञ्च जन्मत एव लब्धवान्, पुनश्च तपसा ब्राह्मणत्वमित्यस्य त्रिजातकत्वमिति पुराणवार्त्ताऽत्रानुसन्धेया।

अविनयभुवामज्ञानानां शमाय भवन्नपि
प्रकृतिकुटिलाद्विद्याऽभ्यासः खलत्वविवृद्धये।
फणिभयभृतामस्तूच्छेदक्षमस्तमसामसौ
विषधरफणारत्नालोको भयं तु भृशायते॥ १२॥

भवतु, किमतिक्रान्तोपवर्णनेन (य)। कथं त्विदानीं स्वयं ग्रहीतुमुत्तिष्ठमानो (र) राक्षसपतिः प्रतिकर्त्तव्यः (ल) स्यात्?

सुर्पणखा। अज्ज! ण क्खु मोट्टिमं परिहरंतो (व) अस्सो उवाओ लक्खीअदि।*

माल्यवान्। वत्से! मा मैवम्; महादोषो हि तादृशेन धर्मविजयिना वीरप्रवालेन परिगृहीताया वैदेह्याः प्रसह्यापहारः (श)। पश्य—

* आर्य्ये। न खलु मोट्टिमं परिहरतोऽन्य उपायो लक्ष्यते।

अविनयभुवामिति।—अविनयभुवां दुर्नयजनकानाम्, औद्धत्यसम्पादकानामित्यर्थः, अज्ञानानां शमाय शान्तये, भवन्नपि प्रभवन्नपि, शक्नुवन्नपीत्यर्थः, प्रकृतिकुटिलात् स्वभावक्रूरात्, जनादिति शेषः, विद्याऽभ्यासः विद्याशिक्षा, खलत्वस्य दौर्जन्यस्य, विवृद्धये विशेषेण वर्द्धनाय, भवतीति शेषः, तथा हि, असौ विषधरस्य भुजङ्गस्य, फणारत्नालोकः फणास्थितमणिप्रभा, फणिभयभृतां सर्पभीतिजनकानां, तमसाम् अन्धकाराणाम्, उच्छेदक्षमः विनाशसमर्थः, अस्तु भवतु, तु किन्तु, भयं भृशायते भृशम् अत्यर्थं भवतीत्यर्थः, प्रकृतिसुन्दरस्यापि दुर्जनसङ्गात् दौर्जन्यं जायते इति भावः। हरिणी वृत्तम्॥ १२॥

(य) अतिक्रान्तोपवर्णनेन अतिक्रान्तस्य अतीतस्य, उपवर्णनेन आलोचनया।

(र) स्वयमात्मना, ग्रहीतुम् आदातुं, बलान्नेतुमित्यर्थः, हर्त्तुमिति भावः, सीतामिति शेषः। उत्तिष्ठमानः यतमानः।

(ल) प्रतिकर्त्तव्यः प्रतिविधेयः, निवारणीय इति यावत्।

(व) मोट्टिमं बलात्कारम्। परिहरतः त्यजतः, रावणस्येति शेषः। "परिहरंतो" इत्यस्य "परिहरन्" इति संस्कृतं साधु, बलात्कारं त्यजन्, बलात्कारं विनेत्यर्थः।

(श) वीरप्रवालेन वीराङ्कुरेण, बालकवीरेणेति यावत्। प्रसह्यापहारः बलात् अपहरणं, महान् दोषो यत्र तादृशः।

दोःस्तम्भद्वयदर्पडम्बरमिति स्पष्टं न विस्पन्दते
वैदेहीकरबन्धसूचनमिति प्रस्तौति न व्रीडया ।
इत्यालोच्य कृतास्मितैर्मुनिभिरादिष्टेन येन क्षणा-
दात्तं वन्दितमाश्रितं च सहसा भग्नं च तादृग्धनुः ॥ १२ ॥

तत् कथञ्च तस्मिन्निशाचरनाथमाततायिनम् (घ) अनुजानीमः ?

शूर्पणखा । (निःश्वस्य)। जधा णिरूविदं मादामहेण । अम्मो ! कालस्स माहप्पं, जं दाणिं तिहुअणजअलच्छीलीलावंदिआरे (ङ) महाराअरावणे वि एव्व मंतीअदि । *

---

* यथा निरूपितं मातामहेन । अहो ! कालस्य माहात्म्यं, यदिदानीं त्रिभुवनजयलक्ष्मीलीलाबन्दीकारे महाराजरावणेऽप्येवं मन्त्र्यते ।

---

दोःस्तम्भेति ।—दोःस्तम्भयोः बाहुरूपस्तम्भयोः, द्वयस्य यो दर्पः अहङ्कारः, तस्मात् डम्बरम् आडम्बरं, स्पर्द्धेति यावत्, प्रकटितं स्यादिति शेषः, इति, मत्वेति शेषः, स्पष्टं स्फुटं यथा तथा, न विस्पन्दते न विकम्पते, न चञ्चलो भवतीत्यर्थः, न विकत्थते इति यावत्, तथा वैदेह्याः सीतायाः, करबन्धः पाणिपीडनं, परिणयः इत्यर्थः, तस्य सूचनं ज्ञापनं, हरशरासने ज्यायोजनं कर्त्तुमिच्छामीति कथने सीतापाणिग्रहणेच्छा प्रकटीभविष्यतीति भावः, इति व्रीडया लज्जया, न प्रस्तौति न प्रस्तावं करोतीत्यर्थः, ज्यारोपणस्य इति भावः, उभयत्र राम इति कर्त्तृपदमूह्यम्; इति इत्थम्, आलोच्य विविच्य, रामस्य विनयादिगुणवत्त्वादिति भावः, कृतास्मितैः, अन्तरीषत् हसद्भिः, मुनिभिः शतानन्दादिभिः, आदिष्टेन आज्ञप्तेन, येन रामेण, क्षणात् अत्यल्पकालेनैव, तादृक् विशालम् अपराजेयं वा, धनुः आत्तं गृहीतं, वन्दितं नमस्कृतम्, आश्रितं मानितञ्च, सहसा अकस्मात्, बलात् वा, भग्नञ्च खण्डितञ्च । नात्र "मुनिभिरा" इत्यत्र द्वादशेऽक्षरे यतिभङ्गदोषः, स्वरविहितसन्धेरसद्भाव एव तस्य दोषत्वेनाभिधानात्, यदुक्तं छन्दोमञ्जर्याम्—"क्वचिच्छन्दस्यान्ते यतिरभिहिता पूर्वकृतिभिः पदान्ते सा शोभां व्रजति पदमध्ये व्यजति च । पुनस्तत्रैवासौ स्वरविहितसन्धिः श्रयति तां यथा कृष्णः पुष्णात्वतुलमहिमा मां करुणया ॥" इति । शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥

(घ) आततायिनं दारापहारिणम् । तथा च स्मृतिः,—"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षडेते आततायिनः ॥" इति ।

(ङ) त्रिभुवनेति ।—त्रिभुवनस्य लोकत्रयस्य, जयलक्ष्म्याः विजयसम्पदः, लीलया क्रीडया, अवहेलयेत्यर्थः, बन्दीकारः बलात् बन्धनकर्त्ता तस्मिन् ।

माल्यवान्। वत्से!—

मुनिरपि गुरुर्दिव्यास्त्राणां बभूव दिवौकसा-
मजगवधनुर्भङ्गे तावानहो! स महोत्सवः।
रघुपतिगुणक्रीतामेतामवेहि जगत्त्रयीं
विपरिणमते दौर्जन्यं तु प्रभुत्वमदेन नः॥ १४॥

शूर्पणखा। को संदेहो, तस्सिं विआहमहूसवे सव्वं मए पच्चक्खीकिदं। *

माल्यवान्। तदेवमेकलोष्टवधः स्यात् (ख)। तथा हि, मिथिलां प्रविश्य बलादाकृष्यमाणे कलत्रे कथं तितिक्षेत (क) रघुराजपुत्रः? तं चोत्तिष्ठमानं पौर जानपद प्रकृतयोऽप्यनु-

* कः सन्देहः, तस्मिन् विवाहमहोत्सवे सर्वं मया प्रत्यक्षीकृतम्।

मुनिरिति।—मुनिः विश्वामित्रः, दिव्यानाम् अलौकिकानाम्, अस्त्राणां जृम्भकादीनां, गुरुः आचार्य्यः, बभूव, रामं दिव्यास्त्रसम्प्रदाये सुशिक्षितमकरोदिति भावः, अहो। आश्चर्य्यम्, अजगवधनुः पिनाकः, "पिनाकोऽजगवं धनुः" इत्यमरः, तस्य भङ्गे दिवौकसामपि देवानामपि, तावान् अत्यधिक इति यावत्, स अस्माभिर्दृष्ट इत्यर्थः, महोत्सवः महान् आनन्दः, अभूदिति शेषः, देवधनुर्भङ्गे देवानां क्रोधो दूरेऽस्तु, प्रत्युत महोत्सव इति देवा अपि रामपक्षपातिन इति भावः, अतः एतां जगत्त्रयीं त्रिलोकीं, रघुपतेः रामस्य, गुणैः शौर्य्यादिना, क्रीताम् आयत्तीकृताम्, अवेहि जानीहि, तु परन्तु, केवलमिति भावः, नः अस्माकं, दौर्जन्यं खलत्वं, प्रभुत्वमदेन वयमेव जगत्प्रभव इति गर्वेण, विपरिणमते विपर्य्यस्यति, वयमेव रामविद्वेषिण इति भावः। हरिणी वृत्तम्॥ १४॥

(ख) तत् तस्मात्, एवं रावणेन बलात् तत्कलत्रहरणे, कृते सतीति शेषः, एकलोष्टेति।—एकस्य एकाकिनः, रावणस्येति भावः, लोष्टैः मृत्खण्डैः, बहुभिर्जनैः प्रक्षिप्तैरिति भावः, वधः विनाशः, स्यात्।

(क) कथं तितिक्षेत क्षमेत, नैव क्षमेतेत्यर्थः।

तिष्ठेरन्, किमङ्ग! सम्बन्धिबान्धवाः? (ख) यथोक्तम्— "आरण्यः (ग) अग्निरिव दुःसहदुःखामर्षजं तेजो विक्रमयति, मण्डलस्य चानुग्राह्यो (घ) भवति" इति।

शूर्पणखा। (दीर्घमुष्णं च निःश्वस्य)। अज्ज! किं दाणिं जुत्तं? *

माल्यवान्। शृणु वत्से! कार्य्यज्ञाऽसि। अस्ति वनौकसां (ङ) मन्त्री जाम्बवान्। स मतङ्गाश्रमवास्तव्यामुपसृत्य (च) श्रमणां नाम सिद्धशबरीमभ्यर्थितवान्, यथा अस्य बालिनो द्वैराज्येन क्षोणा लुब्धापवारिताः प्रकृतयः (छ) किष्किन्धायां

---

* आर्य्ये। किमिदानीं युक्तम्?

---

(ख) तत्र रामम्, उत्तिष्ठमानं युद्धाय उद्यच्छन्तं, रावणेन युध्यमानमिति यावत्। पौरेति।—पौराः पुरवासिनः, जानपदाः देशवासिनः, प्रकृतयः प्रधानपुरुषाः राजामात्यादयः। अनुतिष्ठेरन् राममनुसरेयुरित्यर्थः। किं, वक्तव्यमिति शेषः। अङ्ग। सम्बोधने। सम्बन्धिबान्धवाः सम्बन्धिनः वैवाहिकसम्बन्धात् सम्पर्कविशिष्टा, बान्धवाः स्वजनाः, एते यत् राममनुतिष्ठेरन् तत्र किं वक्तव्यम्? इति भावः।

(ग) आरण्यः वन्यः।

(घ) दुःसहेति।—दुःसहेन सोढुमशक्येन, दुःखेन मनःपीडया इत्यर्थः, यः अमर्षः क्रोधः, तज्ज तदुत्पन्नं, तेजः प्रतापः, सामर्थ्यविशेष इति यावत्, विक्रमयति प्रचण्डपराक्रमं प्रदर्शयति, महाविक्रमेण योधयतीति यावत्। मण्डलस्य राजचक्रस्य, राजसमूहस्येत्यर्थः। अनुग्राह्यः अनुकम्पनीयः, अनुसरणीय इति भावः, दुःखभाक् जन इति शेषः।

(ङ) वनौकसां वानराणाम्।

(च) मतङ्गेति।—मतङ्गस्य मुनेः आश्रमे वास्तव्यं वासो यस्याः ताम्। उपसृत्य उपेत्य।

(छ) द्वैराज्येन राजद्वयेन, स्वस्य राज्ञः सुग्रीवस्य च राज्ञः तयोर्द्वयोः आत्म-

कुमारसुग्रीवमभिषेक्ष्यमाणाः सामवायिकं रामभद्रमपेक्षन्ते (ज)।

शूर्पणखा। (सातङ्कम्)। कधं खत्तिअपोदओ (झ) बालिणिग्गहे वि सहाओ समीहीअदि। तदो तदो? *

माल्यवान्। ततश्चायोध्यातः (ञ) कैकेय्या भरतवार्त्ताहरणाय (ट) प्रेषिता मन्थरा नाम स्थविरदासी (ठ) कठोरतरतरणितापवज्रानलज्वालाऽवलीढजीविता मिथिलाप्रान्तरे (ड) तिष्ठतीति निदाघकिरणान्तेवासी सतीर्थम् (ढ) ऋषिं याज्ञ-

---

* कथं क्षत्रियपोतको बालिनिग्रहेऽपि सहायः समीह्यते। ततस्ततः?

---

साक्षरणेनेति भावः। क्षीणाः दुर्बलाः, राज्यापहरणादिति भावः, लुब्धाः लोभपरायणाः, राज्याकाङ्क्षिण इत्यर्थः, अत एव अपवारिताः निवारिताः, राज्यात् बहिष्कृता इत्यर्थः प्रकृतयः प्रधानपुरुषाः, सुग्रीवामात्या इति यावत्।

(ज) अभिषेक्ष्यमाणाः राजपदाभिषिक्तं करिष्यन्त इति यावत्। सामवायिकं समवायान् सङ्घान् सङ्गच्छतीति तथोक्तं, सहायकमिति यावत्। अपेक्षन्ते प्रतीक्षन्ते, रामं सहायं कृत्वा बालिनिग्रहाय यतन्ते इति भावः।

(झ) क्षत्रियपोतकः क्षत्रियशिशुः।

(ञ) अयोध्यातः अयोध्यानगरात्।

(ट) भरतेति।—भरतस्य विवाहार्थं मिथिलां गतस्येति भावः, वार्त्ताहरणाय संवादानयनार्थम्।

(ठ) स्थविरदासी वृद्धा किङ्करी।

(ड) कठोरेति।—कठोरतरः अतिदुःसहः, तरणितापः सूर्य्यसन्ताप एव, वज्रानलः अशनिनिसृताग्निः, तस्य ज्वालाभिः शिखाभिः, सन्तापैरिति यावत्, अवलीढम् आक्रान्तं, जीवितं यस्याः तथाविधा। मिथिलाप्रान्तरे मिथिलायाः दूरशून्ये छायाजलादिविरहिते अध्वनि, "प्रान्तरं दूरशून्योऽध्वा" इत्यमरः।

(ढ) निदाघेति।—निदाघकिरणस्य उष्णरश्मेः, सूर्य्यस्येत्यर्थः, अन्तेवासी शिष्यः। सतीर्थं सहाध्यायिनम्, एकगुरुकमिति यावत्, याज्ञवल्क्य हनूमतोरुभयोरेव सूर्य्यशिष्यत्वात् सतीर्थत्वम्। "सतीर्थ्यास्त्वेकगुरवः" इत्यमरः।

वल्कामुपस्थाय (ण) सम्प्रत्येव निमिषमात्रान्निवृत्तो हनूमान् कथयति। अतस्त्वमप्यस्मदनुरोधेन हनूमत्प्रत्यवेक्षित-स्वशरीरा परपुरप्रवेशविद्यया (त) मन्थराशरीरमधितिष्ठन्ती (थ) मिथिलामुपेत्य प्रत्ययिता संविधानकमिदं दशरथगोचरीकरिष्यसि (द)। इत्थम्भाविना (ध) गुरु-निदेशचर्य्याप्रसङ्गेन (न) पङ्क-पाषाण-विषम-कण्टक-व्यालकुल-बहुलामरण्यानीम् (प) अनुप्रविष्टः सर्वथा वैदेशिको राजपुत्रः (फ) कार्य्यगौरवान्नियतमेव (ब) वालिवधपूर्वकेण प्रतीकारसन्धिना सम्बन्धेन सुग्रीवमुपगह्लीयादिति (भ)।

---

(ण) उपस्थाय आराध्य, वन्दित्वेत्यर्थः।

(त) हनूमदिति।—हनूमता प्रत्यवेक्षितम् अवधानेन रक्षितं, यद्वा—प्रत्यवेक्षितं प्रतिकूलदृष्टं, द्रष्टुमशक्यमिति भावः, स्वशरीरं निजदेहः यस्याः तथाभूता। परपुरेति।—परस्य पुरं शरीरं, तस्मिन् प्रवेशविद्यया प्रवेशसाधन्या विद्यया।

(थ) अधितिष्ठन्ती आश्रयन्ती।

(द) प्रत्ययिता जनितविश्वासा। संविधानकं कर्म वक्ष्यमाणं रामवनवास-भरत-राज्यदानरूपं कैकेय्या अभिप्रेतमिति भावः। दशरथगोचरीकरिष्यसि दशरथाय निवेदयिष्यसीत्यर्थः।

(ध) इत्थम् अनेन प्रकारेण, एवंविधकौशलेनेति यावत्, भाविना भविष्यता।

(न) गुरुनिदेशेति।—गुरोः पितुः, निदेशः आज्ञा, तस्य चर्य्या प्रतिपालनं, तत्-प्रसङ्गेन तदनुरोधेनेत्यर्थः।

(प) पङ्केति।—पङ्कैः कर्दमैः, पाषाणैः प्रस्तरैश्च, विषमा अवनतोन्नता, तथा कण्टकैः व्यालकुलैः हिंस्रजन्तुवृन्दैश्च, बहुला पूर्णा ताम्। अरण्यानीं महारण्यं, "महारण्यमरण्यानी" इत्यमरः।

(फ) वैदेशिकः भिन्नदेशभवः, ततदरण्यप्रदेशस्थमार्गानभिज्ञ इति भावः। राजपुत्रः रामः।

(ब) नियतमेव निश्चितमेव।

(भ) प्रतीकारसन्धिना प्रतीकारे साहाय्यकरणे, सुग्रीवकर्तृके इति भावः, सन्धिः आश्रयः यत्र तथाभूतेन, यद्वा—प्रतीकाराय वालिकर्तृकराज्यहरणस्य प्रतिविधानाय,

शूर्पणखा। (सकौतुकम्)। अज्ज! किं तं संविहाणअं? *

माल्यवान्। (कर्णे)। एवमेवम्। (इति कथयति)।

शूर्पणखा। (हसन्ती)। अहो! बुड्ढरिच्छस्स (म) कुडिलदा। तदो तदो? †

माल्यवान्। ततश्च साऽपि शबरयोगिनी (य) सुग्रीवगुणानुरोधेन सर्वमोमित्युररीकृत्य (र) तदैव विदेहाभिमुखी (ल) प्रस्थितेति मे जनस्थानविहारिभिः (व) निशाचरैरागत्य निवेदितम्। तदमुना च जाम्बवत्प्रयोगेण फलता (श) विराधप्रभृतिभिरधिष्ठितेषु विन्ध्यगिरिगह्वरेषु विहरतो रामस्य सुकरं कलत्रापहरणम्। अस्मदीयास्तु मायाः (ष) सुरासुरप्रथमरेखयोधस्य (स) युद्धमुदितविबुधपतिना

---

* आर्य! किं तत् संविधानकम्?

† अहो! वृद्धऋक्षस्य कुटिलता। ततस्ततः?

---

सन्धिर्मेलनं यत्र तेन, यद्वा—प्रतीकारसन्धिः परस्परोपकारकरणार्थं सम्मेलनं तथाभूतेन, उक्तञ्च चाणक्येन—"मयाऽस्योपकृतं पूर्वमयं मामुपकरिष्यति। इति यः क्रियते सन्धिः प्रतीकारः स उच्यते॥ उपकारं करोम्यस्य ममाप्येष करिष्यति। अयं चाऽपि प्रतीकारो रामसुग्रीवयोरिव॥" इति, सम्बन्धेन संश्लेषेण। उपगच्छेयात् सहाय कुर्य्यादित्यर्थः।

(म) वृद्धऋक्षस्य स्थविरभल्लूकस्य।

(य) शबरयोगिनी सिद्धशबरी।

(र) ओम् इति अनुमतार्थकमव्ययम्; "ओमेवं परमं मतम्" इत्यमरः। उररीकृत्य हृदये कृत्वेत्यर्थः। "उररीकृत्य" इति पाठे—स्वीकृत्येत्यर्थः।

(ल) विदेहाभिमुखी मिथिलाभिमुखी।

(व) जनस्थानविहारिभिः दण्डकारण्यान्तर्गतस्थानविशेषसञ्चारिभिः।

(श) जाम्बवत्प्रयोगेण जाम्बवतः कौशलेन। फलता सिद्धिं गच्छता।

(ष) मायाः कपटाचरणानि, शाम्बरीविद्या वा, अदृश्योभवनादिरूपा इति भावः, "स्यान्माया शाम्बरी" इत्यमरः।

वितीर्णमायाहरणमन्त्रधारिणो (छ) दशरथस्य सन्निधौ न प्रभवन्ति (क)।

शूर्पणखा। (सविचिकित्सम् (ख))। अज्ज! उवणदस्स एव्वं (ग) करीअदि। *

माल्यवान्। (विहस्य)। वत्से! साधु, वृद्धसंवादिनी (घ) ते दृष्टिः (ङ)। यदाहुः,—"यो ह्युपनतस्य पुत्रदारानतिमन्यते, तस्योद्विग्नं मण्डलमभावायोपतिष्ठते" इति। किं पुनरस्मासु नैष निसर्गतेजस्वी संश्रयप्रवृत्तिमातिष्ठते? (च)

---

* आर्य्य! उपनतस्यैवं क्रियते।

---

(च) सुरासुरेति।—सुरासुरयो: देव-दानवयोर्मध्ये, प्रथमा श्रेष्ठा, रेखा सङ्ख्याङ्क यस्य तथाभूतो यो वीर: वीर: तस्य, अग्र्यवीरस्येति यावत्।

(छ) युद्धेति।—युद्धेन देवासुरसङ्ग्रामे देवपक्षमवलम्ब्य युद्धकरणेन, युद्धे दैत्यविताडनेनेति भाव:, मुदित: प्रीत:, विबुधानां देवानां, पतिरिन्द्र: तेन। वितीर्णेति।—वितीर्ण: दत्त:, य: मायाहरणमन्त्र, शाम्बरीविद्याप्रभावविनाशनमन्त्र:, तं धारयति वहति, जानातीत्यर्थ: तथोक्तस्य।

(क) न प्रभवन्ति न प्रभाव प्रदर्शयितुं शक्नुवन्ति, न सिद्धिं लभन्तीति भाव:।

(ख) सविचिकित्सं ससंशयम्।

(ग) उपनतस्य समीपागतस्य, रामस्येति शेष:, एवं कलत्रापहरणमिति यावत्।

(घ) वृद्धसंवादिनी वृद्धानां प्रवयसां, विज्ञानामिति यावत्, संवादिनी अनुमोदिनी अनुसारिणी वा।

(ङ) दृष्टि: ज्ञानम्।

(च) उपनतस्य समीपागतस्य, शरणागतस्येति यावत्। अतिमन्यते हरतीत्यर्थ:। मण्डलं राष्ट्रम्, उद्विग्नं शङ्कितं, कदाचिदस्माकमपि एवं करिष्यतीति शङ्कयेति भाव:। अभावाय विनाशाय। उपतिष्ठते प्राप्नोति। किं पुन: किन्तु, निसर्गतेजस्वी स्वभावेन तेजस्वल:, एष राम इति यावत्। संश्रयप्रवृत्तिं समाश्रयेण वर्त्तनं, न केवलमित्यर्थ:, आतिष्ठते अङ्गीकरोति।

शूर्पणखा। हूं, (क) अस्सं भणामि, आवि एव्वं (ज) करिस्सदि रामभद्दो ? *

माल्यवान्। कः संशयः (झ)। लोकोत्तरं हि किमपि उन्मीलयन्तो (ञ) जगति राज्योपभोगेभ्योऽपि बीभत्सन्ते महानुभावाः (ट)।

शूर्पणखा। अस्स वि किं वि अणत्थंतरं (ठ) अत्थ पड़िदमिति तक्केमि। †

माल्यवान्। (सदर्पम्)। किं तत् ?

शूर्पणखा। मए जणअणअरादो (ड) णिक्कंतीए सुदं, यथा—खुडिदसिरिकंठसरासणस्स (ढ) दासरहिणो मच्छरेण (ण) सअलखत्तिअकिदंतो परसुरामो परागदो (त) त्ति। ‡

---

* हूम्, अन्यत् भणामि। अप्येवं करिष्यति रामभद्रः ?

† अन्यदपि किमप्यनर्थान्तरमत्र पतितमिति तर्कयामि।

‡ मया जनकनगरान्निष्क्रान्तया श्रुतं, यथा—खण्डितश्रीकण्ठशरासनस्य दाशरथेर्मात्सर्य्येण सकलक्षत्रियकृतान्तः परशुरामः परागत इति।

---

(क) हूं प्रश्ने. "हूं प्रश्नेऽङ्गीकृतौ रोषे" इति विश्वः।

(ज) अपि प्रश्ने। एवं पितृनियोगेन दण्डकारण्यप्रवेशमिति भावः।

(झ) कः संशयः संशयो नास्तीत्यर्थः।

(ञ) लोकोत्तरम् अलौकिकं, किमपि अनिर्वचनीयमित्यर्थः, वस्तु इति शेषः। उन्मीलयन्तः प्रकटयन्तः।

(ट) बीभत्सन्ते जुगुप्सन्ते, राज्यभोगादीन् तुच्छीकृत्य निन्दन्तीत्यर्थः। महानुभावाः महाप्रभावाः।

(ठ) अनर्थान्तरम् अनिष्टविशेषः।

(ड) जनकनगरात् मिथिलातः।

(ढ) खुडिदेति।—खुडितं दलितं, श्रीकण्ठस्य हरस्य, शरासनं धनुः येन तथाभूतस्य।

(ण) मात्सर्य्येण विद्वेषेण, "मत्सरोऽन्यशुभद्वेषः" इत्यमरः।

माल्यवान् । (सहर्षम्) । सर्वमुपपद्यते (थ)—

भुजार्गलितनर्मदामकरचक्रदंष्ट्राङ्कुर-
व्रणप्रकरकर्कशं किमपि बिभ्रदुग्रं वपुः ।
स येन परशौ हुतो नृपतिरर्जुनः कौतुका-
दसौ कथमुपेक्षते गुरुधनुर्व्यलीकं मुनिः ? ॥ १५ ॥

परन्तु (द) अनेनापि सकलमूर्द्धाभिषिक्तकण्ठकाण्ड-रुधिरावसेकपङ्किलकुठारेण दुरभिभवो (ध) दाशरथिः ।

---

(थ) उपपद्यते युज्यते, तस्यागमनं युक्तमेवेत्यर्थः ।

भुजेति ।—भुजाभिर्बाहुभिः, सहस्रेणेति भावः, अर्गलितायाः प्रतिरुद्धायाः, नर्मदायाः सोमोद्भवाख्य-नदीभेदस्य, यानि मकरचक्राणि जलजन्तुविशेषाः, तेषां दंष्ट्राङ्कुरैः सूक्ष्माग्रदशनैः, यः व्रणप्रकरः क्षतसमूहः, तेन कर्कश परुष, पुनः पुनः दन्ताघातेन सञ्जातकिणत्वात् कठिनमिति यावत्, किमपि अन्यत्रादृष्टपूर्व्वम्, उग्र भीषणम्, उन्नत वा, वपुः शरीरं, बिभ्रत् दधानः, सः प्रसिद्धः, नृपतिरर्जुनः कार्त्तवीर्य्यार्जुनः, येन कौतुकात् अवलीलयेत्यर्थः, परशौ कुठारे, हुतः दग्धः, विनाशित इति यावत्, असौ मुनिः परशुरामः, गुरोः शिवस्य, धनुर्व्यलीक चापविषयकाप्रियानुष्ठानं,धनुर्भङ्गापराधमित्यर्थः,"व्यलीकमप्रियाकार्य्य-वैलक्ष्येष्वपि पीडने" इति विश्वः ; कथम् उपेक्षते ? सहते ? नैव सहते इत्यर्थः । पुरा बाहुभिर्नर्मदाया जलस्रोतांसि रुद्ध्वा जलक्रीडां कुर्वतः कार्त्तवीर्य्यस्याङ्गानि जलजन्तुभिः क्षतानीति प्रसिद्धिः । पृथ्वीवृत्तम्—"ज-सौ ज स-य-ला वसुग्रहयतिश्च पृथ्वी गुरुः" इति तल्लक्षणात् ॥ १५ ॥

(द) परन्तु किन्तु ।

(ध) सकलेति ।—सकलानां मूर्द्धाभिषिक्तानां क्षत्रियाणां, "मूर्द्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्" इत्यमरः ; कण्ठाः गलदेशाः एव, काण्डाः दण्डस्थूलाच्छाखावधि स्थूलभागाः, तेभ्यः रुधिरावसेकेन रक्तस्रावेण, पङ्किलः कर्दमितः,

शूर्पणखा। (साभ्यसूयम् (न))। अहो! दुद्धमुहे (प) तस्सिं खत्तिअवटुए (फ) एव्वं संभावेदि मादामहो। *

माल्यवान्। वत्से! नैतज्जानासि?—

सर्वराजकदुर्द्धर्षं सर्वदेवमयं धनुः।
भञ्जता रामभद्रेण विजिग्ये भुवनत्रयम्॥ १६॥

इदानीं तु—

राजन्यरुधिराम्भोधि-कृतनिषवणो मुनिः।
प्राप्तः परशुरामोऽयं न विद्मः किं करिष्यति॥ १७॥

तदेहि राजकुलमेव गच्छावः। (इति निष्क्रान्तौ)।

विष्कम्भकः।

(नेपथ्ये)। भो भो जनकाग्निहोत्रपरिचारकाः! पाद्यं पाद्यम्। अर्घोऽर्घः (ब)।

---

* अहो! दग्धमुखे तस्मिन् क्षत्रियबटुके एवं सम्भावयति मातामहः।

---

(न) साभ्यसूय गुणेषु दोषारोपणमभ्यसूया, तत्सहित रामगुणप्रकटनासहनपुरःसरमित्यर्थः।

(प) दुग्धमुखे दुग्धपोष्ये, अतिशिशाविति भावः।

(फ) क्षत्रियबटुके क्षत्रियबालके।

सर्वेति।—सर्वैः राजकैः राजन्यैः, दुर्द्धर्षं धर्षितुमशक्यम्, अनमनीयमिति यावत्, भङ्क्तुमशक्यमित्यर्थो वा, सर्वदेवमयं सर्वदेवतात्मकं, सर्वेषां देवानां तेजोभिर्निर्मितत्वादिति भावः, धनुः भञ्जता रामभद्रेण भुवनत्रयं विजिग्ये जितमित्यर्थः। सर्वजनदुष्करकर्मकारी सर्वविजयी स्वत एव भवतीति भावः। अनुष्टुप् वृत्तम्॥ १६॥

राजन्येति।—राजन्यानां क्षत्रियाणां, स्वेन हतानामिति भावः, रुधिराम्भोधौ शोणितसागरे, कृतं निषवणं त्रिसन्ध्यस्नानं येन तादृशः, मुनिः परशुरामः, प्राप्तः उपस्थितः, अयं किं करिष्यति किमनुष्ठास्यति, न विद्मः न जानीमः, अत्र वाक्यार्थः सर्म। अनुष्टुप् वृत्तम्॥ १७॥

(ब) जनकेति।—जनकस्य विदेहाधिपतेः, यत् अग्निहोत्रं तदाख्ययागविशेषः, अग्नौ होमविधिरित्यर्थः, तस्य परिचारकाः भृत्याः। पाद्यं पादप्रक्षालनार्थं जलम्,

आजन्मब्रह्मचारी पृथुलभुजशिलास्तम्भविभ्राजमान-
ज्याऽऽघातश्रेणिसंज्ञाऽन्तरितवसुमतीचक्रजैत्रप्रशस्तिः।
वक्षःपीठे घनास्त्रव्रणकिणकठिने संक्षुवानः पृषत्कान्
प्राप्तो राजन्यगोष्ठीवनगजमृगयाकौतुकी जामदग्न्यः॥ १८॥

अपि च—

एष स्त्रैणकपोलकुङ्कुमलिपिस्तेयातिभीरौ भुजे
बिभ्राणश्चतुरन्तराजविजयि ज्यानादरौद्रं धनुः।
तूणाविव पुनस्तरां द्रढयति स्वादन्तरस्मात्पटा-
टाकृष्टैः कुशचीरतन्तुभिरभिक्रुद्धो मुनिर्भार्गवः॥ १९॥

क्रियतामिति शेषः, "अर्घोऽघः" इत्यत्र "अर्घ्यम् अर्घ्यम्" इति पाठे—अर्घार्थं पूजार्थं, देयं जलम्, "अर्घ्यमर्घार्थे पाद्यं पादाय वारिणि" इत्यमरः, त्वरया आदरेण वा द्विरुक्तिः।

आजन्मेति।—आजन्म जन्मन आरभ्य, ब्रह्मचारी अनुष्ठितब्रह्मचर्यः, सांसारिक-सुखभोगविमुख इति भाव, पृथुला महान्तौ, भुजावेव शिलास्तम्भौ पाषाणनिर्मितस्तम्भौ, तत्स्वरूपौ भुजौ इत्यर्थः, तयोः विभ्राजमाना विशेषेण राजमाना, सुस्पष्ट लक्ष्यमाणा इति यावत्, या ज्याऽऽघातश्रेणिः मौर्व्याकर्षणजनितकिणराजिः, तस्याः संज्ञया नाम्ना, तद्व्यपदेशेनेत्यर्थः, अन्तरिता आच्छादिता, वसुमतीचक्रस्य भूमण्डलस्य, जैत्रप्रशस्तिः जय-प्रशंसा यस्य तथोक्तः, ज्याऽऽघातपङ्क्तिव्याजेन सञ्जाता जयप्रशस्तीं बिभर्तीति भावः, घनानां कठिनानाम्, अस्त्राणां शराटीनां, व्रणैः क्षतैः, ये किणाः मांसग्रन्थयः, तैः कठिने कर्कशे, वक्षःपीठे वक्षोरूपशिलाफलके इति यावत्, पृषत्कान् बाणान्, संक्षुवानः तेजयन्, आघर्षणेन तीक्ष्णीकुर्वन् इत्यर्थः, राजन्यगोष्ठी क्षत्रियसमूह एव, वनगजाः आरण्य-हस्तिनः, तेषां मृगयायां कौतुकी स्पृहयालुरित्यर्थः, जामदग्न्यः परशुरामः, प्राप्तः उपस्थितः। स्रग्धरा वृत्तं—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति तल्लक्षणात्॥ १८॥

एष इति।—एष मुनिः भार्गवः परशुरामः, अभिक्रुद्धः अत्यर्थं कुपितः, ऐश्वर-धनुर्भङ्गादिति भावः, अत एव स्त्रैणाः स्त्रीसम्बन्धिनः, क्षत्रियाणामिति शेषः, कपोलाः गण्डभागाः, तेषु या कुङ्कुमलिपिः काश्मीरजविरचितपत्रलेखा, तस्याः स्तेयेन चौर्य्येण, वैधव्यसम्पादनात् दूरीकरणेनेति यावत्, अतिभीरौ अतिशङ्किते, भुजे बाहौ, चौरस्य सतत शङ्कितभावेनावस्थानस्य स्वाभाविकत्वादिति भावः, चतुरन्तराजविजयि चतुर्षु अन्तेषु दिगन्तेषु, दिक्षु इति यावत्, ये राजानः क्षत्रियाः, तेषां विजयि चतुर्दिङ्मण्डलस्थ-

(ततः प्रविशति शरचापहस्तः क्रोधोद्धतो जामदग्न्यः)।

जामदग्न्यः। (सखेदम्)। अहह !! यथा मृष्टभोजिना कृतान्तेन (भ) प्रत्यवसितास्ते सांयुगीनाः (म)। वर्त्तमाने तु (य)—

शस्त्राशस्त्रिकथैव का? नवभवद्गीर्वाणपाणिन्धमाः
पन्थानो दिवि सङ्कुचन्ति वसुधा वन्ध्या न सूते भटान्।
लक्ष्मीरप्यरविन्दसौधवलभीनिर्य्यूहपर्य्यङ्किका-
विश्रान्तैर्गलितैर्न कुञ्जरघटागण्डोद्गतैर्मोदते॥ २०॥

क्षत्रियजेता, ज्यानादेन मौर्वीशब्देन, रौद्रं भीषणं, धनुः बिभ्राणः दधानः सन्, खात् निखात्, अन्तरस्मात् अन्तरीयात् परिधानादित्यर्थः, "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये" इत्यमरः; पटात् वस्त्रात्, आकृष्टैः कुशचीरतन्तुभिः सूक्ष्मवल्कलसूत्रैः, कुशनिर्मितवल्कलबन्धनरज्जुभिरिति वा, तूणाविव बाणपूर्णतुणीराविव, पुनस्ताम् अतिशयेन, दृढयति दृढीकरोति। "चतुरन्तरीपविजयी" इति पाठे—चतुरन्तरीपस्य चतुर्द्वीपस्य विजयीत्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥ १९॥

(भ) मृष्टभोजिना मृष्टं स्वादु, यद्वा—मृष्टं शोधितं, विशुद्धमित्यर्थः, भुङ्क्ते इति तथोक्तेन, "निर्णिक्तं शोधितं मृष्टम्" इत्यमरः, कृतान्तेन यमेन।

(म) प्रत्यवसिताः खादिताः, "प्रत्यवसितगिलितखादितप्सातम्" इत्यमरः, ते सहस्रार्जुनादय इत्यर्थः। सांयुगीनाः रणपण्डिताः, "सांयुगीनो रणे साधुः" इत्यमरः। जगति वीरोत्तमा इदानीं न विद्यन्ते, यैः सह रणव्यापारेण आत्मनो युद्धकण्डूतिं निवारयामि इति परशुरामस्य खेदकारणम् "अहह" इत्यनेन प्रकटीभवति इति भावः।

(य) वर्त्तमाने तु सम्प्रति तु।

शस्त्राशस्त्रिकथेति।—शस्त्रैश्च शस्त्रैश्च प्रहृत्य यत् युद्धं कृतं तत् शस्त्राशस्त्रि, तस्य कथैव वार्त्तैव, का? नास्तीत्यर्थः, सम्मुखसमरं नास्त्येव इति भावः, नवाः नूतनाः, भवन्तः सम्पद्यमानाः, ये गीर्वाणाः देवाः, सङ्ग्रामहतानां क्षत्रियाणां सद्यो देवत्वलाभादिति भावः, तेषां पाणीन् धमन्ति पीडयन्तीति तथोक्ताः, सङ्ग्रामहतानामसङ्ख्यातत्वात् सङ्कटगमनादिति भावः, पन्थानः स्वर्गगमनमार्गाः, दिवि अन्तरीक्षे, सङ्कुचन्ति स्वल्पीभवन्ति, गमनागमनाभावात् न स्फुरन्तीति यावत्, सङ्ग्रामहतवीराभावादिति भावः, वसुधा पृथ्वी, वन्ध्या जननशक्तिरहिता, यतः भटान् वीरान्, न सूते न जनयति, लक्ष्मीरपि जयश्रीरपि, कुञ्जरघटानां साङ्ग्रामिकगजानां, गण्डेभ्यः कपोलेभ्यः, मदवारिसिक्तेभ्य इति भावः, उद्गतैः निर्गतैः, अरविन्दमेव पद्ममेव, सौधं हर्म्यं, तस्य या वलभी शिरोगृहं, सैव निर्य्यूहपर्य्यङ्किका नागदन्तनिर्मितपर्य्यङ्कः, "निर्य्यूह"

( सविमर्शाश्चर्य्यम् (र) )—

शम्भुर्यद्गुणवल्लरीमुपनयत्याकृष्य कर्णान्तिकं
भ्रश्यन्ति त्रिपुरावरोधसुदृशां कर्णोत्पलग्रन्थयः।
स्वं चास्फालयति प्रकोष्ठकमिमामुन्मुच्य तासामहो!
भिद्यन्ते वलयानि दाशरथिना तद्भग्नमैशं धनुः ॥ २१ ॥

( सरोष-विकटं परिक्रामन् )। भो भो विदेहाः! (ल) क्व रामो दाशरथिः?—

यस्मिन्नर्जुनदोःसहस्रनलकप्रोद्गच्छदसृक्छटा-
जिह्वाले जुहवाम्बभूविम रुषा राजन्यसत्रामपि।

---

शेखरे हारे निर्य्यासे नागदन्तके" इति विश्वः ; तत्र विश्रान्तैः अलिभिः भ्रमरैः, न मोदते न प्रीतिमनुभवतीत्यर्थः, वीराभावेन युद्धाभावात्, युद्धाभावेन च साङ्ग्रामिकगजाभावादिति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ २० ॥

(र) सविमर्शं सवितर्कम्।

शम्भुरिति।—शम्भुः शिवः, यस्य धनुषः, गुणवल्लरीं मौर्वीलताम्, आकृष्य कर्णान्तिकं कर्णसान्निध्यम्, उपनयति प्रापयति, किन्तु त्रिपुरावरोधसुदृशां त्रिपुरासुरान्तःपुरस्थस्त्रीणां, कर्णोत्पलग्रन्थयः कर्णोत्पलानां सन्धिबन्धनानि, भ्रश्यन्ति प्रच्यवन्ते, तथा इमां यद्गुणवल्लरीम्, उन्मुच्य विमुच्य, स्वं निजं, प्रकोष्ठकं कफोणेरधोभागम्, आस्फालयति सन्ताडयति च, शम्भुरिति पूर्वेणान्वयः, किन्तु तासां त्रिपुरावरोधसुदृशां, वलयानि कङ्कणानि, भिद्यन्ते भज्यन्ते, येन धनुषा त्रिपुरयोषितां पतिवधात् कर्णोत्पलादीनां विलासभूषणानां भ्रंश इति भावः, दाशरथिना रामेण, तत् पूर्वोक्तरूपम्, ऐशं शाम्भवं, धनुः भग्नम्, अहो! एतदाश्चर्य्यम्। अत्रैकस्य कर्णान्तिकनयने अपरासां कर्णोत्पलभ्रंश इति, तथा एकस्य प्रकोष्ठास्फालने अपरासां वलयभङ्ग इति च कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिरलङ्कारः, तदुक्तं दर्पणे—"कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिः" इति। शार्दूल-विक्रीडितं वृत्तम् ॥ २१ ॥

(ल) विदेहाः मैथिलाः, मिथिलावासिन इत्यर्थः।

यस्मिन्निति।—अर्जुनस्य कार्त्तवीर्य्यस्य, दोष्णां भुजानां, सहस्रमेव नलकं "नल" इति प्रसिद्धच्छिद्रपदार्थविशेषः, यद्वा—दोःसहस्राणां नलकं हस्तपादयोरस्थिविशेषः, तस्मात् प्रोद्गच्छन्ती निःसरन्ती, या असृक्छटा रुधिरधारा, तया जिह्वाले रसनाशालिनीत्यर्थः, रुधिराक्तत्वात् रुधिरपानाच्च इति भावः, यस्मिन् परशौ, रुषा क्रोधेन, राजन्यानां

सोऽयं प्राक्कवलग्रहस्य विघसीभूतेष्वपि क्षत्रिय-
क्षुद्रेषु क्षुधितश्चिरेण परशुस्तेनायमन्विष्यते ॥ २२ ॥

(ततः प्रविशति सधैर्य-प्रमोदो दाशरथी रामः) ।

रामः ।—

साकं शक्तिधरेण तत्रभवतो देवाद्भवानीपते-
र्यः सम्यक्समवाप चापनिगमं सम्यञ्चि सामानि च ।
शूराणाञ्च तपस्विनाञ्च परमां काष्ठामधिष्ठास्नुभि-
स्तेजोभिर्भगवानसौ भृगुपतिर्दिष्ट्याऽद्य दर्शिष्यते ॥ २३ ॥

जामदग्न्यः । (सखेदोपालम्भमात्मानं प्रति)—

भस्माङ्कुरेति खुरलीकलहे कुमार-
मप्याक्षिपन् परुषरोषमान्धचेताः ।
दृष्टोऽसि यः कृतमिथोहसितं शिवाभ्यां
तच्चापभङ्गमपि हा ! मद्गुणः शृणोमि ॥ २४ ॥

---

क्षत्रियाणां सतामपि भास्वतमपि जुहवान्वभूविम इत्यत्र, वर्तमानेति शेषः, येन परशुना क्षत्रियान् उन्मूलयामासिमेत्यर्थः, सोऽयं परशुः कुठारः, प्राक्कवलग्रहस्य प्राथमिक-ग्रासग्रहणस्य, विघसीभूतेषु भोजनशेषरूपेषु, पुरा यत् ग्रासग्रहणं कृतं तस्य शेषभूतेषु इत्यर्थः, "समृतं विघसो यज्ञशेष-भोजनशेषयोः" इत्यमरः, क्षत्रियक्षुद्रेषु क्षत्रियराजधामेषु सत्स्वपीत्यर्थः, चिरेण क्षुधितः क्षुधापीडितः, भोज्याभावादिति भावः, वर्तते इति शेषः, तेन परशुना हेतुना, यद्वा—परशोः क्षुधितत्वेन हेतुना, अयं रामः अन्विष्यते अनुसन्धीयते, मयेति शेषः । यद्वा—तेन परशुना इति कर्तृपदम् । शार्दूल-विक्रीडितं वृत्तम् ॥ २२ ॥

साकमिति ।—यः परशुरामः, शक्तिधरेण स्कन्देन, साकं सह, तत्रभवतः पूज्यात्, देवात् भवानीपतेः हरात्, सम्यक् सम्यग्रूपं, चापनिगमं धनुर्वेदं, सम्यञ्चि सम्यग्रूपाणि, सामानि सामवेदांश्च, समवाप प्राप्तवान्, शिक्षितवानित्यर्थः, शूराणाञ्च वीराणाञ्च, तपस्विनाञ्च मुनीनाञ्च, परमां काष्ठाम् उत्कर्षम्, अधिष्ठास्नुभिः आश्रयद्भिः, तेजोभिः प्रभावैः, उपलक्षित इति शेषः, विशेषणे तृतीया, महावीरश्च महामुनिश्चेति भावः, असौ अयं, भगवान् भृगुपतिः परशुरामः, दिष्ट्या भाग्येन, अद्य दर्शिष्यते प्रेक्षिष्यते, मयेति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥ २३ ॥

भस्मेति ;—योऽहं, परुषं निष्ठुरम्, अत एव रोषान्धेन कोपावेशेन, अन्धं

( विमृश्य च ) । अहो ! मामरण्यनिवासिनमुपश्रुत्य दुरात्मना रघुकुटुम्बकेन दूरमुच्छ्वसितम् ( व ) । ( किञ्चिदुच्चैः )—

रे काकुत्स्थाः ! कथं वः श्रुतिविषयमयं नागमद्भार्गवीयो
दुःसामन्तापचारप्रचितपितृवधामर्षनिस्तारबन्धुः ।
वारानासन्नविंशान् विशसितविषमक्षत्रजातिप्ररोहः
क्रोधादुत्कृत्तगर्भामिषरुधिरवसाविस्रगन्धिः कुठारः ? ॥ २५ ॥

---

विमूढमिति यावत्, चेतः चित्तं यस्य तथाभूतः सन्, खुरलीकलहे शस्त्राभ्यास-विवादे शस्त्रयोग्याकरणविवादे वा, शरनिक्षेपाभ्यासकाले इति यावत्, "अभ्यासः खुरली योग्या" इति हारावली ; भस्माङ्कुर तुच्छतापमसृत, इति इति हेतोः, कुमार मा भस्माङ्कुर उक्तवान् इति हेतोरित्यर्थः, कुमार स्कन्दमपि, का कथाऽन्यषामित्यपि शब्दार्थः, आक्षिपन् निर्भर्त्सयन्, शिवाभ्यां पार्वतीपरमेश्वराभ्यां, कृतं मिथः अन्योऽन्य हसितं यस्मिन् तत् यथा तथा, दृष्टोऽस्मि अवलोकितोऽस्मि, हा ! खेदे, सोऽहं सम्प्रति घृणा जुगुप्सा, आत्मावमाननाविशेषः वा, तत्सहित निन्दितः सन् इत्यर्थः, धिङ्मा यः गुरोर्धनुर्भङ्गापमानं सहे इत्यात्मानं विनिन्दामीति भावः, तस्य गुरोः, चापभङ्गमपि धनुर्भङ्गमपि, शृणोमि । वसन्ततिलकं वृत्तम् ॥ २४ ॥

(व) रघुकुटुम्बकेन रघुपरिजनेन, रामेणेति यावत् । दूरम् अत्यर्थम्, उच्छ्वसितं प्रहृष्टमिति यावत् ।

रे काकुत्स्था इति ।—रे इति नीचसामन्त्रणम् ; रे काकुत्स्थाः ! तुच्छककुत्स्थ-कुलजाः क्षत्रियाः । दुःसामन्तस्य दुष्टनृपतेः, कार्त्तवीर्य्यस्येति भावः, अपचारेण अत्याचारेण, पितृवधरूपेण क्रूरकर्मणा इत्यर्थः, प्रचितः प्रवृद्धिं गतः, यः पितृवधामर्षः पितृविनाशजनितक्रोधः, शत्रुनिर्यातनेच्छा इति भावः, तस्मात् निस्तारे उद्धारे, शत्रु-निधनद्वारा अमर्षक्षोदृशापने इति भावः, बन्धुः मित्रम्, आसन्नविंशान् विंशसमीप-स्थान्, एकविंशतिसङ्ख्याकान् इत्यर्थः, वारान् विशसितः निहतः, विषमक्षत्रजातेः दुष्टक्षत्रियजातेः, प्ररोहः अङ्कुरः, क्षुद्रशिशुरपि इति यावत् येन तथोक्तः, क्षत्रियशिशोरपि विनाशकारीत्यर्थः, तथा क्रोधात् उत्कृत्ताः खण्डिताः, ये गर्भाः भ्रूणाः, क्षत्रस्त्रीणामिति भावः, तेषाम् आमिषं मांसं, रुधिरं शोणितं, वसा मेदः, ताभिः विस्रगन्धिः आमगन्धिः, "मांसं क्रव्यमामिषम्" इति हारावली ; "विस्रं स्यादामगन्धि यत्" इत्यमरः ; भार्गवीयः भार्गवसम्बन्धी, अयं हस्तस्थितः,

रामः । ( दृष्ट्वा सहर्ष-बहुमानम् )—

जेतारं दशकन्धरस्य रभसाद्दोःश्रेणिनिःश्रेणिका-
तुल्यारूढसमस्तलोकविजयश्रीपूर्य्यमाणोरसम् ।
यः सङ्ख्ये निजघान हैहयपतिं शत्रोर्मुखं दृष्टवान्
यः पृष्ठं ददतोऽपि षण्मुखजये सोऽयं कृती भार्गवः ॥ २६ ॥

( सर्वं च निर्वर्ण्य सस्मितम् )। अहो! सङ्कीर्य्यमाणानेकरसानु-भावगम्भीरमधुरोऽयमस्याभोगः ( श )। तथा हि।—

---

कुठारः कथं वः युष्माकं, श्रुतिपथं कर्णगोचरं, न अगमत्? न प्राप्नोत्? कथं श्रवणविषयता न गतः? इत्यर्थः। स्रग्धरा वृत्तम् ॥ २५ ॥

जेतारमिति।—यः परशुरामः रभसात् वेगात्, बलपूर्वकमित्यर्थः, हर्षात् वा, अवलीलयेति यावत्, "रभसो वेग-हर्षयोः" इत्यमरः; दोष्णां भुजानां, विंशतिसङ्ख्यका-नामिति भावः, श्रेणिः पङ्क्तिरेव, निःश्रेणिका अधिरोहणी, सोपानपङ्क्तिरिति यावत्, "निःश्रेणिस्त्वधिरोहणी" इत्यमरः; तया तुल्यं समकालमेवेत्यर्थः, आरूढया ऊर्द्ध्वमुत्थितया, समस्तलोकानां सर्वजगतां, विजयश्रिया विजयलक्ष्म्या, पूर्य्यमाणम् अधिष्ठीयमानम्, उरः वक्षःस्थलं यस्य तथाभूतस्य, त्रिभुवनविजयिन इति यावत्, दशकन्धरस्य रावणस्य, जेतारं जयकारिणं, हैहयपतिं कार्त्तवीर्य्यार्जुनं, सङ्ख्ये युद्धे, निजघान निहतवान्; "दोःश्रेणिनिःश्रेणिकातुल्यारूढसमस्तलोकविजयश्रीपूर्य्य-माणोरसम्" इति पाठे—दोःश्रेणिः भुजसहस्रमेव, निःश्रेणिका अधिरोहणी, तया तुल्यं युगपदित्यर्थः, आरूढया समस्तलोकविजयश्रिया पूर्य्यमाणम् उरः यस्य तथोक्तमिति हैहयपतिमित्यस्य विशेषणम्; यश्च षण्मुखस्य कार्त्तिकेयस्य, जये पराजये इत्यर्थः, पृष्ठं ददतोऽपि पराङ्मुखस्यापि, पलायमानस्यापीत्यर्थः, शत्रोः रिपोः, षण्मुखस्येति भावः, मुखं दृष्टवान्, कार्त्तिकेयस्य षण्मुखत्वेन पश्चादपि मुखस्थितेरिति भावः, सोऽयं कृती कुशली, कार्य्यदक्ष इत्यर्थः, भार्गवः परशुरामः, मया दृश्यते इति शेषः। शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥

(श) सङ्कीर्य्यमाणेति।—सङ्कीर्य्यमाणानां स्वयं विमिश्रीभवतां, विरुद्धानामपि एकत्र मिलितानामिति यावत्, कर्मकर्त्तरि प्रयोगः, अनेकरसानां विविधभावविशेषा-णाम्, अनुभावेन आस्वादनेन, गम्भीरः दुरवगाहः, मधुरश्च। अस्य भार्गवस्य। आभोगः पूर्णता, अवयवसंस्थानमिति यावत्, "आभोगः परिपूर्णता" इत्यमरः।

जटां धत्ते मूर्द्धा परशु-धनुषी बाहुशिखरं
प्रकोष्ठो रौद्राक्षं वलयमिषुदण्डानपि करः।
प्ररूढप्रौढास्त्रव्रणविकटरौद्राङ्कितमिदं
प्रशान्तामैणेयीं त्वचमपि च वक्षः कलयति ॥ २७ ॥

(इत्युपसर्पति)।

जामदग्न्यः। (विलोक्य)। कथमयमसौ श्रूयमाणगुणानुकल्पिताकारसंवादो दाशरथिः (ष)। साधु रे राजन्यपोत! (स) साधु।—

सविधमुपसरन् समूलकाषं
कषितनृपान्वयमद्य मां धिनोषि।
हरिमिव करिकुम्भकूटकोटि-
प्रकटकठोरनखाङ्कुर कुरङ्गः ॥ २८ ॥

जटामिति।—मूर्द्धा शिरः, जटा, बाहुशिखरं स्कन्धदेशः, परशु धनुषी कुठारं धनुश्चेत्यर्थं, प्रकोष्ठः कफोणेरधोभागः, रौद्राक्ष वलय वलयाकारेण धृतरुद्राक्षमाला-मित्यर्थः, करः हस्तः, इषुदण्डानपि शरानपीत्यर्थं, धत्ते धारयति, प्ररूढेन सञ्जातेन, प्रौढेन विशालेन, पुरातनेन वा, अस्त्रव्रणेन अस्त्राघातजनितक्षतेन, विकट प्रस्फुट यथा तथा, यद्वा—विकटौ विषमौ, परस्परावबद्धौ इत्यर्थः, रौद्र. अद्भुतश्च रसौ यत्र तथाभूतम्, इद वक्षश्च प्र॰ । सौम्या, शान्तरसलक्षणामिति यावत. ऐणेयीं मृगसम्बन्धिनी, त्वचं चर्मापि, कलयति धारयति। शिखरिणी वृत्तम ॥ २७ ॥

(ष) श्रूयमाणेति।—श्रूयमाणैः आकर्ण्यमानैः, श्रुतिविषयता गतैरित्यर्थः, गुणैः शौर्य्यादिभि., अनुकल्पित॰ अनुमितः, य आकारः मूर्त्ति, तत्संवादी तदनुकारी, अदृष्टपूर्वोऽपि श्रूयमाणगुणानुकल्पिताकारसंवादेन सोऽयमिति प्रतीयमान इति याव, । दाशरथिः रामः।

(स) राजन्यपोत । क्षत्रियशिशो ।।

सविधमिति।—सविध समीपम. उपसरन् समागच्छन्, त्वमिति शेषः, कुरङ्गः मृगः, करिणा हस्तिना, ये कुम्भाः शिरःस्थमांसपिण्डाः, तेषा कूटानि शिखराणि, "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः, तेषा कोटिः तदाख्यसङ्घाः, तत्र प्रकटः सुव्यक्तः, कठोरः तीक्ष्णः, नखाङ्कुरः नखाग्रं, नखचिह्नमिति यावत् यस्य तथाविधं, हरिमिव

राम.। (साञ्जलम्)। भगवन् भार्गव! गुरु-गर्भरूपयो-र्यतावदेवान्तरम् (छ)। किञ्च—

> आदेष्टा भगवान् भृगुर्जननयोरौत्पत्तिकब्राह्मयो-
> र्देवो धूर्जटिरस्त्रकर्मणि गुरुर्वीर्य्यं च दूरे गिराम्।
> सप्तद्वीपवतीं ददद्भुवमभिप्रैषि द्विजान् कश्यप-
> प्रायानप्रतिमानुभाव! भवते कस्मैचिदस्मै नमः॥ २८॥

सिंहमिव, समूलकाषं समूलघातं यथा तथा, काषितः निहतः इति यावत्, नृपान्वयः क्षत्रियकुलं येन तथाभूतः, माम् अद्य धिनोषि प्रीणयसि, सिंहस्य गजेन्द्रघातिनः कुरङ्गदर्शने यथा अनायासेनैवास्य वधो मया विधेय इति बुद्ध्या प्रीतिः, तथा महावीर्य्यकार्त्तवीर्य्यादिनाशिनो मम त्वद्दर्शने अनायासेनैव सुकोमलाकारस्य तव निधनं मया साधितव्यमिति प्रीतिरिति निष्कर्षः। यद्वा—गजघातिनः कठोर-प्रकृतेः सिंहस्य यथा अनायासवध्यस्यापि मृगस्य कोमलमनोहराकारदर्शनेन न हन्तव्योऽयं क्षुद्र इति सदयप्रीतिरसेन चित्तमार्द्रीभवति, तथा सर्वक्षत्रियान्तकस्य मम सवयस्यापि तव विनीत रमणीयमूर्त्तिदर्शनेन शिशुरयं न हन्तव्य इति चित्तं सदयप्रीतिरसेनार्द्रीभवतीति भावः। उपमाऽलङ्कारः। [illegible]ष्पिताया वृत्तम्॥ २८॥

(छ) गुर्विति।—गुरुः पिता, गर्भरूपः बालकपुत्रश्च तयोः, यद्वा—गुरुर्महान्, गर्भरूपः क्षुद्रः तयोः, अन्तरं प्रभेदः, भवान् महान् अहं बालकः, तन्नाम अनायासे-नैव भवान् हन्तुं समर्थः इति भावः। यद्वा—पुत्रादिदर्शनेन पित्रादीनामामन्दादयः स्वाभाविका एवेति भावः।

आदेष्टेति।—अप्रतिमानुभाव! हे अतुलनीयप्रभाव! भगवान् भृगुः औत्पत्तिक-ब्राह्मयोः जननयोः जन्मनोः, उत्पत्तिकं जन्म, ततश्च सावित्र्यादिविद्यादानं द्वितीयं जन्म तयोरिति यावत्, आदेष्टा सम्पादकः, देवः धूर्जटिः शम्भुः अस्त्रकर्मणि धनुर्वेद-दीक्षायां, गुरुः आचार्य्यः, वीर्य्यं पराक्रमः, गिरां वाचां, दूरे अविषये इति यावत्, तिष्ठतीति शेषः, वर्णनातीतमिति यावत्, तवेति सर्वत्र सम्बन्धः, सप्तद्वीपवतीं "जम्बू प्लक्ष-कुश क्रौञ्च-शाक शाल्मलि पुष्कराः। द्वीपाः सप्त—॥" इत्युक्तप्रकारकसप्तद्वीप-समन्विता, भुवं पृथ्वीं, ददत् कश्यपप्रायान् कश्यपादीन्, द्विजान् ब्राह्मणान्, अभिप्रैषि सम्प्रदानत्वेन सङ्कल्पयसि, अत एव अस्मै ईदृशाय, कस्मैचित् अनिर्वचनीय-स्वरूपाय, भवते तुभ्यं, नमः, अस्त्विति शेषः। शार्दूलविक्रीडितं वृत्तम्॥२८॥

जामदग्न्यः। अरे क्षत्रियडिम्भ! (क) तथानेन सत्त्वसौजन्यपौरुषोत्कर्षेण किमप्यन्तराप्यायितोऽस्मि (ख)। किन्तु—

नाराचैः कृतवीर्य्यनन्दनवधूबाष्पप्रियम्भावुकैः
कृत्वाद्य क्षतजोदमर्णवमथ न्युप्त पितृभ्यां पयः।
सम्प्रत्यस्य समस्तबाहुजभुजः क्रोधस्य निर्वास्यतः
क्षुन्दानो धनुरैन्दुशेखरमहो! जातो भवानिन्धनम् ॥१०॥

रामः। (स्मित्वा)। भगवन्!—

बाल्यस्वभावसुलभेन कुतूहलेन
भग्नं धनुर्भगवतो वृषभध्वजस्य।
तत्रानुषङ्गिकममङ्गलमीदृशं तु
संवृत्तमत्र न मया गणितस्त्वमागः ॥ ११ ॥

---

(क) क्षत्रियडिम्भ। राजन्यशिशो। "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः।

(ख) सत्त्वेति।—सत्त्वं साहसं, महानुभावतेत्यर्थः, सौजन्यं साधुत्वं, विनीतव्यवहार इत्यर्थः, तथा पौरुषं पराक्रमश्च, तेषाम् उत्कर्षेण आतिशय्येन। अन्तः मनसि। आप्यायितोऽस्मि परितुष्टो भवामि।

नाराचैरिति।—कृतवीर्य्यनन्दनस्य कार्त्तवीर्य्यार्जुनस्य, वधूनां नारीणां, बाष्पस्य अश्रुणः, प्रियम्भावुकैः प्रियकारिभिरित्यर्थः, तासां वैधव्यादिति, सर्वदा नेत्रान्तरवहनात् बाष्पाणां बहिर्निःसरणसौकर्य्यकरत्वादिति वा भावः, नाराचैः अस्त्रविशेषैः, क्षतजोदं रक्तोदकं, "रक्त-क्षतज-शोणितम्" इत्यमरः; अर्णवं सागरं, जलस्थानीयरक्तपूर्णसमुद्रमित्यर्थः, कृत्वा निर्माय, अथानन्तरं, पितृभ्यां मातापितृभ्यां, पयः शोणितरूपजलमित्यर्थः, न्युप्तं तर्पणार्थे दत्तमित्यर्थः, "पितृदानं निवापः स्यात्" इत्यमरः; सम्प्रति निर्वास्यतः निर्वाणं गमिष्यतः, समस्तान् निखिलान्, बाहुजान् क्षत्रियान्, "बाहुजः क्षत्रियो विराट्" इत्यमरः; भुङ्क्ते ग्रसते इति तथोक्तस्य, अस्य क्रोधस्य कोपस्य, अग्निभूतस्येति भावः, ऐन्दुशेखरम् ऐशं, धनुः क्षुन्दानः खण्डयन्, भवान् इन्धनं काष्ठं, दाह्यमिति भावः, जातः, अहो! इति खेदसूचकमव्ययम्। शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

बाल्येति।—बाल्यस्य शिशोः, स्वभावः प्रकृतिः, तेन सुलभं सुप्राप्यं, स्वतः सञ्जातमित्यर्थः, तादृशेन, कुतूहलेन कौतुकेन, भगवतः वृषभध्वजस्य वृषवाहनस्य हरस्य,

जामदग्न्यः। (सरोषम्)। आः!! क्षुद्रक्षत्रियडिम्भ! कथं प्रमथनाथप्रथमान्तेवासिनं (ग) परशुराममपि भवान्नाजीगणत्!!—

महासेनो यस्य प्रमद! यमदंष्ट्रासहचरैः
शरैर्मुक्तो जीवन् द्विरिव शरजन्मा समभवत्।
इमाश्च क्षत्राणां भुजवनमहादुर्गविषमा-
मयं वीरो वारानजयदुपविंशान् वसुमतीम्॥ २२॥

रामः। शान्तं शान्तम् (घ)। प्रसीद भगवन्। अविमृश्यकारितया (ङ) न गणितोऽसि, न पुनरवलेपात् (च)—

---

धनुः कृष्टम् आनमितं, मयेति शेषः, तु किन्तु, तव कर्षणे, आनुषङ्गिकं प्रसङ्गादागतम्, अनभिप्रायिकमित्यर्थः, अनुद्दिष्टमिति यावत्, ईदृशं तद्भङ्गरूपमिति भावः, अनल्पम् अशुभं, सहसा सञ्जातम्, अत्र विषये, मया त्वं गणितः आलोचितः, अन्तरायत्वेन लक्षित इति यावत्, न आसीः, कर्मेदं तवाप्रियमिति मया न चिन्तितमिति भावः। वसन्ततिलकं वृत्तम्॥ २१॥

(ग) प्रमथेति।—प्रमथनाथस्य शिवस्य, "पिनाकी प्रमथाधिपः" इति शिवपर्य्याये अमरः; प्रथमः श्रेष्ठः, अन्तेवासी शिष्यः तम्।

महासेन इति।—प्रमद! रे प्रकृष्टगर्व! ममागमनादिति भावः, महासेनः कार्त्तिकेयः, "कार्त्तिकेयो महासेनः शरजन्मा षडाननः" इत्यमरः, यस्य मम, यमदंष्ट्रासहचरैः कृतान्तदशनसदृशैः, शरैः बाणैः, मुक्तः परित्यक्तः सन्, पराङ्मुखत्वेन मया बाणक्षेपणादिति भावः, जीवन् जीवितमश्नन्, द्विरिव द्वितीयवारमिव, शरजन्मा शरभूः, एकदा शरे शरवने, जन्म यस्य तथोक्तः, अन्यदा शरात् शरक्षेपणाद्धेतोः विमुक्ततया, जन्म पुनर्जीवनप्राप्तिः यस्य तथाभूतः, समभवत्, अयं वीरः सोऽहमिति भावः, उपविंशान् उपगता निकटस्था, विंशतिर्येषां तान् एकविंशतिसङ्ख्यकान्, वारान्, क्षत्राणां क्षत्रियाणां, भुजवनानि एव महान्ति उत्कटानि इत्यर्थः, दुर्गाणि दुर्गमप्रदेशाः, तैः विषमा दारुणा ताम्, क्षत्रियाणामत्याचारेण सज्जनवासायोग्यामिति भावः, इमां वसुमतीञ्च अजयत् जितवान्; रे मूर्ख! एतावती ते स्पर्द्धा अतः, एवम्भूतोऽहं तव गणनायोग्यः? इति भावः। शिखरिणी वृत्तम्॥ २२॥

(घ) शान्तं शान्तं निवृत्तं निवृत्तं, भगवान् मया न गणित इति कथा नैव वक्तव्या नैव वक्तव्या इति भावः।

(ङ) अविमृश्यकारितया अविवेकितया, अज्ञानतयेत्यर्थः।

(च) अवलेपात् गर्वात्।

स्त्रीषु प्रवीरजननी जननी तवैव
देवी स्वयं भगवती गिरिजाऽपि यस्यै ।
त्वद्दोर्वशीकृतविशाखमुखावलोक-
व्रीडाविदीर्णहृदया स्पृहयाम्बभूव ॥ ३३ ॥

जामदग्न्यः । (विहस्य) । रे राजन्यपोत !—

अनुभवपुनरुक्तां मुञ्च नः स्तोत्रचर्या-
मुपनमय तदेतत्कौशिकोपज्ञमस्त्रम् ।
क्षिपति न खलु कालं वीरगोष्ठीविनोद-
प्रियपरशुरयं मे बाहुरुद्यच्छमानः ॥ ३४ ॥

---

स्त्रीष्विति ।—तवैव जननी माता, स्त्रीषु नारीजातिषु मध्ये, प्रवीरजननी प्रकृष्टवीरप्रसविनी, स्वयं भगवती देवी गिरिजाऽपि गौरी अपि, तव दोष्णा भुजेन, वशीकृतस्य निर्जितस्य, विशाखस्य कार्त्तिकेयस्य, "विशाखः शिखिवाहनः" इति कार्त्तिकेयपर्य्याये अमरः, मुखावलोकेन वदनदर्शनेन, पराभवजनितमलिनमुखदर्शनेनेति भावः, या व्रीडा लज्जा, तया विदीर्णं प्रस्फुटितं, दुःखितमिति यावत्, हृदयं वक्षोदेशः यस्याः तथाभूता सती, यस्यै तव मात्रे, स्पृहयाम्बभूव स्पृहां चकार, यस्याः पुत्रः मम नन्दनमपि निर्जितवानिति स्वतोऽपि यस्याः गौरवम् अङ्गीचकार, धन्या सा भार्गवमाता इति भावः । वसन्ततिलकं वृत्तम् ॥ ३३ ॥

अनुभवेति ।—अनुभवेन अनुभूत्या, पुनरुक्तां पुनःकथितां, नः अस्माकं, स्तोत्रचर्य्यां स्तुतिप्रक्रियां, मुञ्च त्यज, अहं वीरो न वेति स्वयमनुभूय एव मम स्तुतिं कुरु, किं पुनः पुराणालोचनेन ? इति भावः, तत् तस्मात्, कौशिकात् विश्वामित्रात्, उपज्ञा आद्यं ज्ञानं यस्य तथोक्तम्, "उपज्ञा ज्ञानमाद्यं स्यात्" इत्यमरः, एतत् तव करधृतमित्यर्थः, अस्त्रं धनुरिति यावत्, उपनमय आरोपय, गृहाणेति यावत्, वीरगोष्ठी वीराणां सभा, सङ्ग्रामभूमिरित्यर्थः, "गोष्ठी सभा संलापयोः स्त्रियाम्" इति मेदिनी; तस्यां विनोदे चित्तरञ्जने, प्रियः प्रीतिजननः सहचर इत्यर्थः, परशुः कुठारः यस्य तथाभूतः, उद्यच्छमानः उद्यतो भवन्, मे मम, अयं परिदृश्यमानः, बाहुः भुजः, कालं समयं, न खलु नैव, क्षिपति अतिक्रामति, मुधा मे वृथा समयक्षेपं न सहते, त्वरितमस्त्रं गृहाणेति भावः । मालिनीवृत्तम्—"न न म य ययुतेयं मालिनी भोगिलोकैः" इति तल्लक्षणात् ॥ ३४ ॥

रामः । ( स्वगतम् ) । अये ! भगवन्तं विश्वामित्रमपि स्पृशति !!
( क ) भवत्वेवं ( ख ) तावत् । ( प्रकाशं सधैर्य्यस्मितम् ) ।—

भूमात्रं कियदेतदर्णवमयं तत्साधितं हार्य्यते
यद्वीरेण भवादृशेन वदति त्रिःसप्तकृत्वो जयः ।
डिम्भोऽयं नवबाहुरीदृशमिदं घोरञ्च वीरव्रतं
तत्कोपाद्विरम प्रसीद भगवन् ! जात्यैव पूज्योऽसि नः ॥ २५ ॥

---

(क) स्पृशति आकृष्य आनयतीत्यर्थः, आक्षिपतीति यावत्, कौशिकोपशमस्त्वमिति कथनेनेति भावः ।

(ख) भवत्वेवमिति ।—अतः परं वीरोचितं व्यवहर्त्तव्यमिति भावः ।

भूमात्रमिति ।—एतत् भूमात्रं भूमण्डलमेव, कियत् अत्यल्पमित्यर्थः, तदपि अर्णवमयं समुद्रव्याप्तं, भवादृशेन भवत्सदृशेन, वीरेण साधितं जितं, तत् भूमात्रमिति शेषः, यत् हार्य्यते भवादृशवीरात् आच्छिद्य अन्येनापक्रियते इति भावः, त्रिःसप्तकृत्वो जयः एकविंशतिवारविजयः, तत् वदति कथयति, भवान् यथा त्रिःसप्तकृत्वः क्षत्रान् निहत्य एतद्भूमण्डलं तेभ्यो हृतवान्, एवमन्यः कोऽपि भवन्तं विजित्य भवत्सकाशात् एतन्नेतुं शक्नुयात्, परन्तु यदि मध्ये तत् न हारितं, तदा कथं पुनर्जयप्रयासः ? एकेनैवैनैव जयस्य सिद्धत्वादिति भावः, यद्वा—भवादृशेन वीरेण अर्णवमयं समुद्रवेष्टितं, कियदेतत् भूमात्रम् अकिञ्चित्करं पार्थिवराज्यमात्रमित्यर्थः, न तु अपार्थिवं मोक्षपदं, बहुजीवविनाशादिति भावः, यत् साधितम् आयत्तीकृतं, तत् त्रिःसप्तकृत्वो जयः तव विजयः, वदति, किन्तु हार्य्यते भवता साधितं तत् भूमात्रं केनापि कदाऽपि हर्त्तुं शक्यते, भवादृशवीरादपि आच्छिद्य अन्येन केनापि तदपहर्त्तुं शक्यते, अतः गर्वं त्यज इति भावः, नवबाहुः कोमलभुजः, अशिक्षितहस्त इति यावत्, अयं मादृशः, जन इति शेषः, डिम्भः बालकः, बालत्वात् अद्यापि अस्त्रव्यवहारकौशलानभिज्ञ इति भावः, इदं वीरव्रतञ्च वीरचर्य्यानियमश्च, ईदृशम् एवंविधं, घोरं भयानकं, कठोरमित्यर्थः, पूज्यापूज्यविचारविमुखमिति भावः, तत् तस्मात्, कोपात् क्रोधात्, विरम विरतो भव, क्रोधं परित्यजेत्यर्थः, हे भगवन् ! प्रसीद प्रसन्नो भव, जात्यैव ब्राह्मण्येनैव, न तु वीर्य्येणेत्येवकारार्थ इति भावः, नः अस्माकं, पूज्यः आराधनीयः, असि भवसि, कोमलबाहुना बालकेन मया यदि भवतः पराजयः स्यात्, तदा भवतोऽतीवावमाननम्, अस्माकञ्च पूज्यपूजाव्यतिक्रमः स्यादिति कोपात् विरत्या अस्मासु प्रसाद एव भवतः श्रेयानिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ २५ ॥

जामदग्न्यः । (सक्रोध-कम्पं स्वगतम्) । अहो ! दुरात्मनोऽस्य राजन्य-पोतस्य वीरप्रसूतायाः पद्धतेरस्खलितमुक्ति-प्रत्युक्तिवैदग्ध्यम् !! (झ) । (प्रकाशम्) । आः !! पाप ! जात्यैव केवलया (ञ) पूज्यस्ते परशुरामः !! कथमद्यापि निरायुधोऽसि !! (ट)—

विनयनिचुलितैर्भवद्वचोभिः
किमपि नव विवृण्वाङ्गिरङ्गमन्तः ।
अयमजनि करः कृतान्त-
दंष्ट्राक्रकचकठोरकुठारदुर्निरीक्ष्यः ॥ २६ ॥

(उच्चैश्च) । अहो ! नु खलु भोः !—

त्रैलोक्यत्राणशौण्डः सरसिजवसतेर्यः प्रसूतो भुजाभ्यां
स क्षत्रं नाम वर्णः कुलिशकठिनयोर्यस्य दोष्णोर्विलीनः ।

---

(झ) वीरप्रसूतायाः वीरजननचतुरायाः, वीरजननानुसृतायाः इति यावत्, पद्धतेः आचारात्, अस्खलितम् अभ्रष्टम् । उक्ति-प्रत्युक्तिवैदग्ध्यम् वचन-प्रतिवचनचातुर्य्यम् ।

(ञ) केवलया एकया, एकमात्रया इत्यर्थः, न तु वीर्य्येणेति भावः । "एके मुख्यान्यकेवलाः" इत्यमरः ।

(ट) निरायुधोऽसि निरस्त्रः भवसि, शस्त्रमगृहीत्वा तिष्ठसीत्यर्थः ।

विनयेति ।—विनयेन शिष्टाचारेण, निचुलितैः पिहितैः, विनयाभासयुक्तैरित्यर्थः, चलकृतैरिति भावः, किमपि अवाच्यम्, अन्तः मनसि, स्थितमिति शेषः, नवम् अश्रुतपूर्वमिति यावत्, अङ्ग अलङ्, "तत्साधितं कार्य्यते" इति पूर्वोक्तम् अपवादरूप-मिति यावत्, विवृण्वद्भिः प्रकटयाद्भिः, भवद्वचोभिः तव वचनैः, अयम् एषः, करः हस्तः, कृतान्तस्य यमस्य, दंष्ट्रा दन्त एव, क्रकचः करपत्रं, "करात" इति प्रसिद्धः, "क्रकचोऽस्त्री करपत्रम्" इत्यमरः ; तद्वत् कठोरः दारुणः, यः कुठारः तेन दुर्निरीक्ष्यः दुर्दर्शः, भीषण इति यावत्, अजनि जातः । पुष्पिताग्रा वृत्तम् ॥२६॥

त्रैलोक्येति ।—त्रैलोक्यस्य त्रिभुवनस्य, त्राणेन परिरक्षणेन, शौण्डः मत्तः ख्यातो वा, "शौण्डो मत्ते च विख्याते दर्पशालिन्यपि स्मृतः" इति विश्वः, यः सरसिजवसतेः कमलासनस्य, ब्रह्मण इत्यर्थः, भुजाभ्यां बाहुभ्यां, प्रसूतः उत्पन्नः, "ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृत." इति श्रुतेः ; अत एव "बाहुजः क्षत्रियो विराट्" इत्यमरः, सः प्रसिद्धः, क्षत्र नाम वर्णः क्षत्रियजातिः, यस्य परशुरामस्य, कुलिशकठिनयोः वज्रवत्

ज्वालाजिह्वालकालानलकवलभयभ्रान्तदेवासुराणि
व्यातन्वानो जगन्ति ज्वलति मुनिरयं पार्वतीधर्मपुत्रः ॥ ३७ ॥

( नेपथ्ये ) ।

भगवन् भार्गव !—

अप्रवृत्तिविषयं वितन्वतः
क्षत्रशब्दमियमेव मेदिनी ।
दक्षिणा तव बभूव यज्वनो
मुञ्च सम्प्रति तु शुष्कमायुधम् ॥ ३८ ॥

जामदग्न्यः । अये ! प्रशान्तगम्भीरः क एषः ? तर्हि जनकेन भवितव्यम् । ( तदभिमुखमवलोक्य ) । राजर्षे सीरध्वज ! भगवतः सूर्य्यशिष्यात् पुराणवाजसनेयिनो ( ठ ) याज्ञवल्क्यादधीत-

---

कठोरयोः, दोष्णोः बाह्वोः, विलीनः लयं गतः, विलुप्त इत्यर्थः, पार्वतीधर्मपुत्रः गौर्य्याः धर्मपुत्रः, सोऽयं मुनिः भार्गवः, जगन्ति ज्वालया शिखया, जिह्वालः जिह्वावान्, प्रशस्तजिह्वायुक्त इत्यर्थः, यः कालानलः प्रलयाग्निः,तस्य कवलात् ग्रासात्, तेन भस्मीभवनादिति यावत्, यत् भयं तेन भ्रान्ताः चलिताः, इतस्ततः पलायिताः इत्यर्थः, देवासुरा येषु तथाभूतानि, व्यातन्वानः विस्तारयन्, कुर्वन्नित्यर्थः, ज्वलति दीप्यते, क्रोधप्रज्वलितः तिष्ठतीत्यर्थः । स्रग्धरा वृत्तम् ॥ ३७ ॥

अप्रवृत्तिविषयमिति ।—क्षत्रशब्दं क्षत्रियेति अक्षरसमष्टिं, क्षत्रियेति संज्ञामिति यावत्, अप्रवृत्तिविषयं प्रयोगागोचरताम्, उच्चारणस्यापि अनुपयुक्ततामित्यर्थः, शक्यता-ऽवच्छेदकताशून्यमिति यावत्, वितन्वतः विस्तारयतः, क्षत्रियशब्दस्यापि विलोपं साधयत इति भावः, यज्वनः याज्ञिकस्य, तव इयमेव एषैव, मेदिनी पृथिवी, दक्षिणा यज्ञादिसमाप्तौ देयधनस्वरूपिणीत्यर्थः, बभूव, सर्वान् क्षत्रियान् निहत्य यज्ञं कृत्वा त्वं पृथ्वीं दक्षिणात्वेन दत्तवानसीति निष्कर्षः, सम्प्रति तु इदानीन्तु, शुष्कं सर्वक्षत्रनिधनेन प्रतिद्वन्द्विविरहात् अकिञ्चित्करत्वेन रसशून्यं, विफलमिति भावः, आयुधम् अस्त्रं, मुञ्च त्यज । रथोद्धता वृत्तं—"रात् परैर्न-र-ल-गै रथोद्धता" इति तल्लक्षणात् । जनकोक्तिरियम् ॥ ३८ ॥

( ठ ) पुराणवाजसनेयिनः पुरातनयजुर्वेदविदः ।

ब्रह्मसिद्धान्तो गृहीतवाक्य (ङ) एवासि। किन्तु नायमवसरः शिष्टानुरोधस्य (ढ)—

> अवनिमधिकविंशानभ्यवस्कन्द्य वारा-
> नवभृथभृतकेभ्यः सम्प्रदाय द्विजेभ्यः।
> विरमति रमणीयात् द्वन्द्वयुद्धात् कथं मे
> निखिलनृपतिहत्यादृष्टसारः कुठारः? ॥ १९ ॥

(पुनर्नेपथ्ये)—

> भृगुतिलक! नमस्ते मुञ्च वैमत्यमेतत्
> कुरु करुणमिदानीं मानसं मानशौण्ड!।

---

(ङ) अधीतेति।—अधीतः पठितः, ब्रह्मसिद्धान्तः ब्रह्ममीमांसा, वेदसार इति यावत् येन तथाभूतः। गृहीतवाक्यः गृहीतं स्वीकृतमित्यर्थः, समादृतमिति यावत्, वाक्यं वचनं यस्य तथाभूतः, पूर्वं तव वाक्यं मया प्रतिपालितमिति भावः।

(ढ) अवसरः समयः। शिष्टानुरोधस्य शिष्टस्य सज्जनस्य, तवेति भावः, अनुरोधः अनुवर्त्तनं, चित्ताराधनमित्यर्थः तस्य, इच्छापूरणेन तव प्रीतिसम्पादनस्येत्यर्थः, "अनुरोधोऽनुवर्त्तनम्" इत्यमरः।

अवनिमिति।—अधिकविंशान् विंशतेरधिकान्, वारान् एकविंशतिवारानित्यर्थः, अवनिं पृथ्वीम्, अवस्कन्द्य आक्रम्य, क्षत्रियेभ्यः आच्छिद्येत्यर्थः, अवभृथः दीक्षान्तः, यज्ञसमाप्तौ क्रियमाणयागविशेष इत्यर्थः, "दीक्षान्तोऽवभृथो यज्ञः" इत्यमरः, तत्र ये भृतकाः वेतनिकाः, ऋत्विज इत्यर्थः ताहृशेभ्यः, द्विजेभ्यः ब्राह्मणेभ्यः, कश्यपादिभ्य इति भावः, अवनिं पृथिवीं, सम्प्रदाय दत्त्वा, दक्षिणात्वेनेति भावः, स्थितस्येत्यध्याहारः, मे मम, निखिलानां सकलानां, नृपतीनां राज्ञां, क्षत्रियाणां वा, हत्यया वधेन, दृष्टः अवलोकितः, लोकैरिति भावः, सारः बलं, सामर्थ्यमिति यावत् यस्य तथाभूतः, कुठारः रमणीयात् प्रमोदजननात्, द्वन्द्वयुद्धात् द्वन्द्वयोः द्वयोरेव वीरयोरन्योऽन्य यत् युद्धं तत् द्वन्द्वयुद्धं तस्मात् सम्मुखसमरात्, कथं केन प्रकारेण, विरमति? निवर्त्तते? नैव विरन्तुं शक्नोतीत्यर्थः। मालिनी वृत्तम् ॥ १९ ॥

भृगुतिलकेति।—भृगुतिलक! हे भार्गवकुलललाटभूषण! ते तुभ्यं, नमः, अस्तु इति शेषः, एतत् वैमत्यं विरुद्धा मतिं, चित्तविकारमित्यर्थः, क्रोधमिति यावत्, मुञ्च त्यज, मानशौण्ड! हे मानगर्वित! यद्वा—हे मानोन्नत! इदानीं मानसं चित्तं,

वहति बत किमस्त्रं पुत्रभाण्डेऽपि रामे
त्रिजगदभयदानस्थूललक्षो भुजस्ते ? ॥ ४० ॥

जामदग्न्यः। (रामं प्रति)। अये! घोरकर्कशस्वरः (ण) क एषः।

रामः। (सप्रश्रयम् (त))। भगवन्! अयं भस्तातो रघुपतिः।

जामदग्न्यः। (सव्यथम् (थ))। धिक्! सर्वतः क्षत्रकलम्बो-द्भेदः (द)। (नेपथ्याभिमुखमवलोक्य)। भो राजन् दशरथ! अस्मन्नामधेयमात्रमित्रेण (ध) पुत्रेणामुना मानार्हो (न)

---

तवेति शेषः, करुणं सदय, कुरु, त्रिजगतां भुवनत्रयाणाम्, अभयदाने भयात् त्राणकरणे, स्थूललक्षः वदान्यः, अत्युदार इत्यर्थः, "स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे" इत्यमरः, ते तव, भुजः बाहुः, पुत्रभाण्डे पुत्र एव भाण्डं मूलधनं तस्मिन्, रामे अपि क्षुद्रशिशौ अपि इति भावः, किं कथम्, अस्त्रं वहति? धारयति? बत खेदे। मालिनी वृत्तम्। दशरथोक्तिरियम् ॥ ४० ॥

(ण) घोरेति।—घोरः अचञ्चलः, गम्भीरः इति यावत्, कर्कशः कठोरश्च, सुकुमारदेहं शिशुं पुत्रतुल्यं रामं प्रति कठोरव्यवहारादिति भावः, स्वरः यस्य तथाभूतः।

(त) सप्रश्रयं सविनयम्।

(थ) सव्यथं सान्तस्तापम्।

(द) धिक् निन्दामि, आत्मानमिति भावः, "धिङ्निर्भत्सननिन्दयोः" इत्यमरः। सर्वतः समन्तात्, क्षत्रकलम्बानां क्षत्रियाङ्कुराणाम्, उद्भेदः प्रकाशः, मयि विद्यमाने इदानीमपि बहवः क्षत्राः मत्सकाशं समवेता इत्यात्मनो धिक्कार इति भावः। "क्षत्र-कलम्बोद्भेदः" इत्यत्र "क्षत्रकदम्बोद्भेदः" इति पाठकल्पनं समीचीनं, कलम्बशब्दस्य अङ्कुरार्थे कुत्रापि प्रयोगादर्शनात्, कदम्बशब्दस्य च समूहार्थकत्वादिति सुधीभि-र्विभाव्यम्।

(ध) अस्मन्नामधेयेति।—अस्माकं नामधेयमात्रं रामेति नाममात्रं, तेन मित्रं सखा तेन, मात्रपदेन वीर्याद्यभाव इति सूचितम्।

(न) मानार्हः सम्माननीयः, सख्युः पितुः स्वपितृतुल्यत्वादिति भावः। सोल्लुण्ठोक्तिरियम्।

भवान् । किं पुनः ( प ) अनभिज्ञोऽसि वीरव्यवहारस्य (फ) ।—

पुरमथनधनुर्विमर्दनोत्थं
प्रदहदहर्दिवमस्ति तीव्रमर्चिः ।
रघुजनककुटुम्बवाष्पपूरैः
परमिह शान्तिमुशन्ति शस्त्रभाजः ॥ ४१ ॥

( नेपथ्ये ) ।

धाः !! ( ब ) जामदग्न्य ! किमेवमतिप्रसक्तः सन्न्यस्त-शस्त्रान् ( भ ) अस्मानपि बलादनुग्राहयसि ?

जामदग्न्यः । ( सरोषम ) । अरे विदेहप्रसवपांशुल ! ( म )—

अयमधिपतिर्भासामेकान्तरो भवतो गुरु-
स्त्वमसि तपसा यद्वर्षीयानिति स्म तितिक्षसे ।

---

( प ) किं पुनः किन्तु ।

( फ ) वीरव्यवहारस्य वीरचर्य्यायाः ।

पुरमथनेति ।—पुरमथनस्य त्रिपुरारेः, धनुषः चापस्य, विमर्दनोत्थं भञ्जनसमुद्भूतं, तीव्रम उग्रम, अर्चिः शिखा, तेजः इति यावत, कोपाग्निरिति भावः, अहर्दिवम् अहरहः, प्रतिदिनमित्यर्थः, प्रदहत सन्तापयदिति यावत, मामिति शेषः, अस्ति वर्त्तते, इह अस्मिन् अर्चिषि, शस्त्रभाजः शस्त्रव्यवहारिणः, वयमिति शेषः, रघु जनकयोः रघुवंशीय-जनकवंशीययोः, कुटुम्बानां परिजनानां, वाष्पपूरैः अश्रुप्रवाहैः, शान्तिम् उपशमम, उशन्ति कामयन्ते, रामनिधने रघुवंश्या जनकवंश्याश्च पुत्रशोकेन, जामातृ-शोकेन च यदि रुदन्ति तदेव मे कोपशान्तिः स्यादिति भावः । |ता-छेन, पा
ञ्जनम् ॥ ४१ ॥ ञ्जत

(ब) धाः !! इति कोपे, "धास्तु स्यात कोप-पीडयोः" इत्यमरः ।

(भ) अतिप्रसक्तः अतिदर्पितः । सन्न्यस्तशस्त्रान् त्यक्तायुधान् । जनकोक्तिरियम् ।

(म) विदेहप्रसवपांशुल । जनकवंशीयाधम ।

अयमिति ।—भासा तेजसान, अधिपतिः प्रभुः, अयं परिदृश्यमानः, सूर्य्यः इत्यर्थः, भवतः एकान्तरः एकेन व्यवहितः, गुरुः आचार्य्यः, याज्ञवल्क्यस्य सूर्य्यादधीतेः, त्वया तु याज्ञवल्क्यादिति सूर्य्यस्य तव गुरुत्वमेकान्तरमिति भावः, यत यतः, त्वं तपसा तपश्चरणेन, वर्षीयान् अतिवृद्धः, असि, "तपसि" इति पाठे—त्वं वर्षीयान् असि, तथापि तपसि

अथ मामसि धनुर्नामग्राही? तदेष समाप्यते
मम हि सकलक्षत्रालम्भक्रतोरमृतं भवान्॥ ४२॥

(नेपथ्ये)।

भार्गव! भार्गव! च्यवनादिवृद्धवाक्यगौरवनिगृहीतसम्प्रहार-क्रियासमभिहारस्य तत्रभवतः (य) परमे ब्रह्मणि वर्त्तमानस्य (र) पुनरुपप्लवन्ते (ल) बुद्धयः। तत् विरम, कियच्चिरम् (व) इतः परमपि नाटयिष्यति (श) भवन्तमायुधपिशाची? (ष)।

जामदग्न्यः। (विहस्य)। अहो! याज्यस्नेहः (स) शतानन्द-

---

पस्वरसि, इति हेतोः, तितिक्षसे क्षमसे च, शान्तोऽसि इत्यर्थः, त्वां प्रति मया मा प्रदर्शितेति भावः, इदानीं कथं किमर्थं, धनुर्नामग्राही धनुषः नाम गृहीतवान्, असि? भवसि? तत तस्मात्, धनुर्नामग्रहणादित्यर्थः, तपोविरुद्धक्षत्रियाचाराव-लम्बनस्य अभिप्रायप्रकटनादिति भावः, एषः, त्वमिति शेषः, समाप्यते शेषो क्रियते, मया त्वं समाप्य मृत्युं नीयसे इत्यर्थः, त्वां हन्मीति भावः, भवान् मम सकलानां क्षत्रियाणां, क्षत्राणाम् आलम्भ एव वध एव, क्रतुर्यज्ञः, तस्य अमृतं हि शेषीभूतः, "अमृतं यज्ञशेषे स्यात्" इति विश्वः। हरिणी वृत्तम्॥ ४२॥

(य) च्यवनादीति।—च्यवनादीनां वृद्धानां त्वत्पूर्वपुरुषाणामिति यावत्, वाक्यस्य "परशुराम! क्षत्रियसंहाराद् विरम" इति वचनस्य, गौरवेण गुरुत्वेन, तेषां वाक्येषु सम्मानप्रदर्शनेन इत्यर्थः, निगृहीतः संवृतः, परित्यक्तः इत्यर्थः, सम्प्रहारस्य सङ्ग्रामस्य, क्रियासमभिहारः पौनःपुन्येन समाचरणं येन तथाभूतस्य। तत्रभवतः पूज्यस्य।

(र) परमे ब्रह्मणि परमात्मनि, ब्रह्मचिन्तने इति यावत्, वर्त्तमानस्य निरतस्य।

(ल) उपप्लवन्ते विपर्ययं प्राप्नुवन्ति।

(व) कियच्चिरं कियन्तं कालमित्यर्थः।

(श) नाटयिष्यति नर्त्तयिष्यति।

(ष) आयुधपिशाची अस्त्रधारणरूपा पिशाचयोषित्। भार्गवेत्यादि पिशाचीत्यन्ता उक्तिः शतानन्दस्येति बोध्यम्।

(स) याज्यस्नेहः याज्यस्य यजमानस्य, जनकस्येति भावः, स्नेहः प्रियता, ममत्व-बुद्धिरिति यावत्।

आकुलयति (ङ)। भवतु, सान्त्वयामि तावदेनम्। (तदभिमुखम्)।
आङ्गिरस !—

नृपस्ते पाल्योऽयं मम पशुपुरोडाशरसिकः
पृथिव्यामव्याजोद्भटभुजभृतः सन्ति रघवः।
अमीषामुत्सिक्तं किमपि कुलमुत्कृत्य लवशो
विधाता तत् सर्वं यदभिरुचितं ते भृगुपतिः॥ ४२॥

(नेपथ्ये)। आः पाप! क्षत्रियायाः पुत्र! क्षत्रियभ्रूणहत्यापातकिन्! निसर्गनिष्प्राणं हि प्रहरणम् (क) इक्ष्वाकूणां ब्राह्मणेषु; तैर्यादृशस्तादृशो वा सोढव्योऽसि (ख)। कथमेवमातङ्कामनस्माकमपि ब्रह्मवर्चसात् (ग) न बिभेषि?

---

(ङ) आकुलयति उद्विग्नीकरोति।

नृप इति।—पशुपुरोडाशे पशुश्छागो यज्ञो वा, स एव पुरोडाशः हव्यभेदः, "पुरोडाशो हविर्भेदे यवस्था पिष्टकस्य च" इति विश्वः, तत्र रसिकः अनुरागी, सततं यज्ञानुष्ठानपर इति भावः, ते तव, अयम् एषः यजमानः, नृपः जनकः, मम मयेत्यर्थः, पाल्यः रक्षणीयः, तव याज्यमेनं न हन्मीति भावः, किन्तु रघवः रघुवंश्याः, पृथिव्याम् अव्याजम् अकपटम्, उद्भटम् उद्धतं, गर्वितमित्यर्थः, भुजं बाहुं, बिभ्रति धारयन्तीति तथोक्ताः, सन्ति विद्यन्ते, रघुवंशीयाः पृथिव्यामिदानीं महापराक्रान्ता भुजबलगर्विताश्च आत्मानमजेयं मन्यन्ते इति भावः, अमीषां रघूणां, किमपि वर्णनातीतम्, उत्सिक्तं गर्वितं, कुलं वंशं, लवशः खण्डशः, उत्कृत्य छित्त्वा, विनाश्येति यावत्, भृगुपतिः परशुरामः, ते तव, यत् अभिरुचितम् इष्टम्, अस्त्रत्यागरूपमिति भावः, तत् सर्वं विधाता विधास्यति, रघून् समूलं विनाश्य अस्त्रत्यागं करिष्यामीति निष्कर्षः। शिखरिणी वृत्तम्॥ ४२॥

(क) क्षत्रियायाः क्षत्रियस्य गाधेः कन्या रेणुका तस्याः, पुत्र तत्सम्बुद्धौ। क्षत्रियेति।—क्षत्रियाणां क्षत्रियजातीयानां, भ्रूणाः गर्भस्थाः शिशवः, तेषां हत्या वधः, सैव पातकी पापी तत्सम्बुद्धौ। क्षत्रियागर्भजातस्य तव क्षत्रियभ्रूणहत्या अतीव निर्घृणतायाः परिचायिका अमानवी चेति भावः। निसर्गनिष्प्राणं स्वभावतो दुर्बलं, स्वभावत एव ब्रह्महत्याविमुखमिति भावः। प्रहरणम् अस्त्रम्।

(ख) तैः इक्ष्वाकुभिः, यादृशस्तादृशः यथा तथा, अतिदुराचारोऽपि ब्राह्मण इति कृत्वा इति भावः, सोढव्योऽसि क्षन्तव्योऽसि।

जामदग्न्यः। (सरोष हासम्)। अरे ब्रह्मबन्धो! बान्धकिनेय! गौतमगोत्रपांसन! (घ)—

कुर्य्युः शस्त्रकथाममी यदि मनोर्वंशे मनुष्याङ्कुराः
स्याच्चेत् ब्रह्मगणोऽयमाकृतिगणस्तत्रेष्यते चेद्भवान्।
सम्राजां समिधां च साधकतमं धत्ते छिदाकारणं
धिङ्मौर्वीकुशकर्षणोल्वणकिणग्रन्थिर्ममायं करः॥ ४४॥

---

(ग) अतिक्रामन् उल्लङ्घयन्, अवजानन् इति यावत्। ब्रह्मवर्चसात् ब्रह्मतेजसः, ब्रह्मतेजसा त्वां दग्धुं समर्थोऽस्मीति भावः। ब्राह्मणानुरागिणः इक्ष्वाकवः दुष्टमपि त्वां ब्राह्मण इति कृत्वा क्षन्तुमर्हन्ति, न पुनरयं ब्राह्मणा इति भावः। भाः पापेत्यादि विशेषोत्पन्ना उक्तिरपि शतानन्दस्यैवेति बोध्यम।

(घ) ब्रह्मबन्धो! ब्राह्मणाधम! "ब्रह्मबन्धुरधिक्षेपे निर्देशे" इत्यमरः। बान्धकिनेय! बन्धकी कुलटा, तत्पुत्र: तत्सम्बुद्धौ कौलटेय! कुलटापुत्र! इत्यर्थः। "अथ बान्धकिनेयः स्यात् बन्धुलश्चासतीसुतः। कौलटेयः कौलटेरः" इत्यमरः। शतानन्दस्य मातुरहल्याया देवेन्द्रसङ्गमात् बन्धकीत्वमिति भावः। गौतमगोत्रपांसन! गौतमवंशाधम!

कुर्य्युरिति।—यदि मनोः वंशे कुले, उत्पन्ना इति शेषः, अमी रामादिकमनुष्या निर्दिश्य एते, मनुष्याङ्कुराः मानवपोताः, अङ्कुरवत् अनायासमुत्पाटनीयाः क्षुद्रमानवा इति भावः, शस्त्रकथां शस्त्रव्यवहारकथा, वयं शस्त्रप्रयोगकुशला इत्येवम् आलापमित्यर्थः, कुर्य्युः, आकृत्या अवयवेन, शिखा-सूत्र मौञ्जमेखलादिचिह्नमात्रेणेति यावत्, न तु ब्रह्मण्यादिनेति भावः, गण्यते कथ्यते इति आकृतिगणः ब्राह्मणवेशधारीति यावत्, अयं, जनक इति शेषः, चेत् यदि, ब्रह्मगणः ब्राह्मणत्वेन गणनीयः, स्यात् भवेत्, तथा तत्र ब्रह्मगणे, भवान् शतानन्दः इति यावत्, इष्यते गण्यते, ब्राह्मणत्वेनेति भावः, चेत्, तर्हि मौर्वी ज्याशिञ्जिनी, तथा कुशाः दर्भाः, विप्रक्षत्रोभयचिह्नमिति भावः, तेषां कर्षणेन उल्वणः उत्कटः, किणग्रन्थिः शुष्ककठिनमांसमित्यर्थः यस्मिन् तथाभूतः, मम अयं करः हस्तः, सम्राजां राजाधिराजानां, समिधां होमीयकाष्ठानाञ्च, छिदाकारणं छेदनार्थं, साधकतमं करणं, कुठारमिति यावत्, "करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः, धिक् निष्फलं यथा तथा, धत्ते धारयति। अत्र धिक्शब्दस्य निष्फलार्थत्वात् तद्योगे न द्वितीया, निन्दा-निर्भर्त्सनार्थयोरेव तद्विधानात्। "धिङ्

(नेपथ्ये)।

भगवन् भार्गव! भार्गव—

त्वं वेदवानसि वशिष्ठगुरोः सनाभिः
स्वायम्भुवः स भगवान् प्रभवो गुरुस्ते।
तेनातिमात्रमसृणं हृदयं मदीय-
मद्यापि न त्रुटति शाम्यतु ते कुदृष्टिः॥ ४५॥

जामदग्न्यः। (सोत्प्रेक्षम्)। किमात्थ रे दशरथ! किमात्थ? नाद्यापि हृदयं त्रुटतीति; कथं वा त्रुटतु यावदेव न व्याप्रियते (ङ) परशुः?

---

अर्थने च निन्दायां निष्फले कुत्सितेऽपि च" इति विश्वः। मनुवंश्याङ्कुरा एते चेत् वीराः स्युः, कुलटापुत्रः त्वमेव ब्राह्मणः स्यात्, तदा मम कुठारेण एते मनुवंश्यास्त्वञ्च शीघ्रं मारणीया इति भावः। शार्दूलविक्रीडितं वृत्तम्॥ ४४॥

त्वमिति।—त्वं वेदवान् वेदवित्, तथापि वशिष्ठ एव गुरुः तस्य सनाभिः सपिण्डः, एकगोत्रभवः इत्यर्थः, "सपिण्डास्तु सनाभयः" इत्यमरः; अपि च भवति, वशिष्ठसनाभित्वं प्रकटयन्नाह, स्वायम्भुवः ब्रह्मपुत्रः, सः नारायणस्यापि वक्षसि पदाघातकारी, अत एव त्रिलोकपूज्यः इत्यर्थः, भगवान् भृगुरिति भावः, ते तव, प्रभवः जन्महेतुः, उत्पत्तिकारणमित्यर्थः, "स्याज्जन्महेतुः प्रभवः स्थानञ्चाद्योपलब्धये" इत्यमरः; गुरुः आदिपुरुष इति यावत्; "गुरुस्ते" इत्यत्र "गुरोस्ते" इति पाठकल्पनं सङ्गतं, तथात्वे स भगवान् स्वायम्भुवः ते तव, गुरोः पितुः जमदग्नेः, प्रभवः जन्महेतुः, जमदग्नेः भृगुपुत्रत्वात्, परशुरामस्य च जमदग्निपुत्रत्वादिति बोध्यम्; वशिष्ठस्य पूर्वजो भृगुश्च, उभयोरेव ब्रह्मपुत्रत्वात् त्वं वशिष्ठस्य सनाभिरिति भावः, तेन हेतुना, वशिष्ठगुरोः सनाभित्वेन हेतुना इत्यर्थः, अतिमात्रम् अत्यर्थं, मसृणं कोमलं, त्वयि अकठोरमिति भावः, मदीयं हृदयं चित्तम्, अद्यापि न त्रुटति न विकृतिं गच्छतीति भावः; यद्वा—त्रुटति छिनत्ति, मर्यादाबन्धनमिति शेषः, तव मर्यादालङ्घनं न करोतीति भावः, अतः ते तव, कुदृष्टिः अशुभदर्शनं, रामभद्रे विद्वेषभाव इति भावः, शाम्यतु शान्तिं गच्छतु निवर्त्ततामिति यावत्, गुरोः सपिण्ड इति त्वां क्षमे इति भावः। वसन्ततिलकं वृत्तम्॥ ४५॥

(ङ) आत्थ ब्रवीषि। त्रुटति विदीर्णं भवति। व्याप्रियते प्रवर्त्तते, त्वदङ्गच्छेदन-निमित्तमिति शेषः इति भावः।

( नेपथ्ये )।

आः!! जामदग्न्य! गुरूनप्यधिक्षिपसि!! ( च )—

पुरोजन्मा माद्यप्रभृति मम रामः स्वयमहं
न पुत्रः पौत्रो वा रघुकुलभुवां च क्षितिभुजाम्।
अघोरं घोरं वा कलयतु जनो माममयं
मया बद्धो दुष्टद्विजदमनदीक्षापरिकरः॥ ४६॥

जामदग्न्यः। ( सावज्ञं रामं प्रति )। अये! किमयं लक्ष्मणो भवन्तं पुरोजन्मानमपदिशति? ( छ )।

रामः। ( सविनय-स्मितम् )। प्रसीद भगवन्! स एवायं यौवनार्वाचि निरपराधमधुरे वयसि ( ज ) वर्त्तमानो यानि कानिचिदक्षराणि प्रलपति ( झ )।

---

(च) आः इति कोपे, "आस्तु स्यात् कोप-पीडयोः" इत्यमरः। गुरून् पितॄन्, अधिक्षिपसि भर्त्सयसि।

पुरोजन्मेति।—अद्य प्रभृति अद्यारभ्य, रामः मम पुरोजन्मा अग्रजः, न, स्वयं स्वतन्त्रः, स्वेच्छाचारीत्यर्थः, अहं रघुकुलभुवां रघुवंशोत्पन्नानां, क्षितिभुजां राज्ञां, दशरथादीनामिति भावः पुत्रः पौत्रो वा न, तद्वंशानुवर्त्तित्वादिति भावः, अयं समाज इति भावः, जनः लोकः, माम् अघोरम् अनुद्धतप्रकृतिकं, घोरम् अनुद्धतप्रकृतिकं वा, कलयतु विवेचयतु, तत्र न मम क्वाऽपि क्षतिरिति भावः, मया अयम् एवः, दुष्टस्य दुर्विनीतस्य, द्विजस्य ब्राह्मणस्य, दमनदीक्षायां शासनव्रते, परिकरः समारम्भः, प्रगाढगात्रिकाबन्धः इत्यर्थः, बद्धो वा, "भवेत् परिकरो व्राते पर्य्यङ्क-परिवारयोः। प्रगाढगात्रिकाबन्धे विवेकारम्भयोरपि॥" इति विश्वः। "समारम्भो परिकरो" इति त्रिकाण्डशेषः; बद्धः रचितः, दुष्टमेनं शास्मीति भावः। "माममयम्" इत्यत्र "माममनयम्" इति पाठे—अघमयं पापमयं, पापिष्ठमित्यर्थः, मामिति अनेनान्वयः। शिखरिणी वृत्तम्॥ ४६॥

(छ) सावज्ञं सावहेलं, लक्ष्मणोक्तिश्रवणेन इति भावः। अपदिशति व्यक्करोति, अस्वीकरोतीत्यर्थो वा।

(ज) अर्वाचि पूर्वस्मिन्, शैशवे इत्यर्थः, निरपराधमधुरे नास्ति अपराधो यत्र तादृशम्, अत एव मधुरं तस्मिन्, वयसि कौमारे इति यावत्, कुमारस्यापराधो न गण्यते इति भावः।

मानवद्यः। (सस्मितम्)। कथमेतावत्यपि मामसूयमाण-माशङ्कसे? (ञ) यतस्त्वदनुवर्त्ती खल्वयं (ट) त्वामिवास्तमय-मानमन्वस्तमयिष्यते (ठ)। निर्वाणं हि सवितारं तरणि-मणिरप्यनु-निर्वाति। (ड) (नेपथ्यं प्रति)। साधु रे लक्ष्मण! साधु, कनिष्ठतरोऽपि वरं (ढ) भवान्, न पुनरयं वृथा-ज्येष्ठो (ण) रामस्ते।—

प्रागुच्चैःशिरसं क्षुरप्रनखरैः क्रौञ्चाद्रिदन्तावलं
भित्त्वा हंसमयानि मौक्तिकफलान्याकीर्य्य पर्य्यापिताम्।

---

(झ) अक्षराणि बभाषि। प्रलपति अनर्थकं वदति, बालस्वभावेन असम्बद्धं यथा तथा वदतीत्यर्थः। "प्रलापोऽनर्थकं वचः" इत्यमरः।

(ञ) एतावत्यपि एतावदधिके निर्भर्त्सनेऽपि, "दुष्टद्विजदमनदीक्षापरिकरः" इत्यनेन कृते अधिक्षेपेऽपि इति भावः, असूयमाणम् अक्षाम्यन्तम्, आशङ्कसे बुध्यसे, नाहं कदाऽपि क्षमिष्ये इति भावः। यद्वा—असूयमाणम् अक्षाम्यन्तं, क्षमाशून्य-मित्यर्थः, एतादृशाधिक्षेपात् परमेव मया वधः एव यत् तस्य प्रतिविधानं न कृतं, तेन मम अक्षमालक्षणं त्वया कुत्र दृष्टम्? मया तु क्षान्त एवायं, परं सा क्षमा तव जीवनकालव्यापिनी भविष्यतीति निष्कर्षः।

(ट) त्वदनुवर्त्ती तवानुगामी। अयं लक्ष्मणः।

(ठ) अस्तमयमानम् अदर्शनं गच्छन्तं, मत्परशुप्रहारादिति भावः, त्वां भवन्तम्, अनु पश्चात्, अस्तमयिष्यते अदर्शनं गमिष्यति, त्वां निहत्य पश्चादेनमपि हनिष्यामीति भावः।

(ड) निर्वाणम् अस्तं गतं, सवितारं सूर्य्यम्, अनु पश्चात्, तरणिमणिरपि सूर्य्य-कान्तो मणिरपि, निर्वाति निर्वाणं गच्छति, निष्प्रभो भवतीत्यर्थः।

(ढ) वरं मनाक् प्रियः, अव्ययमेतत्। "मनागिष्टे वरं यत्तु कविदाहुस्तद-व्ययम्" इति प्राकृतः।

(ण) वृथाज्येष्ठः निरर्थकोऽग्रजः, निर्वीर्य्यत्वादिति भावः।

प्रागिति।—प्राक् पूर्व्वे, क्षुरप्राणि बाणविशेषा एव, नखराः तैः, उच्चैः उन्नतं, शिरः शिखरं मस्तकञ्च यस्य तथोक्तं, क्रौञ्चाद्रिरेव क्रौञ्चपर्वत एव, दन्तावलः हस्ती

सैंही वृत्तिमधिष्ठितेऽपि हि मयि व्याजेन कल्पेन ते
दिष्ट्या कौतुकमाभिरामिकमसि त्वं कोऽपि वीराङ्कुरः ॥ ४७ ॥

(नेपथ्ये)।

भार्गव! भार्गव! दुर्विज्ञानमिदमर्वाक् फलनिष्पत्ते-राभिरामिकं साङ्ग्रामिकं वा (त)।

रामः। (सरोषं नेपथ्याभिमुखम्)। आः!! वत्स! कोऽयमद्यतनः (थ) ते दुर्विनयप्ररोहो (द) यत् गुरूनपि चेलीकरोषि? (ध)।

---

तं, भित्त्वा विदार्य्य, हंसमयानि हंसरूपाणि, शुभ्रत्वादिति भावः, मौक्तिकफलानि मुक्ताफलानि, आकीर्य्य आकृष्य, इतस्ततो विक्षिप्येति यावत्, पर्य्यापिताम् आत्मानं सर्वथा प्रापिता, सिंहस्य इव सैंही ता सिंहसम्बन्धिनीं, वृत्तिं व्यवहारं, गजकुम्भं भित्त्वा मौक्तिकाकर्षणवत् व्यापारमित्यर्थः, अधिष्ठिते आश्रिते, सिंहवत् पराक्रान्ते इत्यर्थः, मयि परशुरामेऽपि, दिष्ट्या भाग्येन, ममेति शेषः, अन्येषां वीर्य्याभावात् त्वयि च तद्वीरत्वदर्शनादिति भावः, व्याजेन चरित्रोचितेन, कल्पेन नियमेन, शौर्य्य-प्रकटनरूपेणेति भावः, ते तव, अभिरामः प्रीतिः, तस्मै हितम् आभिरामिकं प्रीतिप्रद-मित्यर्थः, कौतुकं कुतूहलम्, औत्सुक्यमिति यावत्, दृश्यते इति शेषः। यद्वा—व्याजेन कल्पेन ते, वचनमिति शेषः, आभिरामिकं कौतुकं कौतुकावहञ्च इत्यर्थः, तस्मात् त्वं कोऽपि अद्भुतप्रकृतिकः, वीराङ्कुरः वीरप्ररोहः, असि; पुरा परशुरामेण क्रौञ्चाद्रिं शरेण विदार्य्य मानससरोविहारिणां हंसानां द्वारं कृतमिति पुराणम्। शार्दूल-विक्रीडितं वृत्तम् ॥ ४७ ॥

(त) दुर्विज्ञानं दुर्ज्ञेयम्। इदं मद्वचनं कौतुकं वा। अर्वाक् पूर्वम्। फलनिष्पत्तेः कार्य्यसिद्धेः, विजयलाभस्येति यावत्। साङ्ग्रामिकं सङ्ग्रामाय हितम्। यावत् न त्वया अहं निहतः, मया वा त्वं, तावत् मम कौतुकम् आभिरामिकं साङ्ग्रामिकं वा न ज्ञायते इति भावः।

(थ) अद्यतनः अद्यभवः, साम्प्रतिकः इत्यर्थः।

(द) दुर्विनयप्ररोहः औद्धत्याङ्कुरः, अशिष्टाचारप्रारम्भ इति यावत्।

(ध) गुरूनपि पूज्यानपि। चेलीकरोषि आश्रयीकरोषि, "पुरोऽन्त्या नायमन्ति" इत्यादिवचनेन लघ्वीकरोषीति भावः; यद्वा—प्रतिवचसा तिरस्करोषीति भावः।

( नेपथ्ये ) ।

आर्य्य ! तूष्णीम् ( न ) अयमस्मि । नमस्ते जामदग्न्य ! नियन्त्रितः ( प ) अहमार्य्येण ।

जामदग्न्यः । ( विहस्य ) । अरे राम ! कथमद्यापि वाचमेव सूनृतामस्मदभियोगप्रशमनीं प्रथयसे ? ( फ ) । कवचहरोऽसि, अस्त्रैरेव प्रतिक्रियन्तां ( ब ) अस्त्राणि । किन्तु रे !—

राजन्येभ्यो जन्म वैवस्वतेभ्य-
श्चक्रे चापाचार्य्यकं कौशिकश्च ।
क्षात्रीं चर्य्यामेवमुन्मुञ्चतस्ते
गोत्राक्षेपी वज्रलेपः कलङ्कः ॥ ४८ ॥

रामः । ( सगर्व-स्मितम ) । भगवन् ! सत्यमेतत्—

जातः सोऽहं दिनकरकुले क्षत्रियश्रोत्रियेभ्यो
विश्वामित्रादपि भगवतो दृष्टदिव्यास्त्रपारः ।

---

(न) तूष्णी मौनी ।

(प) नियन्त्रितः संयतः, निवर्त्तित इत्यर्थः ।

(फ) सूनृता सत्यमधुरां, "सूनृतं मङ्गलेऽपि स्यात् प्रियसत्ये वचस्यपि" इति विश्वः । अस्मदभियोगप्रशमनीं मम कोपशान्तिकरीम् । प्रथयसे विस्तारयसि, पुनः पुनर्वदसीत्यर्थः ।

(ब) कवचहरः वर्मधरः, सन्नद्ध इत्यर्थः । प्रतिक्रियन्तां प्रतिविधीयन्तां, निवार्य्यन्तामित्यर्थः ।

राजन्येभ्य इति ।—वैवस्वतेभ्यः सौरेभ्यः, राजन्येभ्यः नृपेभ्यः, सूर्य्यवंशीयनृपतिभ्यः इत्यर्थः, जन्म उत्पत्तिः, तवेति शेषः, कौशिकः विश्वामित्रः, चापाचार्य्यकं धनुर्वेदशिक्षायां गुरुत्वमित्यर्थः, ते इति शेषः, चक्रे कृतवांश्च, किन्तु एवम् इत्थं-प्रकारेण, क्षात्रीं क्षत्रियसम्बन्धिनीं, चर्य्याम् आचारं, विक्रमव्यापारमिति यावत्, उन्मुञ्चतस्त्यजतः, ते तव, गोत्रं कुलम्, आक्षिपति निन्दतीति तथोक्तः, कलङ्कः अपवादः, वज्रलेपः चिरस्थायीति भावः, भवतीति शेषः । शालिनी वृत्तं—"मात्तौ गौ चेच्छालिनी वेदलोकैः" इति तल्लक्षणात् ॥ ४८ ॥

अस्मिन् वंशे कथयतु जनो दुर्यशो वा यशो वा
विप्रे शस्त्रग्रहणगुरुणः साहसिक्यात् बिभेमि ॥ ४९ ॥

जामदग्न्यः। (सक्रोधम्)। आः!! पाप दुर्मुख! वशिष्ठ इव विश्वामित्र इव स्वस्तिवाचनिको (भ) ब्राह्मणस्ते परशुरामः!! (सव्यथम्)। धिक् कष्टम्!! एवमुच्चावचवाचः (म) क्षत्रियाः श्रूयन्ते। (क्रोधाभिनयं नाटयन्)। अयमहं भोः!—

सह दशरथमद्योत्कृत्य पुत्रैश्चतुर्भि-
र्जनककुलकबन्धस्कन्धनिर्गत्वरीभिः।
नवरुधिरलताभिः क्लृप्तलोलापताकां
रणभुवमतिरौद्रीं रुद्रशिष्यः करोमि ॥ ५० ॥

---

जात इति।—स. अहं भवदुक्तप्रकारवीरचर्य्यापराङ्मुखोऽस्तु, दिनकरकुले सूर्य्यवंशे, क्षत्रियश्रोत्रियेभ्यः क्षत्रिया एव श्रोत्रियाः वेदविदो ब्राह्मणविशेषाः तेभ्यः, ब्रह्मनिष्ठेभ्यः क्षत्रियेभ्यः इति यावत्, जातः समुद्भूतः; भगवतः विश्वामित्रात् दृष्टः प्राप्त इति यावत्, दिव्यानाम् अलौकिकानां, जृम्भकादीनामिति यावत्, अस्त्राणां पारः अन्तः येन तथाभूतोऽपि, जात इति शेषः, जनः प्राकृतजनः, अस्मिन् वंशे सूर्य्यकुले, दुर्यशो वा अकीर्त्तिर्वा, यशो वा कीर्त्तिर्वा, कथयतु घोषयतु, मम पराङ्मुखत्वेनेति भावः, किन्तु विप्रे ब्राह्मणे, ब्राह्मणं प्रतीत्यर्थः, शस्त्रग्रहणेन आयुधप्रयोगेण, गुरु महत् तस्मात्, साहसिक्यात् अविमृष्यकारित्वात्, बिभेमि शङ्के। मन्दाक्रान्ता वृत्त—"मन्दाक्रान्ताऽम्बुधि-रस नगैर्मो भ-नौ-तौ गयुग्मम्" इति तल्लक्षणात् ॥ ४९ ॥

(भ) स्वस्तिवाचनिकः स्वस्तीति वचनं प्रयोजनमस्येति स्वस्तिवाचनिकः यत्किञ्चित् प्रतिग्रहवचनं श्रुत्वा स्वस्तीति वचनप्रयोक्तेति भावः। वशिष्ठादीनां प्रति वाक्योक्तिरियम्।

(म) उच्चावचवाचः विविधालापाः, "उच्चावचं नैकभेदम्" इत्यमरः। मत्समीपे क्षत्रियाणां मौनावलम्बनमेवोचितं, परन्तु ईदृशो तेषां स्पर्द्धा यत् मया सह एवं वाक्चातुर्य्यमपि कर्त्तुमुत्सहन्ते, दुःसहोऽयं व्यापार इति भावः।

सहेति।—रुद्रशिष्यः शङ्करान्तेवासी, अयमहंभोरिति गद्यस्थवाक्येनान्वयः, परशुरामः इति शेषः, अद्य चतुर्भिः पुत्रैः रामादिभिः, सह दशरथम् उत्कृत्य छित्त्वा, कुठारेण निहत्य इत्यर्थः, जनककुलस्य विदेहवंशस्य, कबन्धानां मस्तकै, छिन्नशिरस्कां

रामः। (सरोषम्)। आः !! जामदग्न्य ! केयं वाग्विभीषिका ? (य) दूरमतिक्रामति प्रसङ्गे (र) कदाचिदिक्ष्वाकवोऽपि दुर्मनायन्ते (ल)।

जामदग्न्यः। (सभ्रुकुटीभङ्गम्)। ततः किम् ?

रामः। (सावष्टम्भम् (व))। ततश्च—

तैस्त्रिःसप्तभिरेव राजविजयैर्यत्ते भुजस्तम्भयोः
कृत्वा तोरणमालिकां पुनरमुं द्वाविंशमारिप्सते।
द्रक्ष्यामि त्वयि वर्त्तमानमधुना तच्चापविद्याऽद्भुतं
शम्भोस्तस्य हि केवलेन धनुषा कृष्टेन तुष्टिर्न मे ॥ ५१ ॥

---

कलेवराणां, "कबन्धस्तु क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरः, स्कन्धेभ्यः निर्गलद्भिः निर्गच्छद्भिः, नवरुधिरलताभिः सद्यःपातितशोणितधाराभिः, अभिनवरक्तानां लताकल्पैः प्रवाहैरिति भावः, क्लृप्ता रचिता, लोलया चञ्चलया, पताका वैजयन्ती यस्यां तथाभूताम्, अत एव रणभुवं सङ्ग्रामभूमिम्, अतिरौद्रीम् अतिभयानकाम्, करोमि। मालिनीवृत्तं—"न-न-म-य-य युतेयं मालिनी भोगिलोकैः" इति तल्लक्षणात् ॥ ५० ॥

(य) वाग्विभीषिका वाचा विभीषिका भयप्रदर्शनम्, इयं विभीषिका अति-तुच्छा इति भावः।

(र) दूरम् अत्यर्थम्, अतिक्रामति वृद्धिं गच्छति, उज्जीवितावारस्य सीमां लङ्घयति सतीत्यर्थः। प्रसङ्गे कस्यचित् व्यापारस्य प्रस्तावे।

(ल) दुर्मनायन्ते दुर्मनस इव विकृतचेतस इव आचरन्ति, विकृतचित्तत्वेन ब्राह्मणानामपि मर्य्यादां रक्षितुं न शक्नुवन्तीति भावः।

(व) सावष्टम्भं सगर्वम्।

तैरिति।—यत् चापविद्याऽद्भुतं धनुर्वेदशिक्षारूपमद्भुतं वैचित्र्यमित्यर्थः, धनुर्विद्या-नैपुण्यमिति यावत्, तैः सर्वलोकप्रसिद्धैः, त्रिःसप्तभिरेव एकविंशतिसङ्ख्याकैरेव, राजविजयैः क्षत्रियनिधनैः, ते तव, भुजाविव बाहुद्वयमिव, स्तम्भौ तयोः तोरणमालिकां बहिर्द्वारविशेषमालाम्, कृत्वा विधाय, तोरणं यथा मालया अलङ्करोति तथा भुजस्तम्भौ अलङ्कृत्येति भावः, "तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः; पुनः अमुं द्वाविंशं द्वाविंशतिः पूरणं, तत्सङ्ख्यापूरणमिति भावः, आरिप्सते आरब्धुमिच्छति, अधुना त्वयि वर्त्तमानं

जामदग्न्यः। (सरोषम्)। किमात्थ रे! किमात्थ? ("इत्यादि त्वयि वर्त्तमानमधुना—" इत्यादि श्लोकोत्तरार्द्धं पठित्वा सव्यथम्)। अहो! सर्व्वतः समिध्यमानदारुणस्य रोषजातवेदसो (अ) विदेहादिलोपयोः कुलं नाम कति भविष्यन्त्याहुतयः (ब)। (ऊर्द्ध्वे)। भो भोः सप्तद्वीपकुलपर्व्वतवर्त्तिनो राजानः! चेतयध्वं चेतयध्वम् (स)—

येन स्वां विनिहत्य मातरमपि क्षत्रास्रमध्वासव-
स्वादाभिज्ञपरश्वधेन विदधे निःक्षत्रिया मेदिनी।
यद्बाणव्रणवर्त्मना शिखरिणः क्रौञ्चस्य हंसच्छला-
दद्याप्यस्थिकणाः पतन्ति स पुनः क्रुद्धो मुनिर्भार्गवः॥२२॥

---

क्रियमाणं, तव चापविद्याऽद्भुतं, इत्यादि, हि यतः केवलेन एकेन, एकमात्रेणेत्यर्थः, "एके मुख्यान्यकेवलाः" इत्यमरः; तस्य तव गुरोरित्यर्थः, शम्भोः हरस्य, धनुषा कृष्टेन भङ्गेन, मे मम, तुष्टिः परितोषः, न अस्तीति शेषः, यावत् तव अद्भुतचापविद्यायाः परीक्षा मया न क्रियते, यावच्च तव धनुर्मया न कृष्यते, तावत् न मे परितुष्टिरिति भावः। शार्दूलविक्रीडितं वृत्तम्॥२१॥

(अ) सर्व्वतः समन्तात्। समिध्यमानदारुणस्य समिध्यमानः सम्यक् दीप्यमानः, अत एव दारुणः भयङ्करः तस्य। रोषजातवेदसः कोपाग्नेः।

(ब) नाम सम्भावनायां. कति कियत्सङ्ख्यकाः, आहुतयः हवनीयद्रव्याणि।

(स) सप्तेति।—सप्तसु द्वीपेषु ये कुलपर्व्वताः महेन्द्रादयो गिरयः, तत्र वर्त्तन्ते तिष्ठन्ति इति तादृशाः। चेतयध्व चेतयध्वं जागृत जागृत, अवहितो भवत अवहिता भवत इत्यर्थः, स्वार्थे णिजन्तोऽयं प्रयोगः।

येनेति।—येन परशुरामेण, क्षत्राणाम् क्षत्रियाणाम् अस्राण्येव रक्तान्येव, मध्वासवाः मद्यानीत्यर्थः, "मध्वासवो माधवको मधु माध्वीकमद्ययोः" इत्यमरः, तेषां स्वादाभिज्ञः आस्वादनिपुणः, यः परश्वधः कुठारः तेन, स्वां निजां, मातरमपि जननीमपि, विनिहत्य विनाश्य, मेदिनी पृथ्वी, निःक्षत्रिया क्षत्रियशून्या, विदधे कृता, अद्यापि इदानीमपि, यस्य परशुरामस्य, बाणेन शरेण, व्रणः क्षतं, रन्ध्रमिति यावत्, तदेव वर्त्म पन्थाः तेन, क्रौञ्चस्य तदाख्यस्य, शिखरिणः पर्व्वतस्य, अस्थिकणाः अस्थिखण्डानि, हंसच्छलात् हंसव्याजेन, पतन्ति, स मुनिः भार्गवः परशुरामः, पुनः भूयः, क्रुद्धः रुष्टः, अत एव चेतयध्वं चेतयध्वमिति पूर्व्वेण सम्बन्धः। पुरा जमदग्निः स्वां भार्य्यां रेणुकां

रामः। (सहर्षं-सस्मितम्)—

नृपानप्रत्यक्षान् किमपवदसे ? नन्वयमहं
शिशुक्रीडाभग्नत्रिपुरहरधन्वा तव पुरः।
अहङ्कारक्रूरार्जुनभुजवनव्रश्चनकला-
निसृष्टार्थो बाहुः कथय कतरस्ते प्रहरतु ? ॥ ५३ ॥

जामदग्न्यः। (सकोपाटोपम् (ङ))। आः !! पाप विकर्त्तनकुलकलङ्क ! पुनस्तरां (च) तदेव पार्वतीदयितकोदण्डदलन-साहसमुद्भावयसि ? (छ)। अहह !! क्षत्रियोऽपि भार्गवस्य

---

जलाहरणाय नर्मदानदीं गतां तत्र कार्त्तवीर्य्यार्जुनस्य स्त्रीभिः सह जलक्रीडादर्शन-कुतूहलेन कृतविलम्बामागतां ध्यानेन विज्ञाय क्रोधात् "जहि एनाम्" इति पुत्रान् प्रत्येकमादिदेश, तेषां कनिष्ठः परशुरामः पितुराज्ञां शिरसि निधाय परशुधारया मातरं चिच्छेदेति पुराणम्। शार्दूलविक्रीडितं वृत्तम् ॥ ५२ ॥

नृपानिति।—अप्रत्यक्षान् अदृष्टिगोचरान्, स्थानान्तरस्थानिति यावत्, नृपान् राज्ञः, किं कथम्, अपवदसे निन्दसि ? यद्वा—अपवदसे ? आक्षिपसि ? स्थानान्तराव-स्थितान् तान् उद्दिश्य चीत्करोषीत्यर्थः, ननु भोः। शिशुक्रीडया बालसुलभखेलया, क्रीडाव्याजेनेत्यर्थः, भग्नं चूर्णं, त्रिपुरहरस्य शम्भोः, धनुः येन तथाभूतः, अयम् एषः, अहं तव पुरः अग्रतः, तिष्ठामीति शेषः, अहङ्कारेण गर्वेण, क्रूरस्य निष्ठुरस्य, समुद्धतस्येति भावः, तव पितृवधरूपदुष्कार्यकारित्वादिति भावः, अर्जुनस्य कार्त्तवीर्य्यस्य, भुजवनानां सहस्रबाहूनामिति यावत्, व्रश्चनस्य छेदनस्य, या कला सामर्थ्यं, तेन निसृष्टः त्यक्तः, अर्थः वस्तु, सार इति यावत् यस्य तथाभूतः, "अर्थोऽभिधेयरैवस्तु-प्रयोजननिवृत्तिषु" इत्यमरः; ते तव, कतरः वामदक्षिणयोः कः, वामो वा दक्षिणो वा इति भावः, बाहुः भुजः, प्रहरतु, मामिति शेषः, कथय ? वद ?। शिखरिणी वृत्तम् ॥ ५३ ॥

(ङ) सकोपाटोपं कोपेन क्रोधेन, आटोपः तर्जनं, तेन सह वर्त्तमानं यथा तथा।

(च) विकर्त्तनकुलकलङ्क ! सूर्य्यवंशाधम ! पुनस्तरां पुनरपि।

(छ) पार्वतीति।—पार्वतीदयितस्य हरस्य, कोदण्डं धनुः, तस्य दलनं भञ्जनमेव, साहसं, दलनेन यत् साहसम् अविमृश्यकारित्वम् इति वा। उद्भावयसि प्रकटयसि, उच्चैः घोषयसीत्यर्थः।

कार्त्तवीर्य्यजयिनं भुजदण्डमन्विष्यति !! अहो ! गरीयान् (ग) कालः. यदश्रुतचरमपि (घ) श्रावयति, अदृष्टचरमपि (ङ) दर्शयति । अपि च, रे राजन्यकीट !—

जातास्येव यथा पितुः परिभवन् होमार्जुनीमर्जुनो
मत्कोदण्डमनेकराजकवधस्वाध्यायमध्यापिपत् ।
तेनैवास्ति भवत्सु यद्यपि मम क्रोधोऽयमौत्सर्गिक-
स्तत् सम्प्रत्युपसर्जनं गुरुधनुर्भङ्गादयं हेतुमान् ॥ ५४ ॥

रामः। ऋषे जामदग्न्य ! पटच्चरीभूता (च) क्षत्त्रियं पुरातनी कीर्त्तिपताका ; तन्निदानीमेव द्रष्टव्यम् । (नेपथ्याभिमुखम्)। वत्स लक्ष्मण ! धनुर्धनुः ।

---

(ग) गरीयान् अतिमहान्, कालः कालस्य प्रभावातिशय इत्यर्थः, कालमाहात्म्यं विचित्रमिति यावत् ।

(घ) अश्रुतचरमपि पूर्वं कदाऽपि न श्रुतमपि ।

(ङ) अदृष्टचरमपि पूर्वं कदाऽपि न दृष्टमपि ।

जातास्येति ।—पितुः जमदग्नेः, होमार्जुनीं होमसाधनीम् अर्जुनीं धवलां गामित्यर्थः, "वलक्षो धवलोऽर्जुनः" इत्यमरः ; यद्वा—अर्जुनीं सौरभेयीम्, "अर्जुनी सौरभेयी गौः" इत्यमरः ; परिभवन् तिरस्कुर्वन्, ताडयन्नित्यर्थः, बलपूर्वकं गृह्णन् इति यावत्, अर्जुनः कार्त्तवीर्य्यः, यथा मम कोदण्डं धनुः, अनेकेषां बहूनां, राजकानां राजसमूहानां, वध एव विनाश एव, स्वाध्यायः वेदः तम्, अध्यापिपत् अध्यापितवान्, शिक्षयामासेत्यर्थः, कार्त्तवीर्य्यं प्रति क्रोधेनैव मया धनुष्मता सर्वे क्षत्रिया निहता इति भावः, तत् जातास्येव अवगच्छस्येव, तेनैव हेतुना, कार्त्तवीर्य्यं प्रति कोपेनैव हेतुनेत्यर्थः, यद्यपि भवत्सु क्षत्रियमात्रेषु इति भावः, अयं क्रोधः औत्सर्गिकः सामान्यः, साधारणः इत्यर्थः, अस्ति वर्त्तते, सम्प्रति तत उपसर्जनम् अप्रधानम्, औत्सर्गिक इति यावत्, अयं क्रोधः, गुरोः हरस्य, धनुर्भङ्गात् चापभञ्जनात्, हेतुमान् सकारणः, संवृत्त इति शेषः, सामान्यतो युष्मासु स्थितस्य क्रोधस्य प्रधानभूतो हेतुर्गुरुधनुर्भङ्गरूपो जातः, तस्मादहं न क्षमे इति तात्पर्य्यम् । शार्दूलविक्रीडितं वृत्तम् ॥ ५४ ॥

जामदग्न्यः। (साक्षेपम्)। अरे अनात्मज्ञ क्षत्रियवटो! (छ)—

तच्चापमैशभुजपीडनपीतसारं
प्रागप्यभज्यत भवांस्तु निमित्तमात्रम्।
राजन्यकप्रधनसाधनमस्मदीय-
माकर्ष कार्मुकमिदं गरुडध्वजस्य॥ ५५॥

आकृष्टेन पुनरमुनैव धनुषा किलास्मानभियोत्स्यसे (ज)। क्षत्रसत्रे (झ) दीक्षितानां तु चिरस्य होता अयं परशु-रस्माकमस्त्येव। (ञ) (इति रामस्य हस्ते धनुरर्पयति)।

रामः। (गृहीत्वा)। भार्गव! समन्तादुद्घातिनी (ट)

---

(च) पटच्चरीभूता जीर्णवस्त्रस्वरूपा,, जीर्णवस्त्रखण्डवत् दूरे निक्षेप्तव्या इति भावः, "पटच्चरं जीर्णवस्त्रम्" इत्यमरः।

(छ) अनात्मज्ञ। आत्मविस्मृत। कोऽहमिति स्वरूपानभिज्ञ। इति यावत्, निजसामर्थ्ये अयथाविश्वासिन्। इति भावः। क्षत्रियवटो। क्षत्रियब्रह्मचारिन्। क्षत्रिय-शिशो। इति वा।

तदिति।—ईशस्य हरस्य, भुजेन बाहुना, यत् पीडनं दलनं, तेन पीतः भक्षितः, क्षयित इति यावत्, सारो बलं, स्थिरांश इति यावत्, दार्ढ्यमिति भावः यस्य तथाभूतं, "सारो बले स्थिरांशे च" इत्यमरः, तत् चापं धनुः, प्रागपि पूर्वमेव, अपिरवधारणार्थः, अभज्यत स्वयमेव भग्नमित्यर्थः, कर्म कर्त्तरि प्रयोगः; भवांस्तु निमित्तमात्रम् उपलक्षमात्रमेव, न तु प्रकृतस्य भञ्जने तव सामर्थ्यमिति भावः, राजन्यकैः राजसमूहैः सह, प्रधनं युद्धं, यद्वा—राजन्यकानां राजसमूहानां, प्रधनं दारणं, निधनमित्यर्थः, "प्रधनं युधि दारणे" इति हैमः, तस्य साधनं हेतुभूतम्, अस्मदीयं मदीयं, मम हस्तस्थितमिति यावत्, गरुडध्वजस्य नारायणस्य, इदं कार्मुकं धनुः, आकर्ष आरोपय। वसन्ततिलकं वृत्तम्॥ ५५॥

(ज) अभियोत्स्यसे योधयिष्यसि, अस्माभिः सह युद्धं करिष्यसीत्यर्थः।

(झ) क्षत्रसत्रे क्षत्रियवधयज्ञे। दीक्षितानां व्रतव्रतानाम्।

(ञ) होता होमकर्त्ता। अयं परशुरस्त्येव धनुषोऽभावेऽपि अनेन परशुनैव त्वां हनिष्यामीति भावः।

(ट) उद्घातिनी उन्नतानता।

भूमिरियम्; तदेहि, विमर्दक्षमं प्रदेशान्तरमवतराव:। (ठ)

जामदग्न्यः। (सरोषं परिक्रामन्)। भो भोः क्षात्रेण ब्राह्मेण च तेजसा विकत्थमानाः! (ड) तदत्र—

भवतु शरणदो वा सर्वशस्त्राभिसारः
प्रतिविदधतु वाऽस्मिन्नाशिषो वैजयिक्यः।
अदशरथमरामं निर्विदेहेन्द्रमुर्वी-
वलयमिह विधत्ते रोषणो रैणुकेयः॥ ५६ ॥

(इति निष्क्रान्तौ)।

(नेपथ्ये)। भो भोः पौर-जानपदाः! प्रवर्त्त्यतां माङ्गलिकमातोद्यम् (ढ)। प्रसज्यताम्(ण) अयमपि वैदेहीविवाहमहोत्सवो जामदग्न्यविजयोत्सवेन—

---

(ठ) विमर्दक्षमं युद्धयोग्यं, समतलमिति यावत्। अवतराव: गच्छाव इत्यर्थ:।

(ड) विकत्थमानाः आत्मश्लाघिनः।

भवत्विति।—सर्वैः अशेषैस्थितैः समस्तैः, वीरैरिति शेषः, शस्त्रैश्च, सर्वैरिति शेषः, अभिसार: अभियोगः, यद्वा—सर्वाणि शस्त्राणि आयुधानि, अभिसाराणि अभिसराणि, सहायाः इत्यर्थः, "अनुप्लवः सहायश्चानुचरोऽभिसरः समाः" इत्यमरः, यद्वा—अभिसाराणि साधनानि, युद्धोपकरणानीत्यर्थः यस्य तादृशः,कोऽपि वीर इति शेषः, शरणदः आश्रयप्रदः, रक्षिता इत्यर्थः, रामस्येति शेषः, भवतु वा, भवद्भिः सर्वैर्वीरैः सर्वशस्त्रैश्च समवेतः सन् इत्यर्थः, सर्वशस्त्रधारिणा केनापि वीरेण समवेतः सन् इत्यर्थो वा, रामो युध्यतां वेति भावः, अस्मिन् रामे, वैजयिक्यः विजयसाधन्यः, आशिषः शुभाशंसाः, युष्माकमिति शेषः, प्रतिविदधतु वा प्रतीकारं कुर्वन्तु वा, रोषणः कोपनः, रैणुकेयः रेणुकानन्दनः,परशुराम इत्यर्थः, इह अस्मिन् संसारे, उर्वीवलयं भूमण्डलम्, अदशरथं दशरथशून्यम्, अरामं रामशून्यं, निर्विदेहेन्द्र विदेहराजरहितञ्च, विधत्ते करोति॥ मालिनी वृत्तम्॥ ५६॥

(ढ) प्रवर्त्त्यताम् आरभ्यताम्। मङ्गलाय हितं माङ्गलिकं मङ्गलसूचकम्। आतोद्यं वीणा-मुरज-वंश-कांस्यवाद्यं, "ततं वीणादिकं वाद्यमानद्धं मुरजादिकम्। वंशादिकन्तु शुषिरं कांस्यतालादिकं घनम्॥ चतुर्विधमिदं वाद्यं वादित्रातोद्य-नामकम्॥" इत्यमरः।

कन्या काचिदिहापि कर्मणि पणः स्यादित्यसूया वलत्-
सीतापाङ्गमयूखमांसलमुखज्योत्स्नाविलिप्तां दिवम् ।
कुर्वाणेन रघूद्वहेन चकृषे नारायणीयं धनुः
सन्धायाथ शरश्च भार्गवगतिच्छेदादमोघीकृतः ॥ ५७ ॥

( ततः प्रविशतो राम जामदग्न्यौ )।

रामः। भगवन् भार्गव !—
परैराहूतानां विहितमपि शस्त्रं भवतु नः
प्रकृत्या विप्रेभ्यः पुनरकृतशिल्पा रघुभुवः ।

---

(क) वलज्यतां प्रसूयतां, प्रवर्त्यतामित्यर्थः ।

कन्येति।—इहापि अस्मिन्नपि, कर्मणि नारायणीयधनुराकर्षणरूपे इति भावः, काचित् कन्या कुमारी, यथाऽहं हरधनुर्भङ्गकर्मणि, एवमिति भावः, पणः शुल्कं, स्यात् भवेत्, इति एवं, मत्वेति शेषः, दिवम् आकाशम, असूयया ईर्ष्यया, वलतोः चलतोः, अन्याऽन्वेषणाय इतस्ततः सञ्चलतोः इत्यर्थः, सीतायाः अपाङ्गयोः नेत्रान्तयोः, नेत्रप्रान्तयोरित्यर्थः, "अपाङ्गौ नेत्रयोरन्तौ" इत्यमरः, मयूखेन किरणेन, मांसला प्रभृता, परिपुष्टेति यावत, या मुखस्य ज्योत्स्ना चन्द्रातपवत् स्निग्धः आतपः, शुभ्रकान्तिरिति यावत, तया विलिप्तां विशेषेण लिप्तामित्यर्थः, कुर्वाणेन विदधता, रघूद्वहेन रघुवंशधरेण रामेण, नारायणीयं वैष्णवं, धनुः चापं, चकृषे आकृष्टम ; अथानन्तरं, धनुःकर्षणात् परमित्यर्थः, शरः सन्धाय संयोज्य, भार्गवस्य परशुरामस्य, गतिः मार्गः, स्वर्गगमनपन्थाः इत्यर्थः, यद्वा—गतिः गमनं, स्वर्गगमनसामर्थ्यमिति भावः, "गतिः स्त्री मार्गदशयोः ज्ञाने यात्राऽभ्युपाययोः" इति मेदिनी ; ( यात्रा गमनं ) तस्य छेदात् खण्डनात, प्रतिरोधादिति यावत्, अमोघीकृतः अव्यर्थीकृतश्च, धनुषि संयोजितः शरः सफलीकृत इत्यर्थः। नारायणीयं धनुराकृष्य तत्र शर सन्धाय च तेन शरेण "किमेते छिनद्मि ?" इति वदन् रामः भार्गवेण "अहं भोगनिस्पृहः, मम पुण्यतीर्थगतिं रुन्ध, स्वर्गपद्धतौ मम प्रयोजनं नास्तीति तद्गतिं रुन्धि" इत्युक्तः स्वर्गगमनमार्गं स्वर्गगमनसामर्थ्यं वा चरोधेति निष्कर्षः। शार्दूलविक्रीडितं वृत्तम ॥ ५७ ॥

परैरिति।—परैः शत्रुभिः, आहूतानाम आकारितानां, युद्धार्थमिति भावः, नः अस्माकं, शस्त्रं शस्त्रधारणमित्यर्थः, विहितं विधानकं, भवतु अपि, पुनः किन्तु, रघुभुवः रघुवंश्याः, प्रकृत्या स्वभावेनैव, विप्रेभ्यः ब्राह्मणेभ्यः, अकृतशिल्पाः अप्रयुक्त-

चिरादण्डीरेण त्वयि तदपि रामे न गणितं
तपोविद्यावीरव्रतमथ मयि क्षाम्यतु भवान् ॥ ५८ ॥

जामदग्न्यः। (विहस्य)। कथमपराद्धमस्मासु वत्सेन ?—

यदर्थमस्माभिरिह प्रकोपित-
स्तदद्य दृष्ट्वा तव धाम वैष्णवम्।
विशीर्णसर्वामयमस्मदन्तरं
चिरस्य कश्चिल्लघिमानमश्नुते ॥ ५९ ॥

रामः। इत इतो भगवन् !

जामदग्न्यः। (रामस्य चिबुकमुन्नमय्य सस्मितम्)। वत्स ! अप्रशस्तः खल्वारण्यकानां (त) जनपदेषु चिरप्रचारः (थ); तत् क्व पुनरस्मान् नेष्यसि ?

---

शस्त्रप्रयोगकोमला इति यावत्, "अकृतशिल्पाः" इत्यत्र "अकृतशिक्षाः" इति पाठकल्पनं सङ्गतार्थकं, शिल्पपाठे अर्थासङ्गतेरिति, अकृतशिक्षाः अशिक्षितशस्त्रव्यवहारा इत्यर्थः, ब्राह्मणान् प्रति शस्त्रव्यवहारं न कुर्वन्तीति भावः, तदपि तथाऽपि, चिरात् आजन्मन इति भावः, अण्डीरेण पुरुषेण, पौरुषाभिमानिना इत्यर्थः, दृप्तेनेति यावत्, "अण्डीरः पुरुषे शक्ते" इति मेदिनी, मयेति शेषः, रामे त्वयि तपो-विद्या-वीर-व्रत तपश्चर्या-विद्वत्त्व-वीरत्व-व्रतित्वोत्कर्षः इत्यर्थः, न गणितं न विचारितम्, अथ इदानीं, भवान् मयि मामित्यर्थः, क्षाम्यतु मर्षयतु, ममापराधं न गणयत्विति भावः। शिखरिणी वृत्तम् ॥ ५८ ॥

यदर्थमिति।—अस्माभिः यदर्थं यद्विषयज्ञाननिमित्तम्, इह अस्मिन् विषये, प्रकोपितः क्रोधितः कृतः, त्वमिति शेषः, अद्य तव तत् वैष्णवं नारायणीयं, धाम तेजः, दृष्ट्वा अवलोक्य, अस्मदन्तरम् अस्माकम् अन्तःकरणं, विशीर्णः क्षीणः, सर्वः सकलः, आमयः रोगः, रजोगुणजनितरोग इति यावत् यस्य तथाभूत सत्, चिरस्य चिरकालेन, कश्चित् अनिर्वचनीयं, लघिमानं लाघवम्, अश्नुते भजते, दिव्यज्ञानलाभादिति भावः। वंशस्थविलं वृत्तं—"वदन्ति वंशस्थविलं ज-तौ ज-रौ" इति लक्षणात् ॥ ५९ ॥

(त) अप्रशस्तः अविहितः, निषिद्ध इति यावत्। आरण्यकानां वनवासिनाम्।

(थ) चिरप्रचारः दीर्घकालस्थितिरिति यावत्।

रामः। भगवन्! भगवतो याज्ञवल्क्यस्यावसथे (द) कृतातिथेयसंविधानौ (ध) तात-जनकौ भवन्तमनुपालयतः (न)।—

एहि विष्टरपादार्घ-मधुपर्कैरुपस्थितान्।
इक्ष्वाकूंश्च विदेहांश्च पुनीहि भगवन्नमून्॥ ६०॥

जामदग्न्यः। वत्स! अपरिहार्य्यमेव (प) ह्यातिथ्यं राजन्य-श्रोत्रियाणाम्। किं पुनरेवंविधवैखानसोचिताचारस्खलित-विलक्षो (फ) न शक्नोमि धर्माचार्य्यं (ब) याज्ञवल्क्यमुपेत्यावलोकितुम्। आचारस्तु दूरादपि कृतः कृतः स्यात् (भ)।—

---

(द) आवसथे भवने, आश्रमे इति यावत्।

(ध) कृतेति।—कृतम् अनुष्ठितम्, आतिथेयसंविधानम् अतिथिसमुचिताचारः ययोः याभ्यां वा तथाभूतौ।

(न) अनुपालयतः प्रतीक्षेताम्।

एहीति।—हे भगवन्। विष्टरः आसनविशेषः, कुशासनमिति यावत्, "विष्टरः कुशमुष्टौ स्यादासने च महीरुहे" इति मेदिनी; पादार्घमधुपर्काः पाद्यार्घ्यमधुपर्काः त्वदर्चनार्थमाहृता इति भावः, तैः सह, "विष्टरपादार्घ" इत्यत्र "विष्टरपाद्यार्घ्य" इति पाठः सङ्गतः, उपस्थितान् वर्त्तमानान्, अमून् इक्ष्वाकून् इक्ष्वाकुवंश्यांश्च, विदेहांश्च विदेहवंश्यांश्च, पुनीहि पवित्रीकुरु। अनुष्टुप् वृत्तम्॥ ६०॥

(प) अपरिहार्य्यमेव अपरित्याज्यमेव। राजन्य-श्रोत्रियाणां राजन्येषु क्षत्रियेषु, श्रोत्रियाः वेदविदः तेषां ब्रह्मनिष्ठब्राह्मणानाम्।

(फ) किं पुनः किन्तु। एवंविधेति।—एवंविधस्य इत्थं, वैखानसानां मुनिविशेषाणाम्, उचितस्य अभ्यस्तस्य, योग्यस्य इति वा, आचारस्य व्यवहारस्य, भ्रान्त्येति भावः, स्खलितेन भ्रंशेन, विलक्षः लज्जितः।

(ब) धर्माचार्य्यं धर्मशास्त्रप्रणेतारं गुरुम्।

(भ) आचारः शिष्टानुमोदितव्यवहारः। कृतः अनुष्ठितः, दूरे वा समीपे वा यत्र तत्र अवस्थाय कृतोऽपि कृत एव स्यात्, न तेन मर्य्यादालङ्घनं कृतं भवेदिति निष्कर्षः।

( किञ्चिदुच्चैर्नेपथ्याभिमुखम् )—

यस्य स्मृतीः प्रतीच्छन्ते चतुर्वर्गे मनीषिणः।
नमो भगवते तस्मै याज्ञवल्क्याय योगिने ॥ ६१ ॥

( नेपथ्ये )—

गायत्री द्रुपदा देवी पाप्मानमपहन्तु ते।
पुनन्तु पावमान्यस्त्वामृध्नोतु ब्रह्म ते परम् ॥ ६२ ॥

वासन्ती। भगवन्! अपत्रपमाणो ( म ) न भवन्तं द्रष्टुमुत्सहे; तदनुमन्यस्व मामरण्याय ( य )।

( नेपथ्ये )—

शिवास्ते पन्थानो व्रज निजगृहेभ्यो निजगृहान्
किमन्यत् सर्वेषां गुणमय! शिरोमाल्यमसि नः।
त्रिलोकीनिर्माणस्थितिनिधनबन्धोर्मधुभिदो
भवान् षष्ठी मूर्त्तिर्भृगुकुलमधिष्ठाय रमते ॥ ६३ ॥

---

यस्येति।—मनीषिणः विद्वांसः, चतुर्वर्गे धर्मार्थकाममोक्षे, धर्मादिविषयकसन्देहे इत्यर्थः, "त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः" इत्यमरः; यस्य स्मृतीः संहितावचनानि, प्रतीच्छन्ते प्रमाणयन्तीत्यर्थः, तस्मै योगिने सर्वत्र समदर्शिने, भगवते याज्ञवल्क्याय नमः, अस्तु इति शेषः। अनुष्टुप वृत्तम् ॥ ६१ ॥

गायत्रीति।—गायत्री सावित्री देवी, तथा द्रुपदा देवी "द्रुपदादिव मुमुचानः" इत्यादिमन्त्रमयी देवीति यावत्, ते तव, पाप्मानं पापम्, अपहन्तु नाशयतु, पावमान्यः पवित्रताजनन्यः ऋचः, तथाविधमन्त्रविशेषाः इत्यर्थः, त्वां पुनन्तु शोधयन्तु; ते तव, परं ब्रह्म तत्त्वज्ञानं, ऋध्नोतु वर्द्धताम्। याज्ञवल्क्योक्तिरियम्। अनुष्टुप् वृत्तम् ॥ ६२ ॥

( म ) अपत्रपमाणः लज्जमानः, रामभद्रे कठोरव्यवहारादिति भावः। "लज्जा साऽपत्रपाऽन्यतः" इत्यमरः।

( य ) अनुमन्यस्व अनुजानीहि, अनुज्ञां कुरु इत्यर्थः। अरण्याय अरण्यगमनाय।

शिवा इति।—ते तव, पन्थानः गमनमार्गाः, शिवाः निरापदः इत्यर्थः, भवन्त्विति शेषः, निजगृहेभ्यः ममाश्रमेभ्य इति भावः, यद्वा—ममैतत् गृहमपि तवापि निजगृहमेव मन्तव्यमिति भावः तेभ्यः, निजगृहान् निजस्य तव, गृहान् निकेतनं, व्रज गच्छ, एकेभ्यः गृहेभ्यः गृहान्तरं गच्छेति भावः; अन्यत् किं, वक्तव्यमिति शेषः, हे

जामदग्न्यः। वत्स रामभद्र !

रामः। आज्ञापय।

जामदग्न्यः। निवर्त्तस्व। नूनमिदानीं कृतकौतुकागार-मङ्गलोपचारः (२) श्वशुरकुललोकस्त्वां प्रतीक्षते। (इति परिष्वज्य निष्क्रान्तः)।

रामः। (साङ्गम)। कथं गतो भगवान्; तदहमपि तात-समीपमेव गच्छामि। (इति परिक्रामन् पुरोऽवलोक्य)। कथं तातस्य जनकस्यैव एवाभिवर्त्तते। (इत्युपसर्पति)।

(ततः प्रविशतो जनक-दशरथौ। रामानामवलोऽन्यं परिष्वज्य)।

जनकः।—

सुचरितमिदमैतिहासिकानां
हृदि न विरंस्यति यत् तवैष पुत्रः।
भृगुसुतपरशूदराद्विराजां
सहजविजित्वरमाचकर्ष तेजः॥ ६४॥

---

गुणमय ! नः अस्माकं, सर्वेषां शिरोमाल्य शिरोभूषणमिति यावत्, असि, त्रिलोक्याः त्रिभुवनस्य, निर्माणं सृष्टिः, स्थितिः पालनं, निधनं नाशः, तेषां बन्धो कर्त्तुरिति भावः, मधुभिदः मधुसूदनस्य, नारायणस्य इत्यर्थः, अष्टौ अष्टा पूरणी, मूर्त्तिः आकारः, अवतारविशेष इति यावत्, भवान् भृगुकुलम् अधिष्ठाय आश्रित्य इत्यथः, रमते क्रीडति। शिखरिणी वृत्तम्॥ ६३॥

(२) निवर्त्तस्व विरम, अस्मदनुगमनात् प्रतिनिवृत्तो भव इत्यर्थः। कृतेति।—कृतः अनुष्ठितः, कौतुकागारे वैवाहिकगृहे, मङ्गलोपचारः माङ्गलिकसमाधानं येन तथाविधः।

सुचरितमिति।—तव एषः अयं, पुत्रः तनयः, भृगुसुतस्य जामदग्न्यस्य, परशूदरात् कुठाराभ्यन्तरात्, कुठारमध्यादिति यावत्, विराजां क्षत्रियाणां, "बाहुजः क्षत्रियो विराट्" इत्यमरः; सहजविजित्वरं स्वभावेन जयशील, तेजः प्रभाव, यत् आचकर्ष आकृष्टवान्, परशुरामेण बलात् गृहीतं तेजः पुनर्बलादेव आक्रम्य आनीतवानित्यर्थः, इदं सुचरितं शुभमाचरणम्, उत्तमां कीर्त्तिमिति भावः, ऐतिहासिकानाम्

दशरथः। (पुरोऽवलोक्य सहर्षम्)। कथमागत एव वत्सो रामभद्रः।

जनकः। सखे महाराज दशरथ! पश्य पश्य—

चिरात् क्षात्रं तेजस्त्रिजगदवजैत्रं जनयिता
विधाता सर्वेषामुपरि सवितारं कुलभृताम्।
विनेता वर्णानां भृगुपतिभुजादर्पनिकषो
महावीरः श्रीमानयममृतमक्ष्णोर्विकिरति ॥ ६५ ॥

दशरथः (निर्वर्ण्य सस्नेहम्)। सखे सीरध्वज! रघुराजधर्माधिकारसर्वधुरीणः (ख) शिशुरपि वत्सोऽयम्; तदस्मिन् जरसा दुर्वहं वर्णाश्रमभारम् (ग) आरोप्य वयमपि क्वापि तपोवने दिलीपकुलोचितेन विधिना शेषमायुरुपभुञ्ज्महे (घ)।

---

इतिहासविदां, हृदि चित्ते, न विरंस्यति न विरतं भविष्यति, सर्वदा जागरूकं स्थास्यतीति भावः। पुष्पिताग्रा वृत्तम् ॥ ६४ ॥

चिरादिति।—चिरात् बहुकालात्, बहुकालानन्तरमित्यर्थः, त्रिजगता भुवनत्रयस्य, अवजैत्रं विजेतृ, क्षात्रं तेजः प्रभावं, जनयिता उत्पादकः, उत्पादनशील इत्यर्थः, बहुकालात् पूर्वं परशुरामेण निर्वापितस्य क्षात्रतेजसः पुनः प्रज्वालयिता इति भावः, शीलार्थ-तृण्-योगे कर्मणि न षष्ठी, सवितारं सूर्य्यं, स्ववीजपुरुषमिति भावः, सर्वेषां निखिलानां, कुलभृतां वंशधराणां, सोमिनां चन्द्रादीनामिति भावः, उपरि अग्रे, विधाता कर्त्ता, सूर्य्यवंशे जन्मग्रहणात् निजवीरत्वप्रकटनद्वारा सूर्य्यस्यैव प्राधान्यख्यापक इति भावः, वर्णानां ब्राह्मणादीनां, विनेता नियामकः, स्वस्वधर्मप्रवर्त्तक इति यावत्, भृगुपतेः परशुरामस्य, भुजादर्पस्य बाहुबलगर्वस्य, निकषः कषणप्रस्तरविशेषः, कृत्रिमाकृत्रिमपरीक्षास्थानभूतः प्रस्तरविशेषः इत्यर्थः, "शाणस्तु निकषः कषः" इत्यमरः; महावीरः श्रीमान् अयं रामः, अक्ष्णोः नयनयोः, अमृतं सुधा, विकिरति विक्षिपति, चक्षुषोः तृप्तिं विदधातीत्यर्थः। शिखरिणी वृत्तम् ॥ ६५ ॥

(ख) रघुराजेति।— रघुराजस्य रघुवंशीयराजगणस्य, यः धर्माधिकारः धर्माधिकरणं, यथाशास्त्रं न्यायेन प्रजापालनादिरूपं कर्मेत्यर्थः, तत्र सर्वधुरीणः सर्वधुरन्धरः, निखिलभारवहनसमर्थः इत्यर्थः, सर्वश्रेष्ठ इति यावत्।

(ग) जरसा वार्द्धक्येन, दुर्वहं वोढुमशक्यं, मयेति शेषः। वर्णाश्रमभारं वर्णानां

जनकः। सखे दशरथ! साधु ते हृदयमीदृशम्। क्रमा-देतदनुष्ठातव्यम्।

रामः। (उपसृत्य)। तातौ! अभिवादये।

जनकः। एह्येहि वत्स रामभद्र! (इति सहर्षमालिङ्गति)।

दशरथः। (राममालिङ्ग्य)। सखे जनक! रामभद्रमभिषेक्तुं जामदग्न्यविजयप्रीतिरेव श्रेयानवसरः, कालक्षेपे पुनः को हेतुः? (ष)

(प्रविश्य)।

लक्ष्मणः। इयमार्य्यया मन्थरयोपनीता मध्यमाम्बायाः (स) पत्री।

(राजानौ सवितर्कमन्योऽन्यं पश्यतः)।

रामः। (सहर्षम्)। वत्स लक्ष्मण! अपि सपरिवारायाः (ह) कुशलमम्बायाः कथयत्यार्य्या मन्थरा?

लक्ष्मणः। आर्य्य! अथ किम्।

रामः। नूनमस्मत्प्रवासदौर्मनस्यमम्बां (क) पीडयिष्यति।

जनकः। (लक्ष्मणहस्तात् पत्रिकां गृहीत्वा वाचयति)। स्वस्ति, महाराजं दशरथं कैकेयी विज्ञापयति। यथा—

---

ब्राह्मणादीनाम्, आश्रमाणां ब्रह्मचारिप्रभृतीनां, स्वस्ववर्णोचिताश्रमाणामिति वा, भारः, रक्षणभारः इत्यर्थः तम्।

(ग्र) उपबुभुक्षामहे उपभोक्तुमिच्छामः, तपश्चर्य्यया इति भावः।

(ष) श्रेयान् श्रेष्ठः। कालक्षेपे समयातिवाहने, कालक्षेपस्य किमपि प्रयोजनं नास्तीति भावः।

(स) मध्यमाम्बायाः मध्यमायाः मातुः कैकेय्या इत्यर्थः।

(ह) अपि प्रश्ने। सपरिवारायाः सपरिजनायाः, आत्मीय भृत्यादिसहितायाः इत्यर्थः।

(क) अस्मदिति।—अस्माकं प्रवासेन दूरदेशावस्थानेन, दौर्मनस्यं विमनस्कता, मनसोऽस्वास्थ्यमित्यर्थः। अम्बां मातरं, कैकेयीमिति यावत्।

तन्मे वरद्वयमुरीकृतपूर्वमेव
याचे बिभर्त्तु भरतस्तव राज्यलक्ष्मीम् ।
वर्षाणि तिष्ठतु चतुर्दश दण्डकायां
सौमित्रि-मैथिलसुतासहितश्च रामः ॥ ६६ ॥

( इति राजानो मूर्च्छतः ) ।

रामः । यदादिशत्यम्बा । ( इति शिरसि पत्रिकां कृत्वा ) । वत्स लक्ष्मण ! निजामस्मदाराधनसहाध्यायिनीं प्रजावतीम् ( ख ) आदाय पुरो ( ग ) भव ।

लक्ष्मणः । तथा । ( इति निष्क्रान्तः ) ।

रामः । तातौ ! समाश्वसितं समाश्वसितम् ( घ ) ।

जनकः । ( आश्वस्य ) । अहह !!—

पाणिर्गृहीतो रघुपुङ्गवेन
देवः पुराणः श्वशुरो विवस्वान् ।
पिता स्वयं केकयचक्रवर्त्ती
कर्मेदमेतादृशमाः !! किमेतत् ॥ ६७ ॥

( इति मूर्च्छति । रामः पटाञ्चलेन ( ङ ) वीजयति ) ।

---

तदिति ।—मे मह्यम्, उरीकृतपूर्वमेव पूर्वमवाङ्गीकृतम्, एव-शब्दोऽवधारणार्थः, तत् पूर्वप्रार्थितमित्यर्थः, वरद्वयं याचे प्रार्थये, ( तयोरेकेन ) भरतः तव राज्यलक्ष्मीं राज्यसम्पदं, बिभर्त्तु पालयतु, ( द्वितीयेन ) रामः सौमित्रि-मैथिलसुताभ्यां लक्ष्मण-सीताभ्यां, सहितः चतुर्दश वर्षाणि व्याप्य, दण्डकायां दण्डकारण्ये, तिष्ठतु वसतु च । वसन्ततिलकं वृत्तम् ॥ ६६ ॥

(ख) अस्मदाराधनेति ।—अस्माकम् आराधने उपासने, व्रतचर्य्याविषये इति भावः, सहाध्यायिनीं सतीर्थां, तुल्यव्रतचारिणीमित्यर्थः । प्रजावतीं भ्रातृजायां, सीतामित्यर्थः, "प्रजावती भ्रातृजाया" इत्यमरः ।

(ग) पुरः अग्रतः ।

(घ) समाश्वसितं समाश्वस्तौ भवतम् ।

पाणिरिति ।—रघुपुङ्गवेन रघुश्रेष्ठेन, दशरथेन इति यावत्, पाणिः गृहीतः विवाहः कृतः, देवः विवस्वान् सूर्य्यः, पुराणः प्राचीनः, आदिरित्यर्थः, श्वशुरः, तवेति

दशरथः। (साम्रम्)—

कोऽप्येष वाङ्मनसयोरतिवृत्तवृत्ति-
र्भावो हुताशनमयश्च तमोमयश्च।
भोक्तृत्वमात्रमिह मे पुनरीदृशं मां
हा वत्स राम! कथमुत्सहसे विहातुम्?॥ १८॥

(विमृश्य)। हा वत्से जानकि! निशाचराणामातिथेयी-भवितुं (च) दशरथगृहे प्रविष्टाऽसि। (इति मूर्च्छति)।

रामः। तातौ! समाश्वसितं समाश्वसितम्।

जनकः। (साम्रम् आकाशे लक्ष्यं बद्ध्वा)। साधु सखि कैकेयि! साधु, यदस्या विश्वम्भरादुहितुः (छ) मे वत्सायाः पत्युरनुवृत्तिरेव (ज) प्रसादीकृता। (विमृश्य सव्यथम्)—

---

शेषः, पिता जनकः, स्वयं साक्षात्, केकयानां केकयवंशीयानां, चक्रवर्ती सम्राट्, इदम् एतादृशं कर्म दुराचरणमिति भावः, कैकेय्या इति शेषः, अस्रः॥ पीडाया कोपे वा, "आस्तु स्यात् कोप पीडयोः" इत्यमरः; एतत् किम्? अतीव विरुद्धमिति भावः। उपजाति वृत्तम्॥ १७॥

(ङ) पटाञ्चलेन वसनप्रान्तेन।

क इति।—वाङ्मनसयोः वाचा मनसश्च, अतिवृत्तवृत्तिः अविषयः, अगोचर इत्यर्थः, कदाऽपि वचसा वा मनसा वा न चिन्तित इति भाव, हुताशनमयः अग्निमयः, अत्यर्थं सन्तापजनकत्वादिति भावः, तमोमयश्च अन्धकारमयश्च, चैतन्यविलोपकत्वादिति भावः, कोऽपि अनिर्वचनीयस्वरूपः, एषः अयम्, अनुभूयमान इत्यर्थः, भावः अवस्थेति यावत्, मम वर्त्तते इति शेषः, इह भावे, पुनः किन्तु, मे मम, भोक्तृत्वमात्रम् अनुभवितृत्वमेवेत्यर्थः, मात्रपदेन प्रतीकाराक्षमत्वं व्यज्यते, हा! इति खेदे, हे वत्स राम! ईदृशम् इत्थं गतम्, एवंविधावस्थमित्यर्थः, मां विहातुं त्यक्तुं, कथं केन प्रकारेण, उत्सहसे? अक्रोशीत्यर्थः। वसन्ततिलकं वृत्तम्॥ १८॥

(च) आतिथेयीभवितुम् आतिथ्यपरायणा भवितुम्, आतिथ्यं ग्रहीतुमित्यर्थः।

(छ) सखित्वञ्च कैकेय्याः दशरथसम्बन्धात् इति भावः। विश्वम्भरादुहितुः पृथिवी-कन्यायाः।

अनुभावतो वत्सौ दशरथभुजैरूष्मलतमाः
प्रदेशास्ते वत्सा शिशुरशिवहत्ता वनभुवः।
प्रिये राजा मुक्तैरसुभिरपमार्ष्टि स्वमयश-
श्चरित्रव्यत्यासः सखि ! कथमयं केकयकुले ?॥ १९ ॥

कष्टं च, वयमपि कथमनेन जनपदेषु बहुलीभवता भरत-
यौवराज्यलक्ष्मीकर्णपूरतमालपल्लवेन कैकेयीदुर्यशसा (झ)
मूर्द्धानमुन्नमय्य लोकस्य मुखं द्रक्ष्यामः ?

---

(ञ) अनुवृत्तिरेव अनुगमनमेव, नान्यत् किमपि यौतकादिकमित्येवशब्दार्थः।
प्रसादीकृता पुरस्कारत्वेन दत्ता इत्यर्थः।

अनुभावताविति।—वत्सौ राम-लक्ष्मणौ, अनुभावतौ धनुर्द्धरौ, धनुर्वेदे सुशिक्षिताविति यावत्, दशरथस्य भुजैर्बाहुभिः, ते प्रदेशाः, अयोध्याराज्यानीति यावत्, ऊष्मलतमाः अतितेजोयुक्ताः सुखकरा इत्यर्थः, आसन्निति शेषः, वत्सा स्नेहभाजनं सीता, शिशुः एकतः क्लेशासहेति भावः, अत्र च वनभुवः अरण्यप्रदेशाः, अशिवहत्ताः अशुभव्यवहाराः, विघ्नबहुला इति यावत् ; "दशरथभुजैः" इत्यत्र "दशमुखभुजैः" "दशगलभुजैः" इति वा पाठः सङ्गततया प्रतिभाति, दशरथस्य भुजबहुत्वाभावात् रामादीनां दण्डकारण्य-प्रवेशजनितखेदवर्णनावसरे दशरथभुजशासितायोध्याप्रदेशस्य ऊष्मलतमत्वोल्लेखस्य अप्रासङ्गिकत्वाच्च, ततश्च वत्सौ अनुभावतावपि, ते प्रदेशाः दण्डकारण्यप्रदेशाः, दशमुखभुजैः रावणबाहुबलैः, ऊष्मलतमाः अतिसन्तप्ताः, अत्यर्थं पीडिता इति यावत्, अत्र च वत्सा सीता शिशुः, तत्रापि वनभुवः अशिवहत्ताः इत्येवं व्याख्या सङ्गततया-ऽस्माकं प्रतिभातीति मन्तव्यमिति दिक्। राजा दशरथः, प्रियैः इष्टैः, असुभिः प्राणैः, मुक्तैः परित्यक्तैः, प्राणपरित्यागेनेत्यर्थः, स्वं निजम्, अयशः कलङ्कं, रामस्य वनप्रेषण-जनितमिति भावः, अपमार्ष्टि शोधयति, हे सखि ! केकयकुले केकयस्य तव पितुः वंशे, अयम् एषः, चरित्रव्यत्यासः चरित्रविपर्ययः, कुलक्रमागतस्वभावव्यति-क्रम इति यावत्, दुराचारजनितः कलङ्क इति भावः, कथं केन प्रकारेण, अपमृज्यते त्वया ? इति शेषः, दशरथः प्राणविसर्जनेन कलङ्कमुक्तो भवितुं शक्ष्यति, तव तु तस्मात् मुक्तेः कोऽप्युपायो न दृश्यते मयीति भावः। शिखरिणी वृत्तम् ॥ १९ ॥

(झ) बहुलीभवता विस्तारं गच्छता, सर्वत्र प्रकटीभवता इत्यर्थः। भरतेति।—भरतस्य यौवराज्यं युवराजपदाभिषेकः, तस्य लक्ष्मीः श्रीः, तस्याः कर्णपूरः कर्णभूषणं,

रामः । (उत्थाय)। तात जनक ! यथा सुस्थं तातं शृणोमि तथा भवता विधातव्यम् । (ञ) (इति निष्क्रान्तः)।

दशरथः । (साश्रुर्मोत्थाय च)। वत्स रामभद्र ! परिपालय (ट) माम् । (इति जनकेन धार्य्यमाणो निष्क्रान्तः)।

(इति निष्क्रान्ताः सर्वे)।

इति दशरथविप्रलम्भो नाम चतुर्थोऽङ्कः ।

---

# पञ्चमोऽङ्कः ।

(ततः प्रविशतः श्रमणा-जाम्बवन्तौ)।

जाम्बवान् । ततस्ततः ?

श्रमणा । ततो मिथिलाया निष्क्रम्य मन्थराकलेवरमवकीर्य्य मारुतिप्रत्यवेक्षितं (क) स्वशरीरमधिष्ठाय गङ्गायां (ख) शृङ्गवेर-पुरं नाम निषादपक्कणम् (ग) आगत्य शबरीभूता (घ) अस्मि ।

---

चः तमालपल्लवः तमालकिसलयः तेन तद्रूपेणेत्यर्थः, तमालपल्लववत् श्यामलवर्णेन इति भावः । कैकेयीदुर्यशसा कैकेयीकलङ्केन ।

(ञ) तातं पितरम । विधातव्यं कर्त्तव्यम् ।

(ट) परिपालय प्रतीक्षस्व, रक्ष इत्यर्थो वा ।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
अनर्घराघवचतुर्थाङ्कव्याख्या समाप्ता ।

---

(क) अवकीर्य्य विक्षिप्य, परित्यज्य इत्यर्थः । मारुतिना हनूमता, प्रत्यवेक्षितम् अवधानेन दृष्ट, सुरक्षितमिति यावत् ।

(ख) स्वशरीरं निजदेहं, मन्थरायाः शरीरे प्रवेशकाले परित्यक्तं प्राक्तनं निजकलेवरमिति भावः । अधिष्ठाय आश्रित्य । गङ्गायां गङ्गातीरे ।

(ग) निषादपक्कणं निषादाः चण्डालाः धीवरा वा, "निषादः स्वरभेदे स्याच्चण्डाले धीवरेऽपि च" इति मेदिनी ; तेषां पक्कणः आलयः, वसतिरित्यर्थः, ग्रामः इति भावः, "पक्कणः शबरालयः" इत्यमरोक्तेः पक्कणशब्दस्य शबरालयार्थकत्वेऽपि सामान्यतः चण्डालादीनां सर्वेषामेव अन्त्यजजातीनामालयार्थकत्वमवगन्तव्यम् ।

(घ) शबरीभूता चाण्डालभेदम्लेच्छजातिविशेषरूपिणी, "भेदाः किरातशबर-

जाम्बवान्। ततस्ततः ?

श्रमणा। ततश्च ममानुपदमेव तस्मिन् (ङ) इमौ रामलक्ष्मणावियं सीतेति सर्वतः शब्दो महानभूत्।

जाम्बवान्। (सहर्षम्)। ततस्ततः ?

श्रमणा। ततश्च कावेतौ रामलक्ष्मणौ ? इति कर्णधाराधिपतिना (च) गुहेनाहमनुयुक्ता (छ) निवेदितवत्यस्मि।—

पुत्रीयता दशरथेन मुनिप्रसादात्
प्राप्ताः पुराणपुरुषस्य कलाश्चतस्रः।
तासामयं गुणमयः प्रथमः कुमारो
वीरोद्धतः पुनरसावपरस्तृतीयः॥ १॥

जाम्बवान्। श्रमणे! साधूक्तम्। ततस्ततः ?

श्रमणा। ततश्चोदकान्तनिवर्त्तितानुयात्रिकबन्धुवर्गैः ससम्भ्रमोपगतेन (ज) गुहेनोपनीतां नावम् (झ) अधिरुह्य—

---

पुलिन्दा म्लेच्छजातयः" इत्यमरोक्तेः, "किरातादयस्त्रयो म्लेच्छजातयश्चण्डालभेदाः" इति भानुजीदीक्षितवाक्याच्च।

(ङ) अनुपदमेव अन्वगेव, पश्चादेवेत्यर्थः, "अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्" इत्यमरः। तस्मिन् निषादपत्तने।

(च) कर्णधाराधिपतिना नाविकराजेन; "कर्णधारस्तु नाविकः" इत्यमरः। गुहेन गुहक इति नाम्ना प्रसिद्धेन।

(छ) अनुयुक्ता पृष्टा; "प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः।

पुत्रीयतेति।—पुत्रीयता आत्मनः पुत्रमिच्छता, दशरथेन मुनेः ऋष्यशृङ्गस्य, प्रसादात् अनुग्रहात्, पुराणपुरुषस्य नारायणस्य, चतस्रः कलाः अंशाः, प्राप्ताः लब्धाः, पुत्रत्वेनेति शेषः, नारायण. स्वं चतुर्धा विभज्य अंशचतुष्टयेन दशरथस्य पुत्रतां गत इति निष्कर्षः; तासां कलानां मध्ये, गुणमयः सर्वगुणाधार इत्यर्थः, वीरोद्धतः वीररसेन उद्धतः उद्धृतः, नायकविशेषो वा, अयम् इति अङ्गुल्या निर्दिश्य एषः, प्रथमः ज्येष्ठः, कुमारः पुत्रः, राम इति शेषः; पुनश्च अपरः रामेतरः, असौ अयम्, लक्ष्मण इति शेषः, तृतीयः, कुमारः इति शेषः। वसन्ततिलकं वृत्तम्॥ १॥

(ज) उदकान्तेति।—उदकान्तात् जलसमीपात्, निवर्त्तितः निवारितः

तीर्त्वा भूतेशमौलिस्रजममरधुनीमात्मनाऽसौ तृतीय-
स्तस्मै सौमित्रिमैत्रीमयमुपहृतवानातरं नाविकाय ।
व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदञ्चदक्षं
कृच्छ्रादन्वीयमानः क्षणमचलमथो चित्रकूटं प्रतस्थे ॥२॥

माल्यवान् । हन्त ! महत् करुणम् (ञ) ।

श्रमणा । आर्य्य ! करुणभयादेव तस्मिन्निङ्गुदीतरुमूले कुमारयोर्जटाग्रहणवृत्तान्तमन्तरितवती (ट) अस्मि ।

---

अनुयायिनः अनुगामी, बन्धुवर्गः स्वजनसमूहः येन तथाभूतः, "आ उदकान्तं स्निग्धो ऽनुगम्यते" इति श्रुतिः, "ओदकान्तं प्रियं प्रोषितमनुव्रजेत्" इति स्मृतिश्च । सः रामभद्रः ससम्भ्रमं सत्वरम्, उपगतः उपस्थितः तेन ।

(झ) उपनीतां समीपं प्रापिताम्, उपस्थापितामित्यर्थः। नावं तरणिम् "स्त्रियां नौस्तरणिस्तरिः" इत्यमरः ।

तीर्त्वेति ।—आत्मना स्वेन, तृतीयः त्रयाणां पूरणः, सीता-सौमित्रिसहित इति यावत्, असौ रामः, भूतेशस्य हरस्य, मौलिस्रजं शिरोभूषणमालां, तत्स्वरूपिणीमित्यर्थः अमरधुनीं सुरनदीं, गङ्गामित्यर्थः, "अथ नदी सरित् । तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी" इत्यमरः ; तीर्त्वा उत्तीर्य्य, तस्मै नाविकराजाय गुहाय, सौमित्रिणा लक्ष्मणेन सह, या मैत्री सख्यं, तन्मयं तदात्मकम्, आतरं तरपण्यम्, अपरतीरगमनार्थं देयं मूल्यविशेषमित्यर्थः, "आतरस्तरपण्यं स्यात्" इत्यमरः ; उपहृतवान् दत्तवान् सन्, अथानन्तरं, सखित्वोपहारप्रदानानन्तरं पारगमनानन्तरं वा इत्यर्थः व्यामः सकरयोः प्रसारितयोः बाह्वोस्तिर्य्यगन्तरमानः, "व्यामो बाह्वोः सकरयोस्ततयोस्तिर्य्यगन्तरम्" इत्यमरः ; तेन ग्राह्यौ ग्रहणीयौ, स्तनौ कुचौ यासां ताहशीभिः, अतिपीवरस्तनीभिरिति भावः, शबराणां युवतिभिः तरुणीभिः नारीभिः, कौतुकेन औत्सुक्येन, उदञ्चती उद्गच्छती, विकाशं प्राप्नुवतीत्यर्थः, अक्षिणी नेत्रे यस्मिन् कर्म्मणि तत् यथा तथा, कृच्छ्रात् दुःखात्, क्षणम् अन्वीयमानः अनुगम्यमानः, चित्रकूट चित्राणि रम्याणि, कूटानि शिखराणि यस्य तथोक्तं, तन्नामानम्, अचलं पर्वतं, प्रतस्थे जगाम । स्रग्धरा वृत्तं—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति लक्षणात् ॥ २ ॥

(ञ) हन्त ! खेदे । करुणं शोकजनकव्यापारः ।

(ट) कुमारयोः रामलक्ष्मणयोः, जटाग्रहणवृत्तान्तं जटाधारणवार्त्ताम्,

जाम्बवान् । श्रमणे ! सर्वमेतत् कल्याणोदर्कं (ठ) भविष्यति ।

श्रमणा । अहं तु निषादपतिप्रीतये तत्रैवातिष्ठम् । (ड) अतीते च गणरात्रे सप्रकृतिजनपदः (ढ) पितुः स्वर्गारोहण-वार्त्ताभिधायी द्वितीयो दाशरथी रामभद्रमयोध्यामुपनेतुं तेनैव पथा (ण) चित्रकूटमुपगतः ।

जाम्बवान् । (सभयम्) । ततस्ततः ?

श्रमणा । ततश्च तस्मिन् "आर्य्य ! लोके कैकेयानामाकल्प-मनल्पमकीर्त्तिस्तम्भं निखनता (त) केनापि छलितस्तातः ; (थ) तत् सम्प्रति गृहाण रघूणामधिराज्यम्" इति पुनः पुनश्चिर-मनुबन्धो (द) रामेण स्पष्टिकया प्रत्यादिष्टः (ध) कृतजटापरि-

---

अन्तर्हितवती आच्छादितवती, गोपायितवतीत्यर्थः, तद्वृत्तान्तो नोक्त इति भावः ।

(ठ) कल्याणोदर्कं शुभोत्तरफलं, भाविशुभफलप्रदमित्यर्थः, "उदर्कः फलमुत्तरम्", इत्यमरः ।

(ड) निषादपतेः चाण्डालराजस्य, गुहस्येत्यर्थः, प्रीतये सन्तोषाय । तत्रैव निषादपल्लिषु एव ।

(ढ) गणरात्रे बह्वीषु निशासु, बहुषु दिनेषु इति भावः, "गणरात्रं निशा बह्वाः" इत्यमरः ; अतीते अतिक्रान्ते, कतिपयनिशासु गतास्विति यावत्, सप्रकृति-जनपदः प्रकृतिभिः अमात्यादिभिः, जनपदैः देशवासिभिश्च सहितः ।

(ण) पितुः दशरथस्य । द्वितीयो दाशरथिर्भरत इत्यर्थः । तेनैव पथा येन पथा रामो गतः तेनैव मार्गेण ।

(त) तस्मिन् चित्रकूटे । कैकेयानां केकयवंश्यानाम् । आ-कल्पम् आ-प्रलयम् । अनल्पं महान्तम् । अकीर्त्तिस्तम्भं कलङ्करूपं स्तम्भम् । निखनता रोपयता इत्यर्थः ।

(थ) छलितः प्रतारितः । तातः पिता, दशरथ इत्यर्थः, "तातस्तु जनकः पिता" इत्यमरः ; वस्तुतः कैकेय्या प्रेषिता निजदासी मन्थरा सा न, परन्तु श्रमणयाऽधिष्ठिता, तत्प्रभावायत्ता च, यया पितुः समीपे कैकेय्याः पतिकैयमित्युक्त्वा छलितेन तातेन आर्य्यः वनं प्रेषित इति भावः ।

(द) रघूणां रघुवंशीयानाम्, अस्माकमिति भावः, अधिराज्यं साम्राज्यम्, आधिपत्यमिति यावत्, अनुबन्धो अनुबन्धः अनुयानं, मुख्यस्य अनुगमनमित्यर्थः, तदान्

अहो भरतः शरभङ्गमुनिप्रेषिताम् (न) अस्य पादुकां भद्रासनम् (प) अधिरोप्य प्रजानामाभ्युदयिकमवेक्षमाणः (फ) तदैव नन्दिग्रामं गतवान्।

जाम्बवान्। (सहर्षम्)। हन्त!! फलितमस्मद्व्यवसाय-श्रमणा-परिश्रमाभ्याम् (ब)। ततस्ततः?

श्रमणा। ततश्च शावाशौचमास्थितस्य (भ) क्षत्रियस्य प्रतिविद्रमस्वग्रहणमिति छिद्रान्वेषिभिर्जनस्थानवास्तव्यैः (म) खरदूषणप्रभृतिभिस्तत्र विराधो नाम राक्षसस्तीक्ष्णः प्रहितः। (य)

---

त्रिशुवत ज्येष्ठस्य पुनः पुनरनुगमनशीलः, नियतं पश्चादवस्थाय प्रार्थनापर इति यावत्, आग्रहवान् इति भावः। "दोषोत्पादेऽनुबन्धः स्यात् प्रकृत्यादिविनश्वरे। मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्त्तने॥" इत्यमरः।

(ध) स्पष्टकथा शपथेन, "स्पष्टिका शपथेऽपि च" इति रत्नकोषः। प्रत्यादिष्टः निराकृतः, प्रत्याख्यात इत्यर्थः, "प्रत्यादिष्टो निराकृतः" इत्यमरः।

(न) शरभङ्गेति।—शरभङ्गो नाम मुनिः, तेन प्रेषिता प्रेरिता, याचित्वा दापितामिति यावत्, साध्वसात् स्वयं प्रार्थनायामसामर्थ्यादिति भावः।

(प) अस्य रामभद्रस्य। भद्रासनं नृपासनं, रत्नादिनिर्मितराजासनमित्यर्थः, "नृपासनन्तु यत् भद्रासनम्" इत्यमरः।

(फ) आभ्युदयिकम् अभ्युदयाय उन्नत्यै, ऐहिक पारत्रिकश्रेयोलाभाय इत्यर्थः हितं, माङ्गलिक कार्य्यमित्यर्थः। अवेक्षमाणः अवलोकयन्।

(ब) फलितं सिद्धम्। अस्मदिति।—अस्माक व्यवसायः उद्योगः, श्रमणायाः परिश्रमश्च ताभ्याम्।

(भ) शावाशौचं मरणाशौचं, पितुरिति शेषः, आस्थितस्य आश्रितस्य, अनुपालयत इति यावत्।

(म) छिद्रान्वेषिभिः रन्ध्रानुसन्धायिभिः, अपकार्य्येषु व्यसनापेक्षिभिरिति भावः, छलग्राहिभिरित्यर्थो वा। जनस्थानवास्तव्यैः दण्डकारण्यैकभागः जनस्थानं, तत्र वास्तव्यैः कृतनिवासैः।

(य) तीक्ष्णः उग्रः, भीषण इति यावत्। प्रहितः प्रेरितः।

जाम्बवान्। (विहस्य)। धिङ्मूर्खाः! आतिपातिके (र) हि कार्य्ये राज्ञां सद्यः शुद्धिः। ततस्ततः?

श्रमणा। ततश्च विराधवधाक्षिप्तहृदये दुःसहशोकदीर्घाह्नो-मौर्द्ध्वदेहिकीं पितुः क्रियाम् (ल) अतिवाह्य (व) भगवता चतुः-समुद्रमुष्टिन्धयेन (श) विन्ध्याचलचापलारम्भविस्रम्भघातिना (ष)

---

(र) धिक् निष्फलाः, अज्ञतार्था इत्यर्थः, निन्दा भर्त्सनार्थयोरेव धिक्शब्दयोगे द्वितीयाविधानात् अत्र निष्फलार्थत्वेन न द्वितीया। मूर्खा इति आक्षेपोक्तिः खर-दूषणादीन् उद्दिश्य इति बोध्यम्। आतिपातिके आत्ययिके, शत्रुभिराक्रान्तिरूपविपत्ति-जनके इत्यर्थः, कालक्षेपासहत्वात् सद्यःकरणीये इति भावः। "पर्य्यायोऽतिक्रमस्तस्मिन्नति-पात उपात्ययः। न राज्ञां राजकर्म्मणि" इति स्मृतिः।

(ल) विराधेति।—विराधस्य वधेन हननेन, आक्षिप्तम् आकृष्टं, स्वामत्यामाय चञ्चलमित्यर्थः, हृदयं यस्य तथोक्ते। दुःसहेति।—दुःसहेन सोढुमशक्येन, शोकेन दीर्घाणि दीर्घत्वेन प्रतीयमानानीत्यर्थः, अहानि दिनानि यस्यां तादृशीम्। और्द्ध्व-देहिकीं देहात् ऊर्द्ध्वं देहत्यागादनन्तरं भवा और्द्ध्वदेहिकी तां, मरणदिनमारभ्य सपिण्डीकरणपर्य्यन्तं प्रेतमुद्दिश्य प्रत्यहं जलपिण्डादिदानरूपामित्यर्थः, "मृतार्थं तदहे दान त्रिषु स्यादौर्द्ध्वदेहिकम्" इत्यमरः। क्रिया श्राद्धादिव्यापारम्।

(व) अतिवाह्य समाप्य।

(श) चतुःसमुद्रेति।—चतुर्णां समुद्राणां समाहारः चतुःसमुद्रं सागरचतुष्टयं, तत् मुष्टिना मुष्टीकृत्य, धयति पिबतीति तथोक्तेन, गण्डूषेण चतुःसमुद्र पायिनेत्यर्थः। पुरा असुरैः सुरपराजितैः पलाय्य समुद्रमध्ये आश्रयः गृहीतः, पुनश्च देवैः सह युधि भङ्गमवाप्य समुद्रे आश्रयः गृह्यते स्म; इत्थं पुन पुनः क्रियमाणे देवेन्द्रेण प्रार्थितोऽगस्त्यमुनिः समुद्रं गण्डूषेणैकेन पीतवान्; ततश्चासुराः निभृतस्थानमप्राप्य सुरैर्निहता इति पुराणकथाऽत्रानुसन्धेया।

(ष) विन्ध्याचलेति।—विन्ध्याचलस्य विन्ध्यगिरेः, चापलं चाञ्चल्यं, सुमेरुस्पर्द्धया सूर्य्यावरोधार्थमभ्युत्थानरूपमिति भावः, तस्य आरम्भे उपक्रमे, विस्रम्भ विश्वासम्, अगस्त्ये कृतविश्वासमित्यर्थः, विन्ध्याचलस्येति शेषः, "समौ विस्रम्भ-विश्वासौ" इत्यमरः; हन्तीति तथोक्तेन। पुरा सुमेरुस्पर्द्धया वर्द्धमाने विन्ध्ये सूर्य्यावरोधात् जगति विनाश-मुपगच्छति देवैरभ्यर्थितोऽगस्त्यमुनिः वाराणस्याः समागत्य शिष्यं विन्ध्यं प्रणमन्तं "यावदहं दक्षिणस्या दिशः न परापतेयं तावत् त्वं न मूर्द्धानमुत्तोलय, प्रत्युत एवमेव-

वातापिदानवदीर्घयात्रामङ्गलकलशेन (ख) कलशयोनिना सनाथामरण्यवीथीं प्रतिष्ठमाने दाशरथौ पथि धाराधरो नाम वायसः सहसैव वैदेहीमुपाद्रवत्। (ग)

जाम्बवान्। (स्वगतम्)। इदं तावदपशकुनं (घ) नाम।

(प्रकाशम्)। ततस्ततः?

श्रमणा। ततश्च—

रक्षोऽभिचारचरुभाण्डमिव स्तनं यो
देव्या विदेहदुहितुर्विददार काकः।
ऐषीकमस्त्रमधिकृत्य तदा तमक्ष्णा
काणीचकार चरमो रघुराजपुत्रः॥ १॥

---

गत एव तिष्ठ" इत्युक्त्वा दक्षिणां दिशं गतवान्, पुनश्च न परावर्तत्। विन्ध्यश्च तादृशासेन तथैव गुरुनियोगात् विनम्रस्तिष्ठतीति पुराणवार्त्ता।

(ख) वातापीति।—वातापेः तदाख्यस्य दानवस्य, दीर्घयात्रा चिराय गमनं, मरणमिति यावत्, तस्या मङ्गलकलशः शुभसूचककुम्भस्वरूपः तेन, यात्रायां माङ्गलिककलशस्थापनस्य आचारसिद्धत्वादिति भावः। पुरा आतापिर्वातापिश्च द्वावसुरौ मायया विचेरतुः; तयोर्वातापिः यं कञ्चन भोजनाय निमन्त्र्य मध्याह्ने आतापिं मेषरूपं निहत्य तन्मांसेन निमन्त्रितं भोजयामास। ततश्च "वातापे! निष्क्रमस्व" इत्युक्तस्तेन वातापिना स आतापिस्तस्य उदरं विदार्य्य निःसृतः, ततश्च द्वावेतौ तन्मांसं सुखेन बुभुजाते। इत्थं बहवो भक्षिताः। एकदा अगस्त्यमुनिर्निमन्त्रितः, स तु आतापिं मेषरूपिणं तथा भक्षितवान् यथा स पुनर्न उदरात् निर्गन्तुमशक्नोत् इति पौराणिकी वार्त्ता।

(ग) कलशयोनिना कुम्भसम्भवेन, अगस्त्येन इत्यर्थः, "अगस्त्यः कुम्भसम्भवः" इत्यमरः, सनाथाम् अधिष्ठितां, समाश्रितामिति यावत्। अरण्यवीथीम् अरण्यश्रेणीम्, अगस्त्याश्रममिति यावत्। प्रतिष्ठमाने प्रस्थातुम् आरभमाणे, गच्छति सतीत्यर्थः। उपाद्रवत् अपीडयत्, नखेन व्यलिखदिति भावः।

(घ) अपशकुनं दुर्निमित्तम्, अशुभसूचकनिमित्तमित्यर्थः, "शुभशंसिनिमित्ते च शकुनं स्यान्नपुंसकम्" इति मेदिनी।

रक्षोऽभिचारेति।—यः काकः धाराधराख्यः वायसः, रक्षसाम् अभिचारे हिंसाकर्मणि, मारणार्थयज्ञे इत्यर्थः, "हिंसाकर्माभिचारः स्यात्" इत्यमरः; चरुभाण्डमिव

जाम्बवान्। ततस्ततः?

श्रमणा। ततश्च—

क्रमेणैव सुतीक्ष्णादीनुपस्थाय महामुनीन्।
अगस्त्याशासनादास्ते पञ्चवट्यां रघूद्वहः ॥ ४ ॥

जाम्बवान्। (सहर्षम्)। तर्हि हस्तगत एवास्माकम्। कियदन्तरम् ऋष्यमूक-जनस्थानयोः। (ख)

श्रमणा। आर्य्य! न खल्वद्यापि श्रोतव्यं शृणोषि।

जाम्बवान्। अवहितोऽस्मि।

श्रमणा। तत्र च कामुकौ रामभद्रमनुप्रविश्य रसं (ग) दास्यामीति सङ्कल्पितपतिद्रोहपातकिनी (घ) शूर्पणखा

---

हव्यपाकपूर्णपात्रमिव, "हव्यपाके चरुः पुमान्" इत्यमरः, देव्याः विदेहदुहितुः जानक्याः, स्तनं विददार विलिलेख, विदारितवान् इत्यर्थः, चरमः ज्येष्ठः, "चरमो ज्येष्ठ-कनिष्ठयोः" इति विश्वः, रघुराजपुत्रः रामभद्रः, तदा इषीका वीरणशलाका, तस्याः विकारः ऐषीकं तत्, अस्त्रम् आयुधम्, इषीकाटणनिर्मितं प्रहरणमित्यर्थः, अधिकृत्य आश्रित्य, निक्षिप्येत्यर्थः, तं काकम्, अक्ष्णा नेत्रेण, काणीचकार एकाक्षं काणं कृतवान्, एकमेवं विनाशयामासेत्यर्थः। वसन्ततिलकं वृत्तम् ॥ ३ ॥

क्रमेणेति।—रघूद्वहः रघुकुलधुरन्धरः, रामः इत्यर्थः, क्रमेण सुतीक्ष्णादीन् सुतीक्ष्णप्रभृतीन्, महामुनीन् महर्षीन्, उपस्थाय अभिवाद्येत्यर्थः, अगस्त्यस्य आशासनात् आदेशात्, पञ्चवट्यां पञ्चवटीसंज्ञकवने, आस्ते अधिवसति। अनुष्टुप् वृत्तम् ॥ ४ ॥

(ख) कियत् किञ्चिदित्यर्थः, अन्तरं व्यवधानम्, "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये" इत्यमरः। ऋष्यमूकः सुग्रीवादीनामावासभूतः पर्वतविशेषः; जनस्थानं दण्डकारण्यान्तर्गतप्रदेशविशेषः; ऋष्यमूक-जनस्थानयोर्मध्ये अल्पमेवान्तरमिति वक्तुरभिप्रायः।

(ग) रसं विषम्। "शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः" इत्यमरः।

(घ) सङ्कल्पितेति।—सङ्कल्पितः मनसा स्थिरीकृतः, पतिः भर्त्ता, राम इति भावः, तस्य द्रोहे अनिष्टाचरणे, विषप्रयोगरूपे इति यावत्, पातकिनी पापीयसी।

लक्ष्मणरोषहुतभुजि (ङ) कर्णनासौष्ठमयीभिस्तिसृभिराहुतिभिः प्रायश्चित्तयाञ्चक्रे। (च)

जाम्बवान्। (सातङ्कम्)। अहह !! महाननर्थकन्दः संवृत्तः। अथ भगिन्यास्तादृशं विडम्बनमवलोक्य खरादिभिः किं प्रतिपन्नम् ? (छ)

श्रमणा। (विहस्य)। आर्य्य ! किं प्रतिपन्नं, यद्रामभद्रे धृतधनुषि प्रतिपद्यते। (ज)

जाम्बवान्। (सहर्ष-हासम्)। तत् किं तेऽपि वालिसाहाय्यकोपस्थायिनो (झ) विराधयात्राप्रहतमध्वानमनुप्रपन्नाः ? (ञ)

श्रमणा। अथ किम्।

जाम्बवान्। श्रमणे ! प्ररूढमिदानीं राम-रावणयोर्वैरम्। (ट)

---

(ङ) लक्ष्मणेति।—लक्ष्मणस्य रोषहुतभुजि कोपानले।

(च) कर्णनासौष्ठमयीभिः कर्णनासौष्ठात्मिकाभिः, आहुतिभिः होमक्रियाभिः, प्रायश्चित्तयाञ्चक्रे प्रायश्चित्तमिव आचरितवतीत्यर्थः, लक्ष्मणेन तस्याः कर्णनासौष्ठानि निकृत्तानीति भावः, स्वानिष्टोत्पातप्रशमनार्थम् ऋत्विग्भूतलक्ष्मणप्रज्वालिताग्नौ निजकर्णादिकमाहुतीकृत्य प्रायश्चित्तं कृतवतीवेति निष्कर्षः।

(छ) अनर्थकन्दः अनिष्टमूलं, विपत्कारणमित्यर्थः, तादृशेन कर्मणा रावणस्य क्रोधोत्पादनादिति भावः। विडम्बनं तिरस्करणम्, अवमाननमिति यावत्। प्रतिपन्नम् अङ्गीकृतं, कर्त्तव्यत्वेन स्थिरीकृतमित्यर्थः, "प्रतिपन्नोऽन्यलिङ्गः स्यात् विज्ञातेऽङ्गीकृतेऽपि च" इति मेदिनी।

(ज) प्रतिपद्यते अङ्गीक्रियते, कर्त्तुं समाश्रीयते इत्यर्थः, स्वस्वजीवनदानमेव कर्त्तव्यतया स्थिरीकृतमिति भावः, रामभद्रशरेण सर्वे एव पञ्चत्वं गता इति निष्कर्षः।

(झ) वालीति।—वालिनः किष्किन्ध्याधिपतेः वालिराजस्य, साहाय्यकाय साहाय्यार्थम्, उपस्थायिनः उपस्थिताः।

(ञ) विराधेति।—विराधस्य पूर्वोक्तस्य नामकराक्षसविशेषस्य, यात्रया प्रयाणेन, इत.पूर्वं यमभवनगमनेनेत्यर्थः, प्रहतं क्षुण्णं, पदनिक्षेपेण कुट्टितमित्यर्थः, अध्वानं पन्थानं, मार्गमिति भावः, अनुप्रपन्नाः अनुप्राप्ताः।

(ट) प्ररूढं प्रकर्षेण जातम्। वैरं शात्रवं, शत्रुता इत्यर्थः।

श्रमणा। (रुदती)। आर्य्य ! मन्ये, खर-दूषणप्रभृतीना-मभिभवाभिधाने केवलं क्लेशयिष्यति (ठ) वाचमात्मनः; पुन-रनक्षरमपि शूर्पणखामुखमावेदयिष्यति (ड) दशकन्धरस्य।

जाम्बवान्। (सचिन्तम्)। श्रमणे ! लघूत्थमनर्थमुत्प्रेक्ष्य प्रमुग्धोऽस्मि। (ढ)—

ऐक्ष्वाकेण पुराऽपि कौशिकमखादारभ्य लङ्केश्वरो
धत्ते शाश्वतिकं विरोधमधुना त्वेते हता बान्धवाः।
उत्साह-प्रभु मन्त्रशक्तिभिरलम्भूष्णुश्छलज्ञो बली
दृप्तः शूर्पणखानिकारमपरं दृष्ट्वा कथं मृष्यते ?॥ ५॥

---

(ठ) अभिभवाभिधाने पराजयवार्त्ताकथने। क्लेशयिष्यति पीडयिष्यति, वार्त्ताहरः, शूर्पणखा वा इति शेषः।

(ड) अनक्षरम् अक्षरशून्यं, वाचा अनुक्तमपि इति यावत्। आवेदयिष्यति विज्ञापयिष्यति।

(ढ) लघूत्थं शीघ्रमुपस्थितम्। उत्प्रेक्ष्य वितर्क्य। प्रमुग्धोऽस्मि विमूढोऽस्मि, किं-कर्त्तव्यविचाराक्षमो भवामि इति यावत्।

ऐक्ष्वाकेणेति।—पुरा पूर्वम् अपि, लङ्केश्वरः रावणः, कौशिकमखात् विश्वामित्र-यज्ञात्, आरभ्य उपक्रम्य, ऐक्ष्वाकेण रामेण सह, शश्वत् निरन्तर भव शाश्वतिकं नित्यं, विरोध वैरं, धत्ते बिभर्त्ति, अधुना तु इदानीञ्च, एते बान्धवाः खरादयः स्वजनाः, हताः विनाशिताः, रामेणेति शेषः, अतः उत्साह प्रभु मन्त्रशक्तिभिः उत्साहशक्तिभिः विक्रमबलैः, उक्तञ्च नीतिशास्त्रे—"विक्रमबलमुत्साहशक्तिः" इति, प्रभुशक्तिभिः कोश-दण्डजबलैः, उक्तञ्च नीतिशास्त्रे—"कोश-दण्डजबल प्रभुशक्तिः" इति, मन्त्रशक्तिभिश्च सन्ध्यादीनां सामादीनाञ्च यथावत्प्रयोगैः, पञ्चाङ्गमन्त्रैर्वा, उक्तञ्च—"पञ्चाङ्गमन्त्रो मन्त्रशक्तिः" इति, एताभिस्तिसृभिः शक्तिभिः, "शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः" इत्यमरः; अलम्भूष्णुः अतिसमर्थः, तथा छलज्ञः छिद्रवित्, छद्मनान्निपुण इत्यर्थो वा, बली बलवान्, दृप्तः अहङ्कृतः, रावणः इति शेषः, अपरम् अन्यं, पूर्वोक्तशाश्वतिक-विरोधात् भिन्नमित्यर्थ, शूर्पणखायाः निकारं परिभवम्, अवमाननमित्यर्थः, "निकारः स्यात् परिभवे धान्यस्योत्क्षेपणेऽपि च" इति धरणिः; नासाकर्णादिच्छेदनमिति भावः, दृष्ट्वा विलोक्य, कथं केन प्रकारेण, मृष्यते ? क्षमते ? न कथमपीत्यर्थः। शार्दूल-विक्रीडितं वृत्तम्॥ ५॥

शनैः शनैः अनयोः(ण)विरोधे सन्धुक्षमाणे तुल्यव्यसनस्थो(त) दाशरथिरसहायः सूर्य्यसूनुना सन्धातुमीषत्करः (थ) स्यात् ।

श्रमणा। आर्य्य! किमिदानीमनुष्ठेयमस्ति ? (द) मम हि भिषग्पुत्रो निषादचक्रवर्त्ती गुहो लक्ष्मणमित्रम्, अनेन सोपानेन सुखाधिरोहो (ध) रघुपतिरस्माकम् ।

जाम्बवान्। (सहर्ष-स्मितम्)। श्रमणे! यद्यसि सुग्रीवपक्षपातिनी, तत् गच्छ, सत्वरमुपस्थापय (न) निषादराजम् ।

(इति श्रमणा निष्क्रान्ता)।

(नेपथ्ये एकतः)।

भो भो लक्ष्मण! वैशेषिककटन्दीपण्डितो (प) जगद्विजयमानः पर्य्यटामि (फ)। क्वासौ रामः? तेन सह विवदिषेय (ब)।

---

(ण) शनैः शनैः मन्दं मन्दम्, उत्तरोत्तरमित्यर्थः। अनयो. राम रावणयोः।

(त) सन्धुक्षमाणे सम्यक् दीप्यमाने, सम्यक् प्रज्वलति सतीत्यर्थः, वृद्धिं गच्छति सतीति यावत्। तुल्येति।—तुल्य समानं, सुग्रीवेण सहेति भावः, यत् व्यसनं विपत्, राज्यभ्रंशरूपमिति भावः, तत्र तिष्ठति वर्त्तते इति तादृशः, राज्यात् बहिष्कारणरूपतुल्यविपत्प्राप्त इत्यर्थः।

(थ) सूर्य्यसूनुना सूर्य्यपुत्रेण सुग्रीवेण। सन्धातुं सम्मेलयितुं, सन्धिं कारयितुमित्यर्थः। ईषत्करः सुकरः इत्यर्थः, अनायाससाध्य इति यावत्।

(द) अनुष्ठेय करणीयम्।

(ध) अनेन लक्ष्मणमित्ररूपेण, सोपानेन उपायेनेत्यर्थः। सुखाधिरोहः सुखेनाधिगम्य इत्यर्थे।

(न) उपस्थापय समीपमानय इत्यर्थः, अस्माकमिति शेषः।

(प) वैशेषिकेति।—वैशेषिकस्य कणादकृतदर्शनविशेषस्य, कटन्दीं व्याख्यातामिति भावः, पण्डितः विचक्षणः। "कन्दली" इति पाठे,—वैशेषिककन्दल्यां वैशेषिकदर्शनभाष्ये, निजकृते इति भावः, पण्डितः, यद्वा—वैशेषिकी विशिष्टा, या कन्दली कलहः, तत्र पण्डितः विचक्षणः।

(अन्यतः)।

भो भोः परिव्राजक ! कालसर्पखलीकारखर्जूलता (भ) न खलु सुखाकरी वृश्चिकमन्त्रतान्त्रिकस्य (म)।

जाम्बवान्। कथं लक्ष्मण-परिव्राजकौ संलपतः, (य) शृणोमि तावत्। (इत्यवधत्ते) (र)।

(नेपथ्ये पुनरन्यतः)।

आः लक्ष्मण ! सर्वविद्रावणः खल्वहम्। को मया जनित-मानभङ्गो न पराजीयते ? (ल)

---

(फ) विजयमानः पराभवन्, वैशेषिकदर्शनविषयकविचारेण तद्दर्शनाध्यायिनः पराभूयेत्यर्थः। पर्यटामि भ्रमामि।

(ब) विवदिष्ये विविधज्ञानविषयकं तर्कं करिष्ये, विरोधं करिष्ये वा। रावणोक्तिरियम्।

(भ) परिव्राजक। भिक्षो। "भिक्षुः परिव्राट् कर्मन्दी" इत्यमरः। कालसर्पेति।—कालसर्पस्य कृष्णसर्पस्य, अत्यन्तखलप्रकृतेरित्यर्थः, खलीकारः अपकारः, अङ्गुष्ठस्यापि आघातादिना क्रोधोत्पादनमित्यर्थः, क्रोधावरणमिति यावत्, स एव खर्जूः कण्डूः, "कण्डूः खर्जूश्च कण्डूया" इत्यमरः; सा विद्यते यस्य सः कालसर्पखलीकारखर्जूलः, तस्य भावः।

(म) सुखाकरी सुखसाधनी। वृश्चिकेति।—वृश्चिकः प्रसिद्धः कीटविशेषः, तस्य मन्त्रे विषनाशकारकमन्त्रात्मकक्रियाविशेषे, तान्त्रिकः ज्ञातसिद्धान्तः तस्य, "तान्त्रिको ज्ञातसिद्धान्तः" इत्यमरः; कालसर्पं कोपितं कृत्वा तेन क्रीडाकरणं वृश्चिकविषाभिज्ञस्य असुखकरं भवतीत्यर्थः; कालसर्पदमने वृश्चिकमन्त्राभिज्ञस्य सामर्थ्यं न स्फुरतीति भावः।

(य) संलपतः अन्योऽन्यम् आलापं कुरुतः। "संलापो भाषणं मिथः" इत्यमरः।

(र) अवधत्ते अवहितो भवति, संलापश्रवणे मनो निदधातीत्यर्थः।

(ल) सर्वविद्रावणः सर्वलोकत्रासनः, सर्वविजयीत्यर्थः, अथच सर्ववित् सर्वज्ञः, रावणः। जनितेति।—जनितः उत्पादितः, कृत इत्यर्थः, मानस्य गर्वस्य, भङ्गः खण्डनं येन तादृशः, कृतापमानः, मम अवमाननाकारीत्यर्थः। पराजीयते पराभूयते, प्राप्यते इत्यर्थः, अपि तु प्राप्यते एवेति भावः, मदवमाननाकारी अवश्यमेव दण्डनीय इति निष्कर्षः।

( नेपथ्ये पुनरन्यतः )।

किं भवान् रावणः ?

( जाम्बवान् सविशेषमवदधाति )।

( नेपथ्ये पुनरेकतः )।

भो वाचोयुक्तिज्ञ ! ( व ) सर्वेषां विद्रावणः खल्वहमिति समस्य व्याहृतमन्यथाऽभिसन्धाय वाक्छलेन प्रत्यवतिष्ठमानो निगृहीतोऽसि ; ( श ) तन्मुञ्च मां भिक्षार्थे ( ष )।

( अन्यतः )।

किं त्वया ? किन्तरां च रावणेन ? ( स )। अहमप्युत्सुकोऽस्मि, ( ह ) त्वरितं गच्छामि।

जाम्बवान्। कथमेतदस्फुटार्थमेव ( क ) निर्वहणम् ( ख )।

---

( व ) वाचोयुक्तिज्ञ ! वाचोयुक्तिपटो ! वाग्मिन् ! इत्यर्थः, "वाचोयुक्तिपटुर्वाग्मी वावदूकश्च वक्तरि" इत्यमरः।

( श ) समस्य सङ्क्षिप्य, समासमाश्रित्येत्यर्थः। व्याहृतं उक्तम्। अन्यथा अन्येन प्रकारेण, "किं भवान् रावण ?" इत्येवंरूपेणेत्यर्थः, अभिसन्धाय संयोज्य, कल्पयित्वेत्यर्थः, परिवर्त्त्य इत्यर्थो वा। वाक्छलेन अन्यार्थे प्रयुक्तस्य वाक्यस्य अर्थान्तरे संयोजनात्मकस्वरूपाच्छादनेनेत्यर्थः, वक्रोक्त्या इति यावत्, प्रत्यवतिष्ठमानः प्रतिपक्षतया वर्त्तमानः, विरुद्धपक्षम् अवलम्बमान इत्यर्थः। निगृहीतः पराजितः, प्रतारितो वा।

( ष ) भिक्षार्थे भिक्षार्थं गमनायेत्यर्थः।

( स ) किं त्वया ? किन्तराञ्च रावणेन ? त्वया रावणभिन्नेन किम् ? रावणेन च किन्तराम् ? त्वम् अरावणः रावणो वा भवतु तेन किम् ? न तेन मे किमपि प्रयोजनमित्यर्थः, अरावणो वा रावणो वा न मया गण्यते इति भावः।

( ह ) उत्सुकोऽस्मि इष्टलाभार्थमुन्मुखोऽस्मि, आश्रमं गत्वा प्रियजनदर्शनाय व्याकुलो भवामीत्यर्थः, "इष्टार्थोद्युक्त उत्सुकः" इत्यमरः।

( क ) अस्फुटार्थमेव अव्यक्तार्थमेव, अस्पष्टाभिधेयमेवेत्यर्थः।

( ख ) निर्वहणम् उपक्रान्तस्य उपसंहारः, प्रस्तुतकथासमापनमित्यर्थः, "उपक्रान्तस्य संहारो भवेन्निर्वहणन्त्विदम्" इति भरतः।

मन्ये, पुनरेव परिव्राजकच्छलेन (ग) रावण एव कोपादुत्तमप्यपलप्य स्वं नाम द्रागपक्रान्तः (घ)। (सर्वतो निरूप्य)।
अये! पुराणप्रियसुहृत् (ङ) अस्माकं दक्षिणस्या दिशः परापतन् जटायुरिव लक्ष्यते। (च) तदेनमनुपालयामि (छ) तावत्। दूरदृशो हि गृध्राः, (ज) कदाचिदेव (झ) लङ्काद्वीपवृत्तान्तमप्युपलभेत (ञ)।

(प्रविश्य)।

जटायुः। प्राप्तैवेयमस्माभिः पञ्चवटी, यदमूर्गोदावरीतरङ्गशीकरसेकसुकुमारमांसलपरिसरारण्यमालिन्यो जनस्थानसीमानः (ट)। अपि च—

दृश्यन्ते मधुमत्तकोकिलवधूनिर्धूतचूताङ्कुर-
प्राग्भारप्रसरत्परागसिकतादुर्गास्तटीभूमयः।

---

(ग) परिव्राजकच्छलेन भिक्षुव्याजेन।

(घ) उक्तम "अहं सर्ववित् रावणः" इति वाक्यम्, अपलप्य निह्नुय। स्वं नाम रावण इति नामधेयम्। द्राक् झटिति। अपक्रान्तः पलायितः, स्वरूपप्रकाशभियेति भावः।

(ङ) पुराणप्रियसुहृत प्राचीनप्रियबन्धुः।

(च) परापतन् समागच्छन्। लक्ष्यते दृश्यते।

(छ) अनुपालयामि प्रतीक्षे।

(ज) दूरदृशः दूरदेशदर्शिनः, बहुदूरपर्य्यन्तं दर्शनसमर्था इत्यर्थः। गृध्राः पक्षिविशेषाः।

(झ) एषः जटायुः।

(ञ) उपलभेत जानीयात।

(ट) गोदावरीति।—गोदावर्य्याः नदाख्यनद्याः, तरङ्गाणाम् ऊर्म्मीणां, शीकरसेकेन जलकणस्पर्शेनेत्यर्थः, सुकुमारा सुकोमला, नेत्रतृप्तिजनकौ इत्यर्थः, सुस्निग्धा इति यावत्, मांसला च परिपुष्टा च, निबिडा इति यावत, परिसरे पर्य्यन्तभुवि, प्रान्तदेशे इत्यर्थः, "पर्य्यन्तभूः परिसरः" इत्यमरः; अरण्यमाला वनश्रेणी यासां तादृश्यः। जनस्थानसीमानः दण्डकारण्यान्तर्गतभूभागस्य प्रान्तदेशाः।

दृश्यन्ते इति।—मधुमत्ताभिः मकरन्दपानविह्वलाभिः, मकरन्दपानेन प्रफुल्ला-

याः कृच्छ्रादतिलङ्घ्य लुब्धकभयात्तैरेव रेणूत्करै-
र्धारावाहिभिरस्ति लुप्तपदवीनिःशङ्कमेणीकुलम् ॥ ६ ॥

जाम्बवान् । (किञ्चिदुपसृत्य) । कुतः पुनरियता वेगेन (ठ) वयस्यो जटायुः ?

जटायुः । (दृष्ट्वा) । कथं जाम्बवान् !! सखे ! क्षमस्व, न समाजयिष्यामि (ड) तावद्भवन्तम् । मया हि मलयाचलकुलायादार्य्यसम्पातिपादानभिवाद्य निवर्त्तमानेन (ढ) मारीचसहचरः सञ्चरन्निमामरण्यानीमभिलक्षितो (ण) राक्षस-

---

भिरिति वा, कोकिलवधूभिः कोकिलाभिः, निर्धूताः आकम्पिताः, विदलिताः इत्यर्थः, ये चूताङ्कुराः आम्रमुकुलाः, तेषां प्राग्भारात् अग्रभागात्, विदलितप्रदेशादित्यर्थः, प्रसरन्तीभिः निःसरन्तीभिः, पतन्तीभिरित्यर्थः, परागसिकताभिः कौसुमरजोरूपवालुकाभिः, दुर्गाः दुर्गमाः, अगम्या इति यावत्, तटीभूमयः तीरप्रदेशाः, दृश्यन्ते अवलोक्यन्ते; एतेन वसन्तकालो व्यज्यते; एणीकुलं मृगीकदम्बकं, लुब्धकेभ्यः व्याधेभ्यः, भयात् याः तटीभूमीरित्यर्थः, कृच्छ्रात् क्लेशात्, अतिलङ्घ्य अतिक्रम्य, धारावाहिभिः सन्ततवर्त्तिभिः, निरन्तरं पतद्भिरित्यर्थः, तैरेव पूर्ववर्णितप्रकारैरेवेत्यर्थः, रेणूत्करैः परागसङ्घैः, लुप्ताभिः विनष्टाभिः, अविरतपतितपरागपुञ्जैरदर्शनं गताभिरित्यर्थः, पदवीभिः पादचिह्नैर्हेतुभिरित्यर्थः, निःशङ्कं निर्भयं यथा तथा, अस्ति वर्त्तते, लुब्धा हि मृगपदचिह्नदर्शनेन मृगाननुधावन्ति, अत्र तु पुष्परजोभिस्तच्चिह्नविलोपात् मृगाणां गन्तव्यस्थानज्ञानाभावात् लुब्धास्तदभिमुखीभवितुं न शक्नुवन्तीति तेषां भयराहित्यमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

(ठ) कुतः कस्माद्धेतोः, इयता एतदधिकेन, वेगेन जवेन, गच्छतीति शेषः । यद्वा—कुतः कस्मात् स्थानात्; अस्मिन् पक्षे—आगच्छतीति शेषः ।

(ड) समाजयिष्यामि अभिनन्दयिष्यामि, सत्करिष्यामि इति यावत् । "आनन्दन-सभाजने । आप्रच्छनम्" इत्यमरः ।

(ढ) मलयाचलकुलायात् मलयाचल एव कुलायः नीडः, पक्षिवासस्थानमित्यर्थः तस्मात्, यद्वा—मलयाचले यः कुलायः तस्मात्, "कुलायो नीडमस्त्रियाम्" इत्यमरः । आर्य्येति ।—आर्य्यस्य ज्येष्ठस्य, सम्पातेः तदाख्यपक्षिणः, पादान् चरणौ, अभिवाद्य नत्वा, निवर्त्तमानेन प्रत्यागच्छता ।

(ण) अभिलक्षितः दृष्टः ।

राजः; तदतिविषमम् आशङ्कमानं मां वत्सरामभद्रस्नेहः त्वरयति । (त)

जाम्बवान् । (स्वगतम्) । वयमप्येतदेव प्रतिपित्सामहे (प्रकाशम्) । सखे ! त्वरस्व । (थ) । (इति निष्क्रान्तः) ।

जटायुः । (परिक्रम्यावलोक्य च) । इयमग्रे पञ्चवटी । (सवितर्कम्)—

नीतो दूरं कनकहरिणश्रद्धया रामभद्रः
पश्चादेनं द्रुतमुपसरत्येष वत्सः कनिष्ठः ।
बिभ्यत् बिभ्यत् प्रविशति ततः पर्णशालां च भिक्षुः
धिक्कष्टं भोः ! प्रथयति निजामाकृतिं रावणोऽयम् ॥७॥

अहह !!—

आर्य्यपुत्रार्य्यपुत्रेति रुदन्तीं कुररीमिव ।
रथमारोप्य वैदेहीमिष पापः क्व यास्यति ? ॥ ८ ॥

---

(त) अतिविषमम् अतिविसदृशं कमपि व्यापारम् । त्वरयति त्वरां ददाति, गन्तुमिति शेषः ।

(थ) प्रतिपित्सामहे प्रबुभुत्सामहे, इमामेव वार्त्तां विज्ञातुमिच्छाम इत्यर्थः, "प्रतिपत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च । सम्प्राप्तौ च प्रबोधे च पदप्राप्तौ च योषिति ॥" इति मेदिनी । त्वरस्व सत्वरं गच्छेत्यर्थः ।

नीत इति ।—कनकहरिणे काञ्चनमृगे, या श्रद्धा समादरः, आकाङ्क्षा वा, लिप्सेत्यर्थः तथा, "श्रद्धाऽऽदरे च काङ्क्षायाम्" इति मेदिनी ; रामभद्रः दूरं नीतः प्रापितः, चालित इत्यर्थः, आश्रमप्रदेशादिति शेषः, पश्चात् रामभद्रस्य पृष्ठतः, रामभद्रस्य गमनानन्तरमिति वा, एष कनिष्ठो वत्सः लक्ष्मण इत्यर्थः, एनं रामं, द्रुतं सत्वरम्, उपसरति अनुधावति ; ततस्तस्मात्, तदनन्तरं वा, भिक्षुः परिव्राट्, परिव्राजकरूपधर इत्यर्थः, रावण इति शेषः, बिभ्यत् बिभ्यत् त्रसन् त्रसन्, भीतः भीतः इत्यर्थः, रामादिति शेषः, पर्णशालां पत्रकुटीरं, रामस्येति शेषः, प्रविशति च, भोः ! धिक् कष्ट क्लेशप्रदः व्यापार उपस्थित इत्यर्थः, अयम् भिक्षुरूप इति भावः, रावणः निजाम् आकृतिं स्वं रूपं, प्रथयति प्रकटयति, भिक्षुवेशं त्यक्त्वा निजरूपं धारयतीत्यर्थः । मन्दाक्रान्ता वृत्तम् ॥ ७ ॥

आर्य्येति ।—एष पापः पापाचारः, रावणः इति शेषः, कुररीमिव उत्क्रोश-

(साटोपं ( ट ) परिक्रामन् )। अरेरे रावण !—

वधूटीमिक्ष्वाकोर्निजकरतलस्पर्शमलिना-

मिमां कुर्वाणस्य स्फुरति हृदि शोभैव भवतः।

कुले येषां किन्तु त्वमसि गणितास्तेऽपि गुरवो

न मम ब्रह्माणः कथमिव पुलस्त्यप्रभृतयः ? ॥ ९ ॥

( पुनराकाशे )। अलीकाट्टहासधूमधूमरितदशवक्त्रवल्मीक ! किमात्थ रे राक्षसापसद! किमात्थ ? ( ध )—

जगच्चित्तक्षोभि सीताख्यमामिषं हरतो मम।

अयं किल जरद्गृध्रः करादाच्छिद्य नेष्यति ॥ १० ॥

---

पक्षिणीमिव, "उत्क्रोश-कुररौ समौ" इत्यमरः; आर्य्यपुत्र! आर्य्यपुत्र! इति क्रन्दन्तीं क्रन्दन्तीं, वैदेहीं सीतां, रथम् आरोप्य उत्तोल्य, क्व कुत्र, यास्यति? अनुष्टुप् वृत्तम् ॥ ८ ॥

(ट) साटोपं सतर्जनं सगर्वं वा।

वधूटीमिति।—इक्ष्वाकोः इक्ष्वाकुवंशीयस्य, रामस्येत्यर्थः, इमां क्रन्दन्तीमित्यर्थः, वधूटीम् अल्पवयस्कां वधूं नवीनां वधूमित्यर्थः, "अल्पा वधूर्वधूटी स्यात्" इत्यमरः; निजस्य करतलस्पर्शेन पाणितलपरामर्शेन, मलिनां कलङ्कितां, कुर्वाणस्य विदधतः, भवतः तव, हृदि चेतसि, शोभेव आनन्दजनितविकास एव, यद्वा—सौन्दर्य्यमिव, सीताया इति शेषः, न तु लज्जेति भावः, स्फुरति प्रसरति, किन्तु त्वं येषां कुले गोत्रे, असि भवसि, जात इति शेषः, ते त्रिलोकप्रसिद्धाः महात्मान इत्यर्थः, गुरवः पूज्याः पितामहाः, मम ब्राह्मणोऽपि पुलस्त्यप्रभृतयः ब्रह्मर्षयोऽपि इत्यर्थः, कथमिव केन हेतुना वा, न गणिताः? न आलोचिताः? त्वयेति शेषः, महात्मानस्तव पूर्वपुरुषाः त्वया कलङ्किता इति भावः। शिखरिणी वृत्तम् ॥ ९ ॥

(ध) अलीकेति।—अलीकः वृथा, अकार्य्यकरणात् आन्तरिकताविहीन इति यावत्, भीत भीतत्वात् मौखिक इति भावः, यः अट्टहासः अत्युच्चविकटहास्यं, केवल-दन्तविकाशनमिति भावः, स एव धूमः पापकालुष्यादिति भावः, तेन धूमरितानि पांशुलानि इत्यर्थः, दश वक्त्राणि दश मुखानि यस्य तादृशः, वल्मीकः कीटविशेषः, तत्सम्बुद्धौ। राक्षसापसद। राक्षसाधम। आत्थ ब्रवीषि।

जगदिति।—अयम् एषः, जरद्गृध्रः वृद्धपक्षिविशेषः, जगतां जगद्वासिनां, चित्तक्षोभि लोभविषयं, स्पृहणीयमित्यर्थः, सीताख्यं सीतानामकम्, आमिषं भोग्यवस्तु

इति। आः !! पाप ! कथमेवमभिदधासि ( न )। तिष्ठ तिष्ठ—

> भुजविटपमदेन व्यर्थमन्धम्भविष्णु-
> र्धिगपसरसि चौरङ्कारमाक्रुश्यमानः।
> त्वदुरसि विदधातु श्यामपस्कारकेलिं
> कुटिलकरजकोटिक्रूरकर्मा जटायुः ॥ ११ ॥

( इति निष्क्रान्तः )।

विष्कम्भकः।

---

( ततः प्रविशति लक्ष्मणः )।

लक्ष्मणः। अहो ! दुर्निवारदारुणक्रोध-शोक-लज्जागहनो विषमोऽयं दशाविवर्त्तः ( प )। यस्मिन्निति कर्त्तव्यताऽभिधानम् ( फ ) अप्यस्माकमनौपयिकम् ( ब )। तथा हि—

---

मांस वा, "उत्कृष्टे पललै ( मांसे ) भोगे भोग्यवस्तुनि चामिषम्" इति विश्वः ; हरतः बलान्नयतः इत्यर्थः, मम करात् हस्तात्, आच्छिद्य आकृष्य, नेष्यति प्रापयिष्यति, ग्रामं स्थानान्तरं वेति शेषः, किलेति सम्भावनायाम्, एतत् किं सम्भाव्यते ? इत्यर्थः, नैव सम्भाव्यते इति भावः। रावणोक्त्यनुवादोऽयम्। अनुष्टुप् वृत्तम् ॥ १० ॥

(न) अभिदधासि ब्रवीषि।

भुजेति।—भुजा एव विंशतिसङ्ख्यका बाहव एव, विटपाः शाखाः, यद्वा—भुजानां विटपाः विस्ताराः, बाहुल्यमित्यर्थः, "शाखायां पल्लवे स्तम्बे विस्तारे विटपोऽस्त्रियाम्" इति रभसः, तेषां मदेन गर्वेण, व्यर्थं विफलम, अन्धम्भविष्णुः अन्धीभवन्, चौरङ्कारं चौर्य्यं कृत्वेत्यर्थः, आक्रुश्यमानः शाप्यमानः सन्, यद्वा—आक्रुश्यमानः आक्षिप्यमाणः, भर्त्स्यमानः सन्, मयेति शेषः, अपसरसि पलायसे, अत एव धिक्, त्वामिति शेषः, कुटिलानां वक्राणां, दारुणानामिति भावः, करजानां नखराणां, कोटिभिः अग्रैः, क्रूरं भीषणं, कर्म यस्य तथोक्तः, जटायुः तव उरसि वक्षसि, श्यामां निशाम्, अपस्कारकेलिं नखविदारणरूपक्रीडामिति यावत्, विदधातु करोतु। मालिनी वृत्तम् ॥ ११ ॥

(प) दुर्निवारेति।—दुर्निवारैः निवारयितुमशक्यैः, अत एव दारुणैः भीषणैः, अतिप्रचण्डैरित्यर्थः, क्रोधैः शत्रुं प्रति कोपैः, शोकैः मन्युभिः, प्रियजनविच्छेदजनितैः दुःखैरित्यर्थः, लज्जया त्रपया, कुलवधूरेकाऽस्माभिर्न रक्षितुं शक्ता, अतः कापुरुषा वयं लोके कथं मुखं दर्शयिष्याम इति व्रीडया इति भावः, गहनः कलिलः, विमिश्र इत्यर्थः, "गहनं कलिले त्रिषु" इत्यमरः ; विषमः उत्कटः, दशाविवर्त्तः अवस्थाविपर्य्ययः ;

तत्तादृग्दशकण्ठवञ्चनरुषा धूमायमानो गिरं
नार्द्धोक्तप्रविलीनवर्णविधुरामार्य्यः समाप्नोति मे ।
चापे तातजटायुजीवितकथापर्य्यन्तधूमायित-
क्रोधोत्पीड़निपीतशोकजड़िमा दृष्टिस्तु विश्राम्यति ॥१२॥

(नेपथ्याभिमुखः)। इत इत आर्य्य मारीचमथन! (भ) इत्य-

---

(फ) यस्मिन् दशाविवर्त्ते। इतिकर्त्तव्यताऽभिधानं किमत्र कर्त्तव्यमिति कथनम्।

(ब) समीपयितम् प्रयुक्तं, "युक्तमौपयिकं लभ्यम्" इत्यमरः; कथमेते लोकाः अस्मान् किं मंस्यन्ते इति भावः।

तदिति।—आर्य्यः ज्येष्ठः रामः, तत् अचिन्तितपूर्वं, तादृशं मायामृगेण दूराकर्षणरूपं, यत् दशकण्ठस्य रावणस्य, यद्वा—दशकण्ठेन रावणेन, कृतमिति शेषः, वञ्चनं सीताहरणरूपं प्रतारणं, तेन या रुट् रोषः, तया धूमायमानः धूममुद्गमन्, प्रज्वलनात् पूर्वावस्थामापद्यमानः वह्निरिति यावत्, तदवस्थः अग्निरिवेति भावः, मे मम समीपे, अर्द्धोक्ताः अर्द्धोच्चरित एव, प्रविलीनः प्रकर्षेण लयं गतः, अवरुद्ध इति यावत्, धूमोपरुद्धकण्ठतयेति भावः, यो वर्णः अक्षरं, तेन विधुरां विकलां, छिन्नां छिन्नामिति यावत्, "वैकल्येऽपि च विश्लेषे विधुरं विकले त्रिषु" इति विश्वप्रकाशः, गिरं वाचं, न समाप्नोति न सम्यक् लभते, स्फुटमुच्चारयितुं न शक्नोतीत्यर्थः, किञ्चित् विवक्षुरपि क्रोधजवाष्पावरुद्धकण्ठतया छिन्नां छिन्नामस्पष्टां वदन् विरमति वा मौन-मापद्यते वा इति भावः; तु किन्तु, दृष्टिः नेत्रम्, आर्य्यस्येति शेषः, तातस्य अनुकम्प्यस्य, जनकस्य वा, पितृसखत्वात् जनकतुल्यस्य इत्यर्थः, "तातोऽनुकम्प्ये जनके" इति मेदिनी; जटायोः जीवितकथायाः, जीवनकालिकवार्त्तायाः, पर्य्यन्तः अवसानम्, एतेन रावणेन कृतो जटायुवधः सूचितः, तेन धूमायितः धूमोद्गारी, यः क्रोधः कोपानलः, तस्य उत्पीड़ेन पीडनेन, अतिशयेनेत्यर्थः, निपीतः नाशितः, शोकेन जड़िमा जाड्य, स्तब्धत्वमिति यावत् यस्याः तादृशी, दृष्टिः नेत्रविक्षेपः, चापे धनुषि, विश्राम्यति स्थिरीभवति, नान्यत्र पततीत्यर्थः, प्रतिशोधार्थं धनुर्ग्रहणाय इच्छां करोतीति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥

(भ) इत इत अस्यां दिशि, आगच्छेति शेषः। मारीचमथन! मारीचविनाशन! एतेन मारीचवध उक्तः।

त्वाममूरवाचीं ककुभम् (म) अभिवर्द्धमाना विन्ध्यवनवीथि-भूमयः (य)।

(प्रविश्य)।

रामः। (आकाशे लक्ष्यं बद्धा)—

> कुले वा शौर्य्ये वा भुजसमुदये वा तपसि वा
> बभूवुर्न प्राञ्चस्त्वमिव भवितारो न चरमे ।
> अहो ! दिङ्मोहस्ते समजनि चिरादेष न खलु
> प्रवीराणां पन्था दशवदन ! येनासि चलितः ॥ १२ ॥

(विमृश्य सखेद-स्मितम्)। हंहो (र) पौलस्त्य !—

> सिद्धश्रोत्रपरम्परापरिगतैरेभिः प्रपौत्रस्य ते
> वृत्तैरद्य पुलस्त्यवर्जमभितः स्मेरेषु देवर्षिषु ।

---

(म) अवाचीं दक्षिणां, ककुभं दिशम् ।

(य) विन्ध्येति।—विन्ध्यस्य तदाख्यगिरेः, वनवीथिभूमयः काननश्रेणीसमन्वित-प्रदेशाः इत्यर्थः ।

कुले इति।—दशवदन ! रे रावण ! कुले वंशे वा, शौर्य्ये पराक्रमे वा, भुज-समुदये बाहुसमूहे वा, तपसि तपश्चर्य्यायां वा, प्राञ्चः पूर्वतनाः, केऽपि पुरुषा इति शेषः, त्वमिव न बभूवुः त्वत्सदृशा नासन्, चरमे पश्चाच्च, परवर्त्तिकाले आगमि-ष्यमाणाश्च, त्वमिव न भवितारः तव तुल्या न भविष्यन्ति ; अहो ! खेदे, ते तव, दिङ्मोहः दिग्भ्रमः, बुद्धिविपर्य्यय इति भावः, समजनि सञ्जातः, येन, पथा इति शेषः, चलितः गतः, असि भवसि, एषः पन्था मार्गः, चौर्य्यरूपिरूप इति भावः, चिरात् कदाऽपीति भावः, प्रवीराणां प्रकृष्टानां वीराणां, न खलु नैव, प्रवीराः कदाऽपि चौर्य्यमार्गेण न चलन्तीति भावः। "चिरात्" इति पदं "येन" इत्यनेन सम्बध्यते वा, त्वं येन चिरात् दीर्घकालं व्याप्य, चलितोऽसि, एष न प्रवीराणां पन्थाः । शिखरिणी वृत्तम् ॥ १२ ॥

(र) हंहो ! भोः ।

सिद्धेति।—सिद्धानां देवयोनिविशेषाणां, श्रोत्रपरम्परया कर्णपरम्परया, परिगतैः प्राप्तैः, श्रुतैरित्यर्थः, प्रपौत्रस्य पौत्रपुत्रस्य, ब्रह्मणः पुत्रः पुलस्त्यः, पौत्रः विश्रवाः, तत्पुत्रस्य इत्यर्थः, ते तव, एभिः दुर्वृत्तैः, वृत्तैः चरितैः, परदारहरणरूपव्यवहारैरिति भावः, पुलस्त्यवर्जं पुलस्त्यं विहाय, तस्य लज्जया म्लानमुखत्वादिति भावः, अभितः समन्तात्,

विष्वग्वृत्तिरभङ्गुरा नमयितुं दुर्वारलज्जाभर-
म्लानश्रीस्तु चतुर्मुखी भगवतो धातुः कथं वर्त्तते ?॥ १४॥

(अथ मनुध्याय (ज)। हा प्रिये विदेहराजपुत्रि ! (इति संवरणं (ब) नाटयति)।

लक्ष्मणः। (उपसृत्य)। आर्य्य ! कोऽयमभिषङ्गो (झ) नाम भवादृशानप्यास्पदीकरोति ? (ञ)।

पतिते व्यसने दैवाद्दारुणे दारुणात्मनि।
संवर्मयति वज्रेण धैर्य्यं हि महतां मनः॥ १५॥

---

चतुर्दिक्षु अवस्थितेषु इत्यर्थः, देवार्षेषु मरीचिप्रभृतीषु, ऋषिषु ईषद्धास्यविकसिताननेषु सत्सु, विष्वक् चतुर्दिक्षु, वृत्तिः व्यापारः, स्थितिरिति यावत् यस्याः तथोक्ता, अत एव नमयितुं लज्जाऽतिशयात् अवनतीकर्त्तुम्, अभङ्गुरा अयुक्ता, असमर्था इत्यर्थः, चतुर्ष्वेव पार्श्वेषु मुखसद्भावेन गोपनाद्यभावादिति भावः, दुर्वारेण वारयितुमशक्येन, लज्जाभरेण लज्जाऽतिशयेन, म्लाना विवर्णा, श्रीः कान्तिर्यस्याः तथाभूता, भगवतः धातुः ब्रह्मणः, चतुर्णां मुखानां समाहारश्चतुर्मुखी मुखचतुष्टयं तु, कथं केन प्रकारेण, वर्त्तते ? तिष्ठति ? लज्जया मुखं नम्रीकृत्य स्थीयते जनैः इति हि नियमः, विधातुस्तु तदपि न घटते इति भावः। शार्दूलविक्रीडितं वृत्तम्॥ १४॥

(ज) अनुध्याय चिन्तयित्वा, स्मृत्वा इति यावत्।

(ब) संवरणं गोपनं, निरोधनमित्यर्थः, महापुरुषत्वव्याघातशङ्कयेति भावः।

(झ) अभिषङ्गः परिभवः, शोकपरतन्त्रता इति यावत्, "अभिषङ्गः पराभवे" इत्यमरः।

(ञ) आस्पदीकरोति पात्रीकरोति, आश्रयतीत्यर्थः।

पतिते इति।—दैवात् भाग्यवशात्, दुरदृष्टवशादिति भावः, दारुणात्मनि गुर्वात्मके, गुरुतरस्वरूपे इत्यर्थः, अतिमहतीति यावत्, दारुणे भीषणे, भयावहे इत्यर्थः, "दारुणो भीषणे गुरौ" इति शाश्वतः, "दारुणो वृक्षभेदे ना त्रिषु स्यात्तु भयावहे" इति मेदिनी, व्यसने विपदि, पतिते उपस्थिते सति, धैर्य्यं हि धीरत्वमेव, महताम् उत्तमानां, मनः चित्तं, वज्रेण अशनिना, संवर्मयति समाच्छादयति, आवृणोतीत्यर्थः, अथवा धैर्य्यरूपवर्मणा चित्तं समाच्छादयन्ति महान्तः, येन मनसो न विचलनं स्यादिति भावः। अनुष्टुप् वृत्तम्॥ १५॥

रामः । (दीर्घं निःश्वस्य) वत्स!—

सहजधैर्यवशंवदवृत्तयो
हृदि रुषश्च शुचश्च नियन्त्रिताः ।
इह तु किं करवै यदपत्रपा
किमपि मामवमत्य विजृम्भते ? ॥ १६ ॥

लक्ष्मणः । (पुरोऽवलोक्य) । अये! अयमग्रे तातजटायुषो वीरलोकसाधनसिद्धचैत्यमरण्याभोगोऽभिनिवेशः (ग) । पश्य—

भग्नोऽयं कथमस्ति रावणरथस्तातेन वज्राङ्कुर-
क्रूरापस्किरमाणभङ्गुरनखकोटित्रुटद्बन्धनः ।

रामः । (सकरुणम्)—

हा सीरध्वजराजपुत्रि! स तदा दृष्टस्त्वया धन्यया
पक्षीन्द्रो दशकण्ठकुञ्जरशिरःसञ्चारिपञ्चाननः ॥ १७ ॥

(इति लक्ष्मणमवष्टभ्य ध्यानं नाटयति (घ) । )

---

सहजेति ।—सहजस्य स्वाभाविकस्य, धैर्यस्य धीरतायाः, वशंवदा वशवर्त्तिनी, वृत्तिः व्यापारः यासां तथाभूताः, रुषश्च क्रोधाश्च, शुचश्च शोकाश्च, हृदि अन्तःकरणे एव, नियन्त्रिताः निरुद्धाः, मयेति शेषः, स्वाभाविकधैर्यप्रभावेणाहं शोककोधौ संवरीतुमीत्यर्थः, तु किन्तु, अपत्रपा अपरावलोकनजा लज्जा, निजभार्य्यामपि यो रक्षितुं न शक्नोति, कापुरुषः स कथं सश्लोको जनमागच्छेत् इत्येवंरूपा जनान्तरात् समुत्था लज्जा इत्यर्थः, "लज्जा साऽपत्रपाऽन्यतः" इत्यमरः; माम् अवमत्य अवज्ञाय, उपहस्य इति यावत्, किमपि अनिर्वचनीयभावेनेति भावः, यत् विजृम्भते विस्फुरति, इह अस्मिन् विषये, तु पुनः, किं करवै ? किं विदधामि ? न किमपि कर्त्तुं शक्नुयामित्यर्थः । द्रुतविलम्बितं वृत्तम्—"द्रुतविलम्बितमाह नभौ भरौ" इति तल्लक्षणात् ॥ १६ ॥

(ग) वीरलोकेति ।—वीरस्य शूरस्य, सङ्ग्रामहतस्येति भावः, लोकः भुवनं, स्वर्गः इति यावत्, तस्य साधनं हेतुः, तत्प्राप्त्युपाय इत्यर्थः, अत एव सिद्धचैत्य पवित्रस्थानमित्यर्थः, यद्वा—सिद्धानां देवयोनिविशेषाणां, देवत्वं गतानां वीराणामित्यर्थः, चैत्यं चिह्नस्थानमित्यर्थः, अरण्याभोगोऽभिनिवेशः महारण्यभागः ।

भग्न इति ।—तातेन पितृसखत्वात् पितृतुल्येन जटायुषेत्यर्थः, वज्राङ्कुरवत्

लक्ष्मणः। (स्वगतम्)। महादोषः खल्वयमतिप्रसज्यमानो मानसः शोकाख्यो विकारः; तदन्यतः प्रेरयामि। (ज) (प्रकाशम्)। आर्य्य! पश्य पश्य—

विन्ध्यगिरिराजकन्याऽन्तःपुरमेतास्तरङ्गमालिन्यः।
वेतस्वतीभिरद्भिस्तौर्य्यत्रिकगुणनिकां दधते ॥ १८ ॥

---

नखोऽद्वयाशनिप्ररोहवत्, वृद्वज्रवदित्यर्थः, क्रूराभ्यां दारुणाभ्याम्, अपास्फिरमाणाभ्यां विदारयन्तीभ्यां, भङ्गुराभ्यां कुटिलाभ्यां, नखकोटिभ्यां नखरचञ्चुभ्यां, "चञ्चुस्त्रोटिरुभे स्त्रियौ" इत्यमरः; त्रुटत् स्खलत्, छिन्दत् इत्यर्थः, वक्षसं सन्धीना सयोगस्थानं यस्य तथाभूतः, अत एव भग्नः खण्डितः, अयं रावणरथः रावणस्य स्यन्दनः, कथं कीन प्रकारेण, क्षितौ पतितः तिष्ठतीति भावः। हा! इति खेदे, सीरध्वजराजपुत्रि! सीरध्वजाख्यजनकराजनन्दिनि! जानकि! इत्यर्थ, तदा हरणकाले इत्यर्थः, रथभञ्जनकाले इत्यर्थो वा; धन्यया श्लाघ्यया, पुण्यवत्या इत्यर्थः, त्वया दशकण्ठः दशग्रीव एव, कुञ्जरः हस्ती, तस्य शिरसि मूर्द्ध्नि, सञ्चरति भ्रमतीति तथोक्त. पञ्चाननः सिंहः, तत्स्वरूप इत्यर्थः, "सिंहो मृगेन्द्रः पञ्चास्यः" इत्यमरः; स पक्षीन्द्रः विहगाधिपतिः, जटायुरित्यर्थ, दृष्टः अवलोकितः, वयमधन्याः न तं द्रष्टुं समर्था इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १७ ॥

(छ) अवष्टभ्य आश्रित्य। ध्यानं चिन्तां, नाटयति अभिनयति, निश्चलभावेनावतिष्ठते इति भावः।

(ज) महादोषः प्रबलानर्थोत्पादक इत्यर्थः। अतिप्रसज्यमानः अतिशयेन वर्द्धमानः, अत्यर्थं साभिनिवेशः कृत इत्यर्थः। अन्यतः अन्यत्र, विषयान्तरे इत्यर्थः, प्रेरयामि चालयामि, चित्तमिति शेषः।

विन्ध्येति।—विन्ध्यगिरिः विन्ध्याचल एव, राजा नृपतिः, तस्य कन्याऽन्तःपुरं कन्याऽवरोधः, तत्तुल्या इत्यर्थः, एताः परिदृश्यमानाः, तरङ्गमालिन्यः तरङ्गाणाम् ऊर्म्मीणां, मालाः श्रेणयः आसां सन्तीति तथाविधाः नद्यः, वेतस्वतीभिः वानीरक्षययुक्ताभिः, तरङ्गवेगेन प्रकम्पमानाभिः, अत एव नृत्यन्तीभिरिव परिदृश्यमानाभिरिति भावः, अद्भिः जलैः, तौर्य्यत्रिकगुणनिकां नृत्यगीतवाद्याभ्यासं, "तौर्य्यत्रिकं नृत्य-गीत वाद्य नाट्यमिदं त्रयम्" इत्यमरः, "अभ्यासे गुणनो योग्या" इति हैमः; दधते कुर्वन्ति; अत एव विन्ध्यगिरिराजस्य कन्यानाम् अन्तःपुरम् एतदिति प्रतिभातीति भावः। आर्य्या वृत्तम् ॥ १८ ॥

रामः। (उन्मील्य चक्षुषी दीर्घमुष्णं च निःश्वस्य)। वत्स ! दर्शनीयमेतत्—

> कुमुदवनविपर्यायजाग्रदम्भो-
> रुहकृतयामिकविभ्रमा रमन्ते।
> मदकलकरिकर्णतालनृत्य-
> न्मुखरमयूरमनोरमास्तटिन्यः॥ १९॥

(इति परिक्रामतः)।

लक्ष्मणः। आर्य ! अयमितो गिरिर्माल्यवान्—

> इह महिषविषाणव्यस्तपाषाणपीठ-
> स्खलनसुलभरोहिद्गर्भिणीभ्रूणहत्याः।
> कुहरविहरमाणप्रौढभल्लूकहिक्का-
> चयचकितकिरातस्रस्तशस्त्रा वनान्ताः॥ २०॥

---

कुमुदेति।—कुमुदवनेन कैरवकाननेन सह, विपर्यायेण पर्यायेण, जाग्रद्भिः प्रबुध्यमानैः, विकसद्भिरिति यावत्, अम्भोरुहैः पद्मैः, रात्रौ कुमुदवनानि दिवा अम्भोरुहाणि पर्यायक्रमेण जाग्रतीत्येवंरूपेणेति भावः, कृतः आचरितः इत्यर्थः, यामिकानां प्रहरिणां, विभ्रमः विलासः, व्यापार इति यावत् यासु तथाभूताः, तथा मदकलैः मदोत्कटैरिति यावत्, अत एव करिणां हस्तिनां, यद्वा—मदकल इति करिविशेषणं, मदकलानां मदगर्वितानां, करिणां कर्णतालेन कर्णान्दोलनशब्देन इत्यर्थः नृत्यद्भिः नृत्यं कुर्वद्भिः, मुखरैः शब्दायमानैः, केकारवं कुर्वद्भिरिति भावः, मयूरैः शिखिभिः, मनोरमाः मनोहारिण्यः, तटिन्यः नद्यः, रमन्ते क्रीडन्ति, तरङ्गभङ्गरूपविलासव्यवहारेण प्रवहन्तीति यावत्, दर्शकानां रतिं जनयन्तीति भावः। पुष्पिताग्रा वृत्तम्॥ १९॥

इहेति।—इह अस्मिन् प्रदेशे, वनान्ताः अरण्यसीमानः, अरण्यप्रदेशा वा, महिषाणां विषाणैः शृङ्गैः, व्यस्तेषु विपर्यस्तेषु, उल्लिखितेषु इति यावत्, उत्खातेषु इति यावत् वा, पाषाणपीठेषु प्रस्तरफलकेषु, स्खलनेन भ्रंशनेन, पादप्रच्यवनेनेत्यर्थः, सुलभाः सहजा भवा इति यावत्, रोहिद्गर्भिणीनां रोहित् मृगी, तासु गर्भिणीनाम् अन्तर्वत्नीनां, गर्भवतीनां मृगीणामित्यर्थः, "रोहित् मृग्यां लताभेदे स्त्री नाऽके" इति मेदिनी, भ्रूणहत्याः गर्भप्रच्युतिरिति यावत्, गर्भस्थापत्यविनाशा वा येषु तथाभूताः, तथा कुहरेषु गह्वरेषु, विहरमाणानां सञ्चरतां, तिष्ठतामित्यर्थः, प्रौढानां प्रवृद्धानां,

रामः । ( चिरं दृष्ट्वा सकरुणम् )—

> प्रतिपरिसरं भूयानर्घः शिखण्डभृतां यथा-
> मिलितमलिभिः सम्भुज्यन्ते कदम्बविभूतयः ।
> अभिनवघनव्यूढोरस्कः प्रवर्षति माल्यवान्
> विषधरवधूगर्भाधानप्रियङ्करणीरपः ॥ २१ ॥

वत्स लक्ष्मण ! धारय मां, न शक्नोमि स्तम्भयितुम् ( ख ) आत्मानम्—

> इयमविरलश्वासा शुष्यन्मुखी भिदुरस्वरा
> तनुरवयवैः श्रान्तस्रस्तैरुपैति विवर्णताम् ।

---

बृहदाकाराणामित्यर्थः, प्रचयसामित्यर्थो वा, भल्लूकानाम ऋक्षाणां रिक्षापदेन "रिक्ष" इति प्रसिद्धशब्दविशेषसमूहेन, अकिताना भीताना, किराताना व्याधानां, हस्तात् स्खलितानि, शस्त्राणि प्रहरणानि येषु तथाविधाः, दृश्यन्ते इति शेषः । मालिनी वृत्तम् ॥ २० ॥

प्रतिपरिसरमिति ।—प्रतिपरिसरं परिसरः पर्य्यन्तभूः तस्मिन्, प्रान्तभुवि इत्यर्थः, माल्यवत्प्रान्ते इति यावत्, विभक्त्यर्थे अव्ययीभावः, "पर्य्यन्तभूः परिसरः" इत्यमरः ; शिखण्डभृता शिखण्डिना, मयूराणामित्यर्थः, भूयान् अत्यन्तः, अर्घः सत्कारः, महोत्सवः इति यावत्, विद्यते इति शेषः, तथा अलिभिः भ्रमरैः, यथामिलितं मिलितमनति-क्रम्येति यथामिलितं यथोपस्थितं, यावन्तः एव मिलिताः तावद्भिरित्यर्थः, यद्वा—यथा-मिलितमित्यस्य कदम्बविभूतय इत्यनेनान्वयः, यावन्ति कदम्बकुसुमानि प्रस्फुटितानि, तेषां विभूतयः कदम्बविभूतयः शोभसम्पदः, तत्कुसुमानीति भावः, सम्भुज्यन्ते सम्भोगविषयीक्रियन्ते, किञ्च, अभिनवेन नूतनेन, घनेन मेघेन, व्यूढं विशालम्, आश्रितं वा, उरः वक्षःस्थलं, मध्यभागो वा यस्य तथाभूतः, माल्यवान् तदाख्यपर्वतः, विषधरवधूना भुजङ्गीनां, गर्भाधानरूपं गर्भधारणरूपं, प्रियं सुखजनकव्यापारः, क्रियते आभिरिति तथोक्ताः, अपः जलानि, नवोदकानीत्यर्थः, प्रवर्षति विवर्षयति, वर्षासु नवोदकसम्पर्कात् भुजङ्गीनां गर्भाधानमहोत्सवः सम्पद्यते इति प्रसिद्धिः । एतेन वर्षागमः उक्तः । हरिणी वृत्तम् ॥ २१ ॥

(ख) स्तम्भयितुं स्थिरीकर्तुमित्यर्थः ।

इयमिति ।—अविरला घनाः, श्वासा दीर्घं दीर्घनिश्वासा इत्यर्थः यस्याः सा शुष्यत् शोषं गच्छत्, मुखं यस्याः तथोक्ता, भिदुरः भिन्नः, स्वरः कण्ठध्वनिः यस्या

स्फुरति जडता बाष्पायेते दृशौ गलति स्मृति-
र्मयि रसतया शोको भावश्चिरेण विपच्यते ॥ २२ ॥

( इति सकरुणेन धार्यमाणो निमीलिताक्ष एव )। हा प्रिये दण्डकारण्य-विहारसब्रह्मचारिणि! (ग)। ( इति पुनः संवृणुते (घ)।

लवः। ( सखेदमात्मगतम् )। केन पुनरेष रसो रसान्तरेण तिरस्क्रियते ? ( ङ )।

---

तथाविधा, इयं तनुः शरीरं, श्रान्तानि क्लान्तानि च, तानि सन्ततानि विवशता गतानि तैः, अवयवैः अङ्गैः, विवर्णतां मलिनताम्, उपैति प्राप्नोति, जड़ता जाड्यम्, अचेतनभाव इति यावत्, स्फुरति प्रसरति, दृशौ नेत्रे, बाष्पायेते बाष्पमुत्सृजतः, स्मृतिः स्मरणशक्तिः, गलति नश्यति, शोको भावः प्रसिद्धशोकाख्यभावविशेषः, चिरेण दीर्घकालेन, मयि रसतया करुणाख्यरसरूपेण, विपच्यते विशेषेण परिणतो भवतीत्यर्थः, करुणरसस्य सर्वे धर्मा मयि सम्प्रति वर्त्तन्ते इति भावः, उक्तञ्च दर्पणे—"इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत्। धीरैः कपोतवर्णोऽयं कथितो यमदैवतः॥ शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतम्। तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः॥ अनुभावा दैवनिन्दा-भूपात क्रन्दितादयः। वैवर्ण्योच्छ्वासनिःश्वास स्तम्भप्रलपनानि च॥ निर्वेदमोहापस्मार-व्याधिग्लानिस्मृतिश्रमाः। विषादजडतोन्माद चिन्ताद्या व्यभिचारिणः॥" इति। वस्तुतस्तु करुणविप्रलम्भ एवायं रसः; उक्तञ्च तत्रैव—"यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये। विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः॥" इति। लोकान्तरं भिन्नलोकम्, अदर्शनविषयमिति यावत्। एवञ्च यथासम्भवमन्योऽप्यन्यमिति भावः। अत्रापि करुणरसवत् सर्वे अनुभावा व्यभिचारिणश्च यथायथं सम्भवन्तीति बोध्यम्। हरिणी वृत्तम् ॥ २२ ॥

(ग) दण्डकारण्येति।—दण्डकारण्येषु दण्डकाख्यकाननेषु, यो विहारः विहरणं, भ्रमणमित्यर्थः, तत्र सब्रह्मचारिणि! सहाध्यायिनि! तुल्यव्रतधारिणि! इत्यर्थः, दण्डकारण्यवाससहचरि! इति भावः, "एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः" इत्यमरः।

(घ) संवृणुते संवरणं नाटयति, आत्मानं स्थिरीकरोतीत्यर्थः।

(ङ) एष रसः करुण इत्यर्थः, केन रसान्तरेण अन्येन केन रसेन, वीर रौद्रादीनामन्यतमेनेत्यर्थः, तिरस्क्रियते ? आच्छाद्यते ? दूरीक्रियते ? इति यावत्, मयेति शेषः।

( नेपथ्ये )।

आः !! पाप कबन्धहतक ! अयं न भवसि ( च ) ।

रामः। ( आकर्ण्य ससम्भ्रमम् )। वत्स लक्ष्मण ! दुरात्मना दनुकबन्धेन कलहायमानो ( छ ) वयस्यस्ते गुह इव श्रूयते ( ज )। बहुच्छलानि ( झ ) रक्षांसि; तत् त्वरितमभ्युपपद्यस्व ( ञ )।

लक्ष्मणः। तथा। ( इति निष्क्रान्तः )।

रामः। ( पार्श्वतोऽवलोक्य सकरुणम् )। देवि वामशीले ! (ट) सीरध्वजराजनन्दिनि ! इयं ते विश्वविस्रम्भमर्मवेदिनो निचुलनिकुञ्जलेखा ( ठ )। इह हि—

---

(च) पाप ! पापाचारिन् ! कबन्धहतक ! विनष्टप्रायकबन्ध ! अयम् एषः, एवंविध इत्यर्थः, न भवसि न तिष्ठसीत्यर्थः, न जीवसीति भावः, अचिरमेव म्रियसे इति निष्कर्षः ।

(छ) दनुकबन्धेन दनुर्नाम कबन्ध इव कबन्धः क्रियायुक्तशिरोविहीनकलेवरं, वक्षःस्थसमस्तकचतुष्टया शिरःशून्य इव प्रतीयमान इति यावत् तेन। तथा च रामायणे—"अपश्यतां मुहूर्ताच्च कबन्धं घोरदर्शनम्। मेघपर्वतसङ्काशं शालस्कन्धं महाभुजम् ॥ उरोगतविशालाक्षं महोदरं महामुखम् ॥" इति। "कबन्धस्तु क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरः। कलहायमानः कलहं कुर्वन् ।

(ज) गुह इव गुहकस्य कण्ठस्वर इवेति भावः, श्रूयते आकर्ण्यते, मयेति शेषः, स्वरानुभवादिति भावः।

(झ) बहुच्छलानि बहूनि विविधानि, छलानि छद्मानि, माया इति यावत् येषां तादृशानि, अत्यर्थं कपटाचाराणीत्यर्थः ; "छलं छद्म स्खलितयोः" इति हैमः।

(ञ) अभ्युपपद्यस्व अनुगृहाण, साहाय्यदानेन मित्रमिति शेषः, "अभ्युपपत्तिरनुग्रहः" इत्यमरः ; यद्वा—अभ्युपपद्यस्व प्राप्नुहि, साहाय्यार्थं समीपं गच्छेत्यर्थः।

(ट) वामम् अतिसुन्दरं, शीलं स्वभावो यस्याः तादृशी, तत्सम्बुद्धौ वामशीले ! चारुचरिते ! "वाम सव्ये प्रतीपे च द्रविणे चातिसुन्दरे" इति "शीलं स्वभावे सद्वृत्ते" इति चामरः।

(ठ) विश्वविस्रम्भमर्मवेदिनो समस्तविश्वासतत्त्वज्ञा, निखिलगोपनीयव्यापारसाक्षिणीति यावत्। निचुलनिकुञ्जलेखा निचुलनिकुञ्जस्य जलवेतसलतावेष्टितविहारस्थानस्य, लेखा पङ्क्तिः, सीमा वा।

स्ववपुषि नखलक्ष्म स्वेन कृत्वा भवत्या
कृतमिति चतुराणां दर्शयिष्ये सखीनाम्।
इति रहसि मया ते भीषितायाः स्मरामि
स्मरपरिमलमुद्राभङ्गसर्वंसहायाः ॥ २३ ॥

(इति चक्षुरवष्टभ्य लक्ष्मणवृत्तान्तदत्तचेतास्तथैवास्ते)।

(ततः प्रविशति लक्ष्मणो गुहश्च)।

गुहः। जयतु जयतु देवः,—
विनेता वर्णानामयमभयदुर्गं दिविषदां
कनिष्ठः काकुत्स्थो जयति जगदाश्चर्यचरितः।
यदस्त्रैः पाप्मानं रजनिचरजन्मग्रहसृजं
विजित्य स्वर्लोकानविकलमुपातिष्ठत दनुः ॥ २४ ॥

---

स्ववपुषीति।—स्ववपुषि निजशरीरे, स्वेन आत्मना, स्वयमित्यर्थः, नखलक्ष्म नखक्षतचिह्नं, कृत्वा विधाय, भवत्या त्वया, कृतं विहितम्, एतन्नखलक्ष्म इति शेषः, इति एवमुक्त्वा इत्यर्थः, चतुराणां परिहासप्रियाणामिति यावत्, सखीनां सहचरीणां, तवेति शेषः, दर्शयिष्ये नेत्रविषयीभूतं कारयिष्यामि, अहमिति शेषः, इत्येवं, रहसि निर्जने, मया भीषितायाः भयं गमितायाः, अत एव स्मरः कामः, उपभोगोपयोगी प्रसाधनविशेष इति भावः, तस्य परिमलः विमर्दोत्थगन्धः, तस्य मुद्रा चिह्नं, तस्याः भङ्गे विलोपे, शोधने इत्यर्थः, सर्वंसहायाः सर्वसहनशीलायाः, कृताग्रहायाः इति भावः, ते तव, त्वामित्यर्थः, स्मरामि, कर्मणि षष्ठी। मालिनी वृत्तम् ॥ २३ ॥

विनेतेति।—वर्णानां ब्राह्मणादीनां, विनेता रक्षकः, शास्त्रविहितमार्गेण चालयिता इत्यर्थः, दिविषदां देवानाम्, अभयदुर्गं भयनिवारणार्थं शत्रुदुर्गमस्थानमित्यर्थः, जगति लोके, आश्चर्यं विस्मयजनकं, चरितम् आचरणं यस्य तथाभूतः, कनिष्ठः अवरजः, काकुत्स्थः लक्ष्मण इत्यर्थः, जयति सर्वोत्कर्षेण वर्तते, शत्रुविनाशादिति भावः, दनुः कबन्धीभूतदैत्यभेदः, यस्य लक्ष्मणस्य, अस्त्रैः आयुधैः, रजनिचरजन्म राक्षसजननं, तस्य ग्रहः ग्रहणं, सृजति विदधातीति तथोक्तं, राक्षसयोनिप्राप्तिकारणमित्यर्थः, पाप्मानं पातकं, विजित्य पराभूय इत्यर्थः, चालयित्वेति भावः, अविकलं सम्यक्, निजयथार्थ-स्वरूपं प्राप्येति भावः, स्वर्लोकान् सुरस्थानान्, उपातिष्ठत प्राप। एष पूर्वं कश्चित् गन्धर्वः आसीत्, शापात् राक्षसयोनिं प्राप, तत्र लक्ष्मणास्त्रात् तस्य शापान्त इति स्थितिरिति पुरावार्ता। शिखरिणी वृत्तम् ॥ २४ ॥

राम:। साधु वृत्तम्। शिवा: (ड) सन्तु तस्य देवयाना: (ढ) पन्थान:। वत्स गुह! वियति विवर्त्तमान: (ण) कश्चिदचल इव लक्षित:, किमसौ तेनैव योजनबाहुना प्रहरणीकृत:? (त)।

गुह:। देव!—

दुन्दुभिं नाम दैत्येन्द्रं निष्पिपेष कपीश्वर:।
तस्य कङ्कालकूटोऽयं कुमारेण विलोड़ित:॥ २५॥

तन्निमित्तजन्मा (थ) सम्प्रति वालिनो महानभियोग: सम्भाव्यते। (द)

लक्ष्मण:। तत: किम्?

राम:। वत्स! मा मैवं, माननीय: खल्वसौ पुराणवीरो महेन्द्रसूनु: (ध)। (गुहं प्रति)। कुत: पुनरागच्छतो वत्सस्य योजनबाहुरन्तराय: (न) संवृत्त:?

---

(ड) शिवा: शोभना:, माङ्गल्या इति यावत्।

(ढ) देवयाना: देवानां देवभूतानाञ्च यानं गमनं यै: तादृशा:।

(ण) वियति आकाशे। विवर्त्तमान: विपर्य्यासेन तिष्ठन्, यथास्थितादन्यथाभावेन वर्त्तमान इत्यर्थ:।

(त) तेन हनुमदवस्थेनेत्यर्थ:। योजनबाहुना योजनविस्तृतभुजेन। प्रहरणीकृत: शत्रुविनाशार्थम् अस्त्रीकृत:।

दुन्दुभिरिति।—कपीश्वरो वानरराज:, वालीत्यर्थ:, दुन्दुभिं नाम दैत्येन्द्रं दानवराजं, निष्पिपेष निहतवानित्यर्थ:, अयम् एष:, भवता अग्रत: परिलक्ष्यमाण इत्यर्थ:, तस्य दुन्दुभे:, कङ्कालकूट: अस्थिराशि:, कुमारेण लक्ष्मणेन, विलोड़ित: चालित:, धनुष्कोट्या विपर्य्यासित इत्यर्थ:। अनुष्टुप् वृत्तम् ॥ २५ ॥

(थ) तन्निमित्तजन्मा तन्निबन्धन:, दुन्दुभे: कङ्कालकूटविलोड़नजनित इत्यर्थ:।

(द) अभियोग: अभिग्रह:, कलहार्थमाह्वानमित्यर्थ:, युष्मान् प्रति आक्रमणमिति यावत्, "अभियोगस्त्वभिग्रह:" इत्यमर:। सम्भाव्यते तर्क्यते, अनुमीयते इत्यर्थ:।

(ध) महेन्द्रसूनु: इन्द्रपुत्र:, वालीत्यर्थ:।

(न) कुत: कस्मात् स्थानात्, कस्माद्धेतोर्वा। योजनबाहु: दनुकबन्ध: इति भाव:। अन्तराय: विघ्न:।

गुहः। देव! व्योमयानेन सत्वरमपक्रामति (प) रावणे सीतादेव्याः—

रामः। (साशङ्कमात्मगतम्)। किं पुनरस्याः? (फ)

गुहः। यदुत्तरीयमुत्प्लुत्य हनूमानग्रहीत्, तदेतद्देव! गुणानुरागिणा (ब) कुमारसुग्रीवेण सभाजयितुम् (भ) उपस्थितवतो मम हस्ते देवस्य प्राभृतीकृतम् (म)।

(इति रामस्य हस्ते सीताया उत्तरीयमर्पयति)।

रामः। (गृहीत्वा हृदये निधाय सास्रम्)। हा देवि विदेहराजनन्दिनि! कथमुत्तरीयशेषा दृश्यसे। (य) (इति निमीलिताक्षो लक्ष्मणमवष्टभ्नाति (र)।)

लक्ष्मणः। (निःश्वस्य)। सखे निषादराज! कुशलं सुग्रीवस्य?

गुहः। अद्य त्वयि वार्त्तामनुयुञ्जाने (ल)।

---

(प) व्योमयानेन विमानेन, आकाशगामिरथविशेषेणेत्यर्थः। अपक्रामति अपगच्छति, पलायमाने इति यावत्।

(फ) अस्याः सीतादेव्याः।

(ब) उत्तरीयम् उत्तरासङ्गम्। उत्प्लुत्य उल्लम्फ्य। एतत् उत्तरीयम्। गुणानुरागिणा गुणपक्षपातिना, भवत इति शेषः।

(भ) सभाजयितुम् आनन्दयितुं, कुशलप्रश्नादिना आप्याययितुमित्यर्थः, सुग्रीवमिति भवन्तं वा इति शेषः। "अथ द्वे आनन्दन सभाजने। आप्रच्छनम्" इत्यमरः।

(म) उपस्थितवतः समागतवतः। देवस्य भवतः इत्यर्थः। प्राभृतीकृतम् उपायनीकृतं, निधाय भवते उपहारत्वेन दत्तमित्यर्थः, "उपायनमुपग्राह्यं प्राभृतं चोपदा स्त्रियाम्" इत्यमरमाला; सुग्रीवसमाजनानन्तरं भवत्सभाजनार्थं वा आगच्छतः पथि योजनद्वारा आकाशतोऽवतीर्यनेन सूचितम्।

(य) उत्तरीयशेषा उत्तरीयं शेषः अवशेषः, दर्शनाय चिह्नम् इति भावः, यस्याः तथाभूता। दृश्यसे अवलोक्यसे, त्वमिति शेषः।

(र) अवष्टभ्नाति अवलम्बते, दृढतया धृत्वा आत्मानं स्थिरीकरोतीत्यर्थः।

(ल) वार्त्तां प्रवृत्तिं, कुशलवृत्तान्तमित्यर्थः, "वार्त्ता प्रवृत्तिर्वृत्तान्तः उदन्तः स्यात्" इत्यमरः; अनुयुञ्जाने पृच्छति, सुग्रीवस्य इति शेषः, भवतः सानुपदकुशलपृच्छा एव तस्य कुशलतासूचिका इति भावः; "प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः।

रामः। (स्वगतम्)—

जानन्नेव दशाननोऽपहरते नः प्रेयसीमस्ति वा
चन्द्रापीडमुपासितुं स हि शिरोदाम स्वयं कृत्तवान्।
तत्त्रासो रजनीचरस्य न पुनः कण्ठाटवीकर्त्तनात्
धिग् बाणैर्मम चन्द्रहासहतकक्षुण्णोऽयमध्वा वृतः॥ २६॥

लक्ष्मणः। आर्य्य! कथमस्मासु वनौकसोऽपि (व) सौजन्यमनुरुध्यन्ते। (श)

रामः। किमुच्यते, सुग्रीवः सनाभिः (ष) अयमस्माकम्, अस्य हि प्रभवो भगवानिक्ष्वाकस्य प्रसविता (स) सहस्र-

---

जानन्निति।—दशाननः रावणः, जानन्नेव अवगच्छन्नेव, नः अस्माकं, प्रेयसीं प्रियतमां, सीतामिति शेषः, यद्वा—नः अस्मान्, राक्षसकुलध्वंसिनः इति भावः, जानन्नपि प्रेयसीं सीताम्, अपहरते चोरयति, वा अथवा, अस्ति सम्यक् भवति, एतत् युज्यते इत्यर्थः, हि यतः, सः रावणः, चन्द्रापीडं शशिशेखरं शिवम्, उपासितुम् आराधयितुम्, आराधनया सन्तोषयितुमिति यावत्, स्वयम् आत्मना, शिरोदाम निजमुण्डमालामित्यर्थः, कृत्तवान् चिच्छेद, तत् तस्मात्, स्वयं शिरश्छेदनादित्यर्थः, रजनीचरस्य राक्षसस्य रावणस्य, मम बाणैः शरैः, कण्ठाटवीकर्त्तनात् कण्ठकाननच्छेदनात्, त्रासः भयं, न पुनर्नैवेत्यर्थः, यतः चन्द्रहासहतकेन चन्द्रहासो रावणखड्गः, स एव हतकः हतप्रायः, दुष्टचन्द्रहास इत्यर्थः, तेन क्षुण्णः कुट्टितः, पुनः पुनर्विदलित इत्यर्थः, अभ्यस्तः इति यावत्, अयम् एषः, अध्वा मार्गः, शिरश्छेदनरूपः इति भावः वृतः प्रार्थितः, अवलम्बितः इत्यर्थः, रावणेनेति शेषः, अत एव धिक्, एतादृशं कण्ठच्छेदनसम्भवेऽपि दुष्टाचरणात् अपराङ्मुखं रावणमिति शेषः। "धिक् निर्भर्त्सननिन्दयोः" इत्यमरः; स्वयमेव स्वशिरसः पुनःपुनश्छेदनात् अभ्यस्तशिरश्छेददुःखस्य अस्य शिरश्छेदात् भयं नास्ति, अत एवायमेतादृशं सज्जनविगर्हितव्यापारं कृतवान् इति निष्कर्षः॥ २६॥

(व) वनौकसोऽपि वनवासिनोऽपि।

(श) सौजन्यं सुजनता, सद्व्यवहारमित्यर्थः, आर्य्याया उत्तरीयप्रेरणेन सद्भावमिति भावः। अनुरुध्यन्ते अनुवर्त्तन्ते, अनुसरन्तीत्यर्थः, प्रदर्शयन्तीति भावः।

(ष) सनाभिः सपिण्डः, "सपिण्डास्तु सनाभयः" इत्यमरः।

(स) अस्य सुग्रीवस्य, प्रभवः जन्मकारणम्। "स्याज्जन्महेतुः प्रभव

दीधितिः । (हृदयमनुसरतीयं हहा) । वत्स गुह ! स्पृहयामि सुग्रीव-हनूमतोर्दर्शनाय, तत् ऋष्यमूकगामिनं मार्गमावेदय । (ङ)

गुहः । (सहर्षमात्मगतम्) । कथमचिरादेव फलवती (क) जाम्बवतो मन्त्रशक्तिः । (प्रकाशम्) । इत इतो मतङ्गाश्रम-वर्त्मना (ख) देवः ।

(इति सर्वे परिक्रामन्ति) ।

गुहः । देव ! पश्य पश्य—

विदधति मुदमक्ष्णोर्नूतनानूपनीप-
प्रहसनसहचर्य्यानित्यनृत्यन्मयूराः ।
फलपुलकितजम्बूकुञ्जकूजत्कपोत-
प्रियशबरपुरन्ध्रीबन्धवो विन्ध्यलेखाः ॥ २७ ॥

---

इत्यमरः । प्रसविता प्रसवकर्त्ता, उत्पत्तिहेतुरित्यर्थः । सुग्रीवस्य अस्माकञ्च एकस्मा-देव सूर्य्यात् समुत्पत्तेः सुग्रीवोऽस्माकं सनाभिरिति निष्कर्षः ।

(ङ) आवेदय विज्ञापय, प्रदर्शय इत्यर्थः ।

(क) फलवती चरितार्थेत्यर्थः ।

(ख) मतङ्गाश्रमवर्त्मना मतङ्गस्य तन्नामकस्य मुनेः, आश्रमस्य वर्त्म मार्गः तेन ।

विदधतीति ।—नूतनानां नवानाम्, अनूपनीपानां जलप्रायप्रदेशसम्भूतकदम्बानां, “जलप्रायमनूपं स्यात्” इति “नीपप्रियककदम्बास्तु हलिप्रिये” इति चामरः ; प्रहसनं विकाश इत्यर्थः तस्य सहचर्य्यया सङ्गेन, कदम्बविकाशदर्शनेन वर्षागमोपलब्धि-जनितहर्षादिति भावः, यद्वा—सहचर्य्यया समानाचारवत्त्वेन इत्यर्थः, वर्षासु कदम्ब-मयूरयोरुभयोरेव पुलकोदयादिति भावः, नित्यं सततं, नृत्यन्तः नृत्यं कुर्वन्तः, मयूराः शिखिनो यासु तथोक्ताः, तथा फलैः शस्यैः, फलद्वारा इत्यर्थः, पुलकिताः सञ्जातपुलका इव, पुलकिताः पुलकितत्वेन प्रतीयमानाः, ये जम्बूकुञ्जाः जम्बूवृक्ष-वेष्टितस्थानानि, तेषु कूजन्तः अव्यक्तशब्दं कुर्वन्तः, ये कपोताः पारावताः, तेषु प्रियाणां प्रीतिमतीनाम्, अनुरागिणीनामिति यावत्, शबरपुरन्ध्रीणां शबराख्य-म्लेच्छजातिविशेषपत्नीनां, बन्धवः मित्राणि, आश्रयभूता इति भावः, विन्ध्यलेखाः विन्ध्यपर्वतश्रेणयः, अक्ष्णोः नयनयोः, मुदं प्रीतिं, विदधति जनयन्ति । मालिनी वृत्तम् ॥ २७ ॥

रामः। ( सर्वतो निरूप्य सस्पृहम् )—

समन्तादुन्मीलद्बहललहरीलङ्घनकला-
लघुप्रेङ्खत्पम्पाऽनिलविदलदेलासुरभयः ।
अविद्यावैदेहीगतलिपिकरीणां मम धिया-
ममी हस्तालम्बं विपिनविनिवेशा विदधते ॥ २८ ॥

लक्ष्मणः। आर्य्य ! इतस्तावत्—

भयभ्रष्टप्रेयोविरहनिरहङ्कारहरिणी-
मुखालोकोन्मीलद्गुरुकरुणवरुणां सहचरीम् ।
विलोक्य म्लेच्छन्तीमलमलमिति प्राक्प्रणिहितं
शरव्यालुब्धानां हृदयमपराद्धं न तु शराः ॥ २९ ॥

---

समन्तादिति।—समन्तात् सर्वतः, उन्मीलन्तीनां प्रसरन्तीनां, प्रवहन्तीनामिति यावत्, बहलानां घनानां, लहरीणां तरङ्गाणां, लङ्घनकलया अतिक्रमणशीलतया, तरङ्गाणामुपरि मृदु-मन्दप्रवहणेनेति यावत्, लघु शीघ्रं यथा तथा, प्रेङ्खन् सञ्चरन्, यः पम्पाऽनिलः पम्पाख्यसरःसमीरसम्पृक्तः वायुः, तेन तत्सङ्गेनेति भावः, विदलन्तीभिः विकसन्तीभिः, विकसन्तीभिरिति वा, एलाभिः एलालताभिः, सुरभयः सुगन्धाः, अमी एते, विपिनविनिवेशाः काननसंस्थानानि, अविद्यावैदेहीगतस्य अविद्यया मोहेन, वैदेहीगतस्य वैदेहीगतस्य इत्यर्थः, मिथ्याकल्पितसीतागतस्य इत्यर्थः, लिपिकरीणां लेखिकानां, चित्रपटे अङ्कयित्रीणामिति यावत्, सीतायां निविष्टचित्तत्वात् सर्वत्रैव सीता सीतेति भावयित्रीणामिति भावः, मम धिया बुद्धीनां, हस्तालम्बं हस्ताश्रयं, विदधते कुर्वन्ति, बुद्धिर्मम सीतानिविष्टाऽपि एतत्काननसन्निवेशदर्शनेन प्रीतिमनुभवतीति भावः। शिखरिणी वृत्तम् ॥ २८ ॥

भयेति।—भयेन त्रासेन, भ्रष्टस्य यूथात् च्युतस्य, पलायितस्येत्यर्थः, प्रेयसः कान्तस्य, विरहेण विच्छेदेन, अदर्शनेनेति यावत्, निरहङ्कारा गर्वरहिता, विषण्णेति भावः, या हरिणी मृगी, तस्याः मुखालोकेन वदनदर्शनेन, उन्मीलन् उद्भवन्, गुरुर्महान्, यः करुणः शोकः, दयेति यावत्, तेन करुणां व्यथिताम्, अत एव अलम् अलं मैवं मैवं, शरनिक्षेपं मा कुरु शरनिक्षेपं मा कुरु इति भावः, इति म्लेच्छन्तीं स्फुटमभिदधतीं, चारुभाषया भाषमाणां वा, "म्लेच्छनं चारुभाषायाम्" इति विश्वः; सहचरीं सखीं, कान्तामिति यावत्, विलोक्य दृष्ट्वा, लुब्धानां व्याधानां, प्राक् सहचरीनिरीक्षणात् पूर्वं-

रामः । (सास्रम्) । हा देवि जानकि !—

मारीचमृगयाव्यग्रे मयि प्राप्ते च रावणे ।
त्रासामिव कुरङ्गीणां तवोत्पश्यामि लोचने ॥ ३० ॥

लक्ष्मणः । (स्वगतम्) । कः पुनरुपायो येन विनोद्यते (ग) हृदयमार्य्यस्य ?

(नेपथ्ये) ।

भो भो वनौकसः ! (घ) कथयन्तु भवन्तः, केनास्मत्कीर्त्तिकामिनीकेलिचङ्क्रमणक्रीड़ापर्वतो विवर्त्तितः (ङ) अयं दनुराजकङ्कालकूटः ? (च)

गुहः । (दृष्टा समयसम्भ्रमम्) । देव ! पश्य पश्य, कनकमय-

---

मित्यर्थः, परिहितं समाहितम्, एकाग्रतया निवेशितमिति यावत्, शरव्ये इति शेषः, हृदयं चित्तं, शरव्यात् लक्ष्यात्, अपराद्धं च्युतं, तद्विनाशसङ्कल्पात् निवृत्तमभूदिति भावः, तु किन्तु, शराः निक्षिप्ता बाणाः, न, अपराद्धा इति शेषः, प्राक् प्रहितत्वेन तेषामनिवार्य्यत्वादिति भावः । शिखरिणी वृत्तम् ॥ २९ ॥

मारीचेति ।—मयि मारीचमृगयायां काञ्चनमृगरूपिमारीचवधे इत्यर्थः, व्यग्रः व्यासक्तः तस्मिन् सति, तथा रावणे दशानने च, प्राप्ते उपस्थिते सति, त्रासां परिदृश्यमानानां, व्याधदर्शनगतानामिति भावः, कुरङ्गीणां मृगीणामिव, तव लोचने नेत्रे, कातरे इति भावः, सञ्जाते इति शेषः, इति उत्पश्यामि मन्ये इत्यर्थः । अनुष्टुप् वृत्तम् ॥ ३० ॥

(ग) विनोद्यते सान्त्व्यते, सुस्थीक्रियते इत्यर्थः ।

(घ) वनौकसः वनचारिणः ।

(ङ) अस्मदिति ।—अस्माकं कीर्त्तिरेव एव, कामिनी कान्ता, तस्याः केलिचङ्क्रमणं क्रीडार्थं भ्रमणं, चित्तविनोदनार्थमितस्ततः पर्य्यटनमित्यर्थः, तस्मै क्रीडापर्वतः विलासशैलः, कृत्रिमाचलस्वरूप इत्यर्थः, दिशि दिशि भ्रम्यमाणमस्त्कीर्त्तेरम्स्वरूप इति भावः । विवर्त्तितः विपर्य्यासितः, स्वस्थानात् भ्रंशितः इत्यर्थः, विपरीतभावेनावस्थापित इत्यर्थो वा ।

(च) दनुराजेति ।—दनुराजस्य दानवेन्द्रस्य, दुन्दुभिदैत्यस्येत्यर्थः, कङ्कालकूट अस्थिराशिः ।

सहस्रपत्रपुण्डरीकवैकक्षकप्रभापटलेन दुन्दुभिकरङ्कव्यतिकर-जन्मना च रोषरागेण द्विगुणपिशङ्गीं (छ) तनुमादधानः प्लवगराजः (ज) अयमित एवाभिवर्त्तते—

> पौलस्त्यावयवौघसङ्कटभुजामूलक्षणोन्मूलित-
> द्वैराज्याममरावतीं कृतवते वीराय यस्मै हरिः ।
> नित्यालोकनकौतुकव्यसनिनोः शङ्के सहस्रं दृशः
> पिण्डीकृत्य दलच्छलेन कनकाम्भोजस्रजं दत्तवान् ॥२१॥

(छ) कनकेति ।—कनकमयानां काञ्चनमयानां, स्वर्णनिर्मितानामित्यर्थः, सहस्रपत्रपुण्डरीकाणां सहस्रदलपद्मानां, वैकक्षकम् उरसि यज्ञोपवीतवत् तिर्य्यग्-भावेन विन्यस्ता माला, "वैकक्षकन्तु तत् । यत्तिर्य्यक् क्षिप्तमुरसि" इत्यमरः; तस्य प्रभापटलेन दीप्तिनिचयेन । दुन्दुभीति ।—दुन्दुभेः तन्नामकदानवेन्द्रस्य, करङ्कः मस्तकास्थि, मस्तकास्थिसहितसर्वकङ्काल इत्यर्थः, "करङ्को मस्तकास्थ्नि नारिकेल-फलास्थिनि" इति मेदिनी ; तस्य व्यतिकरः विपर्य्यासः, वैपरीत्येनावस्थापनमित्यर्थः, तस्मात् जन्म उत्पत्तिः यस्य तथाभूतेन, रोषरागेण क्रोधजनितलौहित्येन, द्विगुणपिशङ्गीं द्विराहृतपिङ्गलां, स्वतः पिङ्गलां, ततः काञ्चनवैकक्षकप्रभया पिङ्गलां, ततश्च क्रोधेन पिङ्गलेति द्विगुणपिशङ्गीत्वं बोद्धव्यम् ।

(ज) आदधानः धारयन्, कुर्वन् इत्यर्थो वा । प्लवगराजः कपीन्द्रः, बाली इत्यर्थः, "कपिः प्लवङ्गप्लवग-शाखामृगवलीमुखाः" इत्यमरः ।

पौलस्त्येति ।—हरिरिन्द्रः, अमरावतीं देवेन्द्रनगरीं, स्वराजधानीमिति यावत्, पौलस्त्यस्य रावणस्य, अवयवौघेन अङ्गसमूहेन, सङ्कटं व्याप्तं, यत् भुजामूलं कक्षा, पृष्ठतः आक्रमणेविषं रावणं कक्षामूले स्थापनादिति भावः, तेन क्षणेन क्षणमात्रेणेवे-त्यर्थः, यद्वा—क्षणाय क्षणकालनिमित्तमित्यर्थः, उन्मूलितम् उत्पाटितं, विनाशित-मित्यर्थः, द्वैराज्य राजद्वयाधिकृतत्वमिति यावत्, रावणस्य इन्द्रस्य चाधिपत्यमिति भावः यस्याः तथाभूतां, रावणं विजित्य इन्द्रेणैव एकराजवतीमित्यर्थः, कृतवते विहितवते, यस्मै वीराय शूराय बालिने, नित्यं सततम्, आलोकनं दर्शनं, पुत्रस्य बालिन इति भावः, तस्मिन् यत् कौतुकम् औत्सुक्यं, तस्मिन् व्यसनिनोः समासक्ता इत्यर्थः, सहस्रं दृशः नेत्राणि, ,दलच्छलेन दलव्याजेन, काञ्चनमयपद्मपत्रापदेशे-नेत्यर्थः, पिण्डीकृत्य एकत्रीकृत्येत्यर्थः, संश्लिष्येति यावत्, कनकाम्भोजस्रजं काञ्चन-कमलमालिकां, दत्तवान् समर्पितवान्, इति अहं मन्ये । पुरा दिग्विजयाय

क्षणं च देवस्य महावीरसंवादगोष्ठी (झ) इयमृष्यमूक-याचामन्तरयिष्यति (ञ); तदहमग्रतो गत्वा दिष्ट्या (ट) वर्द्धयामि सूर्य्यतनयम्। (ठ)

राम:। एवमस्तु।

गुह:। वाचिकं (ड) पुनरेतावत् कुमारसुग्रीवस्य यत्, "मित्रपर्य्यायान्तरितं देवस्य दास्यमिच्छामि" (ढ) इति।

राम:। (अपवार्य)। वत्स लक्ष्मण! एवमाह वयस्यस्ते गुह:। किन्तु, मन्त्रोत्साहसम्पन्नानामपि (ण) प्रभुशक्तिम् (त)

---

सञ्चरन्तं रावणं स्वस्य युद्धार्थमागतं वाली कक्षायां निक्षिप्य सप्तसु समुद्रेषु यथाक्रमं सन्ध्यावन्दनं कृतवान् इति पुराणवार्त्ता। यदा च रावणः वालिनः कक्षायां निक्षिप्तः, तदा अमरावती केवलेन इन्द्रेण एकराजवती आसीत्, अन्यदा तस्याः रावणेन इन्द्रेण च द्वैराज्यमिति भावः। अत पुत्रेण अमरावत्यां मदेकाधिपत्यं सम्यक् स्थापितमिति प्रीत्या देवेन्द्रः तस्मै कनकाम्भोजमालां ददाविति निष्कर्षः। शार्दूलविक्रीडितं वृत्तम्॥ २१॥

(झ) देवस्य भवत इत्यर्थः। महावीरेति।—महावीरेण शूरश्रेष्ठेन वालिना, संवादः सम्मेलनं, स एव गोष्ठी सभा, यद्वा—तत्र गोष्ठी संलापः, परस्परभाषणमित्यर्थः, "गोष्ठी सभा-संलापयोः स्त्रियाम्" इति मेदिनी।

(ञ) अन्तरयिष्यति व्याहनिष्यतीत्यर्थः, व्यर्थयिष्यतीति यावत्।

(ट) दिष्ट्या हर्षेण, भवदागमनवार्त्तां विज्ञाप्य हर्षोत्पादनेनेत्यर्थः, दिष्ट्या मङ्गलेन वा, भवदागमनरूपशुभवार्त्ताप्रदानेनेत्यर्थः, "दिष्ट्या हर्षे मङ्गले च" इति मेदिनी।

(ठ) सूर्य्यतनयं सुग्रीवम्।

(ड) वाचिकं सन्देशवाक्, वाचा ज्ञापनीयमित्यर्थः, न तु लिपियोगेनेति भावः, "सन्देशवाक् वाचिकं स्यात्" इत्यमरः।

(ढ) मित्रपर्य्यायेण मित्रनाम्ना, अन्तरितं व्यवहितं, सुग्रीवः सम्मुखेन एवं भवन्तं विज्ञापयति यत् अहं भवतः मित्रापदेशो दास एवेत्यर्थः।

(ण) मन्त्रोत्साहेति।—मन्त्रेण मन्त्रशक्त्या, सन्ध्यादि-षाड्गुण्यप्रयोगेण सामाद्युपायचतुष्टयेन चेत्यर्थः, उत्साहेन उत्साहशक्त्या च, विक्रमबलेनेत्यर्थः, सम्पन्नानामपि युक्तानामपि।

(त) प्रभुशक्तिं कोषदण्डजं तेजः "स प्रभावः प्रतापश्च यत् तेजः कोष-दण्डजम्",

अपेक्ष्यन्ते सिद्धयः ; तदहं बालिस्थाने सुग्रीवमभिषिच्य तत्कोष-दण्डाभ्यां समग्रशक्तिर्वैरपारं (थ) गन्तुमिच्छामि।

लक्ष्मणः। (सविनयम्)। यद्येवम्, उपयुज्यमानमिन्द्रसूनुमुपेक्ष्य (द) सुग्रीवेणोपयोक्ष्यमाणेन सन्धिरिति वक्रः खल्वयं पन्थाः (ध)।

रामः। (सस्मितम्)। वत्स! साध्वेव ब्रवीषि। किन्तु—

दृप्यत्पौलस्त्यकण्डूभिदुरभुजभरोष्मायमाणः कपीन्द्रो
मायं न. सन्दधीत क्वचिदपि हि विधौ नैव साहाय्यकामः।
सोऽहं सुग्रीवमेतद्भ्रमनहद्धृतरं मित्रमिच्छामि पश्चात्
पारस्त्रैणेयपुत्रव्ययशिथिलशुचं शक्रमाराधयामि ॥ ३२ ॥

---

इत्यमरः। सिद्धय सफलता, वैरप्रतीकारा इति भाव.। प्रभावमन्त्रोत्साह। मिलिता एव सिद्धिं प्रसवन्तीति निष्कर्षः।

(थ) तत्कोष-दण्डाभ्यां तस्य सुग्रीवस्य, कोष दण्डाभ्यां कोष धनं, दण्ड: सेना ताभ्याम्। समग्रशक्तय समग्रा: सम्पूर्णा:, शक्तय: प्रभावोत्साहमन्त्रजा: तिस्र: कार्य-साधन्य: यस्य तथाभूत. "शक्तयस्तिस्र. प्रभावोत्साहमन्त्रजा:" इत्यमर:। वैरपार वैरस्य शत्रुताया:, पारम् अन्तं, शेषमित्यर्थः, वैरनिर्य्यातनमिति यावत।

(द) यद्येवं समग्रशक्तिर्वैरपारं गन्तुमिच्छसि चेत्, उपयुज्यमानम् उपयुक्तं, सम्यक् शक्तमिति भाव:, यद्वा—उपयुज्यमानम् उपयोग कुर्वन्तम्, अस्माभि: सह सखापाय समागच्छन्तमित्यर्थ:; यद्वा—रावणेन सह कृतव्यवहारमित्यर्थ:। इन्द्रसूनुं वालिनम्। उपेक्ष्य अवज्ञाय, त्यक्त्वा इत्यर्थ:।

(ध) उपयोक्ष्यमाणेन उपयुक्तीकरिष्यमाणेनेत्यर्थ:, यद्वा—उपयोक्ष्यमाणेन उपयोग करिष्यमाणेन, सख्यापादिव्यवहार करिष्यमाणेनेत्यर्थ:; रावणेन व्यवहारं करिष्यमाणेनेत्यर्थो वा। सन्धि: सम्मेलनम्। वक्र: अनृजु:, कुटिल इत्यर्थ:। पन्था मार्ग, उपाय इत्यर्थ:, उपयुक्तं परित्यज्य अपरम् उपयुक्त सम्पाद्य कार्य्यसाधनात् प्रथमोपयुक्तेनैव कार्य्यसाधनं श्रेय इति भाव:।

दृप्यदिति।—दृप्यत: अहङ्कुर्वत:, पौलस्त्यस्य रावणस्य, [illegible] कण्डूतिभञ्जन:, य: भुजभर. बाहुबलातिशयमित्यर्थ:, तेन ऊष्मायमाण: [illegible] तेजस्वल इत्यर्थ:, अयं परिदृश्यमान:, कपीन्द्र: वानरश्रेष्ठ. वाली [illegible] दधीत न आश्रये-दित्यर्थ., हि यत:, क्वचिदपि कस्मिन्नपि विधौ कार्य्ये [illegible] साहाय्यार्थी,

लक्ष्मणः। साधुदर्शिनी (न) बुद्धिरार्य्यस्य। किञ्च, विधूतशापेन दनुनाऽपि देवभूयमभिलम्भितेन (प) सन्दिष्टमार्य्यस्य, यथा—"अस्य निषादपतेः (फ) वचसि देवेनावधातव्यम्" (ब) इति।

रामः। तत् गुहोऽपि प्रतिदूत्यमर्हति (भ)।

लक्ष्मणः। (गुहं प्रति)। वयस्य! एवमस्मद्गिरा (म) सुग्रीवो वक्तव्यः,—

"पिताऽयं रेतोधास्तव तरणिरस्मत्कुलगुरु-
र्मनुर्वैमात्रेयस्त्वदपि सहजं मित्रमसि नः।

---

मेव, भविष्यतीति शेषः, वीर्य्यातिशयाभिमानित्वेन प्रयोजनविरहादिति भावः; सोऽहं साहाय्यार्थी सन् सुग्रीवं मत्साहाय्यप्रार्थिनमिति भावः, एतस्य वालिनः, दमनेन शासनेन, विनाशेनेत्यर्थः, दृढतरं बलवत्तरं, मित्रं सहायम्, इच्छामि अभिलषामि, पश्चात् एतद्दमनानन्तरं, शक्रम् इन्द्रं, पारस्त्रैणेयस्य परस्त्रीजातस्य, पुत्रस्य तनयस्य, वालिन इत्यर्थः, व्ययेन खेदेन, नाशेनेत्यर्थः, शिथिला अल्पा, पारस्त्रैणेयपुत्रत्वात् न गुर्वीति भावः, शुक् शोकः यस्य तादृशम्, आराधयामि कथमपि प्रीणयामीत्यर्थः, पुत्रनाशजनितक्रोधोपशमनाय विहितविधानं करिष्यामीति यावत्। स्रग्धरा वृत्तम् ॥ २२ ॥

(न) साधुदर्शिनी सम्यक्-दर्शिनी, प्रतिपत्तिशालिनीत्यर्थः।

(प) विधूतशापेन निर्मुक्तशापेन। देवभूयं देवत्वम्। अभिलम्भितेन प्रापितेन, त्वयेति शेषः। सन्दिष्टं वाचिकमुपदिष्टम्।

(फ) निषादपतेः गुहस्य।

(ब) अवधातव्यम् अवधानं कर्त्तव्यम्, अस्य वाक्यं प्रतिपालयितव्यमित्यर्थः।

(भ) प्रतिदूत्यं प्रतिदूतकर्मेत्यर्थः, यथा सुग्रीवस्यायं दौत्यकर्मणि नियुक्तः, तथाऽहमपि एनं सुग्रीवाय दूतं प्रेषयामीति भावः। अर्हति युज्यते, प्रतिदूतकर्मणि नियोक्तुं योग्यो भवतीत्यर्थः।

(म) अस्मद्गिरा मद्वचनानुसारेण।

पितेति।—अस्माकं कुलगुरुः वंशस्यादिपिता, अयम् ऊर्द्ध्वे परिदृश्यमानः, तरणिः सूर्य्यः, "द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः" इति सूर्य्यपर्य्याये अमरः; तव रेतोधाः त्वदुत्पादनार्थं वीर्य्यनिषेककर्त्ता, पिता जनकः, न तु वेधः पितेति भावः; मनुः अस्मत्पूर्व्वपुरुषः सूर्य्यतनयः, तव वैमात्रेयः विमातृगर्भजातः भ्राता,

अथापि भ्रातेयं शिथिलयसि कापेयचपलः
शरास्तन्मे बालिक्षतजरसलोलाः प्रतिभुवः" ॥ १३ ॥

रामः। (विहस्य)। वत्स गुह! एष खलु पौलस्त्यगतेनामर्षेण धूमायमानो (य) यया कयाचिद्वाचा सौमित्रिरभिदधातु नाम, (र) सततसमिध्यमानजानकीविरहवैश्वानरेण रामचेतसा पुनरग्निसाक्षिकमेव सुग्रीवो मित्रमभ्युपगतः। (ल)

गुहः। (सहर्षम्)। परमनुगृहीतोऽसौ देवेन विकर्त्तनतनयः (व)। (सपरिहास-स्मितं च)—

सुग्रीवे यदि पक्षपातमधुरं देव! त्वदीयं मनः
किं नस्तेन? विदाङ्करोतु भगवानम्भोजिनीवल्लभः।

---

तत् तस्मात् अपि, त्वं नः अस्माकं, सहजं स्वाभाविकं, मित्रं सुहृत्, असि भवसि, अथापि यद्यपि, कपेर्भावः कापेयं वानरप्रकृतिः, तेन चपलः अधीरः, वानरस्वभावसुलभः अव्यवस्थितचित्तः सन् इति यावत्, भ्रातेयं भ्रातृभावं, सहजमित्रत्वमिति यावत्, "सगोत्रबान्धवज्ञाति-बन्धुस्वस्वजनाः समाः। भ्रातेयं बन्धुता तेषां क्रमात् भाव समूहयोः॥" इत्यमरः, शिथिलयसि शिथिलं करोषि, नाङ्गीकरोषीत्यर्थः, अवजानासीति यावत्, तत् तदा, बालिनः तव ज्येष्ठस्य, क्षतजरसेन शोणितास्वादेन, लोलाः लुब्धाः, मे मम, शराः बाणाः, प्रतिभुवः लग्नकाः, प्रतिनिधिभूताः (जामिन्) इत्यर्थः, मैत्र्यप्रतीकारार्थं शरानेव प्रतिभुवः आश्रयामीति भावः, तव भ्रातृत्ववैपरीत्ये बालिमार्गगतिः स्थिरेति निष्कर्षः। शिखरिणी वृत्तम् ॥ १३ ॥

(य) पौलस्त्यगतेन रावणगतेन, रावणसम्बन्धिनेत्यर्थः। अमर्षेण क्रोधेन। धूमायमानः धूममुद्वमन्, सन्तप्यमान इति यावत्, सदसद्विवेकशून्य इति भावः।

(र) यया कयाचित् अवाच्यया इत्यर्थः, श्रोतुमनर्हया इति यावत्। अभिदधातु वदतु। नामेति कुत्सायां, लक्ष्मणस्य ईदृश वाक्यमनुचितं निन्दामीत्यर्थः, "नाम प्राकाश्यसम्भाव्य-क्रोधोपगमकुत्सने" इत्यमरः।

(ल) सततेति।—सततं निरन्तरं, समिध्यमानः प्रज्वलन्, जानकीविरहवैश्वानरः शोकाविच्छेदाग्निः यस्मिन् तथाभूतेन। अग्निसाक्षिकम् अनलं साक्षीकृत्य। अभ्युपगतः अङ्गीकृतः, स्वीकृत इत्यर्थः, "अङ्गीकाराभ्युपगम प्रतिश्रवसमाधयः" इत्यमरः।

(व) विकर्त्तनतनयः, सूर्यसुतः, सुग्रीव इत्यर्थः।

नव्येनात्मजराज्यलाभरभसोद्भूतेन यस्तेजसा
पूर्वस्मादधिकेन दुःसहतरो लोकेषु वर्त्तिष्यते ॥ २४ ॥

लक्ष्मणः। (विहस्य)। कथं तपनतनयस्य राज्यमङ्गीकारिता वयं वयस्येन? (श)

रामः। (सस्मितम्)। वत्स गुह! तावत् प्रकाशमेवं प्रतिशुश्रूषति (ष) मे हृदयम्।

गुहः। (सप्रश्रय-स्मितम् (स))। स्वामिन्! इयमेव महतां शैली (ह)।—

---

सुग्रीवे इति।—हे देव! त्वदीयं भवदीयं, मनः चित्तं, सुग्रीवे यदि पक्षपातेन स्नेहेन, व्यक्तिविशेषं प्रति अनुरागविशेषेणेत्यर्थः, मधुरं सरसमिति यावत्, अनुरक्तमिति भावः, यद्वा—मधुरं प्रियं, प्रीतिसम्पन्नमित्यर्थः, "स्वादु-प्रियौ च मधुरौ" इत्यमरः; भवतीति शेषः, तेन तव मनसः पक्षपातित्वेनेत्यर्थः, नः अस्माकं, किम्? यद्वा—तत् तव मनसः पक्षपातित्वज्ञानेन, नः अस्माकं, किम्? फलमिति शेषः, अस्माभिस्तस्मिन् विषये ज्ञाते कस्यापि कोऽपि उपकारो न भविष्यतीति भावः; सुग्रीवं प्रति तवानुरागाधिक्येन अस्माकं लाभो वा क्षतिर्वा किमपि नास्तीति निष्कर्षः, परन्तु तत् तव मनसः पक्षपातमाधुर्य्यमित्यर्थः, भगवान् अम्भोजिनीवल्लभः सूर्य्यः, विदाङ्करोतु जानातु, तस्य सर्वान्तर्यामित्वादिति भावः, यः अम्भोजिनीवल्लभः, नव्येन अभिनवेन, आत्मजस्य पुत्रस्य, राज्यलाभेन राज्यप्राप्त्या, यो रभसः हर्षः, "रभसो वेग हर्षयोः" इत्यमरः, तस्मात् उद्भूतेन उत्पन्नेन, पूर्वस्मात् पुत्रराज्यप्राप्तेः पूर्वकालीनात्, तेजस इति शेषः, अधिकेन तेजसा प्रतापेन, लोकेषु जगत्सु, दुःसहतरः अतिदुःसह इत्यर्थः, अवलानिति शेषः, वर्त्तिष्यते भविष्यति, समधिकतेजसा प्रपीडनेन जगत् आह्लादयिष्यतीति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

(श) तपनतनयस्य सूर्य्यनन्दनस्य, सुग्रीवस्य इत्यर्थः। अङ्गीकारिताः प्रतिश्राविताः, प्रतिश्रुताः कारिता इत्यर्थः। वयस्येन तुल्यवयसा मित्रेणेति यावत्, भवतेति शेषः, वालिनं हत्वा सुग्रीवाय राज्यं ददतु भवन्तः इत्येवं किमस्मान् अङ्गीकारयसि त्वम्? इत्यर्थः।

(ष) प्रतिशुश्रूषति अङ्गीकरोति। "अङ्गीकाराभ्युपगम-प्रतिश्रवसमाधयः" इत्यमरः।

(स) सप्रश्रय-स्मितं सविनय-स्मितम्; सप्रणय स्मितमिति वा, "प्रश्रय प्रणयौ समौ" इत्यमरः।

(ह) महतां महात्मनाम्, उदारसत्त्वानां वा। शैली रीतिः।

सन्तो मनसि-कृत्यैव प्रवृत्ताः कृत्यवस्तुनि ।
कस्य प्रतिशृणोति स्म कमलेभ्यः श्रियं रविः ? ॥ ३५ ॥

(नेपथ्ये)।

भो भो वनौकसः! कथयन्तु भवन्तः, दुन्दुभिकरङ्क-विक्षेपसम्भाव्यमानगम्भीरावष्टम्भनिर्भरेण (क) केनास्माकमियं चिरस्य भुजकाण्डकण्डूतिरपनेष्यते ? (ख)

गुहः। (स्वगतम्)।—

मन्ये दर्पामयाविभ्यां नित्यं दोर्भ्याममर्षणः ।
जाम्बवत्प्रेरणादीप्तः प्राप्तोऽयं प्लवगेश्वरः ॥ ३६ ॥

---

सन्त इति।—सन्तः साधवः, मनसिकृत्यैव हृदये कृत्वैवेत्यर्थः, कृत्यवस्तुनि कर्त्तव्य-विषये, प्रवृत्ताः उद्युक्ताः, भवन्तीति शेषः, सन्तः "इदं मया कर्त्तव्यम्" इति न कस्मै-चित् वाचा प्रकाशयन्ति, किन्तु मनस्येव कृत्वैव तत्र प्रवर्त्तन्ते इति निष्कर्षः, तथा हि, रविः सूर्यः, कमलेभ्यः पद्मेभ्यः, श्रियं लक्ष्मीं, दास्यामीति शेषः, इति कस्य जनस्य, अग्रे इति शेषः, प्रतिशृणोति स्म अङ्गीकृतवान् ? न कस्यापीत्यर्थः। अनुष्टुप् वृत्तम् ॥ ३५ ॥

(क) दुन्दुभीति।—दुन्दुभेः तन्नामकदानवेन्द्रस्य, करङ्कविक्षेपेण अस्थि-विपर्य्यासेन, स्वस्थानात् अन्यत्र भ्रमणेनेति यावत्, सम्भाव्यमानः अनुमीयमानः, गम्भीरः महान्, सुदृढमूल इति यावत्, अवष्टम्भनिर्भरः आश्रयातिशयः, सहायबलमिति भावः, यस्य तादृशेन।

(ख) भुजेति।—भुजौ बाहू, काण्डाविव तरुस्कन्धौ इव, तद्वत् विशालौ इति भावः, यद्वा—काण्डाविव दण्डाविव, दण्डवत् दीर्घौ सुदृढौ च इति भावः, "काण्डोऽस्त्री दण्डबाणार्व-वर्गावसरवारिषु" इत्यमरः; तयोः कण्डूतिः कण्डूः, अपनेष्यते निराकरि-ष्यते, निवारयिष्यते इत्यर्थः, येन एतत् कर्म कृतं, तेनागन्तव्यं, तं विनाश्य अहं भुजकण्डूतिं निवारयिष्यामीति समुदायार्थः।

मन्ये इति।—दर्पामयाविभ्यां दर्पः गर्वः इत्यर्थः, "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात्, आमयावी व्याधितः, कण्डूतिरोगाक्रान्त इत्यर्थः, ताभ्यां, "आमयावी विकृतो व्याधितोऽपटु" इत्यमरः; यद्वा—दर्प एव आमयः रोगः, सोऽनयोरस्तीति तादृशाभ्यां दर्पज्वरग्रस्ताभ्यामित्यर्थः, दोर्भ्यां भुजाभ्यां, नित्यं सततम्, अमर्षणः क्रोधनः, अयं प्लवगेश्वरः वानरराजः, बालीत्यर्थः, जाम्बवतः मन्त्रिण इति

तत् अहमपि वीरयात्रादर्शनसुखं (ग) मुहूर्त्तमनुभवामि।

(प्रविश्य)

रामौ। (पुरोऽवलोक्य)। अये! प्रसन्नोज्ज्वलाकृती (घ) कावेतौ? नियतम् (ङ) आभ्यामेकेन दानवनाथकङ्कालोत्-क्षेपनिमित्तेन (च) भवितव्यम्। (स्मृतिमभिनीय सवितर्कम्)। आः!! सन्दिष्टम् (छ) अस्मासु प्रियसुहृदा लङ्केश्वरेण, यथा—

> प्रकृष्टकान्तारकुमारभक्ति-
> र्दौर्भागिनेयो जनकेन मुक्तः।
> मनुष्यसामन्तसुतो निषङ्गी
> सहानुजस्तिष्ठति दण्डकायाम्॥ ३७॥

भाव, प्रेरणया प्रवर्त्तनया, दीप्तः ज्वलितः सन्, प्राप्तः उपस्थितः, इति मन्ये सम्भावयामि। अनुष्टुप् वृत्तम्॥३६॥

(ग) वीरयात्रेति।—वीराणां शूराणां, यात्रा गमनं, युद्धार्थमभियोगः इति यावत्, "यात्रा तु यापनेऽपि स्यात् गमनोत्सवयोः स्त्रियाम्" इति मेदिनी; तस्य दर्शनेन अवलोकनेन, सुखम् आनन्दम्।

(घ) प्रसन्नेति।—प्रसन्ना सौम्या, उज्ज्वला दीप्तिमती च, आकृतिः मूर्त्तिर्ययोः तथाविधौ।

(ङ) नियतं निश्चितम्।

(च) दानवेति।—दानवनाथस्य दैत्येन्द्रस्य, दुन्दुभेरित्यर्थः, कङ्कालस्य अस्थ्नः, उत्क्षेपः विपर्य्यासनं, स्वस्थानात् चालनमित्यर्थः, तस्य निमित्त हेतुभूतः तेन।

(छ) आः!! इति स्मरणार्थकमव्ययम्, "आः स्मरणेऽप्यावरणे कोप सन्तापयोरपि" इति मेदिनी। सन्दिष्टं वाचिकमुक्तं, कथितमित्यर्थः।

प्रकृष्टेति।—प्रकृष्टः प्रकर्षेण कृतः, कान्तारे वने, कुमारे सुग्रीवे इत्यर्थः, भक्तिः अनुरागः येन तथोक्तः, सुग्रीवानुरागीत्यर्थः, कुमारेण लक्ष्मणेन, भक्तिः अनुरागः यस्य इति वा, दुर्भगायाः पत्युरप्रियायाः भार्य्यायाः, कौशल्यायाः इति भावः, अपत्यं पुमान् दौर्भागिनेयः दुर्भगापुत्र इत्यर्थः, अत एव जनकेन पित्रा, मुक्तः परित्यक्तः, निर्वासित इति यावत्, मनुष्यसामन्तस्य मानवराजस्य, दशरथस्येति भावः, सुतः पुत्रः, निषङ्गी धनुर्द्धरः, "धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्द्धरः" इत्यमरः, सहानुजः अनुजेन लक्ष्मणेन सहितः, दण्डकायां दण्डकारण्ये, तिष्ठति वसति। उपजाति वृत्तम्॥३७॥

तौ चास्माकं तत्र विहारिषु (ज) निशाचरेषु पाटच्चरीं वृत्तिमातिष्ठमानौ (झ) भवद्भिः प्रतिकर्त्तव्यौ (ञ) इति। तत् किमयमयश्च तौ स्याताम्?

रामः। वत्स लक्ष्मण! शृणु, किमयं ब्रवीति महावीरः।

लक्ष्मणः। (किञ्चिदुपसृत्य)। इत आवाम्। इत, इतो (ट) भवान्।

वाली। भोः! कावेतौ युवाम्?

लक्ष्मणः। महाभाग! राघवौ (ठ) क्षत्रियावावाम्।

वाली। आयुष्मन्! आकारविशेषा एव गमयन्ति जाति-विशेषान्; तत् विशेषं (ड) ब्रूहि।

लक्ष्मणः। ननूक्तमेव राघवावावाम्।

वाली। (साभ्यसूयमिव)। (ढ) आः!!—

> वपुरपि विवृणोति क्षत्रतां को विशेषो
> रघुषु यदभिधत्से राघवावित्यभीक्ष्णम्?।

(ज) तौ मनुष्यसामन्तसुतौ। तत्र दण्डकायाम्। विहारिषु सञ्चारिषु, तिष्ठत्स्विव्यर्थः।

(झ) पाटच्चरीं दास्यवीं, "चौरैकागारिकस्तेन दस्युतस्करमोषकाः। प्रतिरोधि-परास्कन्दि-पाटच्चरमलिम्लुचाः॥" इत्यमरः, वृत्तिं व्यवहारम्, आतिष्ठमानौ आचरन्तौ, निरपराधानां निशाचराणां हनन-ताडन-सर्वस्वापहरणरूपं दस्युजनोचितं व्यवहारं कुर्वन्ताविति यावत्।

(ञ) प्रतिकर्त्तव्यौ प्रतिविधेयौ, विनाशनीयाविति यावत्।

(ट) इतः अस्यां दिशि, अस्मिन् स्थाने वा, आवाम् अहं मदग्रजश्च, वर्त्तावहे इति शेषः। इत इतः, आगच्छतु इति शेषः।

(ठ) राघवौ रघुवंशभवौ।

(ड) आकारविशेषाः मूर्त्ति-परिच्छदादीनां वैशिष्ट्यम्। गमयन्ति बोधयन्ति। विशेष विस्तृत, स्पष्टमिति यावत्।

(ढ) साभ्यसूयमिव सासूयमिव, लक्ष्मणोक्तौ दोषारोपणपूर्वकमिवेत्यर्थः, "असूया साभ्यसूया च" इति शब्दार्णवः। "असूया तु दोषारोपो गुणेष्वपि" इत्यमरः।

परिकलयितुमिष्टं नाम सांस्कारिकं वा-
महह !! कथमपत्यप्रत्ययान्निश्चिनोमि ? ॥ १८ ॥

लक्ष्मणः। (सधैर्य्य संरम्भम् (च)। भोः! आवां तौ राम-लक्ष्मणौ।

माली। (सविमर्शम् (त) आत्मगतम्)। कथं "तौ" इति सर्व-नामपदेन प्रसिद्धावित्याह ? तत् किमनयोरेवान्यतरः पिनाक-धन्वनो दमयिता ? (थ)। सोऽपि रामभद्रो रामः स्यात्। भवतु, एवं तावत्। (प्रकाशं विहस्य)—

एको वेषपरिग्रहः परिकरः साधारणः कर्म्मणा-
माकृत्योर्मधुरत्वमेव सदृशं तुल्यैव गम्भीरता।

वपुरिति।—वपुरपि शरीरमेव, युवयोरिति शेषः, एकार्थोऽयमपि शब्दः, चवतां क्षत्रियत्वं, रघुवंशजातत्वमित्यर्थः, विवृणोति प्रकटयति, रघुषु रघुवंशीयेषु, युष्मास्विति शेषः, विशेषः प्रभेदः, कः ? यत् राघवौ रघुवंशीयौ, आवामिति शेषः, इति एवम्, अभीक्ष्णं पुनः पुनः, अभिधत्से ? ब्रवीषि ? यद्वा—अभीक्ष्णं यत् राघवौ इति अभिधत्से तव रघुषु रघुवंशीयेषु बहुषु मध्ये, को विशेषः ? युवयोः परिचायको भेदः कीदृशः ? अहह !! खेदे, अद्भुते वा, आश्चर्य्यमित्यर्थः, "अहहेत्यद्भुते खेदे" इत्यमरः; वा युवयोः, इष्टम् अभिमतं, पित्रादीनां सम्मतमित्यर्थः, सांस्कारिकं नामकरणाख्यसंस्कारसम्बद्धं, नाम अभिधानम्, अपत्यप्रत्ययात् रघोरपत्ये पुमांसाविर्त्यर्थघटित-अण् प्रत्ययात्, परि-कलयितुं ज्ञातुं, कथं केन प्रकारेण, निश्चिनोमि ? निर्णयामि ? यद्वा—वां सांस्कारिकं नाम परिकलयितुं कथयितुम्, इष्टम् अभिमतम्, उचितमित्यर्थः, यतः अपत्यप्रत्ययात् कथं निश्चिनोमि ? अहह इत्यद्भुते, आश्चर्य्यमेतत् यत्, पुनः पुनः पृच्छ्य-मानोऽपि केवलमपत्यप्रत्ययेनैव परिचयं ददासि, न तु स्वकीयनामोल्लेखेनेति भावः। मालिनी वृत्तम् ॥ १८ ॥

(च) सधैर्य्यं संरम्भं सधैर्य्यं कोपम्।

(त) सविमर्शं सवितर्कम्।

(थ) पिनाकधन्वनः पिनाकनामकहरधनुषः, "धनुश्चापौ धन्वशरासनकोदण्डं कार्म्मुकम्" इत्यमरः; दमयिता भङ्क्ता; यद्वा—पिनाकं धनुर्यस्य तस्य हरस्य, दमयिता पराजेता, अवमन्ता इत्यर्थः, पिनाकभञ्जनादिति भावः।

तत् द्रष्टुं चिरमुत्सुकोऽस्मि कतरो वां रामभद्रः पुनः
सर्वक्षत्रवधव्रतो भृगुपतिर्येनावकीर्णीकृतः ? ॥ १९ ॥

लक्ष्मण। (सविनयमिव)। (द) आर्य्ये साङ्क्रन्दने ! (ध) लक्ष्मणस्तावदहम्।

वाली। अयमप्यपरो दाशरथिः कौशिकान्तेवासी रामः ?

लक्ष्मण.। अथ किम्।

वाली। (सदर्पोल्लासं किञ्चिदुच्चैः)। भो रामभद्र !—

एष त्रैवर्ण्यमात्रव्यवसितजगतो भार्गवस्यास्त्रगर्भा-
दाकृष्टक्षत्रजातिस्त्वमसि पथि गिरामद्य नः सुप्रभातम्।

---

एक इति।—वेषस्य जटावल्कलादेः, परिग्रहः ग्रहणं, धारणमित्यर्थः, एकः तुल्यः, धर्म्मेणां ब्रह्मचर्य्यादीनां, परिकरः व्रातः, समूह इत्यर्थः आरम्भो वा, यत्नो वा, "भवेत् परिकरो व्राते ·· विवेकारम्भयोरपि" इति मेदिनी, "प्रगाढारम्भौ परिकरौ" इति त्रिकाण्डशेषश्च; साधारणः समानः, आकृत्योः उभयोरवयवयोः, मधुरत्वमेव मनोहरत्वमपि, तथैव गाम्भीर्य्यं, सदृशं तुल्यं, गम्भीरता च गाम्भीर्य्यञ्च, दुरवगाहप्रकृतिकत्वञ्चेत्यर्थः, तदपि समानमेव, युवयोरिति सर्वत्र सम्बन्धः, पुनः किन्तु, येन सर्वेषां निखिलानां, क्षत्राणां क्षत्रियजातीनां, वधव्रतो नाशदीक्षितः, भृगुपतिः परशुरामः, अवकीर्णीकृतः क्षतव्रतीकृतः, भ्रष्टव्रतवधव्रतः कृतः इत्यर्थः, क्षत्रवधरूपव्रतात् भ्रंशित इति यावत्, "अवकीर्णी क्षतव्रतः" इत्यमरः, वां युवयोर्मध्ये, सः रामभद्रः कतरः ? कः ? तत् द्रष्टुम् अवलोकयितुं, चिरं दीर्घकालावधि, उत्सुकः उद्युक्तः, सोत्कण्ठ इत्यर्थः, "इष्टार्थोद्युक्त उत्सुकः" इत्यमरः, अस्मि भवामि, अहमिति शेषः। "तत्" इत्यत्र "तम्" इति पाठे—तं राममित्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥ १९॥

(द) सविनयमिव इति इव शब्देन वस्तुतो विनयाभावः सूचितः, कृतकविनय-पूर्वकमित्यर्थः।

(ध) साङ्क्रन्दने। सङ्क्रन्दन इन्द्रः, तस्यापत्यं पुमान् साङ्क्रन्दनिः वाली तत्सम्बुद्धौ। "इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः। सङ्क्रन्दनो दुश्च्यवनस्तुराषाण्मेघ-वाहनः॥" इत्यमरः।

एष इति।—त्रयाणां त्रिविधानां, वर्णानां क्षत्रव्यतिरिक्तानां ब्राह्मण-वैश्य-शूद्राणा-मित्यर्थः, समाहारः त्रिवर्णं, तस्य भावः त्रैवर्ण्यं, तदेव त्रैवर्ण्यमात्रं केवलं वर्णत्रयं, तस्मिन् व्यवसितं व्यापितं, जगत् येन तथाविधस्य, पृथ्वीं निःक्षत्रियां कृतवत इति भावः, यद्वा—त्रैवर्ण्यमात्रं केवलं त्रिवर्णात्मकं, व्यवसितं निश्चितं, वर्णत्रयमात्रं स्थास्यति

कल्लोलस्वेदसद्यःशमितदशमुखास्फोटकण्डूविकारो
वीरश्राद्धो भुजस्त्वां परिचरतु चिरं चक्षुषी नन्दतां च ॥ ४० ॥

रामः । (इति सहर्षम्) । स एष महाबाहुः सङ्क्रन्दनसूनुः !!—

येन वीरेण गुप्तायां किष्किन्धायामियं मही ।
रावणाभिभवक्रान्ता शश्वदुच्छ्वासमश्नुते ॥ ४१ ॥

( इति परिक्रामति ) ।

लक्ष्मणः । महाभाग ! अयमार्य्यः । इत इतो भवान् ।

---

इति अवधारितमित्यर्थः, जगत् येन तथाविधस्य, सर्वक्षत्रियवधेन निःक्षत्रियमेव जगत् कर्त्तुमिच्छत इत्यर्थः, भार्गवस्य परशुरामस्य, भल्लगर्भात् कुठाराभ्यन्तरात्, परशुखण्डादित्यर्थः, आकृष्टा निःसारिता, निर्मोचिता इति यावत्, क्षत्रजातिः क्षत्रियवर्गः येन तादृशः, क्षत्रियहन्तुर्भार्गवस्य जेतेति भावः, एष अयं, ते गिरां वचसां, पथि मार्गे, गोचरे इति यावत्, भवति, अन्योऽन्यमाभाषणयोग्यस्थाने समुपस्थितोऽभूदित्यर्थः, प्रत्यक्षीभूतोऽस्मीति भावः, तस्मात् अद्य अस्मिन् अहनि, नः अस्माकं, सुप्रभातं शोभनं दिनमित्यर्थः, कद्रु भुजामूलं, तस्य च ऊष्मास्वेदः सन्तापोद्भूतघर्मजलं, तेन सद्यः सपदि, शमितः शान्तिं नीतः, दशमुखस्य रावणस्य, आस्फोटकण्डूरेव बाह्वास्फोटनरूपकण्डूतिरेव, सपरिकरं करेण भुजसन्ताडनपूर्वकं युद्धार्थमाह्वानरूपकण्डूतिरेवेति यावत्, युद्धकण्डूरेवेति भावः, विकारः विकृतिः, रोग इति यावत् येन तथोक्तः, रावणदर्पक्षयकर इति भावः, वीरेषु श्राद्धः श्रद्धा, अनुराग इत्यर्थः यस्य तथाभूतः, भुजः बाहुः, ममेति शेषः, त्वां भवन्तं, परिचरतु सेवतां, त्वया सह युद्धमाचरत्विति भावः, तथा चक्षुषी नयने, ममैवेति शेषः, चिरं दीर्घकालं व्याप्य, नन्दताञ्च आनन्दमनुभवताञ्च । स्रग्धरा वृत्तम् ॥ ४० ॥

येनेति ।—रावणस्य दशाननस्य, अभिभवेन आक्रमणेनेत्यर्थः, क्रान्ता आक्रान्ता, पीडिता इत्यर्थः, इयम् अस्माकमाधारभूतेत्यर्थः, मही पृथ्वी, येन वीरेण शूरेण, गुप्तायां रक्षितायां, रावणाभिभवादिति शेषः, किष्किन्धायां तन्नाम्नगर्य्याम्, अधिष्ठायेति शेषः, शश्वत् सततम्, उच्छ्वासं सुखनिश्वासमिति यावत्, स्वास्थ्यमिति भावः, अश्नुते भजते, स एष महाबाहुः सङ्क्रन्दनसूनुरिति गद्यस्थवाक्येनान्वयः । अनुष्टुप् वृत्तम् ॥ ४१ ॥

वाली। (उपसृत्य)। रामभद्र!—

सुरासुराणामसुभिर्दीव्यतां सभिको मुनिः।
अद्य मे नारदस्तुष्टो येनासि भुजगोचरः॥ ४२॥

रामः। महावीर! किमुच्यते, मूर्द्धाभिषिक्तोऽसि समर-शौण्डानाम् (न)। तथा हि—

देवः स त्वामसूत द्विषदुपमृदितस्वर्वधूवेणिबन्ध-
प्रेक्षाधारालवैरप्रसृमरसमरोड्डामरौजा विडौजाः।
यो विद्धोत्खातबाणव्रणनिवहनिभं निर्भरोद्भङ्गुरभ्रू-
भीमः क्षौमाङ्गिरङ्गैरुदवहत रुषा रज्यदक्ष्णां सहस्रम्॥४३॥

---

सुरासुराणामिति।—असुभिः प्राणैः, दीव्यतां क्रीडतां, प्राणान् पणत्वेन निधाय द्यूतक्रीडावत् युद्धं कुर्वतामिति भावः, सुरासुराणां देवदानवानां, सभिकः द्यूतकारकः, द्यूतक्रीडाया प्रवर्त्तक इत्यर्थः, द्यूताध्यक्षः इति यावत्, सभिकस्वरूप इति भावः, "सभिकाः द्यूतकारकाः" इत्यमरः; मुनिः नारदः, अद्य मे मम, तुष्टः प्रीतः, येन तोषेण, भुजगोचरः मद्बाहुपतितः, असि भवसि, त्वमिति शेषः, कलह-प्रियस्य नारदस्य प्रसादेनैव त्वं मद्बाहुगोचरोऽसि, अतः स आवयोः युद्धं दृष्ट्वा परितुष्यतीति भावः॥ ४२॥

(न) मूर्द्धाभिषिक्तः राजा। समरशौण्डानां सङ्ग्राममत्तानां, सङ्ग्रामप्रख्यातानां वा, "शौण्डो मत्तेऽपि विख्याते" इति मेदिनी।

देव इति।—द्विषद्भिः शत्रुभिः, असुरैरिति यावत्, उपमृदितस्य उन्मृष्टस्य, आकृष्टस्येत्यर्थः, स्वर्वधूनां सुरसुन्दरीणां, वेणिबन्धस्य बद्धकेशपाशस्य, प्रेक्षया दर्शनेन, धारालं तीक्ष्णं, प्रवृद्धमिति यावत्, यत् वैरं विद्वेषः, तेन प्रसृमरं प्रसारि, प्रवृद्ध-मित्यर्थः, उड्डामरम् उत्कटम्, ओजः तेजः यस्य तथोक्तः, अत एव रुषा क्रोधेन, निर्भरम् अत्यर्थम्, उद्भङ्गुराभ्यां कुटिलाभ्यां, भ्रूभ्यां भ्रूद्वयेन, भीमः भीषणः, क्षौमाङ्गिः सुशोभने, अङ्गैः अवयवैः उपलक्षितः, यः, देव इति शेषः, आदौ विद्धाः पश्चात् उत्खाताः निष्काशिताः, ये बाणाः शराः, असुरप्रयुक्ता इति भावः, तेषां व्रणनिवहनिभं क्षतनिचयतुल्यं, रज्यत् रक्तीभवत्, अक्ष्णां नेत्राणां, सहस्रम् उदवहत दधार, स देवः विडौजाः इन्द्रः, "इन्द्रो मरुत्वान् मघवा विडौजाः पाकशासनः" इत्यमरः; त्वाम् असूत जनयामास। स्रग्धरा वृत्तम्॥ ४३॥

अपि च—

बन्दीकृत्य जगद्विजित्वरभुजस्तम्भौघदुःसञ्चरं
रक्षोराजमपि त्वया विदधता सन्ध्यासमाधिव्रतम् ।
प्रत्यक्षीकृतकार्त्तवीर्य्यचरितामुन्मुच्य रेवां समं
सर्वाभिर्महिषीभिरम्बुनिधयो विश्वेऽपि विस्मापिताः ॥४४॥

नाको । ( विहस्य ) ।—

चिराय रात्रिञ्चरवीरचक्र-
माराङ्कवैमानिक ! पश्यतस्त्वाम् ।

---

बन्दीकृत्येति ।—त्वया जगतां भुवनानां, भुवनत्रयस्येत्यर्थः, विजित्वरैः विजयिभिः, भुजस्तम्भौघैः स्तम्भसदृशसुदृढबाहुसमूहैः, सहस्रबाहुभिरित्यर्थः, कार्त्तवीर्य्यस्येति भावः, दुःसञ्चरं सञ्चरणाक्षमं, ततो निःसर्त्तुमशक्तमिति यावत्, यद्वा—स्तम्भसदृशसुदृढबाहु-समूहैः, विंशतिबाहुभिरिति यावत्, दुःसञ्चरं दुर्द्धर्षमित्यर्थः, विंशतिबाहुभिरपि तव बाहुप्रदेशात् निर्गन्तुमशक्तमित्यर्थो वा, रक्षोराजमपि रावणमपि, का कथा अन्येषा-मित्यपि-शब्दार्थः, बन्दीकृत्य संयम्य, कक्षायाम् अवरुध्येति यावत्, सन्ध्यासमाधिव्रतं सन्ध्योपासनासमाधाननियमं, यद्वा—सन्ध्यायां सन्ध्योपासनायां, यः समाधिः चित्तैकाग्रता, स एव व्रतः नियमः तं, विदधता आचरता सता, प्रत्यक्षीकृतम् दृष्टिगोचरीकृतं, कार्त्तवीर्य्यस्य कार्त्तवीर्य्यार्ज्जुनस्य, चरितम् आचरणं यया तथोक्ता, रेवायां तस्य सततं जलक्रीडनकारित्वात् तत्तीरे च तस्य राजधान्यां स्थितेश्चेति भावः, रेवा नर्मदा, "रेवा तु नर्मदा सोमोद्भवा मेखल(क)कन्यका" इत्यमरः; उन्मुच्य विहाय, रेवां विनेत्यर्थः, सर्वाभिः समस्ताभिः, महिषीभिः राज्ञीभिः, नदीभिरिति यावत्, समुद्राणां नदीपतित्वादिति भावः; समं सह, विश्वेऽपि सर्वेऽपि, चत्वारः सप्त वा इति भावः, अम्बुनिधयः समुद्राः, विस्मापिताः विस्मयं गमिताः, रेवां विहाय रावणस्य बन्धनं केनापि कदाऽपि न दृष्टं, चतुर्षु सप्तसु वा सागरेषु सन्ध्योपा-सनार्थमागतस्य वालिनः कक्षदेशे बन्दीभूतं रावणं दृष्ट्वा समहिषीकाः सर्वेऽपि समुद्राः विस्मयेन स्तब्धीभूता आसन्, केवलं रेवा तु यया समुद्रेण सहिताऽपि दृष्ट-कार्त्तवीर्य्यचरितत्वात् न विस्मितेति भावः । पुरा जयाय समुपस्थितं रावणं कार्त्त-वीर्य्यः सहस्रबाहुभिः निर्जित्य कारायां बबन्धेति पुराणम् । शार्दूलविक्रीडितं वृत्तम् ॥ ४४ ॥

चिरायेति ।—चिराय सततमिति यावत्; "चिराय" इत्यस्य वक्ष्यमाण-पश्यतः

सुधासधर्माणमिमां च वाचं
न शृण्वतस्तृप्यति मानसं मे ॥ ४५ ॥

किन्तु—

येनाच्छिद्य समस्तपार्थिवकुलप्राणान्तकं कार्मुकं
रामः सम्प्रति लम्भितो भृगुभुवामुत्सर्गसिद्धां स्रुचम्।
द्रष्टुं वीर! चिराय धाम भवतस्तद्भूर्भुवःस्वस्त्रयी-
हृन्मर्मव्रणरोपणौषधमिमौ बाहू बहु स्ताम्यतः ॥ ४६ ॥

रामः। (सस्मितम्)—

नन्वेतदधिमौर्वीकं युद्धसर्वस्वदक्षिणम्।
सज्जमस्त्येव मे रक्षोलक्ष्मीमूलहरं धनुः ॥ ४७ ॥

छलेनान्वयो वा, रात्रिञ्चरवीरचक्राणां राक्षसवीरसमूहानां, मारः मारणं, वध इत्यर्थः, अङ्कः चिह्नं यत्र तस्मिन्, सङ्ग्रामे इत्यर्थः, वैज्ञानिकः विशेषनिपुणः तस्य सम्बुद्धौ, यद्वा—रात्रिञ्चरवीरचक्राणां माराय अङ्कः आजिः, युद्धमित्यर्थः, "अङ्को रूपकभेदाङ्कचिह्न-चेष्टाऽऽजिभूषणे" इति मेदिनी, तत्र वैज्ञानिक। राक्षसविनाशकयुद्धे विशेषाभिज्ञ। त्वा भवन्तं, चिराय दीर्घकालं व्याप्य इत्यर्थः, पश्यतः अवलोकयतः, अपीति शेषः, तथा सुधासधर्माणम् अमृततुल्याम्, इमां त्वयाऽभिधीयमानामित्यर्थः, वाचं वचनं, तवेति शेषः, शृण्वतश्च आकर्णयतश्च, अत्रापि अपीति शेषः, मे मम, मानसं मनः, न तृप्यति न सन्तुष्टं भवति, अतः पुनः पुनः तव दर्शनं तव वाक्यामृतश्रवणञ्च कर्तुमिच्छामीति भावः। उपजाति वृत्तम् ॥ ४५ ॥

येनेति।—येन, धाम्ना इति शेषः, समस्तस्य निखिलस्य, पार्थिवकुलस्य क्षत्रिय-वंशस्य, प्राणान्तकं जीवनापहारकं, कार्मुकं धनुः, भार्गवीयमिति भावः, आच्छिद्य आकृष्य, भार्गवहस्तादिति शेषः, सम्प्रति अधुना रामः परशुरामः, भृगुभुवां भृगुवंश-सम्भूतानाम्, उत्सर्गसिद्धां स्वभावसिद्धां, स्रुचं यज्ञपात्रविशेषं, लम्भितः प्रापितः, तस्य ब्रह्मतामात्रशेषीकरणमिति भावः, हे वीर! भवतः तव, तत् प्रसिद्धं, भूर्भुवःस्वस्त्रय्याः भूर्भुवःस्व-र्नामक-त्रिलोक्या इत्यर्थः, हृन्मर्मणः हृदयरूपमर्मणः, यत् व्रणं क्षतं, तस्य रोपणौषधम् उपशमौषधस्वरूपं, त्रिलोकीशान्तिस्थापनमिति यावत्, धाम तेजः, द्रष्टुम् अवलोकयि-तुम्, इमौ प्रसारितौ एतौ, बाहू भुजौ, ममेति शेषः, चिराय बहु अत्यर्थं यथा तथा, स्ताम्यतः उत्सुकीभवतः। शार्दूलविक्रीडितं वृत्तम् ॥ ४६ ॥

नन्विति।—ननु भोः! अधिगता आत्ता, आरोपिता इत्यर्थः, मौर्वी ज्या यत्र

तन्महाभागोऽपि शस्त्रमादत्ताम् (प)।

वाली। (विहस्य)। साधु भो महाक्षत्रिय! यथाधर्मम् (फ) अभिदधासि। किन्तु—

नयो हि साङ्ग्रामिक एष दोष्मतां
यदात्मजातिप्रतिबद्धमायुधम्।
अयःकुशीभिः कपयो न शस्त्रिण-
स्तलश्च मुष्टिश्च नखाश्च सन्ति नः॥ ४८॥

लक्ष्मणः। आर्य्य! साधूक्तं महाभागेन, नित्योपनतस्वाङ्गशस्त्रैव तैरश्ची (ब) जातिः।

---

तथोक्तं, युद्धमेव सङ्ग्राम एव, सर्वस्वदक्षिणा यस्य तादृशं, रक्षसां निशाचराणां, लक्ष्म्याः श्रियाः, ऐश्वर्य्यस्येत्यर्थः, मूलं शिफाम्, आदिकारणमित्यर्थः, हरति नाशयतीति तादृशं समूलराक्षसवंशविनाशनमित्यर्थः, मे मम, एतत् हस्तस्थितमित्यर्थः, धनुः चापं, सज्जं प्रस्तुतम्, अस्त्येव विद्यते एव। अनुष्टुप् वृत्तम्॥ ४७॥

(प) महाभागः भाग्यवान्, भवानिति शेषः। आदत्ताम् गृह्णातु।

(फ) महाक्षत्रिय! क्षत्रियश्रेष्ठ! वीरधर्माभिज्ञ! इति यावत्। यथाधर्मं धर्मानुमोदितम्।

नय इति।—दोष्मतां बाहुमतां, भुजबलशालिनामित्यर्थः, "भुजबाहू प्रवेष्टो दोः स्यात्" इत्यमरः; एष हि अयमेव, वक्ष्यमाणप्रकार एवेत्यर्थः, साङ्ग्रामिकः सङ्ग्रामसम्बन्धी, युद्धविषयकः इत्यर्थः, नयः नीतिः, यत् आयुधम् अस्त्रम्, आत्मजातिप्रतिबद्धम् आत्मनः स्वस्य, जातिः जन्म, तत्र प्रतिबद्धं सम्बद्धं, जात्यनुरूपमित्यर्थः, स्वस्वजातिप्रतिनियतमिति यावत्, यासां जातीनां यदस्त्रं परम्परागतं, तास्तेनैव व्यवहरन्तीति निष्कर्षः, कपयः वानराः, अयःकुशीभिः लौहविकारैः, लौहमयफालैरित्यर्थः, "विकारस्त्वयसः कुशी" इत्यमरः, "कुशी फाले" इति मेदिनी च; न शस्त्रिणः न अस्त्रवन्तः, लौहमयं शस्त्रं लौहफालरूपं वा शस्त्रं न व्यवहरन्तीति भावः, नः अस्माकं, कपीनामिति यावत्, तलश्च चपेटश्च, "तलश्चपेटे तालद्रौ" इति रभसः, मुष्टिश्च बद्धपाणिश्च, सम्पीडिताङ्गुलिः पाणिरित्यर्थः, "मुष्टिर्द्वयोः पले। बद्धपाणौ त्सरौ" इति मेदिनी, "सम्पीडिताङ्गुलिर्मुष्टिः" इति हलायुधश्च; नखाश्च नखराश्च, सन्ति विद्यन्ते, लौहमयशस्त्रव्यवहारे अनभ्यस्ता वयं, तलमुष्ट्यादयः स्वाङ्गानि एव अस्माकम् अस्त्राणीति भावः॥ ४८॥

(ब) नित्येति।—नित्यं सततम्, उपनतं समीपस्थं, सुलभत्वेनोपस्थितमित्यर्थः, स्वाङ्गमेव पाणितलाद्यवयव एव, शस्त्रम् आयुधं यस्याः तथाविधा। तैरश्ची पाशवी।

रामः । (विहस्य सानुरागमालोक्य) । अहह !!—

स्वर्विघ्नप्रसरेण रावणिरसौ यत् दुर्यशोभागिनं
चक्रे गौतमशापयन्त्रितभुजस्थामानमाखण्डलम् ।
कक्षागर्त्तकुलीरतां गमयता वीर ! त्वया रावणं
तत् सम्मृष्टमहो ! विशल्यकरणी जागर्त्ति सत्पुत्रता ॥४९॥

सोऽपि त्वमस्माकमधुना दैवेन शरव्यीकृतोऽसि । (भ)

वाली । (सगौरवम्) । आः !! काकुत्स्थ !—

अस्मद्दोर्मूलकूलङ्कषविषमभुजग्रन्थिभङ्गप्रसङ्ग-
क्रोशक्लिष्टाशदत्तत्रिभुवनविजयख्यातिसर्वस्वदायः ।

---

स्वरिति ।—असौ बुद्धिस्थीकृत इति भावः, रावणिः रावणपुत्रो मेघनादः, स्वः स्वर्गे, विघ्नस्य प्रत्यूहस्य, पीडनात्मकस्येति यावत्, प्रसरेण विस्तारेण, स्वर्गे विविधपीडो-त्पादनेन, स्वर्गविजयेनेति यावत्, गौतमशापेन अहल्यासतीत्वनाशात् क्रुद्धगौतमा-क्रोशेन, यन्त्रितं निरुद्धं, स्तम्भितमिति यावत्, भुजयोः बाह्वोः, स्थाम स्थैर्यं, बलमित्यर्थः यस्य तथाभूतं, "द्रविणं तरःसहोबलशौर्याणि स्थाम शुष्मं च" इत्यमरः, पुरा अहल्या-भिगमनात् इन्द्रं गौतमः सङ्ग्रामे तव बाहुबलं नश्यत्विति शशापेति पुराणम्; आखण्डलम् इन्द्रं यत् दुर्यशोभागिनम् अकीर्त्तिभाजं, निन्दाभाजनमित्यर्थः, पराजय-करणेनेति भावः, चक्रे कृतवान्, हे वीर ! त्वया रावणं दशाननं, मेघनादजनकमिति यावत्, कक्षा एव बाहुमूलमेव, गर्त्तः रन्ध्रं, तत्र कुलीरता कर्कटता, बहुभुजत्वादिति भावः, गमयता प्रापयता सता, तत् दुर्यशः, पितुरिति शेषः, सम्मृष्टं प्रोञ्छितम्, अहो ! आश्चर्यं, विशल्यं क्रियते अनयेति विशल्यकरणी दुःखहारिणीति यावत्, सत्पुत्रता उत्कृष्टपुत्रशालित्वमित्यर्थः, पितृभक्ततनयवत्ता इति यावत्, जागर्त्ति प्रकाशते, त्वया पुत्रेण जगति सत्पुत्रताया दृष्टान्त उज्ज्वलीभवतीत्यर्थः, इन्द्रजिता पिता इन्द्रः जित इति दृष्ट्वा त्वं तत्पितरं रावणं तथा कृत्वा जितवानिति तव सत्पुत्रत्वमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ४९ ॥

(भ) कोऽपि तथाभूतवीरप्रकाण्डः सत्पुत्रोऽपीत्यर्थः, दैवेन मम सौभाग्येन । शरव्यीकृतोऽसि लक्ष्यीकृतोऽसि, शरेण प्रहर्त्तव्योऽसि इति यावत् ।

अस्मदिति ।—अस्माकं दोर्मूलं भुजामूलं, कक्षेत्यर्थः, तदेव कूलं तटं, तत् कषति भिनत्ति, विदारयतीत्यर्थः तथोक्तः, यो विषमभुजग्रन्थः भीषणाङ्गविबाहु-

यः कश्चिद्विक्रमोऽयं स खलु करचुलिक्षत्रसाधारणत्वा-
दल्पमन्दायमानो विजितभृगुपतिं त्वामजित्वा दुनोति ॥ ५० ॥

तदेहि, विमर्दक्षमां भुवमवतराव: ।

(इति निष्क्रान्तौ)।

गुहः। (सानन्दम्)। दिष्ट्या फलितम् (म) अस्माकं मनोरथेन।

लक्ष्मणः। (नेपथ्याभिमुखमवलोक्य)। इदमन्यतो वानरद्वय-मार्य्यस्य पार्ष्णिग्राहमिव सम्भ्रमादनुप्लवते; (य) तदहमपि धनुरारोपयामि।

---

रूपमुद्दढबन्धनं, तस्य भङ्गप्रसङ्गेन भेदनव्यापारेण, कक्षमध्ये मोटयित्वा संयतो-क्रम्य व्यापनप्रयासेनेति यावत्, क्रोशता चीत्कारं कुर्वता, लङ्केशेन रावणेन, दत्तः समर्पितः, त्रिभुवनविजयख्यातिरेव लोकत्रयव्याप्तिकराद्भुतकीर्त्तिरेव, सर्वस्वं सर्वधनं, तस्य दायः दानं, देयं वस्तु इत्यर्थः यस्मै तथाविधः, "दायः सोल्लुण्ठभाषणे । विभक्तव्यपितृद्रव्ये तथा हरण-दानयोः ॥" इति मेदिनी, अयं लङ्केश्वरपराजय-विषयक इति यावत्, यः कश्चित् विक्रमः शौर्य्यं, मदीयः अस्तीति शेषः, स विक्रमः, खलु निश्चये, करचुलिक्षत्रसाधारणत्वात् करचुलिः कार्त्तवीर्य्यार्जुनप्रभृतिपुरुषः, स एव क्षत्रः क्षत्रियः करचुलिक्षत्रः, तद्वंशीयस्य कार्त्तवीर्य्यस्तदाख्यया प्रसिद्धः, तस्य साधारणत्वात् सामान्यात्, समत्वात् इत्यर्थः, मया यथा रावणो जितः, तथा कार्त्तवीर्य्येणापि जित इति रावणपराजये उभयोरेव साधारणत्वेन वैशिष्ट्याभावादिति भावः, अल्पः सन्नपि, मन्दायमानः मन्द इव आचरन्, तुच्छमिवात्मानं मन्यमान इति भावः, विजितभृगुपतिं भार्गवजेतारं, परशुरामविजयिनमित्यर्थः, त्वाम् भवन्तम्, अजित्वा अपराभूय, दुनोति तापयति, मामिति शेषः। शार्दूलविक्रीडितं वृत्तम् ॥ ५० ॥

(म) दिष्ट्या इति हर्षसूचकमव्ययं, "दिष्ट्या हर्षे मङ्गले च" इति मेदिनी। फलितं सिद्धम्।

(य) पार्ष्णिग्राहमिव जिगीषोः पश्चाद्देशस्थं विपक्षराजानमिव, प्रभुभावेन आर्य्यस्य पृष्ठानुधावीवेत्यर्थः, "पार्ष्णिग्राहस्तु पृष्ठतः" इत्यमरः। सम्भ्रमात् त्वरातिशयात्। अनुप्लवते अनुधावति, उत्प्लुत्य उत्प्लुत्य गच्छतीत्यर्थः।

गुह:। (दृष्ट्वा सहर्षम्)। कुमार! कुमार! अलमावेगेन (र), नन्वयं सुग्रीवो रामभद्रगुणानुरागेण बालिमत्सरेण च द्विगुणितोत्साह: समरसीमानम् (ल) आपतति।

लक्ष्मण:। दिष्ट्या स एष वैकर्त्तनि:!! (व)। अथापर: क:?

गुह:। अयमपि किष्किन्धेश्वरस्कन्धावारैकवीरो (श) भगवत: प्रभञ्जनस्य पारस्त्रैणेय: (ष) पुत्रो हनूमान्।

लक्ष्मण:। (सहर्षम्)। कथमयमसावाञ्जनेय:!! (स) अयं हि—

ब्रह्मशापपरिक्लिष्ट-स्ववीर्य्यज्ञानयन्त्रित:।
अन्यैरपि भुव वीरै: कीर्य्यमाणामुपेक्षते॥ ५१॥

---

(र) आवेगेन सम्भ्रमेण, त्वरया वा, अलं निष्प्रयोजनम्, अधिकत्वराया न किमपि प्रयोजनमस्तीत्यर्थ:, "आवेगस्तु त्वरा त्वरि:" इति वाचस्पति:।

(ल) बालिमत्सरेण बालिनं प्रति विद्वेषेण, क्रोधेन वा, "मत्सरोऽन्यशुभद्वेषे" इत्यमर:, "मत्सरा मक्षिकायां स्यान्मात्सर्य्य-क्रोधयो: पुमान्" इति मेदिनी च। द्विगुणितोत्साह: प्रबलाध्यवसायसम्पन्न: सन् इत्यर्थ:, बालिविनाशाय इति भाव:। समरसीमानं युद्धक्षेत्रं, "सीमाऽऽघाटस्थितिक्षेत्रेष्वण्डकोषेऽपि च स्त्रियाम्" इति मेदिनी।

(व) वैकर्त्तनि: विकर्त्तन: सूर्य्य:, तस्य अपत्यं पुमान् वैकर्त्तनि: सुग्रीव इत्यर्थ:।

(श) किष्किन्धेति।—किष्किन्धेश्वरस्य किष्किन्ध्याधिपते: बालिन:, स्कन्धावार: सेनानिवेश:, राजधानी वा, तत्र एकवीर: मुख्यवीर: अद्वितीयवीर:, इत्यर्थ:, "एके मुख्यान्यकेवला:" इत्यमर:।

(ष) प्रभञ्जनस्य वायो:। पारस्त्रैणेय: परस्त्री केशरिण: भार्य्या अञ्जना, तस्यां जात:।

(स) आञ्जनेय: अञ्जनातनय:, हनूमान् इत्यर्थ:।

ब्रह्मशापेति।—ब्रह्मण: विधातु:, शापेन, पुरा हनूमत: वीर्य्यातिशयं दृष्ट्वा समुद्विग्नो ब्रह्मा अनेन वीर्य्यशाली मम सृष्टं संहरेदित्याशङ्कमान: तं "स्वकं ते पराक्रमज्ञानं न भवेत्" इति शशापेति पुराणम्; परिक्लिष्टं दुर्बलं, व्याहतमिति यावत्, यत् स्ववीर्य्यज्ञानं निजशक्तिबोध:, तेन यन्त्रित: नियद्ध: सन्, अन्यैरपि अपरैरपि, स्थापयद्भि:

नियतमनेन सख्या हृदयशल्यम्(ह) अस्माकमुद्धरिष्यते। इदं तु वर्त्तमानमेकतुलायुद्धम् (क) आर्य्यस्य ; जयलक्ष्मीपरिग्रहयौतके यशसि वयमयं वा सुग्रीवो वा न केचिदंशाधिकारिणः। (ख)

गुहः। (सबहुमानम्)। कुमार! पश्य पश्य—

सप्त तालानयं भित्त्वा वालिप्रहरणीकृतान्।
हत्वा च वालिनं बाणो रामतूणीरमागतः॥ ५२॥

अहह!! (ग)—

प्राणैः समं कनकपुष्करकण्ठमाला-
सूत्रेण दाशरथये विहितातिथेयः।

---

हीनेरपीति भावः, वीरैः शूरैः, क्षोभ्यमाणां पूर्य्यमाणाम्, आकुलीक्रियमाणामित्यर्थः, भुवं पृथिवीम्, उपेक्षते दृष्ट्वाऽपि न पश्यतीत्यर्थः। अनुष्टुप् वृत्तम्॥ ५१॥

(ह) नियतं निश्चितम्। सख्या मित्रेण, हनूमतेति शेषः, यद्वा—सहायेन, "सखा मित्रे सहाययोः" इति विश्वः। हृदयशल्यम् अन्तःकरणे शल्यवेधजपीडेव पीडा।

(क) एकतुलायुद्धम् एका अभिन्ना, तुला तोलनदण्डः, तुलदण्डवत् परस्पर-समानमित्यर्थः, तया युद्धं सङ्ग्रामः, तुल्यवीर्य्ययोः द्वयोरेवान्योऽन्यसम्मर्दमित्यर्थः, नात्र कस्यचित् साहाय्यावसर इति भावः।

(ख) जयेति।—जयलक्ष्म्याः विजयश्रियाः, परिग्रहः ग्रहणं, पाणिग्रहणमित्यर्थः, तत्र यत् यौतकं कन्यादानकाले श्वशुरादिभिः प्रीतैः जामात्रे दीयमानं धनं, परिणय-लब्धं धनमिति यावत् तस्मिन्, तत्स्वरूपे इत्यर्थः, यशसि कीर्त्त्याम्, यश एवात्र विजय-लक्ष्मीपरिणये यौतकमिति भावः। अंशाधिकारिणः अंशभागिनः, "विद्याप्राप्तं शौर्य्यधनं यच्च सौदायिकं भवेत्। मैत्रमौद्वाहिकञ्चैव दायादानां न तत् भवेत्॥" इति वचनेन परिणयलब्धस्याविभाज्यत्वप्रतिपादनादिति भावः।

सप्तेति।—अयम् एषः, पुरतः यस्य कार्य्यं परिदृश्यते स इत्यर्थः, बाणः शरः, रामप्रहित इति शेषः, वालिना प्रहरणीकृतान् अस्त्रीकृतान्, अस्त्ररूपेण व्यवहृता-नित्यर्थः, युगपत् रामं प्रति प्रहरणार्थं प्रक्षिप्तानिति यावत्, सप्त सप्तसङ्ख्याकान्, तालान् तालवृक्षान्, भित्त्वा विदार्य्य, वालिनं हत्वा विनाश्य च, रामस्य तूणीरं बाणाधारम्, आगतः प्रविष्ट इत्यर्थः। अनुष्टुप् वृत्तम्॥ ५२॥

(ग) अहह!! खेदे।

दिक्कूलमुद्वहयशःसरिदादिशैलः
शेते स वीरशयने कपिचक्रवर्त्ती ॥ ५२ ॥

लक्ष्मणः। (सखेदम्)। हा देव सङ्क्रन्दन! क्व पुनरीदृशं महावीरप्रकाण्डम् (घ) आत्मजं सहस्रेणापि लोचनैरालोकयिष्यसि?

(नेपथ्ये दुन्दुभिध्वनिर्मङ्गलगीतिश्च)।

गुहः। (सहर्षम्)। कथमयमार्य्यजाम्बवदभिमन्त्रितैः शातकुम्भकलशैर्नीलः (ङ) कुमारसुग्रीवमभिषिञ्चति। स्वयं चास्य देवो दाशरथिः कार्त्तस्वरपुण्डरीकमालया (च) कण्ठमलङ्करोति।

लक्ष्मणः। प्रियतरं नः।

(नेपथ्ये)।

भो भो वानरर्क्षभल्लगोलाङ्गूलयूथपतयः! (छ) सर्वानेष

---

शेत इति।—दिगेव कूलं तीरं दिक्कूलं, तत् उद्वहति धारयतीति दिक्कूलमुद्वहा, यद्वा—दिशां कूलं तटं, प्रान्तमित्यर्थः, उद्वहति प्रवहति, तत्र प्रसरतीति यावत् तादृशी दिगन्तव्यापिनी, या यशः कीर्त्तिरेव, सरित् नदी, तस्याः आदिशैलः प्रभवपर्वतः, यथा पर्वतः नद्याः प्रभवः, तथा दिग्व्यापिनः यशसः प्रभवस्वरूपम् इति भावः, स वीरत्वेन प्रसिद्धः, कपिचक्रवर्त्ती वानरराजः, वालीत्यर्थः, प्राणैः असुभिः, प्राणवायुभिरित्यर्थः, समं सह, कनकपुष्करकण्ठमालासूत्रेण काञ्चनकमलग्रथितकण्ठभूषणदाम्ना, दाशरथये दशरथापत्याय रामाय, विहितं कृतम्, आतिथेयम् अतिथिसत्कारो येन तथाभूतः सन्, वीरशयने वीरशय्यायां, रणभूमौ इति भावः, शेते शयानस्तिष्ठति, रामेण निहतः इति भावः। वसन्ततिलकं वृत्तम् ॥ ५२ ॥

(घ) सङ्क्रन्दन। इन्द्र! महावीरप्रकाण्डं महावीरेषु शूरोत्तमेषु, प्रकाण्डं प्रशस्तं, श्रेष्ठमित्यर्थः, वीरश्रेष्ठेष्वपि श्रेष्ठतममिति यावत्, "मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ। प्रशस्तवाचकान्यमूनि" इत्यमरः।

(ङ) अभिमन्त्रितैः मन्त्रपूतैः। शातकुम्भकलशैः काञ्चनकुम्भैः। नीलः स्वनामप्रसिद्धः वानरराजामात्यविशेषः।

(च) कार्त्तस्वरपुण्डरीकमालया काञ्चनमयपद्मदाम्ना।

(छ) वानरः प्रसिद्धः, शाखामृगः, भल्लभः भल्लुकः, "अथ भल्लुके। ऋक्षाच्छभल्ल-

यो महाराजः सुग्रीवः समाज्ञापयति—"सज्जन्तु भवन्तः सर्वाणि यौवराज्योपकरणानि । अयमहं सीतादेव्याः प्रवृत्तिम् (ज) अन्वेष्टुं प्रहित्य (झ) हनूमन्तमूर्द्ध्वमौहूर्त्तिके लग्ने कुमारमङ्गदमभिषेक्ष्यामि" (ञ) इति ।

लक्ष्मणः ।—

उत्सवः सोऽयमस्माकं सर्वथा हृदयङ्गमः ।
किन्तु बाली विलीनोऽयं व्यथयिष्यति वासवम् ॥ ५४ ॥

(अन्तरिक्षे पुष्पवृष्ट्यनन्तरम्) । जय जय जगत्पते रामभद्र !—
लक्ष्म्या वालिनिवर्हणप्रशमितद्वैराज्यवैराग्यया
किष्किन्धायतनैकदैवतमयं तारापतिर्दीप्यते ।

---

मालूकाः ॥" इत्यमरः ; गोलाङ्गूलः कृष्णवर्णलाङ्गूलविशिष्टवानरविशेषः, तेषां यूथपतयः ! सजातीयप्रधानानि । अधिपतय इत्यर्थः । सज्जन्तु सज्जीकुर्वन्तु इत्यर्थः ।

(ज) प्रवृत्तिं वार्त्ताम् ।

(झ) प्रहित्य प्रेष्य ।

(ञ) ऊर्द्ध्वमौहूर्त्तिके मुहूर्त्तात् ऊर्द्ध्वमायात्, (४८ मि:) ऊर्द्ध्व ऊर्द्ध्वमौहूर्त्तिकं तस्मिन्, लग्ने राशिविशेषस्य उदये, शुभसमये इति भावः, "राशीनामुदयो लग्नम्" इत्यमरः । अभिषेक्ष्यामि अभिषिक्तं करिष्यामि, यौवराज्ये इति शेषः ।

उत्सव इति ।—अयम् अनुष्ठीयमानः, सः परिकल्पितः, उत्सवः, हर्षजनकव्यापारः, अङ्गदयौवराज्याभिषेक इति भावः, अस्माकं सर्वथा सर्वैः प्रकारैः हृदयङ्गमः मनोरमः, किन्तु विलीनः विलयं गतः, विनष्ट इत्यर्थः, अयं बाली वानराधिपतिः, वासवम् इन्द्रं, व्यथयिष्यति सन्तापयिष्यति, स्वतनयजनितशोकेनेति भावः । अनुष्टुप् वृत्तम् ॥ ५४ ॥

लक्ष्म्येति ।—वालिनः निवर्हणेन वधेन, विनाशेनेत्यर्थः, "प्रमापणं निवर्हणं निकारणं विशारणम् । आलम्भपिञ्जविशर-घातोन्माथवधा अपि ॥" इत्यमरः ; प्रशमितम् अपनीतं, द्वैराज्येन राजद्वयत्वेन, वालि-सुग्रीवरूपेणेति भावः, वैराग्यं विरागः, एकस्मिन् सुग्रीवेऽनुरागादिति भावः, यस्याः तथाभूतया, लक्ष्म्या राजश्रिया, किष्किन्धा तन्नामराजधानी एव आयतनं स्थानं, तस्य एकम् अद्वितीयं, दैवतम् अधिष्ठातृदेवः, अधिपतिरित्यर्थः, अयं भवतो मित्रत्वेन परिगणित एषः, तारापतिः तारानामिकायाः

नप्तारं युवराजमङ्गदमपि श्रुत्वाऽतिहर्षादभू-
दस्राम्भःपृषतौघमौक्तिकमयो गुम्फः सहस्रेक्षणः ॥ ५५ ॥

लक्ष्मणः । प्रियात् प्रियतरं नः । वयस्य गुह ! तदेहि,
आवामपि महोत्सवसंविभागिनौ (ट) भवावः ।

(इति निष्क्रान्तौ) ।

इति सुग्रीवाभिषेको नाम पञ्चमोऽङ्कः ।

---

## षष्ठोऽङ्कः ।

---

(ततः प्रविशति माल्यवान्) ।

माल्यवान् । (सर्वतोऽवलोक्य सखेदम्) । अहह कष्टम् !!—

दग्धाः प्रदीप्तपावकपरिचयपिण्डस्थहेमवेश्मानः ।
क्षणमुत्पुच्छयमाने हनुमति लङ्कापुरोद्देशाः ॥ १ ॥

---

वालिपत्न्याः द्वितीयो भर्त्ता इत्यर्थः, सुग्रीव इति यावत्, दीप्यते राजते, सहस्रचक्षुः इन्द्रः अपि, नप्तारं पौत्रम्, अङ्गदं वालिपुत्रं,युवराजं यौवराज्ये अभिषिक्तं,श्रुत्वा आकर्ण्य, अतिहर्षात् आनन्दाधिक्यात्, अस्राम्भांसि अश्रुजलानि, तेषां पृषतौघाः बिन्दुसमूहाः एव, "पृषन्ति बिन्दु-पृषताः" इत्यमरः ; मौक्तिकानि मुक्ताफलानि, तन्मयः तदात्मकः, गुम्फः ग्रथनम्, आनन्दाश्रुरूपमुक्ताखचितशरीर इति भावः, अभूत् । शार्दूलविक्रीडितं वृत्तम् ॥ ५५ ॥

(ट) महोत्सवसंविभागिनौ महोत्सवस्य आनन्दजनकानुष्ठानस्य, संविभागिनौ अंशहारिणौ ।

इति श्रीजीवानन्दविद्यासागर-भट्टाचार्य्येण कृता
अनर्घराघवपञ्चमाङ्कव्याख्या समाप्ता ।

---

दग्धा इति ।—हनुमति पवनकुमारे, क्षणं अल्पकालमात्रम्, उत्पुच्छयमाने पुच्छं लाङ्गूलम् उत्क्षिपति सति, लाङ्गूलोत्तोलने कृत सतीत्यर्थः, लङ्कापुरोद्देशाः लङ्कानगरीस्थप्रदेशाः, प्रदीप्तस्य प्रज्वलितस्य, पावकस्य अग्नेः, परिचयेन सङ्गेनेति यावत्, पिण्ड-

अपि च—

निजकिरणौघप्रमुषितनिम्नोन्नतरूपकर्मभेदेषु।
मणिभवनेषु कृशानुज्वाला: फलतोऽनुमीयन्ते ॥ २ ॥

(विमृश्य)। अहो! दुर्निवारता भवितव्यतायाः,—

दोःसन्दोहवशंवदत्रिभुवनश्रीगर्वसर्वङ्कषः
कैलासोद्धरणप्रचण्डचरितो वीरः कुबेरानुजः।
यत्रायं स्वयमस्ति सेयममरावत्याऽपि वन्द्या पुरी
नीता मर्कटकेन कामपि दशां धिग्दैवमावश्यकम् ॥ ३ ॥

---

स्थानि पिण्डीभूतानि, हेमवेश्मानि काञ्चनगृहाणि येषु तथाभूताः सन्तः, अग्निसन्तापेन स्वर्णानां द्रवीभावादिति भावः, दग्धाः भस्मीभूताः, बभूवुरिति शेषः। आर्य्या वृत्तम् ॥ १ ॥

निजेति।—निजकिरणौघेन स्वमयूखनिचयेन, प्रकर्षेण मुषिता अत्यर्थम् अपहृताः, एकाकारता प्रापिता इति भावः, निम्नोन्नतरूपाः अपकृष्टोत्कृष्टरूपाः, कर्मभेदाः शिल्पविशेषाः येषां तथाविधेषु, मणिभवनेषु रत्नमयगृहेषु, कृशानुज्वालाः अग्निशिखाः, फलतः फलेन, दाहादिकार्य्यादिति भावः, अनुमीयन्ते लक्ष्यन्ते, मणिप्रभया अभिभवात् शिल्पोत्कर्षापकर्षाः न लक्ष्यन्ते, परम् अग्निदाहरूपतत्कार्य्यध्वंसेन अनुमीयते इति भावः। आर्य्या वृत्तम् ॥ २ ॥

दोःसन्दोहेति।—दोष्णां भुजानां, विंशतिसङ्ख्यकानामिति यावत्, सन्दोहेन समूहेन, वशंवदायाः वशं गतायाः, वशीभूतायाः इत्यर्थः, त्रिभुवनश्रियाः जगत्त्रयस्य लक्ष्म्याः, गर्वस्य अहङ्कारस्य, सर्वं समस्तं, कषति निनाशयति तथोक्तः, बाहुबलेन भुवनत्रयस्थान् सर्वान् राज्ञो विजित्य तत्तद्देशलक्ष्म्याः अपहरणेन गर्वखर्वकारीत्यर्थः, कैलासस्य तदाख्यपर्वतस्य, उद्धरणे उत्तोलने, प्रचण्डं दुर्द्धर्षं, एतादृशं निर्माणं, चरितम् आचरणं यस्य तथाभूतः, कैलासोत्तोलनेन प्रकटितदुर्द्धर्षवीर्य्य इत्यथः, कुबेरस्य यक्षेश्वरस्य, अनुजः कनीयान्, अयं पूर्वोक्तरूपप्रतापसम्पन्न इत्यर्थः, वीरः विक्रमी, रावणः इति शेषः, यत्र यस्यां पुर्य्यां, स्वयम् आत्मना, अस्ति अधिवसति, अमरावत्या अपि इन्द्रपुर्य्यां (करणे) अपि, वन्द्या स्तोतव्या, सापेक्षया शोभाधिक्यात् प्रशंसनीया इति यावत्, सा सुप्रसिद्धा, इयम् एषा, पुरी लङ्कानगरी, मर्कटकेन क्षुद्रेण वानरेण हनूमता इति यावत्, कामपि अवाच्याम्, अवर्णनीयामिति भावः, दशाम् अवस्थाम्, नीता प्रापिता,

न किञ्चिदेतद्वा रावणदुर्णयेन (क)। (सखेदमाकाशे)। आः पौलस्त्य !—

विद्याश्चतुर्दश चतुर्षु निजाननेषु
सम्बाधदुःस्थितवतीरवलोक्य वेधाः।
ताभ्योऽपराणि नियतं दश ते मुखानि
स्रष्टा प्रणमुरकरोत् स कथं जडोऽसि !! ॥ ४ ॥

(वर्णं च ध्यात्वा सव्यथम्)। कथमेवं विशीर्य्यतीव (ख) नः कुलमिदम् !!—

---

आवश्यकम अवश्यम्भाव्यम, अवश्यभावि इत्यर्थः, यद्वा—न वश्यं वशीकरणार्हम अवश्यम् अशक्यवशीकरणम, अवश्यमेव इति आवश्यकम अनायत्तमित्यर्थः, अप्रतिविधेयमिति यावत, दैवं भाग्य, प्रतिकूलमिति शेषः, धिक् निन्दायामव्ययम, एतादृशस्यमनीयस्य वस्तुनोऽकाण्डे वैपरीत्यकरणादिति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

(क) रावणेति।—रावणस्य दशाननस्य, दुर्णयेन दुराचारेण, नीतिविगर्हिताचरणेनेत्यर्थः, एतत लङ्कानगर, तत्रस्थं वस्तुजातं वा इत्यर्थः, किञ्चित किमपि, न, स्थास्यतीति शेषः, एषा पुरी यथा विनष्टा, तथा सर्वमेव विनङ्क्ष्यतीति भावः।

विद्या इति।—वेधाः ब्रह्मा, चतुर्षु चतुःसङ्ख्यकेषु, निजाननेषु निजमुखेषु, चतुर्दश विद्याः "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश ॥" "शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं तथा। छन्दसां विचितिश्चैव षडङ्गो वेद उच्यते ॥" इति पुराणोक्ताः चतुर्दशविधा विद्याः, सम्बाधेन सङ्कटावस्थानेन, दुःस्थितवतीः क्लेशेन स्थिताः, अवलोक्य दृष्ट्वा, चतुर्षु मुखेषु चतुर्दशविद्याया अवस्थानस्य अतीव क्लेशावहत्वं विविच्येत्यर्थः, ताभ्यः विद्याभ्यः, विद्यानामसम्बाधेनावस्थानार्थमित्यर्थः, तादर्थ्ये चतुर्थी, स्रष्टा प्रभुः प्रपौत्रस्य, ते तव, अपराणि चतुर्भ्यः अतिरिक्तानि, दश दशसङ्ख्यकानि मुखानि वदनानि, नियतं निश्चितं, निर्द्धारितमित्यर्थः, अकरोत् कृतवान्, सः चतुर्दशविद्याऽभिज्ञः, त्वमिति शेषः, कथं केन प्रकारेण, जडः अज्ञः, मूर्खः इत्यर्थः, सदसद्विवेकविमूढ इति यावत्, "जडोऽज्ञे" इत्यमरः; असि ? भवसि ? चतुर्दशविद्याऽभिज्ञस्य सुपण्डितस्य ते एतादृशी दुर्नीतिपरायणता न युज्यते इति भावः। वसन्ततिलकं वृत्तम् ॥ ४ ॥

(ख) विशीर्य्यतीव ध्वंसं गच्छतीव। नः अस्माकम्। कुलं वंशः।

खरादीनवधीत् रामो वत्समक्षं च मारुतिः।
स्वयं निष्क्रामयामास दशास्यश्च विभीषणम् ॥ ५ ॥

अलं वा दुर्विहितमतीतमुपालभ्य, (ग) सम्प्रति सिन्धोरुदीचि (घ) तीरे निवेशितस्कन्धावारो (ङ) दाशरथिः किमारम्भ (च) इति कथं प्रतीमः? (छ) (पुरो दृष्ट्वा)। कथं राघवचरितानि चरितुं प्रहितयोः शुक-सारणयोः (ज) सारणः।

(प्रविश्य)।

सारणः। जयतु जयतु कनिष्ठमातामहः। (झ)

माल्यवान्। (अभिनन्द्य समीपमुपवेश्य च)। वत्स सारण! कच्चिदमुनैव पदेन सुग्रीवकटकात् (ञ) आगतोऽसि?

---

खरादीनिति।—रामः दाशरथिः, खरादीन् खरदूषणप्रभृतीन् राक्षसान्, मारुतिश्च पवनात्मजः हनूमांश्च, वत्सं शिशुं, स्नेहभाजनमित्यर्थः, पुत्रकल्पमिति यावत्, अक्षं तदाख्यं रावणकुमारम्, अवधीत् विनाशयामास; दशास्यश्च दशमुखो रावणश्च, स्वयम् आत्मनैव, यद्वा—स्वयं साक्षात् दशास्यश्च, विभीषणं कनीयांसं भ्रातरं, निष्क्रामयामास दूरीचकार, लङ्कानगरीत इति शेषः। अनुष्टुप् वृत्तम् ॥ ५ ॥

(ग) दुर्विहितम् अनौचित्येन आचरितं, दुष्टाचरणमित्यर्थः। अतीतं गतम्। उपालभ्य तिरस्कृत्य। अलं व्यर्थम्, उपालम्भेन इदानीं न किमपि फलं सेत्स्यतीत्यर्थः।

(घ) सिन्धोः समुद्रस्य, उदीचि उत्तरे।

(ङ) निवेशितेति।—निवेशितः स्थापितः, स्कन्धावारः सेना, सेनानिवासो वा, शिविर इति यावत, येन तथोक्तः।

(च) किमारम्भः किमाचारः, कीदृशोद्योगः इत्यर्थः, किं कर्तुं प्रवृत्त इति भावः।

(छ) प्रतीमः जानीमः।

(ज) चरितुं विज्ञातुमित्यर्थः। प्रहितयोः प्रेरितयोः। शुक-सारणयोः तदाख्ययोः रावणचरयोः द्वयोः राक्षसयोः।

(झ) कनिष्ठमातामहः रावणजनन्याः केकस्याः पितृव्यत्वात् माल्यवतः कनिष्ठमातामहत्वं बोद्धव्यम्।

(ञ) कच्चिदिति प्रश्नार्थकमव्ययं, "कच्चित् कामप्रवेदने। प्रश्ने इष्टे मङ्गले

सारणः। अथ किम्।

माल्यवान्। तत् यथाऽनुभवमभिधीयतां तावत्। (ट)

सारणः। सार-सङ्ख्या वनौकसाम् (ठ) अस्मन्मुखेनैव शतशः प्रतीते मातामहेन अलमुक्ता। (ड) अधुना तु सेतुग्रथनाय (ढ) मिलितेषु वानरसैनिकेषु वानरमूर्त्तिधरोऽप्यहं महाराज-विभीषणेन—(ण) (इत्यर्द्धोक्ते सभयम्)। आर्य्य! चिरसंवासेन रामराजधानीप्रवादो (त) मामनुबध्नाति (थ)।

माल्यवान्। (साकूतम्)। किमभिषिक्तः कनिष्ठवत्सो (द) रावणेण?

---

च" इति मेदिनी। अमुनैव पदेन कुत्रचित् विश्राममकृत्वैव इति भावः। सुग्रीव-कटकात् सुग्रीवस्य शिबिरात्, सुग्रीवस्य सेनासन्निवेशस्थानादित्यर्थो वा।

(ट) यथाऽनुभवम् अनुभवमनतिक्रम्य, यत् यत् अनुभूतं दृष्टं विदितञ्च, तत् सर्वमित्यर्थः।

(ठ) सार-सङ्ख्या सारः बलं, "सारो बले स्थिरांशे च" इत्यमरः; सङ्ख्या एकत्वादिगणना ते। वनौकसां वानराणाम्।

(ड) शतशः शतं शतं वारानित्यर्थः। प्रतीते ज्ञाते। पूर्वमस्माभिः बहून् वारान् उक्तं, मातामहेन च ज्ञातमिति भावः। अलमुक्ता अत एव बहुशः पूर्व-मुक्तस्य पुनरावृत्तेः किमपि प्रयोजनं नास्तीत्यर्थः।

(ढ) सेतुग्रथनाय सेतुबन्धनाय।

(ण) महाराजविभीषणेनेति।—रावणे वर्त्तमाने, विशेषतः शत्रुभिः कृत-सन्मानं विभीषणं प्रति महाराजशब्दप्रयोगात् भयमिति भावः।

(त) चिरसंवासेन दीर्घकालसहवासेन, वानरसैनिकेषु भेदप्रयोगार्थमिति भावः। रामेति।—रामस्य राजधानी कटकः, समुद्रतीरस्थसेनानिवेशप्रदेश इति यावत्, "कटकोऽस्त्री नितम्बोऽद्रेर्दन्तिनां दन्तमण्डने। सामुद्रलवणे राजधानी-चक्रयोरपि ॥" इति मेदिनी; तस्यां प्रवादः प्रसिद्धिः; तत्र सर्वेऽपि विभीषणं महाराजेति व्यपदिशन्ति, मयाऽपि तदभ्यस्तमिति भावः।

(थ) अनुबध्नाति अनुसरति।

(द) कनिष्ठवत्सः कनिष्ठदौहित्रः, विभीषणः इत्यर्थः।

सारणः। अथ किम्।

माल्यवान्। (क्षणमिव स्तब्धं (ध) स्थित्वा निःश्वस्य)। वत्स! निःशङ्कमभिधेहि।

सारणः। कुमारविभीषणेन आत्मा संयम्य (न) चाहं रामस्य दर्शितः।

माल्यवान्। (साशङ्कम्)। ततस्ततः?

सारणः। ततश्च राघवेण निजसचिवनिर्विशेषमुपगृह्य (प) पुरस्कृत्य च प्रहितोऽस्मि।

माल्यवान्। (सहर्षम्)। किमुच्यते, यावद्द्रव्यभावी गुणो हि विजिगीषूणामुदात्तता; (फ) विशेषेण पुनरयं रामभद्रः। यतः,—

अभेदेनोपास्ते कुमुदमुदरे वा स्थितवतो
विपन्नादम्भोजादुपगतवतो वा मधुलिहः।

---

(ध) क्षणमिव इत्यत्र इव शब्दस्य स्तब्ध-शब्देनान्वयः, स्तब्धमिव निश्चलवत् जड़वत् वा, किं-कर्त्तव्यविमूढ़ इवेति भावः।

(न) संयम्य बद्धा।

(प) निर्जेति।—निजसचिवेभ्यः आत्मनः अमात्येभ्यः, सुग्रीवादिभ्य इति यावत, नास्ति विशेषः पार्थक्यं यत्र तत् यथा तथा, उपगृह्य स्वसमीपं नीत्वा, निजसचिववत् समादरेण गृहीत्वा इत्यर्थः।

(फ) यावदिति।—विजिगीषूणां जयेच्छूनां, महावीराणामिति यावत्, उदात्तता दया-त्यागादिमत्ता, दयालुता दानशीलता वेत्यर्थः, "उदात्तस्तु स्वरान्तरे। दया-त्यागादिसम्पन्ने" इति मेदिनी; यद्वा—उदात्तता महत्त्वम्, "उदात्तो दातृ-महतोः" इति हैमः; गुणः यावद्द्रव्यभावी यावत् यत्कालपर्य्यन्तं, द्रव्यं गुणस्य आश्रयः, भवति वर्त्तते इति तथाभूतः, आश्रयस्य आ-जन्मभावीत्यर्थः, यावदेव द्रव्यं गुणस्य तत्परिमित इति भावः, "द्रव्यं भव्ये गुणाश्रये" इत्यमरः।

अभेदेनेति।—कुमुदं कैरवम्, उदरे स्वाभ्यन्तरे, स्थितवतः स्थिताम् वा, विपन्नात् [illegible], अम्भोजात् पद्मात्, उपगतवतो वा उपगताम् वा, मधुलिहः भ्रमरान्, अभेदेन अविशेषेण, समभावेनेत्यर्थः, उपास्ते परिचरति, आश्रयं ददातीत्यर्थः,

अपर्य्याप्तः कोऽपि स्व-परपरिचर्य्यापरिचय-
प्रबन्धः साधूनामयमनभिसन्धानमधुरः ॥ ६ ॥

अथ शुकः किमासीत् ? (ब)

सारणः। अहमपि न जानामि।

माल्यवान्। (विमृश्य)। वत्सविभीषणस्य रामोपश्लेषेण स्वकुल्यं व्यसनमिति प्रमुग्धोऽस्मि। (भ)

सारणः। आर्य्य ! तथा धर्मवृत्तिरार्य्यसन्तानश्च कुमारः (म) कथं ज्यायांसं भ्रातरमवधूय प्रतिपक्षवर्त्ती (य) संवृत्तः ?

माल्यवान्। वत्स ! दशग्रीवं पृच्छ। (निःश्वस्य)। अथवा दैवम्। (र)

---

साधूनां महताम्, अनभिसन्धानमधुरः अनभिसन्धानेन कपटताविरहितेन, उद्देश्यशून्येन वा, उपकारानुपकारपर्य्यालोचनविरहेण इति यावत्, अकृत्रिमेण हेतुनेति भावः, मधुरः मनोहरः, कोऽपि वचनातीत इत्यर्थः, अयम् एषः, रामभद्रे परिदृश्यमान इति भावः, स्व-परपरिचर्य्यापरिचयप्रबन्धः आत्म-पराभेदपरिचयानुसरणमित्यर्थः, अपर्य्याप्तः समधिक इत्यर्थः, यद्वा—अपर्य्याप्तः पर्य्याप्तः न, अधिको नेत्यर्थः, यतः साधूनामयं प्रबन्धः स्वाभाविक एवेति भावः, यद्वा—साधूनामनभिसन्धानमधुरः अत एव अपर्य्याप्तः नास्ति पर्य्याप्तः यस्मात् तथाभूतः अतीव पर्य्याप्तः, अपरिमित इत्यर्थः, अयं स्व पर-परिचर्य्यापरिचयप्रबन्धः कोऽपि वर्णनातीत इत्यर्थः, वाचा प्रकाशायोग्य इति यावत्, भवतीति शेषः, अयं रामभद्रः पुनः विशेषेण एवं-गुणसम्पन्न इति गद्यस्थवाक्यमाकृष्य अन्वयः कार्य्यः। शिखरिणी वृत्तम् ॥ ६ ॥

(ब) शुकः सारणेन सह प्रेरितः अपरश्चरः। किं कथम्, आसीत् ? अवर्त्तत ? इत्यर्थः, यद्वा—किम् आसीत् ? अकरोदित्यर्थः; यद्वा—आसीत् इत्यत्र तत्र इति शेषः, तत्रैव किमासीत् ? इत्यर्थः।

(भ) रामोपश्लेषेण रामाश्रयेण हेतुना। स्वकुल्यं निजकुलसम्बन्धीत्यर्थः। व्यसनं विपत्। प्रमुग्धोऽस्मि विमूढोऽस्मि, कर्त्तव्याकर्त्तव्यनिर्द्धारणाक्षमोऽस्मीत्यर्थः।

(म) धर्मवृत्तिः धर्मनिष्ठः। आर्य्यसन्तानः महाकुलोद्भवः, "महाकुलकुलीनार्य्य-सभ्यसज्जनसाधवः" इत्यमरः। कुमारः विभीषणः।

(य) ज्यायांसं ज्येष्ठम्। अवधूय परित्यज्य। प्रतिपक्षवर्त्ती शत्रुपक्षाश्रयी।

(र) 'दशग्रीवं पृच्छ' इत्युक्त्या माल्यवत एवमभिप्रायो गम्यते यत्, रावणस्यैवावि-

सारणः। आर्य्य ! यदि श्रवणार्होऽस्मि तदा निवेदय।

माल्यवान्। वत्स ! केसरिकलत्रसम्भवेन प्रभञ्जनसूनुना (ल) विलुण्ठितामशोकवनिकामवलोक्य राजा तवायं (व) विभीषण-मवोचत्, यथा—"वत्स ! पश्य, मनुष्यपोतद्वयावष्टम्भेन (श) दुरात्मना कपिकीटेन कथं विजृम्भितम्" (ष) इति।

सारणः। ततस्ततः?

माल्यवान्। ततो विभीषणः प्रणम्य व्यजिज्ञपत्, "देव !—

जातिं मानय मानुषीमभिमुखो दृष्टस्त्वया हैहयः
स्मृत्वा वालिभुजौ न साम्प्रतमवज्ञातुञ्च ते वानराः।
तत् पौलस्त्य ! महाग्निहोत्रिणमहं त्वामेतदभ्यर्थये
सीतामर्पय मुञ्च च क्रतुभुजः काराकुटुम्बीकृतान्" ॥ ७ ॥

---

ष्यकारिता विभीषणस्य प्रतिपक्षवर्त्तित्वे हेतुः, विभीषणस्य न कोऽपि दोषः। देवम् इत्यनन्तरं पृच्छेति शेषः। निर्वेदसूचिकोक्तिरियम्।

(ल) केसरीति।—केसरिणः तन्नामकवानरभेदस्य, कलत्रं भार्य्या, अञ्जने-त्यर्थः, तस्मात् सम्भवः उत्पत्तिर्यस्य तादृशेन, अञ्जनागर्भजातेन। प्रभञ्जनसूनुना वायु-पुत्रेण, हनूमता इत्यर्थः।

(व) विलुण्ठितां भग्नाम्। अशोकवनिकां हनूमता भग्नत्वात् शोचनीया-मवस्थां गतमशोकवनम्। राजा तवायमिति सोल्लुण्ठोक्तिः, रावण इत्यर्थः।

(श) मनुष्येति।—मनुष्यपोतयोः मानवार्भकयोः, राम-लक्ष्मणयोरिति यावत्, "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः; द्वयं युग्म, तस्य अवष्टम्भेन आश्रयेण, बलेनेति यावत्।

(ष) कपिकीटेन कपिषु कीटवत् तुच्छेन, क्षुद्रवानराधमेनेत्यर्थः। विजृम्भितम् अनुष्ठितम्।

जातिमिति।—पौलस्त्य ! हे पुलस्त्यनन्दन ! मानुषीं मनुष्यसम्बन्धिनीं, जातिं जन्म, "जातिः स्त्री गोत्र-जन्मनोः" इति मेदिनी; मानय आद्रियस्व, मानुष इति बुद्ध्या मा अवजानीहि इति भाव, यतः त्वया अभिमुखः सम्मुखवर्त्ती, सङ्ग्रामे इति शेषः, हैहयः हैहयदेशाधिपतिः, कार्त्तवीर्य्य इत्यर्थः, दृष्टः अवलोकितः, सम्मुखयुद्धे तस्य वीर्य्यं त्वया अनुभूतमिति भावः; तेन त्वं सङ्ग्रामे पराजित इति

वारणः। (सबहुमानाश्चर्यम्)। अहह !! "वालिभुजौ" इति ब्रुवता मातामहेन किमपि (स) स्मारितोऽस्मि। आर्य्य !—

किमाचक्षे सेतुक्षितिधरशिरःश्रेणिकषणैः

प्रकोष्ठे नीरोम्णः कपिभटभुजस्तम्भनिवहान्।

सुमेरोर्मात्सर्य्यादनतिचिरसंरूढमृदुभिः

शिरोभिर्विन्ध्यो यद्भरमपि न सोढुं परिवृढः॥ ८॥

(सावष्टम्भम्)। ततस्ततः ?

---

तात्पर्य्यम् ; वालिनः तदाख्यस्य वानरराजस्य, भुजौ बाहू, स्मृत्वा स्मरणविषयीकृत्य, ते वानराः अपि, अवज्ञातुम् अनादर्तुं, न साम्प्रतं न युक्तं, "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः ; तत् तस्मात्, नर वानरयोरुभयोरपि प्रत्यक्षीकृतविक्रमत्वेन अवज्ञाप्रदर्शनस्य अयुक्तत्वादित्यर्थः, अहं महान्तं श्रेष्ठम्, अग्निहोत्रिणम् अग्निहोत्रपरायणं, याज्ञिकमित्यर्थः, धर्मनिष्ठमिति भावः, त्वां भवन्तम्, एतत् अभ्यर्थये प्रार्थये, सीतां रामप्रियां जानकीम्, अर्पय देहि, रामाय प्रतिदेहीत्यर्थः, कारासु बन्धनागारेषु, "कारा स्यात् बन्धनालये" इत्यमरः ; कुटुम्बीकृतान् पोष्यीकृतान्, पोष्यत्वेन परिगणितानित्यर्थः, अवरुद्धानिति भावः, "कुटुम्बः पोष्यवर्गे च" इत्यमरमाला ; क्रतुभुजश्च देवांश्च, "अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः। बर्हिर्मुखाः क्रतुभुजः" इत्यमरः ; मुञ्च त्यज। शार्दूलविक्रीडितं वृत्तम्॥ ७॥

(स) अहह इत्यद्भुते, आश्चर्य्यमित्यर्थः। किमपि अनिर्वचनीयं, विस्मयकरं वस्तु इत्यर्थः।

किमिति।—सेतवे सेतुबन्धनार्थं, क्षितिधराणां पर्वतानां, शिरःश्रेणयः शृङ्गसमूहाः, तेषां तैः सह इति वा कषणैः घर्षणैः, प्रकोष्ठे कूर्पर-मणिबन्धयोर्मध्यभागे, मणिबन्धदेशे इति भावः, तत्रैव विशेषेण कषणसम्भवात्, "प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च" इति मेदिनी ; नीरोम्णः लोमरहितान्, कपिभटानां वानरवीराणां, भुजाः बाहव एव, स्तम्भनिवहाः स्तम्भसमूहाः तान्, स्तम्भोपमसुदृढविशालभुजसमूहान्, किम् आचक्षे ? किं ब्रवीमि ? कपिभटानां विस्मयजनकभुजबलप्रकटनार्थं किं दृष्टान्तं प्रदर्शयामीत्यर्थः, विन्ध्योऽपि विन्ध्यगिरिरपि सुमेरोः देवनिवासभूतस्य स्वनामप्रसिद्धस्य पर्वतस्य, मात्सर्य्यात् विद्वेषात्, सुमेरोरुच्चतादर्शनजनितादिति भावः, अनतिचिरं नातिदीर्घकालं, संरूढानि समुद्भूतानि, अत एव मृदूनि कोमलानि तैः, शिरोभिः शृङ्गैः, यद्भरं येषां वानरभटभुजस्तम्भ-

माल्यवान्। ततश्च रोषान्धतामिस्रे मज्जता राक्षसराजेन तथा चेष्टितं, यथा विपक्षोऽप्याश्रितः। (ङ)

सारणः। (सखेदमात्मगतम्)। हा देव पुलस्त्यनन्दन! कथं भवतैव वैधर्म्यदृष्टान्तेन मानतो (क) मूलोच्छेदनिमित्तान् निवर्त्तिष्यते (ख) लोकः? (साभ्यर्थनञ्च (ग))।—

अरिषड्वर्ग एवायमस्यास्तात! पदानि षट्।
तेषामेकमपि छिन्दन् खञ्जय भ्रमरीं श्रियम्॥ ९॥

---

नियतानां, भरं भारम् अपि, सोढुं वोढुं, न परिवृढः न प्रभुः, न शक्तः इत्यर्थः, "प्रभुः परिवृढोऽधिपः" इत्यमरः। पुरा सुमेरुजिगीषया विन्ध्यो वर्द्धित इति कथा पूर्वमुक्ताऽनुसन्धेया। शिखरिणी वृत्तम्॥ ८॥

(ङ) रोषेति।—रोषः क्रोध एव, अन्धतामिस्रं गाढान्धकारं तस्मिन्; "रोषान्धतमसे" इति पाठेऽपि—स एवार्थः; तत्र "ध्वान्ते गाढेऽन्धतमसम्" इत्यमरः। तथा तादृक्, चेष्टितम् आचरितम्। यथा यादृशेन चेष्टितेन। आश्रित इत्यनन्तरं कनिष्ठभ्रात्रा विभीषणेनेति शेषः।

(क) वैधर्म्येति।—विगतो धर्मः विधर्मः, तस्य भावः वैधर्म्यं विरुद्धधर्माचरणमित्यर्थः, अधर्माचरणम् इति यावत्, तेन दृष्टः परिलक्षितः, अन्तः नाशः यस्य तथाभूतेन; यद्वा—वैधर्म्यं विपरीतधर्माचरणं, तस्य दृष्टान्तेन निदर्शनेन, दृष्टान्तस्वरूपेणेत्यर्थः। मानतः अहङ्कारात्। "भवतैव" इत्यत्र "भवत एवम्" इति पाठकल्पनं सङ्गतार्थकं समीचीनञ्च।

(ख) मूलोच्छेदनिमित्तात् समूलविनाशहेतुभूतात्, मानत इत्यस्य विशेषणम्। निवर्त्तिष्यते अपयास्यति, त्वत्त इति शेषः, तव दुराचारेण सर्व एव त्वां परित्यक्ष्यतीति भावः।

(ग) साभ्यर्थनं सप्रार्थनं, रक्षोराजस्य श्रीर्यथा अचला तिष्ठति, वक्ष्यमाणश्लोकेन तथा प्रार्थयतीत्यर्थः।

अरीति।—तात! हे अनुकम्पार्ह! अल्पमतित्वात् करुणापात्र रावण! इत्यर्थः; यद्वा—तात! हे जनक! प्रतिपालकप्रभुत्वात् पितृतुल्य! इत्यर्थः, "तातोऽनुकम्प्ये जनके" इति मेदिनी; अस्याः वक्ष्यमाणायाः भ्रमरीरूपायाः श्रियाः इति भावः, अयं सुप्रसिद्धः, त्वयि परिदृश्यमानो वा, अरिषड्वर्ग एव अरीणां शत्रूणाम्, अन्तःशत्रूणां कामादीनामिति यावत्, षड्वर्गः एव षण्णां समुदायः एव, काम-क्रोध-

(मन्त्रिणं प्रति)। आर्य्य! यत् सत्यं, राघवेण व्यूढां वानर-वरूथिनीमुत्प्रेक्ष्य शङ्के, (घ) विभीषण एव यदस्माकं कुल-तन्तुरवशिष्यते। (ङ)

माल्यवान्। (निःश्वस्य)। वत्स! द्वयोरपि कटकयोः तत्त्वज्ञो-ऽसि, (च) तत् किमिदानीमुचितम् ?

सारणः। आर्य्य! नन्वेवं ब्रवीमि, राजपुत्रोऽङ्गदोऽसौ बालो नवबुद्धिः आमपात्रमिव यद्यदाधीयते, तत्तदाचुचूषति (छ)।

माल्यवान्। ततः किम् ?

सारणः। ततश्च "भवतः पितृवैरिणौ राम-सुग्रीवौ व्यापाद्य (ज) किष्किन्धायां भवन्तमभिषिच्य वालिसौहृदस्यात्मान-

---

लोभ-मोह-मद-मात्सर्य्यरूप एव इति यावत्, षट् षट्सङ्ख्याकानि, पदानि चरणाः, तेषां मध्ये पदानाम्, एकम् अन्यतममपि, पदमिति शेषः, छिन्दन् खण्डयन्, भ्रमरीं भ्रमरीरूपां, भ्रमणशीलां वा, चञ्चलामिति यावत्, श्रियं लक्ष्मीं, खञ्जय खञ्जां कुरु, येन सा चलितुं न समर्था भवेदिति भावः ; षड्वर्गीयप्रथमस्य कामस्य छेदने सीताया राघवे समर्पणं, तेन च लक्ष्मीः स्थिरा भविष्यतीत्याशयः। अनुष्टुप् वृत्तम् ॥ ९ ॥

(घ) व्यूढां विन्यस्तां, चक्रव्यूहाद्याकारेण सज्जितामित्यर्थः, "व्यूढः संहतविन्यस्त-पृथुलेष्वभिधेयवत्" इति मेदिनी। वानरवरूथिनीं कपिसैन्यं, "वरूथिनी बलं सैन्यम्" इत्यमरः। उत्प्रेक्ष्य दृष्ट्वा। शङ्के सम्भावयामीत्यर्थः।

(ङ) कुलतन्तुः वंशसूत्रम् ; यद्वा—तन्तुरपत्यं, तथा च, कुलधरसन्तान इति भावः। अवशिष्यते अवशिष्टः स्थास्यतीत्यर्थः।

(च) कटकयोः सैन्ययोः, "कटकस्त्वद्रिनितम्बे बाहुभूषणे। सेनायां राज-धान्याञ्च" इति हैमः। तत्त्वज्ञोऽसि मर्मज्ञोऽसि, प्रकृतबलाबलाभिज्ञोऽसि इति यावत्।

(छ) नवबुद्धिः अपरिणतबुद्धिरित्यर्थः। आमपात्रमिव आमम् अपक्वं, पात्रं शरावादि भाजनं, तदिव। आधीयते आरोप्यते, स्थाप्यते इत्यर्थः, स्वस्य उपरीति भावः। आचुचूषति सम्यक्तया शुष्यति, अतिशयेन पिबतीत्यर्थः ; यद्वा—यत् यत्, रेखादिकमिति शेषः, आधीयते स्थाप्यते, अङ्क्यते इति यावत्। आचुचूषति सर्वथा शोषयति, शोषणेन अभ्यन्तरं नयतीति यावत्, कदाऽपि अनपनेयतया स्वाङ्गे धारय-तीति भावः, तस्मै यदुच्यते, अपरिणतमतित्वात् तत् भद्रमभद्रं वा न विविच्य गृह्णातीति निष्कर्षः। "नवे भाजने लग्नः संस्कारो नान्यथा भवेत्" इति कविवचनमत्र द्रष्टव्यम्।

मनृणमिच्छामः" इति गूढप्रणिधिमुखेन (झ) दशकन्धरादेश-मभिधाय सुग्रीवशिविरादपवाह्यते; तस्मिन्नपक्रान्ते (ञ) तु स्वगृहमहिभयोपजापजर्जरमवेक्षमाणो (ट) वानरपतिः शिथिलितरामप्रयोजनः (ठ) स्यात्।

माल्यवान्। (सस्मितम्)। वत्स! साधु समर्थयसे (ड)। किं पुनः स्वयमङ्गदो गर्भरूपोऽभिनवोज्ज्वलयौवराज्यसुखोप-लालितो दुरपवाह (ढ) एव। ये चास्य माता-पितृ-बन्धवः, ते सुग्रीवस्यापि सम्बन्धिनः कथमेनमुत्तिष्ठमानमनु-जानीयुः? (ण)

---

(ज) व्यापाद्य विनाश्य।

(झ) वालिसौहृदस्य वालिना सह मित्रतायाः। अनृणं विमुक्तऋणम्, ऋण-शून्यमित्यर्थः। गूढप्रणिधिमुखेन गुप्तचरमुखेन, "प्रणिधिर्नाऽर्थने चरे" इति मेदिनी।

(ञ) दशकन्धरादेशं दशकन्धरस्य दशग्रीवस्य, रावणस्येत्यर्थः, आदेशम् आज्ञाम्, अभिप्रायमिति यावत्। अपवाह्यते बहिष्क्रियते, अङ्गद इति शेषः। तस्मिन् अङ्गदे। अपक्रान्ते अपवाहिते सति, सुग्रीवपक्षं परित्याजिते सतीत्यर्थः।

(ट) अहिभयं स्वपक्षप्रभव भयं, "महीभुजामहिभयं स्वपक्षप्रभवं भयम्" इत्यमरः, तथा उपजापः भेदः, अन्योऽन्यविच्छेदकरणमित्यर्थः, "समौ भेदोपजापौ" इत्यमरः; ताभ्यां जर्जरम् आकुलम्। अवेक्षमाणः पश्यन्।

(ठ) वानरपतिः सुग्रीवः। शिथिलितेति।—शिथिलितम् अनादृतं, परित्यक्त-मित्यर्थः, रामस्य प्रयोजनं कार्य्यं, सीतोद्धाररूपमिति भावः येन तथाभूतः।

(ड) साधु सम्यक्। समर्थयसे सम्प्रधारयसि, स्वोक्तिसमर्थनाय इदमेव कर्त्तव्य-मिति युक्तिं प्रदर्शयसीत्यर्थ, मन्त्रयसीति भावः, "सम्प्रधारणा तु समर्थनम्" इत्यमरः।

(ढ) किं पुनः किन्तु। गर्भरूपः बालकः। अभिनवेति।—अभिनवेन नूतनेन, नातिचिरलब्धेनेति यावत्, उज्ज्वलेन दीप्तिमता, सम्मानवतेति भावः, यौवराज्येन युवराजपदलाभेन, यत् सुखम् आनन्दः, तेन उपलालितः वर्द्धितः, अनुभूतयौवराज्याभि-षेकानन्द इत्यर्थः। दुरपवाहः दुःखेनापसारणीयः, सुग्रीवकटकात् तस्य बहिष्कारणं दुष्करमिति भावः।

(ण) माता-पितृबन्धवः मातुः पितुश्च स्वजनाः। सम्बन्धिनः सम्पर्कीयाः,

सारणः। यथा दृष्टमार्य्येण ; किन्तु, कालापेक्षो दण्डनीति-प्रयोगः (त); तथा कथमपि (थ) महोत्साहैः कपिभिः सेतुकर्मणि प्रवृत्तं, यथैतावता कालेन सन्तीर्णमहार्णवो रामः सुवेलशैलोपत्यकामध्यास्ते (द)।

माल्यवान्। (सविमर्शाद्भुतम्)। (ध) अहह !—

असौ मनुष्यमात्रेण लङ्घितो यदि सागरः।
प्रतापो दशकण्ठस्य भुवनैरपि लङ्घितः ॥ १० ॥

(अपिदं च)।—

---

लङ्घनाः इति यावत्। एतम् अङ्गदम्। वर्त्तमानं सुग्रीवेण विरोधाय यतमान-मित्यर्थः। अनुजानीयुः ? अनुमन्येरन् ? न कथमपि अनुजानीयुरिति भावः।

(त) यथा येन प्रकारेण, यादृक् इत्यर्थः, दृष्टम् आलोचितमित्यर्थः, तत् सत्य-मिति शेषः। यद्वा—यथा-शब्दः प्रशंसावाचकमव्ययम् ; "यथा तुल्यार्थ-मानयोः। प्रशंसायाम्" इति मेदिनी ; आर्य्येण यथा साधु, समीचीनमित्यर्थः, दृष्टम्। कालापेक्षी कालं समयम् अपेक्षते इति तथोक्तः। दण्डनीतिप्रयोगः दण्डार्थं विपक्षदमनार्थं, नीतिः षाड्गुण्यविधानं, तस्याः प्रयोगः यथायथं व्यवहारः।

(थ) कथमपि सम्भावयामीत्यर्थः, 'कथम्' इति अव्ययशब्दः सम्भावनार्थकः सम्भ्रमार्थको वा ; "कथं हर्षे च गर्हायां प्रकारार्थे च सम्भ्रमे। प्रश्ने सम्भावनायाञ्च" इति मेदिनी।

(द) सन्तीर्णः समुत्तीर्णः, उल्लङ्घित इति यावत्, महार्णवः महासागरः येन तादृशः। सुवेलेति।—सुवेलस्य तदाख्यस्य, लङ्कासमीपवर्त्तिन इति भावः, शैलस्य पर्वतस्य, उपत्यकाम् आसन्नभूमिम्, "उपत्यकाऽद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका" इत्यमरः। अध्यास्ते अधितिष्ठति।

(ध) सविमर्शाद्भुतं विमर्शः वितर्कः, अद्भुतः विस्मयः, ताभ्यां सह वर्त्तमानं यथा तथा सवितर्कं सविस्मयञ्च।

असाविति।—मनुष्यमात्रेण सामान्येन मनुष्येणेत्यर्थः, रामेणेति शेषः, असौ दुर्लङ्घ्यत्वेन प्रसिद्धः अयं, सागरः समुद्रः, यदि लङ्घितः उत्तीर्णः, तदा दशकण्ठस्य दशग्रीवस्य रावणस्य, प्रतापोऽपि प्रभावोऽपि, भुवनैः लोकत्रयैः, त्रिलोकवासिभिः सर्वैरित्यर्थः, लङ्घितः अतिक्रान्तः, अवज्ञातः इति भावः, इदानीं रावणस्य प्रभुत्वं कैरपि न स्वीक्रियेत इति निष्कर्षः। अनुष्टुप् वृत्तम् ॥ १० ॥

पौलस्त्यस्य सुरासुरेन्द्रशिरसां निर्माल्यमङ्घ्रिद्वयं
कुर्वाणेन रघूद्वहेन घटिते सेतौ निधावम्भसाम् ।
अद्योन्मुद्रयति स्वहस्तविधृतं राजीवमिद्धो रविः
प्रत्यावृत्तरसस्य चामृतभुजामिन्दोः स्वदन्ते कलाः ॥११॥

(विमृश्य)। वत्स सारण! वालिवधविशुद्धपार्ष्णिः (न) अनेकवानरानीकनायकेन साक्षादुपकृतेन (प) सख्या सुग्रीवेण

---

पौलस्त्यस्येति।—पौलस्त्यस्य रावणस्य, अङ्घ्रिद्वयं चरणयुगल, सुरासुरेन्द्राणां देव-दानवाधिपतीनां, शिरांसि मस्तकानि,तेषां, निर्माल्यं निर्माल्यस्वरूपं, देवानामुच्छिष्ट-वत् त्याज्यमिति यावत्, निर्माल्यं यथा देवैस्त्यज्यते तद्वत् त्याज्यम् इति भावः, यद्वा— निर्माल्यं शिवनिर्माल्यम्, "अग्राह्यं शिवनिर्माल्यम्" इति वचनात् शिवनिर्माल्यं यथा लोकानामग्राह्यं, तद्वदग्राह्यमित्यर्थः, कुर्वाणेन करिष्यतेति भावः, भविष्यत्सामीप्य प्रयोगोऽयम्; देवा वा असुरा वा केऽपि अतःपरं रावणचरणयोः मूर्द्धानं न स्थापयिष्य-न्तीति निष्कर्षः, रघूद्वहेन रघुश्रेष्ठेन, रामेणेत्यर्थः, अम्भसां निधौ सागरे, सेतौ आलौ, घटिते बद्धे सति, अद्य अस्मादिनादारभ्य इत्यर्थः, रविः सूर्य्यः, इद्धः दीप्तः सन्, रावण-भयाभावात् प्रहृष्टतेजाः सन् इत्यर्थः, स्वहस्तविधृतं निजकरग्टहीतं, राजीवं पद्मम्, उन्मुद्रयति विकाशयति, अमृतभुजां सुधापायिनां, देवानामित्यर्थः, प्रत्यावृत्तः पुनरा-वृत्तः, पूर्वं रावणभयेन भीतभीततया अवस्थानात् द्रव्याणां रसपरिज्ञानशक्तिलोपादिति भावः, दृश्यते च लोके, भय-शोकाद्यभिभूतानां रसबोधशक्तेरभाव इति, रसः स्वादः यस्य तथाभूतस्य, इन्दोः सुधांशोः, अमृतकिरणवर्षिणश्चन्द्रस्य इति भावः, कलाः अवयवाः, अमृतकिरणानीति यावत्, स्वदन्ते रोचन्ते च; पूर्वं रावणभयात् सूर्य्यस्य सम्यक्प्रकाशो देवानाञ्च चान्द्रीयसुधापानं नासीत्, इदानीन्तु तेषामकुतोभयं स्वस्वव्यापाराधिकारो भवतीति भावः। अत्रामृतभुजामिति रुच्यर्थयोगे चतुर्थ्यां विहितायामपि सम्बन्धविवक्षया षष्ठी। शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

(न) वालीति।—वालिनः वालिसंज्ञकस्य किष्किन्धाधीश्वरस्य, वधेन नाशेन, विशुद्धः निर्विघ्न इत्यर्थः, विरहित इति यावत्, पार्ष्णिः सैन्यानां पृष्ठदेशः, पृष्ठदेशादाक्रमणकारी शत्रुरित्यर्थः, यस्य तथोक्तस्य, वालिनैव तस्य पार्ष्णिग्राहेण शाल्यत्वं स्थितम्, इदानीन्तु तद्विरहात् पृष्ठशत्रुहीनस्येति भावः; "पार्ष्णिः स्यादुन्मद-स्त्रियाम्। स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च ॥" इति मेदिनी।

(प) अनेकेति।—अनेकेषां बहूनां, वानरानीकानां कपिसैन्यानां, नायकेन प्रभुणा। साक्षात् स्वयम्। उपकृतेन प्राप्तोपकारेण, वालिनं हत्वा राज्यप्रदानादिति भावः

महापक्षस्य हनूमच्चरितज्ञातास्मदीयवृत्तेः (फ) अयमेव सुवि-हितसकलाभियास्यत्कर्मणस्तस्याभियोगसमयः (ब)।

सारणः। आर्य्य ! अयमेवात्मद्रव्यप्रकृतिसम्पन्नो नयस्याधिष्ठानं (भ) विजिगीषुरिति प्रथमोदाहरणं दाशरथिः (म)।

माल्यवान्। (स्तम्भं नाटयित्वा) (य)।—

यत्तस्मिन्निहतेऽपि वालिनि वयं क्षुद्रास्तथैवास्महे
तत् युक्तं भुजयोर्बलादपि बलं दुर्गस्य दुर्निग्रहम्।

---

(फ) महापक्षस्य बहुसहायस्य, "पक्षः सहायेऽपि" इत्यमरः। हनूमदिति।—हनूमतः मारुतेः, चरितेन आचरणेन, लङ्कादाहादिना कार्य्येणेत्यर्थः, ज्ञाता विदिता, अस्मदीया अस्मत्सम्बन्धिनी, वृत्तिः विवरणम्, आभ्यन्तरीणव्यापारः इत्यर्थः, सामर्थ्यमिति यावत् येन तथाभूतस्य।

(ब) सुविहितेति।—सुष्ठु विहितम् अनुष्ठितं, सकलं समस्तम्, अभियास्यतः विपक्षाभिमुखं गमिष्यतः, विजिगीषोरिति यावत्, कर्म सैन्यसङ्ग्रहादिव्यापारः येन तथोक्तस्य। तस्य रामस्य। अभियोगसमयः आक्रमणकालः।

(भ) आत्मेति।—आत्मनः स्वस्य, द्रव्याणि धनानि, सम्पदः इत्यर्थः, "द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु" इत्यमरः, "बाहुश्रुत्यं तपस्त्यागः श्रद्धा यज्ञ-क्रिया क्षमा। भावशुद्धिर्दया सत्यं नियमश्चात्मसम्पदः" इति नीतिशास्त्रोक्ता इति यावत्, प्रकृतयः अमात्यादीनि राज्याङ्गानि, "अमात्य राष्ट्र-दुर्गाणि कोषो दण्डश्च पञ्चमः। एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः॥ एताः पञ्च तथा मित्रं सप्तमः पृथिवी-पतिः। सप्तप्रकृतिकं राज्यमित्युवाच बृहस्पतिः॥" इति नीतिशास्त्रोक्ताः, ताभिः सम्पन्नः युक्तः। नयस्य नीतेः, अधिष्ठानम् आश्रयः, नीतिशास्त्रानुसारेण व्यवहर्त्ता इत्यर्थः।

(म) प्रथमोदाहरणम् आद्यो दृष्टान्तः, विजिगीषुणा यादृशेन भवितव्यं, तस्य प्रथमो दृष्टान्तः इत्यर्थः, रामसदृशः आत्मद्रव्य-प्रकृतिसम्पन्नः नीतिपरायणो विजि-गीषुः इतः पूर्वं कुत्रापि न दृष्टः, अत एव प्रथमोदाहरणमिति भावः। दाशरथिः रामः।

(य) स्तम्भं नाटयित्वा सम्यक् निश्चलं स्थित्वेत्यर्थः।

यदिति।—तस्मिन् रावणविजेतरि इति भावः, वालिनि किष्किन्धापतौ, निहतेऽपि विनष्टेऽपि, रामशरेणेति शेषः, क्षुद्राः अल्पाः, वालिनमपेक्ष्य बलहीनाः इत्यर्थः, निर्वीर्या इति भावः, "त्रिषु क्रूरेऽधमेऽल्पेऽपि क्षुद्रः" इत्यमरः, वयं निशाचराः, सीतापहारि रावणपक्षा इति भावः, यत् तथैव पूर्ववदेव, सीताहरण-

मर्त्त्येनापि जगद्विलक्षणगुणग्रामेण रामेण तु
द्वे गव्यूतिशते हि नाम कियती तीर्णोऽयमर्णोनिधिः ॥ १२ ॥

( दीर्घमुष्णं च निःश्वस्य आकाशे )—

तर्षार्त्तिव्यतिलेलिहानरसनारम्यैर्मुखैरष्टभिः
क्रन्दन्तौ क्रमशः पपौ दशमुखो वत्सस्य यस्याः स्तनौ ।
वत्से कैकसि ! विश्ववीरजननीसीमन्तमुक्तामणिः
सा तादृग्भवती कथं गुणवतः पुत्रस्य किं द्रक्ष्यति ? ॥१३॥

---

वालिनिधनात् पूर्वं यथा तथैव इत्यर्थः, आस्महे उपविशामः, निश्चेष्टाः सुस्थिताः स्म इत्यर्थः, तत् युक्तम् उचितं, तवास्माकं किमपि स्खलनं जातमिति न मन्ये इति भावः, यतः भुजयोः बाह्वोः, बलादपि सामर्थ्यादपि, दुर्गस्य कोट्टस्य, दुर्गमस्थानस्य इत्यर्थः, बलं सामर्थ्यं, दुर्निवहं दुःखेन निवहोतुं शक्यं, दुरतिक्रममिति यावत्, अस्माकं समुद्ररूपं यत् दुर्गमस्ति तत् रामस्य बाहुबलेन नातिक्रम्यते इति बुद्ध्या अस्माभिः सुस्थितमिति भावः ; तु किन्तु, मर्त्त्येनापि मनुष्येणापि सता, जगतां भुवनानां, जगत्सु वा भुवनेषु, विलक्षणः असाधारणः, गुणग्रामः गुणसमूहः यस्य तादृशेन, रामेण दाशरथिना, द्वे द्विराहत्ते, गव्यूतिशते क्रोशयुगशते, चतुःशतक्रोशपरिमिते इत्यर्थः, शतयोजनविस्तृते इति यावत्, "गव्यूतिः स्त्री क्रोशयुगम्" इत्यमरः, हिरवधारणे, कियती किम्परिमाणे, नाम सम्भावनायाम्, अल्पे इत्यर्थः, गोष्पदपरिमाणमिव अत्यल्पं मत्वा इति भावः, अयम् एषः, दुर्लङ्घ्यत्वेन प्रसिद्ध इति भावः, अर्णोनिधिः अम्भोनिधिः, शतयोजनपरिमितः समुद्र इति यावत्, "अम्भोऽर्णस्तोयपानीय—" इत्यमरः ; तीर्णः लङ्घितः, सागरदुर्गमस्मान् रक्षतीति प्रत्याशाऽपि अस्माकं विनष्टेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥

तर्षेति ।—वत्से कैकसि ! हे कल्याणि रावणमातः ! ; कैकसी खलु सुमालिनः कन्याभेदः, तथा च रामायणे—"राका पुष्पोत्कटा चैव कैकसी च शुचिस्मिता ॥ कुम्भीनसी च इत्येताः सुमालेः प्रसवाः स्मृताः ॥" इति, कैकस्याः कथा च रामायणे उत्तरकाण्डे द्रष्टव्या ; "निकषा" इति च तस्या नामान्तरम् ; वत्सस्य रावणस्य, दशानां दशसङ्ख्यकानां, मुखानां वदनानां समाहारः दशमुखी मुखदशकं, तर्षः पिपासया, "उदन्या तु पिपासा तृट् तर्षः" इत्यमरः ; या आर्त्तिः पीडा, तया व्यतिलेलिहानाः पुनः पुनरास्वादयन्त्यः, आस्वादलोलुपा इत्यर्थः, या रसनाः जिह्वाः, अष्टसङ्ख्यका इति भावः, ताभिः रम्यैः मनोज्ञैः, अष्टभिः अष्टसङ्ख्यकैः, मुखैः

भारत:। शान्तं शान्तम्; प्रतिहतममङ्गलम्; (२) अमर्षशङ्कीनि बन्धुहृदयानि भवन्ति। किं च आर्य्य!—

भुजनिवहविहङ्गिकाऽवलम्बी
निविड़गुणौघधृतोऽपि राज्यभारः।
स्वयमपि दशकन्धरे धुरीणे
स्खलति यदि स्खलनं तदाऽस्य रूपम्॥ १४॥

---

आनने, क्रन्दन्तौ रुदन्तौ सतौ, मातुः स्तनद्वयमात्रविशिष्टत्वात् द्वाभ्यां मुखाभ्यां ततस्तन्यपानकाले अपरेषामष्टानां स्तन्यालाभात् तत्पानलालसया क्रन्दन बाहुल्यम्; यस्याः भवत्याः, स्तनौ कुचौ, क्रमशः क्रमानुसारेण, द्वौ द्वौ कृत्वेति भावः, पपौ पीतवन्तौ, द्वाभ्या मुखाभ्यां स्तनद्वय पीयते, अपराणि षष्टौ रुदन्तीति भावः; विश्वेषां निखिलानां, वीराणां शूराणां, या जनन्यः मातरः, तासां सीमन्तमुक्तामणिः सीमन्तेषु विन्यस्तकेशेषु, याः मुक्ताः मौक्तिकानि, तासां मणिः रत्नं, रत्नस्वरूपिणीत्यर्थः, श्रेष्ठमुक्तास्वरूपिणीति यावत, सर्वासां शिरोभूषणभूतत्वात् ताभ्यः श्रेष्ठेति भावः, ताहृशी तथाविधा, सा वीरप्रसविनीत्यर्थः, भवती गुणवतः शौर्य्यादिगुणयुक्तस्य, पुत्रस्य तनयस्य रावणस्य, कथं केन प्रकारेण, किं कं परिणामनिति यावत, विनाशमिति भावः, द्रक्ष्यति? अवलोकयिष्यति? अमङ्गलत्वात् विनाशमितिपदस्थाने किं-पदं प्रयुक्तमिति बोध्यम्। शार्दूलविक्रीडितं वृत्तम्॥ १३॥

(२) शान्तं शान्तं निवृत्तं निवृत्तम, एताहृक् वचनं न वाच्यमित्यर्थः। प्रतिहतम् अस्माभिर्विनाशितं, यद्वा—प्रतिहतं विनष्टं, भवत्विति शेषः, दूरीभवतु इत्यर्थः।

भुजेति।—भुजनिवहः बाहुसमूह एव, विंशतिहस्ता एवेत्यर्थः, विहङ्गिका भारयष्टिः, "बाँक" इति प्रसिद्धः स्वशिक्यलगुड इत्यर्थः, "अथ विहङ्गिका भारयष्टिः" इत्यमरः; तस्याम् अवलम्बते धारयतीत्यर्थः, वहतीति यावत्, इति तथोक्तः, निविड़ेन घनेन, प्रभूतेनेति यावत्, दृढ़ेन च, गुणौघेन शौर्य्यादिगुणसमूहेन, रज्जुखण्डेन च, शिक्येनेति यावत्, धृतोऽपि अवलम्बितोऽपि, राज्यभारः राज्यपालनरूपं गुरुभारं वस्तु इत्यर्थः, तथा स्वयं साक्षादेव इत्यर्थः, दशकन्धरे दशग्रीवे रावणे इत्यर्थः, धुरीणे धूर्वहेऽपि, भारवाहिनि सत्यपीत्यर्थः, "धूर्वहे धुर्य्यधौरेय-धुरीणाः सधुरन्धराः" इत्यमरः; स्खलति च्यवति, भ्रश्यतीत्यर्थः, यदि तदा अस्य राज्यभारस्य, स्खलनं च्यवनमेव, रूपं स्वरूपं, स्वभाव इत्यर्थः, प्रकृतिरिति यावत्, "रूपं स्वभावे सौन्दर्य्ये" इति मेदिनी;

माल्यवान्। (अश्रूणि सम्भयन्)। वत्स!—

विद्वानपावृत्तमिव स्वभाग्यं
न तावदात्मानमहं ब्रवीमि।
महामुनेर्विश्रवसस्तपोभि-
र्निवापबीजं यदि नः कुलं स्यात्॥ १५॥

(प्रविश्य पटीक्षेपेण (ख) सम्भ्रान्तः शुकः)।

शुकः।—

प्रहस्तधूम्राक्षमहोदरादीन्
व्यापाद्य सेनाधिपतीनमात्यान्।
स एष लङ्कामुपरुध्य रामः
शाखामृगैरर्णवमातनोति॥ १६॥

---

एकस्कन्धरात् भारस्खलनं सम्भवति, दशस्कन्धरात्तु तस्य अशक्यत्वेऽपि स्खलनमेव तस्य स्वभावः, तस्य स्खलननिरोधो दुष्कर एवेति भावः। पुष्पिताग्रा वृत्तम्॥ १४॥

विद्वानिति।—स्वभाग्यं निजशुभादृष्टम्, अपावृत्तमिव अपगतमिव, विद्वान् जानन्, अहं तावत् आत्मानं स्वं, न ब्रवीमि न कथयामि, इदानीमस्माकं सौभाग्यसूर्य्यास्तगमनात् कुलरक्षणं न सम्भवतीति जानन्नपि वक्ष्यमाणप्रकारेण आत्मानं न प्रबोधयामीति भावः, परन्तु महामुनेः मुनिश्रेष्ठस्य, विश्रवसः रावणपितुः पुलस्त्यतनयस्य, तपोभिः तपश्चर्य्याभिः, निवापस्य पितॄन् उद्दिश्य जलाञ्जलिदानस्य, "पितृदानं निवापः स्यात्" इत्यमरः, बीजं कारणभूतं, नः अस्माकं, कुलं वंशः, यदि स्यात् तिष्ठेत्, यदि अस्माकं कुलं तिष्ठेत्, तदा तत्र महामुनेस्तपोबलमेव हेतुः, नास्माकं भाग्यबलमिति भावः, पितॄन् उद्दिश्य अस्माभिः श्रद्धया दत्तस्य अन्नपानादेर्ग्रहणे यदि तेषामिच्छा स्यात्, तदा महामुनेस्तपोबलेनैवास्माकं वंशरक्षा भवेत्, न पुनरस्माकं भाग्यबलेनेति निष्कर्षः। उपजातिवृत्तम्॥ १५॥

(ख) पटीक्षेपेण जवनिकाऽपसारणेन। "पटीक्षेपेण" इत्यत्र "अपटीक्षेपेण" इति पाठकल्पनं समीचीनं, जवनिकापातनस्य अनुल्लेखात्, सारण-माल्यवतो-रुपेक्षावस्थानात्, सम्भ्रान्तस्य पटपरिवर्त्तनादिविलम्बासहत्वाच्चेति सुधीभिर्बोद्धव्यम्; एवञ्च अपटीक्षेपेण पटपरिवर्त्तनमकृत्वैव, सहसा इत्यर्थः।

प्रहस्तेति।—स राक्षसान्तकत्वेन प्रसिद्धः, एष लङ्कावरोधकारी अयं, रामः दाशरथिः, लङ्कां लङ्कापुरीम्, उपरुध्य संरुध्य, प्रहस्तादीन् सेनाधिपतीन् सेना-

माल्यवान्। (सविषादम्)। पुरस्तादेव दृष्टमिदम् (व) अस्माभिः। देश-कालव्यवहितस्यापि प्रमेयग्रामस्य यथामुखीन-मादर्शतलं हि स्थविरबुद्धिः (श)। (विमृश्य आकाशे)। साधु रामभद्र! साधु; विजिगीषोरदीर्घसूत्रता (ष) हि कार्य्य-सिद्धेरवश्यम्भावः (स)।

सारणः। सखे शुक! अथ किं-विधानो यातुधानेश्वरः? (ह)

शुकः। (सखेद-स्मितम्)। सखे! किं तस्य विधानम् (क)—

श्रुत्वा दाशरथी सुवेलकटके साटोपमर्द्धे धनु-
ष्टङ्कारैः परिपूरयन्ति ककुभः प्रोञ्छन्ति कौक्षेयकान्।
अभ्यस्यन्ति तथैव चित्रफलके लङ्कापतेस्तत् पुन-
र्वैदेहीकुचपत्रवल्लिरचनाचातुर्य्यमर्द्धे कराः॥ १७॥

---

माल्यवान्, तथा अमात्यान् सचिवान्, व्यापाद्य निहत्य, शाखामृगैः वानरैः, अर्णवं समुद्रम्, आतनोति विस्तारयति, शाखामृगरूपसमुद्रेण लङ्कामाक्रामतीति भावः। उपजातिवृत्तम्॥ १६॥

(व) पुरस्तादेव पूर्वमेव। दृष्टं प्रत्यक्षीकृतं, मानसनेत्रेणेति भावः। इदं लङ्काऽवरोध-राक्षसध्वंसादिरूपं कर्म इत्यर्थः।

(श) देशकालेति।—देशेन कालेन च व्यवहितस्य अन्तरितस्य, चक्षुषोऽगोचरे देशान्तरे कालान्तरे वा अनुष्ठितस्यापीत्यर्थः, प्रमेयग्रामस्य ज्ञेयवस्तुनिचयस्य। यथामुखीनं मुखानुरूपमित्यर्थः, सम्मुखस्थितमिति यावत्। आदर्शतलं दर्पणतलम्। स्थविरबुद्धिः वृद्धप्रज्ञा, वृद्धा आदर्शस्थितमिव पदार्थं सर्वं बुद्ध्या पश्यन्तीति भावः।

(ष) साधु सम्यक् आचरितमित्यर्थः। अदीर्घसूत्रता क्षिप्रकारिता।

(स) अवश्यम्भावः निश्चितं कारणमिति भावः।

(ह) किं-विधानः किमाचारः। यातुधानेश्वरः राक्षसपतिः, "राक्षसः कौणपः क्रव्यात्···। यातुधानः पुण्यजनः" इत्यमरः।

(क) तस्य यातुधानेश्वरस्य। विधानम् आचरणम्।

श्रुत्वेति।—लङ्कापतेः रावणस्य, अर्द्धे विंशतेरर्द्धपरिमिताः इत्यर्थः, कराः हस्ताः, दशहस्ता इत्यर्थः, सुवेलस्य तदाख्यपर्वतस्य, कटके नितम्बे, "कटकोऽस्त्री नितम्बोऽद्रेः" इत्यमरः; दाशरथी राम-लक्ष्मणौ, समागतौ इति शेषः, श्रुत्वा आकर्ण्य, साटोपं

माल्यवान्। (निःश्वस्य)। हा वत्स रावण! कथमद्यापि सैव हृदयपरिस्पन्दमुद्रा !! (ख)। (शुकं प्रति)। वत्स! अथ गोपुर-गौल्मिकबलाध्यक्षेण (ग) वत्सेन नरान्तकेन किं प्रतिपन्नम् ? (घ)

शुकः। (निःश्वस्य)। मातामह! कृतैव कुमारेण द्वारमर्य्यादा, (ङ) परमङ्गदेन सोऽपि—(इत्यर्द्धोक्ते सास्रमधोमुखस्तिष्ठति)।

माल्यवान्। हा वत्स दशग्रीवनन्दन! कथमिदं तव द्रष्टुमेतावन्तं कालमस्माकमायुः !! (च)

---

ससम्भ्रम, सत्वरमित्यर्थः, साटोपं सगर्वं वा, धनुष्टङ्कारैः धनुर्निनादैः, ककुभः दिशः, परिपूरयन्ति व्याप्नुवन्ति, तथा कौक्षेयकान् करवालान्, "कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्" इत्यमरः, प्रोञ्छन्ति मार्जन्ति, तेजयन्तीत्यर्थः, अन्ये अर्द्धं अपरे च अर्द्धं, कराः पुनः किन्तु, तथैव पूर्ववदेव, लङ्काऽवरोधादेः पूर्वं यथा तद्वदेवेत्यर्थः, चित्रफलके आलेख्यपटे, वैदेह्याः सीतायाः, कुचयोः स्तनयोः, या पत्रवल्लिः पत्रावलीतिलकविशेष इत्यर्थः, तस्याः रचना लिखनं, तत्र चातुर्य्यं नैपुण्यमित्यर्थः, अभ्यस्यन्ति शिक्षन्ति, पुनः पुनः करणेन अभ्यासं कुर्वन्तीत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ १७ ॥

(ख) हृदयेति।—हृदयस्य चेतसः, परिस्पन्दः चापल्यं, तस्य मुद्रा चिह्नम्।

(ग) गोपुरेति।—गोपुरं पुरद्वारं, "पुरद्वारन्तु गोपुरम्" इत्यमरः, तत्र यानि गौल्मिकबलानि गौल्मिकानि गुल्माः घट्टः, "घाँटि" इति प्रसिद्धः सेनानिवेशविशेषः इत्यर्थः, तत्र भवानि स्थिता इत्यर्थः गौल्मिकानि, तादृशानि बलानि सैन्यानि, यद्वा—गुल्मः नव गजाः, सप्तविंशति अश्वाः, पञ्चचत्वारिंशत् पदातयः एतत्सङ्ख्याकाः सैन्यसमूहाः, ते एव गौल्मिकाः तादृशानि बलानि प्रोक्तसङ्ख्याकगजाश्वपदातिसमन्वितानि सैन्यानि इत्यर्थः; "गुल्मः सेना-घट्टभिदोः सेनारक्ष-काण्डयोः" इति मेदिनी; "पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम्। सेनामुख गुल्म-गणौ वाहिनी पृतना चमूः॥ अनीकिनी" इत्यमरश्च; तेषाम् अध्यक्षः अधिपतिः तेन।

(घ) नरान्तकः रावणस्य पुत्रविशेषः। प्रतिपन्नम् आचरितम्।

(ङ) कृता विहिता, प्रतिपालिता इति यावत्। कुमारेण नरान्तकेन। द्वारस्य गोपुरस्य, मर्य्यादा स्थितिः, धारणा इत्यर्थः, रक्षणमिति यावत्; "मर्य्यादा सीमनि स्थितौ" इति मेदिनी। सोऽपि कुमार-नरान्तकोऽपि, निहत इति वाक्यशेषः।

(च) इदम् एवम्भूतमकालमरणम्। आयुर्जीवनम्।

(नेपथ्ये)।

भो भो महापार्श्वप्रभृतयः सैनिकाः!—
व्यावर्त्तध्वमुपाङ्गमुद्भुरशरज्वालामुखीं मातरं
देवीमस्त्रमयीं प्लवङ्गपशवः पश्यन्ति पृष्ठानि वः।
चेतः शक्रजितोऽपि लक्ष्मणवधे बद्धोत्सवं मध्यमः
पौलस्त्यः स्वयमायुधं विधृतवानद्यापि रामाद्भयम्? ॥ १८॥

सारणः। (श्रुत्वा सहर्षम्)। आर्य्य! जातं जातमवलम्बनं, यदयं प्रतिबुध्य (क) कुमारकुम्भकर्णः पुरस्कृत्य (ज) च मेघनाद-मभ्यमित्रीणः (झ) संवृत्तः।

माल्यवान्। (निःश्वस्य)। स्वस्ति, (ञ) विजयेतां राम-लक्ष्मणौ कुम्भकर्ण-मेघनादौ।

व्यावर्त्तध्वमिति।—व्यावर्त्तध्वं प्रत्यावर्त्तध्वं, प्रत्यावर्त्तनं कुरुत इत्यर्थः, युद्धात् मा पलायध्वमिति भावः, उद्भुरा उत्कटा, शराणां बाणानां,ज्वाला तेज एव,प्रभा एवेत्यर्थः, मुखं वदनं यस्याः तादृशीम्, अस्त्रमयीम् अस्त्रस्वरूपिणीं, मातरं जननीं,देवीम् अस्त्राधिष्ठात्रीं देवतामित्यर्थः, उपाङ्गं सेवध्वं, प्लवङ्गपशवः प्लवङ्गाः वानरा एव, पशवः अधमजातिविशेषाः इत्यर्थः,अधमवानरा इति यावत्, वः युष्माकं, पृष्ठानि पश्चाद्भागान्,पश्यन्ति अवलोकयन्ति, पराङ्मुखत्वादिति भावः,रणभूमौ पृष्ठप्रदर्शनस्य वीराणामतीव अवमानकरत्वात् अस्वर्ग्यत्वाच्च व्यावर्त्तध्वमिति निष्कर्षः, शक्रजितः इन्द्रजितः अपि, चेतः मनः, लक्ष्मणस्य रामानुजस्य,सौमित्रेरित्यर्थः, वधे विनाशे, बद्धोत्सवं बद्धः दृढतया स्थित इत्यर्थः, उत्सवः आनन्दः, उत्साह इति भावः यत्र तादृशम्, उद्युक्तमित्यर्थः, मध्यमः द्वितीय इत्यर्थः, पौलस्त्यः पुलस्त्यनन्दनः, कुम्भकर्णः इत्यर्थः, स्वयम् आत्मनैव, आयुधम् अस्त्रं, विधृतवान् गृहीतवान्,अद्यापि इदानीमपि, रामात् दाशरथेः, भयम्? नाम? भवति किम्? इति शेषः, एतयोः सङ्ग्रामे विद्यमानयोः न युष्माकं कुतोऽपि भयं सम्भवतीत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ १८॥

(क) अवलम्बनम् आश्रयः, सहाय इति यावत्। प्रतिबुध्य जागरित्वा।

(ज) पुरस्कृत्य अग्रे-कृत्य।

(झ) अभ्यमित्रीणः अमित्रस्य शत्रोरभिमुखीनः, सामर्थ्याधिक्यात् शत्रूणां सम्मुखयायीत्यर्थः, "यो गच्छत्यलं विद्विषतः प्रति। सोऽभ्यमित्रोऽभ्यमित्रीयोऽप्यभ्य-मित्रीण इत्यपि॥" इत्यमरः।

(ञ) स्वस्ति शुभं भवतु।

शुकः। (सविषादमात्मगतम्)। शान्तं शान्तम्। कथमविशिष्ट-कर्तृ-कर्मभावम् (ट) उभयत्र द्विवचनं प्रयुक्तमार्य्येण।

माल्यवान्। (सखेदम्)। वत्सौ शुक-सारणौ! अद्य खल्वियं राक्षसलक्ष्मीः सर्वथा कुम्भकर्णमवलम्ब्य वर्त्तते। इदं तु न विद्मः,—(ठ)

अग्रजं वा दशग्रीवमनुजं वा विभीषणम्।
अन्वय-व्यतिरेकाभ्यां वीरः कमभिषेक्ष्यति? ॥ १९ ॥

(नेपथ्ये)।—

मा भैष्टं कमठेन्द्र-पन्नगपती! कश्चिन्न वैशेषिको
भूमेरद्य भरः पतिः पलभुजामाज्ञापयत्येष वाम्।—

(ट) अविशिष्टेति।—अविशिष्टः अविशेषेण उक्तः, सामान्यभावेन प्रयुक्त इत्यर्थः, कर्तृ-कर्मभावः यत्र तत् तादृशम्, उभयत्र र... ...रणाविति कुम्भकर्ण-मेघ-नादाविति प्रयोगद्वयेऽपि, उभयत्रापि प्रथमा-द्वितीयाद्विवचनयोरभेदादिति भावः।

(ठ) न विद्मः न जानीमः।

अग्रजमिति।—वीर विक्रान्तः, कुम्भकर्णः इत्यर्थः, अग्रजं ज्येष्ठं, दशग्रीवं वा रावणं वा, अनुजं कनिष्ठं, विभीषणं वा, कम् एतयोरुभयोः कतरम्, अन्वय-व्यतिरेकाभ्यां सत्त्वासत्त्वाभ्यामित्यर्थः, अभिषेक्ष्यति? अभिषिक्तं करिष्यति? इदं न विद्मः इति गद्यस्थवाक्येनान्वयः, मन्ये ...रावणं पराजित्य विभीषणम् अभिषेक्ष्यतीति भावः। अनुष्टुप् वृत्तम् ॥ १९ ॥

मा भैष्टमिति।—कमठेन्द्र-पन्नगपती! हे कूर्मराज-शेषनागौ! पृष्ठदेशे शिरःसु च भूभारधारकौ! इति भावः, एष अद्य, पलं मांसं, भुञ्जते भक्षयन्ति इति पलभुजो राक्षसाः तेषां, पतिः प्रभुः, विभीषणः इत्यर्थः, वां युवां, भवन्तौ द्वौ इत्यर्थः, आज्ञापयति आदिशति, मा भैष्टं युवां भीतिं मा कुरुतम्, अद्य अस्मिन् अहनि, भूमेः पृथिव्याः, भरः भारः, कश्चित् वैशेषिकः विशेषभवः, अधिकप्रकार इत्यर्थः, न, भवेदिति शेषः; कुम्भकर्णशरीरपतनेनाधिको भरः स्यादिति भयं युवाभ्यां नैव कार्य्यम्। अत्र "पलभुजां पतिः" इत्यनेन विभीषण एव लक्ष्यते, रामचन्द्रेण लङ्काराज्ये तस्य अभिषेककरणात्, ततश्च श्लोकार्द्धोऽयं राम-पक्षीयेण केनापि पठित इति मन्तव्यम्। "पलभुजां पतिः" इति शब्दस्य रावणार्थकत्वे

सुग्रीवः। (सहर्षम्)। नूनमस्मदीयैर्विशेषेण किमपि विक्रान्तम्। (ड)

(माल्यवानवधत्ते)। (ढ)

(पुनर्नेपथ्ये)।—

दोःशैलौ हरता पृथक् पृथगथो मूर्द्धानमुत्क्षिपुना
रामेणापि लघूकृतं पतति यत् तत् कौम्भकर्णं वपुः ॥ २० ॥

माल्यवान्। हा वत्स! (इति मूर्च्छितः पतति)।

उभौ। (सास्रम्)। आर्य्य! समाश्वसिहि समाश्वसिहि।

माल्यवान्। (आश्वस्य)। वत्सौ! जीवतो रामभद्रस्य मैथिलो-

---

"दोःशैलौ हरता" इत्यादि श्लोकपरार्द्धोक्तिः न सङ्गच्छते, कुम्भकर्णविनाशस्य चक्र-रूपेण रावणकर्तृकवर्णनायाः रावणानुचरेण केनापि वा वर्णनाया असङ्गतत्वात् इति सुधीभिर्विभाव्यम्। एतत्तु अग्रे "मयापि" इत्यादि माल्यवदुक्त्या स्फुटीभविष्यति। किञ्च, पद्मभुवा पति-शब्देन रावण एव अभिमतश्चेत् तदा "कश्चिन्न वैशेषिको भरः" इत्यस्य एव व्याख्या कार्य्या—कुम्भकर्णजागरणेन भूमेः भरः कश्चित् वैशेषिको न, यतः स सर्व्वानेव नर-वानरान् निहत्य अचिरादेव भूमभारलाघवं कारयिष्यति, अतो मा भैष्टमिति भावः।—

(ड) विक्रान्तं विक्रमः प्रदर्शित इत्यर्थः। अत्र सुग्रीवेण यत् "अस्मदीयैः" इत्युक्तं, तेन तस्य भ्रममात्रमिति प्रतीयते; रामपक्षीयस्य कस्याप्युक्तिरियम्।

(ढ) अवधत्ते अवहिता भवति, उत्कर्णो भूत्वा मनःसमाधानपूर्व्वकं शृणोतीत्यर्थः।

भूमेर्भरो वैशेषिको न इति यदुक्तं, तत्र हेतुमाह, दोःशैलाविति।—यत् यतः, पृथक् पृथक् भिन्न-भिन्नभावेन, एकैकश इति यावत्, दोःशैलौ भुजपर्व्वतौ, पर्व्वतवत् कठिन-विशालौ बाहू इत्यर्थः, हरता छिन्दता, अथानन्तरं, बाहुद्वयच्छेदनानन्तरमित्यर्थः, मूर्द्धानं मस्तकम्, उत्क्षिपुना ऊर्द्ध्वं क्षिपता, देहात् विच्छिद्य बाणवेगेन ऊर्द्ध्वं नयता इति भावः, रामेणापि लघूकृतं भारशून्यीकृतं, तत एव खण्डत्वेन प्रभिन्नं, कौम्भकर्णं वपुः कुम्भकर्णशरीरं, पतति भूमौ लुठति, कुम्भकर्णशरीरस्य त्रिधा विभाग-कर्त्तनात्, विभिन्नस्थानेषु पातनाच्च भाराधिक्यविरहेण युवयोर्भयं नास्तीति भावः। पूर्व्वार्द्धस्य रावणपक्षीयस्य उक्तित्वे उत्तरार्द्धस्य एवं सङ्गतिः कार्य्या यत्, पूर्व्वार्द्ध-पाठात् अनन्तरमेव कुम्भकर्णपतनात् रामपक्षीयेण केनापि पूर्त्तिमनुसृत्य [illegible] भावत्वे हेतुः वर्णित इति बोद्धव्यम्। शार्दूलविक्रीडितं वृत्तम् ॥ २० ॥

हरणादेतत् (ण) अस्माभिरान्तरेण चक्षुषा विषयीकृतमेव (त) ; किमिदानीं समाश्वसितव्यमस्ति ।

शुकः । धिक्कष्टम् !! कौम्भकर्णं वपुः पतति, एतदपि देवेनाज्ञापयितव्यम् !! (थ) ।

माल्यवान् । वत्स ! अद्यापि रावणस्याज्ञा !! नूनमन्योऽन्येषां वैहासिकाः कपयो दशकण्ठमुल्लुण्ठयन्ति (द) ।

सारणः । आः क्षुद्राः !—

यद्यस्ति वीर्य्यमस्त्येव तत् कर्म्म कथयिष्यति
मेघनादमजित्वैव धिक् प्रहासविभीषिकाम् ॥ २१ ॥

( नेपथ्ये ) ।

भो भो यूथपतयः ! विलुम्पन्तु ( ध ) भवन्तो लङ्कागोपुर-प्राकार-तोरणानि (न) ।—

---

(ण) जीवतो रामभद्रस्य जीवन्तं रामभद्रमनादृत्य इत्यर्थः । मैथिलीहरणात् सीताहरणात् हेतोः । एतत् दुर्घटनं, कुम्भकर्णादिनिधनरूपमिति भावः ।

(त) आन्तरेण चक्षुषा ज्ञानचक्षुषेत्यर्थः । विषयीकृतं गोचरीकृतं, दृष्टमित्यर्थः, ज्ञातमिति भावः, "विषयो गोचरे देशे तथा जनपदेऽपि च" इति मेदिनी ।

(थ) देवेन महाराजेन रावणेन । आज्ञापयितव्यम् आदेष्टव्यम् । देवेन केन प्रकारेण वज्रनिपातसदृशमिदं वाक्यमुच्चारितम् ? इति भावः ।

(द) अन्योऽन्येषां परस्परेषां मध्ये । वैहासिकाः हास्यकराः, परिहासशीला इति यावत् । दशकण्ठं दशग्रीवं, दशाननमित्यर्थः । उल्लुण्ठयन्ति उपहसन्ति । ईदृशी आज्ञा रावणस्य नैव भवितुमर्हति, नूनं कपिषु केचन रावणमुपहसितुमेवमुद्घोषयन्तीति फलितम् ।

यदीति ।—यदि वीर्य्यं वीरत्वम्, अस्ति विद्यते, अस्त्येव विद्यते एव, तत् वीर्य्यं, ( कर्मभूतं ) कर्म्म क्रिया, वीर्य्यसूचककर्माचरितमित्यर्थः, कथयिष्यति प्रकटयिष्यति, चरितेनैव तत् प्रकाश्यते इति भावः, मेघनादम् इन्द्रजितम्, अजित्वैव अपराभूय एव पराभवमकृत्वैवेत्यर्थः, प्रहासविभीषिकाम् उपहासरूपभयप्रदर्शनं, धिक् निन्दामि, मेघनादं विजेतुं समर्थाश्चेत् तदा युष्माकं वीर्य्यवत्तां स्वीकरोमि, अन्यथा युष्माकं विभीषिकादिरूपं संरम्भं निन्दायोग्यमेवेत्यर्थः । अनुष्टुप् वृत्तम् ॥ २१ ॥

(ध) यूथपतयः ! यूथाधिनाथाः ! कपिसेनापतयः ! इत्यर्थः । विलुम्पन्तु विध्वंसयन्तु ।

(न) लङ्केति ।—लङ्कापुरस्य लङ्कानगरस्य, गोपुरं पुरद्वारं, पुरमध्ये प्रवेशस्य

सन्नद्धेन्द्रायुधमविरलारम्भि गीर्वाणबाण-
श्रेणीवर्षं तदवजगृहे येन दुष्टग्रहेण।—

माल्यवान्। (सोद्वेगम्)। आः!! किमनेन श्रावयितव्योऽस्मि।
(इति कर्णौ पिदधाति)। (प)

(पुनर्नेपथ्ये)।—

दृष्ट्वा काञ्चित् प्रहरणमयीं वीरयज्वानमिष्टिं
दिष्ट्या सोऽयं समुपशमितः शक्रजिल्लक्ष्मणेन॥ २२॥

---

प्रधानद्वाराणीत्यर्थः, "पुरद्वारन्तु गोपुरम्" इत्यमरः, प्राकाराः प्राचीराः, तोरणानि बहिर्द्वाराणि, नगरप्रवेशद्वाराणीत्यर्थः, "तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः।

सन्नद्धेति।—येन दुष्टः क्रूरः, ग्रहः शनैश्चरादिरूपः तेन, पक्षे—दुष्टः अनुचित इत्यर्थः, ग्रहः रणोद्यमः, युद्धार्थम् आग्रहः इत्यर्थः यस्य तथोक्तेन, अन्याययुद्धपरायणेन दुरात्मनेति भावः, "ग्रहोऽनुग्रहनिर्बन्ध-ग्रहणेषु रणोद्यमे" इति मेदिनी; सन्नद्धं व्यूढ, सुविन्यस्तमित्यर्थः, समुदितमिति यावत्, "सन्नद्धो वर्मिते व्यूढे" इति मेदिनी; इन्द्रायुधं शक्रधनुर्यत्र तथोक्तम्, अन्यत्र—सन्नद्धस्य वर्मितस्य, वर्मावृतस्येत्यर्थः, इन्द्रस्य देवराजस्य, आयुधम् अस्त्रम्, अशनिरित्यर्थः यत्र तादृशम्, अविरलारम्भि अविरलः निरन्तरः, आरम्भः उद्यमः, प्रवृत्तिरिति यावत् यत्र तादृशम्, अन्यत्र—अविरलः निरन्तरः आरम्भः वधः, राक्षससैन्यविनाश इति भावः यत्र तादृशम्, "आरम्भस्तु त्वरायां स्यादुद्यमे वध-दर्पयोः" इति मेदिनी; तत् प्रसिद्धं, गीर्वाणानां देवानां, बाणश्रेणीव शर-पङ्क्तिरिव, वर्षं वृष्टिरित्यर्थः, अवजगृहे विहतं, सम्बाधितमित्यर्थः; पक्षे—गीर्वाणानां देवानां, युध्यमानानामिति भावः, बाणश्रेणीनां शरसमूहानां, वर्षं वर्षणं, वृष्टिधारावत् पतनमित्यर्थः, अवजगृहे प्रतिबद्धं, सविघ्नं कृतमित्यर्थः, निवारितमिति यावत्, देवाः पराजिता इति भावः। "अवग्रहो वृष्टिरोधे प्रतिबन्धे गजालिके" इति मेदिनी॥—

(प) आः!! इति पीडासूचकमव्ययम्; "आस्तु स्यात् कोप-पीडयोः" इत्यमरः। पिदधाति आवृणोति, कराभ्याम् अङ्गुलिभ्यां वा इति शेषः, दुःसंवादश्रवणभिया इति भावः।

काञ्चित् अपूर्वामित्यर्थः, प्रहरणमयीम् अस्त्रमयीं, वीरः शूरः, मेघनाद इत्यर्थः, यज्वा याज्ञिको यत्र तादृशीम्, इष्टिं यज्ञं, निकुम्भिलाख्यमिति भावः, दृष्ट्वा अवलोक्य, लक्ष्मणेनेति भावः; "दृष्ट्वा" इत्यत्र "इष्ट्वा" इति पाठकल्पनं समीचीनम्, इष्ट्वा अर्चयित्वा इत्यर्थः, दिष्ट्या दैवेन, देवकृपयेति भावः; यद्वा—दिष्ट्या इति

माल्यवान्। सत्योऽयम् अतिदुःखो निर्दुःखः इति लोक-प्रवादः, (फ) यत् (ब) अस्मिन्नपि समूलघातमभिघ्नति व्यतिकरे तथैव स्वसिमः (भ)।

शुकः। (ऊर्द्धमवलोक्य)। यथा समन्तादम्बरचरविमान-वीथयः ककुभां (म) मुखानि पर्य्यवष्टभ्नन्ति, (य) तथा शङ्के, (र) दुर्वारदारुणक्रोधवड़वानलनिपीयमानशोकसमुद्रो दाशरथिविजयाय सन्नह्यते (ल) देवः।

---

हर्षसूचकं मङ्गलसूचकं वा अव्ययम, अतीव हर्षविषयं मङ्गलकरं वा एतदित्यर्थः; "दिष्ट्या हर्षे मङ्गले च" इति मेदिनी; लक्ष्मणेन सौमित्रिणा, सोऽयं अवग्राहकः, दुष्टग्रह इत्यर्थः, शक्रजित् मेघनादः, समुपशमितः निहत इत्यर्थः, यन्नकर्मणा च लोकैरवग्रहशान्तिः क्रियते इति ध्वनिः। मन्दाक्रान्ता वृत्तम्॥ २२॥

(फ) अतिदुःख इति अतिशयितं दुःखं यस्य सः। निर्दुःखः दुःखरहितः, दुःख-बोधासमर्थ इत्यर्थः, प्रबलदुःखवेगेन सर्वानुभूतिराहित्यादिति भावः, इति लोकानां जनानां, प्रवादः प्रसिद्धिः, सत्यः।

(ब) यत् यतः।

(भ) समूलघातं समूलं हन्ति यस्मिन् कर्मणि तत् यथा तथा। अभिघ्नति अभिहननं कुर्वति, विनाशं कुर्वतीत्यर्थः। व्यतिकरे व्यसने, विपदि इत्यर्थः, इन्द्रजिन्निधनरूपे इति भावः, "अथ व्यतिकरः पुंसि व्यसन-व्यतिषङ्गयोः" इति मेदिनी; तथैव पूर्ववदेव। स्वसिमः धीरामः।

(म) अम्बरचरेति।—अम्बरचराणां खेचराणां, देव-गन्धर्वादीनामित्यर्थः, विमानवीथयः देवयानपङ्क्तयः। ककुभां दिशाम्।

(य) पर्य्यवष्टभ्नन्ति अवलम्बयन्ति, आश्रयन्तीत्यर्थः, अवरुन्धन्तीत्यर्थों वा, "अवष्टम्भोऽविदूरे स्यादाक्रान्ते चावलम्बने" इति मेदिनी।

(र) शङ्के मन्ये।

(ल) दुर्वारेति।—दुर्वारः अनिवार्य्यः, अत एव दारुणः उत्कटः, क्रोधः कोप एव, वडवानलः वडवाग्निः, तेन निपीयमानः निःशेषं यथा तथा चर्व्यमाणः, शोकसमुद्रः पुत्रवियोगजमन्युसागरः यस्य तथाभूतः, सर्व्वथा प्रबल-क्रोधेन दमितशोकवत्तिरिति भावः। दाशरथिविजयाय दाशरथेः रामस्य, विजयाय पराभवाय, सन्नह्यते व्यूढो भवति, बद्धपरिकरो भवतीत्यर्थः।

चारणः। (सविषादमात्मगतम्)। कष्टम्!! कथं दाशरथि-विजयायेत्यविशिष्टोपपत्तिककर्त्तृ-कर्मकारकार्थविषयं वयस्य-वचनम्। (व)

माल्यवान्। (उत्थाय)। तदस्माभिरपि जरसा दूषितस्य (श) आत्मनः प्रक्षालनाय प्राप्तं शस्त्रधारातीर्थम् (ष)। (इति सपरि-चारको निष्क्रान्तः)।

(विष्कम्भकः)।

(ततः प्रविशति विद्याधरद्वयमाकाशयानेन)।

एकः। अहो! बहोः कालात् (स) अनया गगनवीथ्या निरातङ्कमिव सञ्चरावहे। (ह) (अधोऽवलोक्य)।—

देवेन्द्रोपनिवेश्यनन्दनवनस्रक्तोरणश्लाघिनी
लङ्केयं दशकण्ठविक्रमसखी यस्यां समन्तादिमाः।

---

(व) दाशरथीति।—अविशिष्टा अविशेषेण उक्ता, उपपत्तिः प्रतीतिर्यत्र तथाभूतः, कर्त्तृ-कर्मकारकयोः यः अर्थः अभिधेयः, तद्विषयं तत्सम्बन्धि, वयस्यस्य मित्रस्य, वचनं वाक्यं, तथा च, दाशरथेर्विजयाय इति समासे दाशरथेरिति कर्त्तरि कर्मणि च कृद्योगे षष्ठीविधानात् दाशरथिकर्त्तृकविजयलाभ इति, दाशरथि-कर्मक-रावणकर्त्तृकविजयलाभस्येत्यर्थद्वययोगात् अविशिष्टोपपत्तिककर्त्तृ-कर्मकारकत्व-मिति भावः।

(श) जरसा वार्द्धकेन। दूषितस्य अभिभूतस्य, कर्मासमर्थस्येति भावः।

(ष) प्रक्षालनाय शोधनाय, जरादोषदूरीकरणाय इति यावत्, नवीनदेहलाभाय इति भावः। शस्त्रधारातीर्थं शस्त्रधारा एव तीर्थं पुण्यस्थलम्। प्राप्तं गतं, गन्तव्यमित्यर्थः, जीर्णतादोषपरिहाराय रणक्षेत्रे शस्त्राघातेन प्राणान् त्यक्ष्यामीति भावः।

(स) बहोः कालात् बहुकालात् परमित्यर्थः।

(ह) अनया लङ्कापुर्य्याः उपरिस्थया इत्यर्थः। गगनवीथ्या आकाशमार्गेण। निरातङ्कमिव निःशङ्कमिव, राक्षसानां निधनादिति रावणस्य आसन्नविनाशत्वादिति च भावः। सञ्चरावहे भ्रमावः।

देवेन्द्रेति।—देवेन्द्रेण वासवेन, उपनिवेश्या रावणप्रीणनार्थं प्रदेया, उपभोग्या इत्यर्थो वा, देवेन्द्राय उपनिवेश्या समर्पणीया, देवेन्द्रस्य उपभोगाय प्रदानीया इत्यर्थो वा, या नन्दनवनस्रक् नन्दनवनीयपुष्पमाला, तच्छोभितेन तोरणेन बहि-

युद्धालोकनकौतुकोन्मुखवधूसङ्कीर्णकर्णीरथा
रथ्याः किं कथयामि यान्ति यदमी न व्योम्नि वैमानिकाः ? ॥२१॥
( सखेदाद्भुतम् )। सखे हेमाङ्गद !—

एताः पश्य पलादपत्तनभुवः सौत्रामणीनां दृशा-
मस्राम्भोभिरदेवमातृकगृहारामाभिरामश्रियः।

---

हरैव, श्लाघ्यते प्रशस्यते, अभिलष्यते वा तादृशी, तादृशतीरत्वेन मनोहारिणीत्यर्थः, "श्लाघा स्त्रियां प्रशंसायां परिचर्याऽभिलाषयोः" इति मेदिनी, दशकण्ठस्य रावणस्य, यो विक्रमः पराक्रमः, अजेयत्वमिति यावत्, तस्य सखी सहायः, सहायस्वरूपिणी-त्यर्थः, मद्दुराक्रम्यत्वादिति भावः; यद्वा—विक्रमसखी पराक्रमस्य साक्षिस्वरूपिणी-त्यर्थः, त्रैलोक्यस्थितदुर्लभद्रव्यसम्भारैव शोभमानत्वादिति भावः, इयम् अग्रस्था, लङ्का रावणराजधानी, दृश्यते इति शेषः, यस्यां लङ्कायां, समन्तात् चतुर्दिक्षु, इमाः परिदृश्यमानाः, युद्धस्य सङ्ग्रामस्य, आलोकने दर्शने, यत् कौतुकं कुतूहलं, तेन उन्मुखाभिः ऊर्द्ध्वमुखीभिः, वधूभिः राक्षसमहिलाभिः, सङ्कीर्णाः व्याप्ताः, कर्णीरथाः प्रवहणानि, "डुलि" इति प्रसिद्धाः स्त्रीरथा इत्यर्थः यासु तथाभूताः, "कर्णीरथः प्रवहणम्" इत्यमरः; रथ्याः राजमार्गान्, किं कथयामि ? अनिर्वचनीयतया कथयितुं न शक्नोमीत्यर्थः, यत यतः, रावणस्त्रीणां राजमार्गविचरणादिति भावः, अमी सम्मुखस्थाः, वैमानिकाः विमानचारिणो देवाः, व्योम्नि आकाशे, न यान्ति न सञ्चरन्ति, राक्षसमहिलानां सन्दर्शनभयादिति भावः। यद्वा—यस्या समन्तादिमाः रथ्याः युद्धालोकनकौतुकोन्मुखवधूसङ्कीर्णकर्णीरथाः, दृश्यन्ते इति शेषः, तथा यस्याः लङ्कायाः, व्योम्नि आकाशे, लङ्कोपरिस्थशून्यदेशे इत्यर्थः, अमी वैमानिका न यान्ति इति यत, तत् किं कथयामि ? रावणस्य ईदृशः प्रभावो यत् लङ्काया उपरिस्थाकाशेऽपि वैमानिका अपि गन्तुं न प्रभवन्तीति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ २१ ॥

एता इति।—सुत्रामा इन्द्रः, "इन्द्रो मरुत्वान्मघवा ...। सुत्रामा गोत्रभिद्वज्री" इत्यमरः; तस्य इमाः सौत्रामण्यः तासाम् इन्द्रसम्बन्धिनीनां, दृशां नेत्राणां, सहस्र-सङ्ख्यकानां नयनानामित्यर्थः, अस्राम्भोभिः अश्रुजलैः, अदेवमातृकाः देवमातृकाः वृष्ट्यम्बु-पालिताः न भवन्ति इति तादृशाः, इन्द्रस्य सहस्रनयननिःसृतजलैरेव वृष्ट्यम्बुकार्यकर-त्वात् तैरेव च आरामपोषणादिति भावः, "देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालितः। स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥" इत्यमरः; ये गृहारामाः निष्कुटाः,

एतासु प्रतिघातिविक्रमकथोपालम्भवैतण्डिकैः
कृतेन्द्रध्वजिनीजयानुकृतिभिर्डिम्भैरपि क्रीडितम् ॥ २४ ॥

द्वितीयः । सखे रत्नचूड ! किमुच्यते,—

रक्षांसीति पुराऽपि संशृणुमहे वीरस्तु कस्तादृशो
जागर्त्ति स्म जगत्त्रयीविपदलङ्कर्मीणदोर्विक्रमः ? ।
अश्रान्तं द्वारभुवि प्रशस्तिरचनावर्ण्यमानेक्षण-
श्रेणीसम्भृतगोत्रभिज्जयजयस्तम्भो यथा रावणः ॥ २५ ॥

---

गृहोपवनानि इत्यर्थः, "गृहारामास्तु निष्कुटाः" इति "आरामः स्यादुपवनम्" इति चामरः, ते अभिरामा मनोहारिणी श्रीः शोभा यासां तथाभूताः, एताः परिदृश्यमानाः, पलादपत्तनभुवः पलादानां मांसाशिनां राक्षसानामित्यर्थः, पत्तनभुवः नगरस्थानानि, राक्षसनगरीगृहाणीत्यर्थः, पश्य अवलोकय, एतासु पलादपत्तनभूषु, डिम्भैरपि शिशुभिरपि, "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः; कृता कृता, इन्द्रस्य देवराजस्य, ध्वजिनीनां सेनानां, "ध्वजिनी वाहिनी सेना" इत्यमरः; जयानुकृतिः पराजयानुकरणं यैः तथाभूतैः, अत एव प्रतिघातिनाम् अरातीनां, शत्रूणामित्यर्थः, "अभि(प्रति)घाति परारातिप्रत्यर्थि-परिपन्थिनः" इत्यमरः; विक्रमकथासु शौर्यविषयकालोचनासु, उपालम्भे अधिक्षेपे, निन्दाकरणे इत्यर्थः, वैतण्डिकैः वितण्डा विवादः प्रयोजनमेषामिति तथोक्तैः बालैः, परस्पर कलहं कुर्वाणैः बालैरित्यर्थः, क्रीडितं खेलितं, रावणेन देवसेनानां यथा पराजयः कृतः, अत्रत्या बालका अपि तदनुकरणरूपां क्रीडां कुर्वन्तीति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

रक्षांसीति।—पुराऽपि पूर्वमपि, रावणप्रादुर्भावात् प्रागपीत्यर्थः, रक्षांसि राक्षसाः, सन्तीति शेषः, इति संशृणुमहे समाकर्णयामः, अस्माभिः परस्परं श्रुतमित्यर्थः; व्यतीहारे आत्मनेपदम्, तु किन्तु, जगतां त्रयी त्रिलोकीत्यर्थः, तस्याः विपदः अनर्थस्य, अनर्थोत्पादनस्येत्यर्थः, यद्वा—विपदि अनर्थे, अनिष्टसाधने इत्यर्थः, अलङ्कर्मीणः कर्मक्षमः, समर्थः इत्यर्थः, "कर्मक्षमोऽलं-कर्मीणः" इत्यमरः, दोर्विक्रमः बाहुबलं यस्य तथाभूतः, त्रिभुवनविजयीति भावः, तथा अश्रान्तं निरन्तरं, द्वारभुवि द्वारदेशे प्रशस्तिरचना प्रशंसालिपिरित्यर्थः, रावणस्येति भावः, तया वर्ण्यमाना अवधार्यमाणा, वर्ण्यमानेत्यर्थः, या ईक्षणश्रेणी नयनपङ्क्तिः, सहस्र नेत्राणीति

रत्नचूड़। सखे हेमाङ्गद! पश्य पश्य, पौलस्त्यपत्तन-प्रतोलीषु दीयमाने सन्नाहपटहे (क)—

दिग्दन्तावलदन्तमौक्तिकमयहारस्तोरणस्रग्विणी
गीर्वाणाधिपतिप्रतोष्ठनिगडोन्मृष्टान्यवन्दीशुचः।
वीरश्रीसहपांशुकेलिसुहृदो मन्दोदरीबन्धुता-
शौटीरासुरसुन्दरीसुरभयः क्षुभ्यन्ति रक्षोगृहाः॥ २६॥

भावः, तैः समातः परिपूर्णः, व्याप्त इत्यर्थः, संयुक्तः इति यावत्, यः गोत्रभित् इन्द्रः, तन्मयः तदात्मकः, इन्द्र इव इत्यर्थः, जयस्तम्भः विजयसूचकः स्तम्भः यस्य तथोक्तः, रावणो दशाननः, यथा यादृशः, तादृशः रावणतुल्यः, वीरः शूरः, कः जागर्त्ति स्म? प्रकाशते स्म? न कोऽपीत्यर्थः, राक्षसाः जगति बहवो विद्यन्ते, किन्तु देवाः अपि यस्य द्वारदेशे नियतं भृत्यभावेन प्राञ्जलिस्तिष्ठति, एवम्भूतः त्रिभुवने रावणादन्यो राक्षसवीरो न कदाऽपि श्रुतः इति पर्य्यवसितोऽर्थः। शार्दूलविक्रीडितं वृत्तम्॥ २५॥

(क) पौलस्त्येति।—पौलस्त्यस्य रावणस्य, पत्तनं नगरं, "पूः स्त्री पुरी नगर्य्यौ वा पत्तनं पुटभेदनम्" इत्यमरः, तस्य प्रतोलीषु रथ्यासु, मार्गेषु इत्यर्थः "रथ्या प्रतोली विशिखा" इत्यमरः। दीयमाने ताड्यमाने इति भावः, सन्नाहपटहे सङ्ग्राम-वादित्रभेदे।

दिगिति।—दिशां पूर्वादीनां, दन्तावलाः हस्तिनः, दिग्गजा इत्यर्थः "दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः" इत्यमरः, तेषां दन्ताः मौक्तिकानि मुक्ताफलानि च, तत्प्रभवा इति भावः, तन्मयौ तन्निर्म्मितौ इत्यर्थः, हाराः हाराः, तोरणस्रक् बहिर्द्वार-माला च, बहिर्द्वारविलम्बिनी मालिकेत्यर्थः, यथाक्रमं दन्तमयो हारः मौक्तिकमयी तोरणस्रगिति भावः सन्ति, गीर्वाणाधिपतिना देवेन्द्रेण, प्रतोष्ठा गृहीताः, सोढा इति यावत्, निगडोन्मृष्टानां निगडबद्धानाम्, अन्यानां स्वव्यतिरिक्तानां, बन्दीनां हठहृतानां स्त्रीणां, शुचः शोकाः येषु तथोक्ताः, वीरश्रियाः वीराणां शूराणां, श्रियाः लक्ष्म्याः, विजयलक्ष्म्याः इत्यर्थः सह पांशुकेलिः धूलिक्रीडा तत्सुहृदः तत्सङ्गिनः इत्यर्थः, तद्गृहवासिनः सर्वे आबाल्यादेव रणभूमौ विपक्षान् विजित्य तेषां श्रीभिः गृहशोभां वर्द्धयन्तीति भावः मन्दोदरी रावणमहिषी, असुरकन्येति भावः, तस्याः या बन्धुता सख्यं तया शौटीराः गर्व्विताः, "शौटीरस्तु मतो गर्वे" इति शाश्वतः, याः असुरसुन्दर्य्यः असुरवध्वः, ताभिः सुरभयः कान्ताः, मनोज्ञाः इत्यर्थः,

हेमाङ्गदः। (विहस्य)। नूनमिदानीमत्र—

दृष्ट्वा राघवमेकराक्षसवनस्वच्छन्ददावानलं
जानक्यां निजवल्लभस्य परमं प्रेमाणमालोक्य च।
काङ्क्षन्ती मुहुरात्मपक्षविजयं भङ्गञ्च मुग्धा मुहु-
र्ध्यायन्ती ध्रुवमन्तरालपतिता मन्दोदरी वर्त्तते॥ २७॥

रत्नचूडः। (सकरुण-स्मितम्)। वयस्य! विबुधराजविजयविक्रम-क्रीतचेतसा (ख) वृद्धपितामहेन स्वयं परमेष्ठिना (ग) प्रति-ष्ठितेन्द्रजिन्नामधेयशेषस्य तादृशस्य तनूजस्य (घ) शुचा विचेष्ट-

---

"सुरभिः शल्लकीमातृभिन्मुरा गोषु योषिति। सुगन्धि-कान्तयोस्त्रिषु" इति मेदिनी; रक्षोगृहाः राक्षसानां गृहाणि, क्षुभ्यन्ति क्षुब्धा भवन्ति, चञ्चला भवन्तीति यावत्, शङ्खाद्युपटहनादादिति भावः। शार्दूलविक्रीडितं वृत्तम्॥ २६॥

दृष्ट्वेति।—मन्दोदरी रावणमहिषी, राघवं रामम्, एकः अद्वितीयः, राक्षसाः निशाचरा एव, वनानि काननानि, तेषां तेषु वा स्वच्छन्दः निरवग्रहः, निर्बाध इत्यर्थः, स्वेच्छाप्रवृत्तः इति यावत्, "स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः" इत्यमरः; दावानलः वनाग्निः तं, तत्स्वरूपमित्यर्थः, राक्षसवंशदाहकमिति यावत्, दृष्ट्वा अवलोक्य, तथा जानक्यां सीतायां, निजवल्लभस्य निजकान्तस्य, रावणस्य इत्यर्थः, परमम् अत्यर्थं, प्रेमाणम् अनुरागम्, आलोक्य दृष्ट्वा च, मुग्धा विमूढा, अत एव मुहुः पुनः पुनः, कदाचिदिति भावः, आत्मपक्षाणां स्वपक्षाणां, राक्षसानामित्यर्थः, विजयं विशिष्टं जयं, काङ्क्षन्ती अभिलषन्ती, तथा मुहुश्च कदाचिच्चेति भावः, भङ्गं पराजयं, ध्यायन्ती चिन्तयन्ती सती, ध्रुवं निश्चयेन, अन्तरालपतिता जय-पराजय-चिन्तयोर्मध्यवर्त्तिनी, वर्त्तते तिष्ठति, स्वपक्षीयजये रावणः सीताप्रेमवशो मां परि-त्यक्ष्यति, अथवा जये मम वैधव्यमित्युभयथैव ममानिष्टमिति चिन्ताकुला तिष्ठतीति भावः। शार्दूलविक्रीडितं वृत्तम्॥ २७॥

(ख) विबुधेति।—विबुधानां देवानां, राजा अधिपतिः विबुधराजः इन्द्रः, तस्य विजये पराजये, यो विक्रमः शौर्य्यं, तेन क्रीतं वशं-गतं, चेतः चित्तं यस्य तथाभूतेन।

(ग) परमेष्ठिना ब्रह्मणा, "ब्रह्माऽऽत्मभूः सुरज्येष्ठः परमेष्ठी पितामहः" इत्यमरः।

(घ) प्रतिष्ठितेति।—प्रतिष्ठितं संस्थापितमित्यर्थः, दत्तमिति यावत्, इन्द्र-

मानामरातिगर्हिणीम् (ङ) अपि नैवमुपक्रोष्टुम् (च) अर्हसि। (पुरोऽवलोक्य च)। हस्तदक्षिणेन कथमयं द्विधा (छ) विभज्यते महाजनः!! (निरूप्य च सभय-कौतुकम्)। सखे! पश्य पश्य—

न्यञ्चत्युञ्चद्धरित्रीधृतचरणभरश्चन्द्रहासैकदृष्टि-
व्यावल्गद्यौगपद्योत्सुकसकलभुजाक्रान्तदिक्चक्रवालः।
क्रोधक्रूराक्षिरक्तोत्पलरचितवियत्तोरणस्रञ्जि बिभ्र-
द्वक्त्राणि प्रत्यनीकप्रसरसरभसो निर्जिहीते दशास्यः॥ २८ ॥

---

जित् वासवविजयी, इति नामधेयं नाम, नाममात्रमित्यर्थः, शेषः अवशेषः यस्य तथाविधस्य। तादृशस्य महावीरस्येति भावः। तनूजस्य पुत्रस्य, मेघनादस्येति शेषः।

(ङ) शुचा शोकेन, विचेष्टमाना विकृष्टमाचरन्तीं, व्याकुलतया विचरन्तीमित्यर्थः, क्रन्दन्तीमिति यावत्। अरातिगर्हिणीं शत्रुगर्हिणीम्।

(च) उपक्रोष्टुं विनिन्दितुम्; "उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे" इत्यमरः।

(छ) हस्तदक्षिणेन हस्तस्य दक्षिणभागे, दक्षिणस्यां दिशि इत्यर्थः। द्विधा भागद्वयेनेत्यर्थः। महाजनः जनता इत्यर्थः।

न्यञ्चदिति।—न्यञ्चन्ती न्यञ्चन्ती न्यग्भवन्ती न्यग्भवन्ती, अतिशयेन निम्नीभवन्तीत्यर्थः, रावणपदभरेण तत्सैन्यपदभरेण वा इति भावः, या धरित्री पृथ्वी, तस्यां धृतः अर्पितः, चरणभरः पादयोर्भारः येन तथोक्तः, चन्द्रहासे निजकरवाले, एका केवला, दृष्टिः नयननिक्षेपो यस्य तथाभूतः, निजकरधृतखड्ग आबद्धदृष्टिरित्यर्थः, व्यावल्गन्ति सञ्चलन्ति, यौगपद्येन समकालत्वेन, उत्सुके अभीष्टसाधनाय समुद्युक्तैः, स्वस्वापारव्यग्रैरित्यर्थः, "इष्टार्थोद्युक्त उत्सुकः" इत्यमरः, सकलैः समस्तैः, भुजैः बाहुभिः, विंशत्येति भावः, आक्रान्तं व्याप्तं, दिक्चक्रवालं दिङ्मण्डलं येन तथाविधः, क्रोधेन कोपातिशयेन, क्रूराणि भीषणानि, आरक्तानीति भावः, अक्षीणि एव नेत्राण्येव, विंशतिसङ्ख्यकानीति भावः, रक्तोत्पलानि कोकनदानि, तैः रचिता ग्रथिता इत्यर्थः, वियति आकाशे, तोरणस्रक् बहिर्द्वारवन्दनमाला यैः तथाभूतानि, वक्त्राणि मुखानि, दशसङ्ख्यकानीति भावः, बिभ्रत् दधानः, प्रत्यनीकेषु प्रतिभटेषु, शत्रुषु इत्यर्थः, प्रसराय अभिगमनाय, सरभसः सवेगः, त्वरावानित्यर्थः, दशास्यः रावणः, निर्जिहीते निर्गच्छति, लङ्कापुरादिति शेषः। स्रग्धरा वृत्तम्॥ २८ ॥

हेमाङ्गदः (निर्वर्ण्य)। अहो! दृष्टचरमपि (ञ) अस्य साङ्ग्रामिकमोजायितमयातयाममिव भीषयते। (झ) सखे रत्नचूड!—

मरुत्वद्दम्भोलिक्षणघटितघोरश्वयथुना
निसर्गोदग्रेण प्रसभमुरसा पीतगगनः।
श्रियं देवद्रीचीं निजभुजवनोद्दामकरिणी-
मयं कुर्वन् वीरः स्मरसि कथमासीद्दशमुखः? ॥ २९ ॥

रत्नचूडः। सखे! किमुच्यते, महतामप्युपरि किमप्ययं रावणः,—(ञ)

---

(ञ) दृष्टचरमपि दृष्टपूर्वमपि, प्राक् दृष्टमपीत्यर्थः।

(झ) साङ्ग्रामिकं युद्धसम्बन्धि, युद्धकालिकमित्यर्थः। ओजायितं ओजस्विता, प्रताप इति यावत्। अयातयाममिव अजीर्णमिव, अपुरातनमिवेत्यर्थः, नवमिवेति यावत्, सद्यो दृष्टमिवेति भावः, "जीर्णं च परिभुक्तञ्च यातयाममिदं द्वयम्" इत्यमरः। भीषयते भापयति, भयमुत्पादयतीत्यर्थः।

मरुत्वदिति।—अयं सङ्ग्रामयात्रोन्मुख इत्यर्थः, वीरः शूरः, दशमुखः रावणः, मरुतः देवाः अस्य सन्तीति मरुत्वान् इन्द्रः, "इन्द्रो मरुत्वान् मघवा" इत्यमरः; तस्य दम्भोलिना वज्रेण, "ह्रादिनी वज्रमस्त्री स्यात्···। दम्भोलिरशनिर्द्वयोः॥" इत्यमरः; क्षणम् अल्पकालमात्रं, न तु चिरमिति भावः, घटितः कृतः, उत्पन्न इत्यर्थः, घोरः भीषणः, अतिप्रवृद्ध इत्यर्थः, श्वयथुः शोथः, स्फीततेति भावः यत्र तादृशेन, निसर्गोदग्रेण स्वभावत एव विशालेन, उरसा वक्षसा, प्रसभं हठात्, बलपूर्वकमित्यर्थः, तदुपरि तथा, पीतम् आक्रान्तं, यद्वा—"उरसा" इत्यनन्तरम् अकारो लुप्तो द्रष्टव्यः, तेन अपीतं गतम्, उत्पतितमिति यावत्, आक्रान्तमिति भावः, गगनम् अन्तरीक्षं, सुरपुरमिति यावत् येन तथाभूतः सन्, देवान् अञ्चतीति देवद्रीची तां देवानुवर्त्तिनीं, देवसम्बन्धिनीमित्यर्थः, "देवान् अञ्चति देवद्र्यङ्" इत्यमरः; श्रियं लक्ष्मीं, कथं केन प्रकारेण, निजभुजवनस्य स्वकीयबाहुकाननस्य, विंशतिसङ्ख्यकबाहुसङ्घातस्येत्यर्थः, उद्दामकरिणीं मत्तहस्तिनीं, वशगां स्वस्य अधीनामिति यावत्, कुर्वन् विदधत्, आसीत् अवर्त्तत, तत् स्मरसि? स्मृतिविषयीकरोषि? [illegible] ॥ २९ ॥

(ञ) महतामपि महाप्रभावशालिनामपीति यावत्, किमपि अवर्णनीयं, आश्च

एवं कल्पतरूद्भवैरसुकरव्याजैः सदा भूषणै-
राराध्नोति सुराधिपः किमपरं दीनो नदीनां पतिः ।
दण्डाधिक्यभयात् कथं-कथमपि स्कन्धोपनेयान् मणी-
नप्यस्मै परिशोधयत्यपदिशन् निःसम्पदः स्वाकरान् ॥१०॥

हेमाङ्गदः । (सभयम्) । कथमयं परापतित (ट) एवासम-(ठ)
समरहर्षहेषमाण-वनायुज-वाजिनिवह-वितीर्ण-कीनाश-कासर-

---

प्रकाशयितुमशक्यमिति यावत्, उपरि ऊर्द्धगो, अतिमहान् इति भावः, रावणस्य महत्त्वं सर्वातिशायि वर्णनातीतश्चेति समुदायार्थः ।

एवमिति ।—सुराधिपः इन्द्रः, कल्पतरूद्भवैः कल्पवृक्षप्रसूतैः, असुकराणि असुलभानि, व्यज्यन्ते गम्यन्ते, अनुभूयन्ते इति यावत् इति तथोक्तैः, बहुमूल्येनापि दुष्प्रापैरिति भावः, भूषणैः अलङ्कारैः, एनं रावणं, सदा नित्यम्, आराध्नोति सेवते, किमपरम् अन्यत् किं, वक्तव्यमिति शेषः, नदीनां पतिः समुद्रः, दण्डाधिक्यभयात् दण्डोऽस्त्येव, एतस्मात् अधिको मा भूदिति प्रत्याशयेति भावः, दीनः दुःखितः सन्, स्वाकराणां रत्नविहीनकरणात् हेतोरिति भावः, स्वस्य निजस्य, आकरान् उत्पत्तिस्थानानि, स्वगर्भस्थानि रत्नानामुत्पत्तिस्थानानीति भावः, निःसम्पदः सम्पत्तिविहीनान्, रत्नशून्यानिति यावत्, अपदिशन् कुर्वन्, कथं-कथमपि अतिकृच्छ्रेण, यद्वा—कथं-कथमपि भीत-भीतं यथा तथा, अस्मै रावणाय, स्कन्धोपनेयानपि स्कन्धवाह्यानपि, स्थूलानिति भावः, मणीन् रत्नानि, यद्वा—स्वाकरान् निःसम्पदः अपदिशन् अपि मणीन् स्कन्धोपनेयान्, कृत्वेति शेषः, स्कन्धे वहनं कृत्वेत्यर्थः, परिशोधयति ददातीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

(ट) परापतितः समागतः ।

(ठ) असमेति ।—असमे अतुल्ये, तुलनारहिते इत्यर्थः, "राम-रावणयोर्युद्धं राम-रावणयोरिव" इति कविवचनादिति भावः, समरे सङ्ग्रामे, यो हर्षः आनन्दः, उत्साह इति यावत्, तेन हेषमाणो ह्रेषाशब्दं कुर्वन्, "हेषा ह्रेषा च निःस्वनः" इत्यमरः; यः वनायुज वाजिनिवहः वनायुजाख्यदेश( आरव )भवाश्वसमूहः, तेन वितीर्णः दत्तः, कीनाशकासरस्य यममहिषस्य, "कीनाशः कर्षके क्षुद्रे कृतान्तोपांशुघातिनि" इति विश्वः; "लुलायो महिषो वाह-द्विषत्कासरसैरिभाः"

कर्णज्वरेण प्रजविना (ठ) रथेन कार्मुकपाणिः (ड) महावीरः ।

रत्नचूडः । (सभयाद्भुतम्) ।—

कल्पान्तक्रूरसूरोत्करविकटमुखौ मानुषद्वन्द्वयुद्ध-
क्रीडाकण्डूयदूर्जस्वलसकलभुजालोकभूयोविलक्षः ।
सम्भूयोत्तिष्ठमानस्वपरबलमहाशस्त्रसम्पातभीमा-
मुर्वीं गीर्वाणगोष्ठीगुरुमदनिकषो नैकषेयः पिधत्ते ॥२१॥

हेमाङ्गदः । (सकौतुकम्) । सखे ! दक्षिणतः (ढ) पश्य तावत्—

---

इत्यमरः, कर्णज्वरः श्रवणव्याधिः यस्य तथाभूतेन, तीव्रशब्देन यमवाहनस्यापि श्रवणपीडाजनकत्वादिति भावः । प्रजविना प्रकृष्टवेगवता ।

(ड) कार्मुकपाणिः धनुर्हस्तः, धनुर्द्धर इत्यर्थः ।

कल्पान्तेति ।—कल्पान्ते प्रलयकाले, क्रूरः दारुणः, कालानलवर्त्तीति भावः यः सूरोत्करः सूर्यसमूहः, द्वादशसूर्य इत्यर्थः, तद्वत् विकटानि भीषणानि, मुखानि आननानि यस्य तथोक्तः, मानुषद्वन्द्वेन मानवयुगलेन, राम-लक्ष्मणद्वयेनेति भावः, यत् युद्धं सङ्ग्रामः, तदेव क्रीडा खेला, क्रीडावत् अकिञ्चित्करम् इत्यर्थः, तया कण्डूयन्तः कण्डूं कुर्वन्तः, ऊर्जस्वलाः बलवन्तः, ये सकलाः समस्ताः, भुजाः बाहवः विंशतिबाहव इति भावः, तेषाम् आलोकेन दर्शनेन, भूयः अधिकं यथा तथा, विलक्षः लज्जितः, मानुषौ भुजचतुष्टयवन्तौ, एताभ्यां सह मम विंशतिभुजस्य युद्धं लज्जाकरमिति भावयन्निति भावः, गीर्वाणगोष्ठीनां देवसमाजानां, गुरुर्महान् यः मदः गर्वः, वयमेव सर्वोपरिवर्त्तिन इत्येवंरूप अहङ्कार इति यावत्, तस्य निकषः कषणप्रस्तर, गर्वस्य परीक्षास्थानमित्यर्थः, विध्वंसक इति भावः, नैकषेयः निकषासुतः रावणः, सम्भूय मिलित्वा, उत्तिष्ठमानानाम् उद्यमं कुर्वतां, स्वपरबलानां स्वसैन्यानां विपक्षसैन्यानाञ्चेत्यर्थः, महद्भिः अतिप्रचण्डैः, शस्त्रसम्पातैः आयुधनिक्षेपैः, भीमां भीषणाम्, उर्वीं पृथ्वीं, पिधत्ते आच्छादयति निजशरीरेण वा, शस्त्रवर्षणेन वा, स्वपक्षयोधि-सैन्यैः वेति शेषः । स्रग्धरा वृत्तम् ॥ २१ ॥

(ढ) दक्षिणतः दक्षिणस्यां दिशि ।

अगस्त्याज्ञासद्यःशमितविपुलोच्छ्रायविषमा-
मुदस्यन्तः सेतावलगितवतो विन्ध्यशिखरान् ।
शिरःसङ्ख्यासत्याकृतदशमुखालोकरभसा-
दुपेत्यातित्रस्ताश्चपलमपसर्पन्ति कपयः ॥३२॥

रत्नचूडः । ( दृष्ट्वा सहासम् ) ।—

शस्त्रीकृतान् कपिभिरापततो मुदैव
विक्रम्य चन्दनतरून् दधते पलादाः ।
तत्सङ्गिनस्तु भुजगाः क्षणपाशबन्ध-
दुःखासिकामवयवेषु दिशन्त्यमीषाम् ॥ ३३ ॥

---

अगस्त्येति ।—अगस्त्यस्य कुम्भोद्भवस्य मुनेः, आज्ञया आदेशेन, सद्यः तत्क्षणमेव, शमिताः निरस्ताः, नम्रीभूता इत्यर्थः, विपुलोच्छ्रायेण महोन्नत्या, विषमाः तीव्राः तान्, यद्वा—अगस्त्याज्ञया सद्यः शमितेन प्रशान्तिं गतेन, नम्रीभूतेन इत्यर्थः, विपुलोच्छ्रायेण महोन्नत्या हेतुना, विषमान् उन्नतानतान्, क्वचिदुन्नतान् क्वचिदवनतान् इत्यर्थः, सेतौ सेतुबन्धने, अवलगितवतः अलग्नान्, सेतुबन्धनार्थमानीतान् किन्तु आधिक्येन प्रयोजनाभावात् परित्यक्तानिति भावः, विन्ध्यशिखरान् विन्ध्यगिरिशृङ्गाणीत्यर्थः, उदस्यन्तः उत्क्षिपन्तः, कपयः वानराः, उपेत्य समीपं गत्वा, रावणस्येति भावः, शिरसां मूर्ध्नां, सङ्ख्यया एकादिक्रमेण गणनया, सत्याकृतः सत्यत्वेन स्वीकृतः, सत्यरूपेण परिज्ञातः इत्यर्थः, रावणस्य दशमुखत्वं सत्यं न वेति सङ्ख्यातुं समीपं गत्वा सङ्ख्यानयनेन सत्यत्वेन स्वीकृत इति यावत्, यः दशमुखः रावणः, तस्य, यद्वा—सत्याकृतानि दश दशसङ्ख्यकानि, मुखानि आननानि, तेषाम् आलोकरभसात् दर्शनसम्भ्रमात्, अतिशयेन त्रस्ताः भीताः सन्तः, चपलं चञ्चलं यथा तथा, क्षिप्रमिति यावत्, अपसर्पन्ति अपगच्छन्ति, पलायन्ते इत्यर्थः । शिखरिणी वृत्तम् ॥ ३२ ॥

शस्त्रीकृतानिति ।—पलं मांसम्, अदन्ति खादन्तीति पलादाः राक्षसाः, कपिभिः वानरैः, शस्त्रीकृतान् प्रहरणीकृतान्, अस्त्ररूपेण व्यवहृतान् इत्यर्थः, आपततः आगच्छतः, चन्दनतरून् चन्दनवृक्षान्, विक्रम्य पराक्रम्य, उत्प्लुत्येति यावत्, यद्वा—विक्रम्य प्रभूतबलमाश्रित्य, शक्तिसम्पदा इत्यर्थः, "विक्रमस्तु पुमान् क्रान्तिमात्रे स्यात् शक्तिसम्पदि" इति मेदिनी; मुदेव हर्षेणैव, दधते

हेमाङ्गदः । (विहस्य) । इतोऽपि तावत्—

रक्षःस्वयंवरविडम्बपराङ्मुखीभिः
पुष्पोत्करे सुरवधूभिरनुज्झितेऽपि ।
अस्वीकृतेन तरुणा हरिणा हतोऽसौ
नक्तञ्चरः स्वपिति तत्कुसुमावकीर्णः ॥ ३४ ॥

रत्नचूडः । (चिरं विभाव्य) । सखे ! पश्य पश्य—

स्वतनुरुचिभिर्दीर्घाङ्गौ व्यामितः सृजतां निजै-
रथ विदधतः कायाभोगैरकाण्डतमस्विनीम् ।
दधति नितरामुद्दीप्तानामधश्छिदुरश्रियो
हरिहुतभुजां धूमच्छायाममी रजनीचराः ॥ ३५ ॥

---

धारयन्ति, तु किन्तु, तत्साङ्गनः तत्स्था इत्यर्थः, चन्दनवृक्षाश्रिता इति यावत्, भुजगाः सर्पाः, अमीषां पलाशानाम्, अवयवेषु अङ्गेषु, क्षणं क्षणकालमात्रमित्यर्थः, यद्वा—क्षणेनैव तत्क्षणमेव, इच्छाधारणमात्रमेवेत्यर्थः, पाशबन्धनमागपाशाख्यास्त्रेण बन्धनवत् बन्धनेनेत्यर्थः, दुःखासिकां दुःखेन अवस्थानं, राक्षसानामिति भावः, दिशन्ति जनयन्ति । चन्दनतरुषु भुजगास्तिष्ठन्तीति प्रसिद्धिः । वसन्ततिलकं वृत्तम् ॥ ३३ ॥

रक्ष इति ।—रक्षसां निशाचराणां, सङ्ग्रामहतानामिति भावः, स्वयंवर एव स्वेच्छया पतित्वेन वरणमेव, विडम्बः तिरस्कारः, गर्ह्यव्यापार इति यावत्, तस्मात् पराङ्मुखीभिः विमुखीभिः, सुरवधूभिः सुराङ्गनाभिः, अप्सरोभिरित्यर्थः, पुष्पोत्करे पुष्पसमूहे, अनुज्झितेऽपि अत्यक्तेऽपि, गृह्यमाणेऽपि अहृष्टेऽपि इत्यर्थः, पुष्पवर्षणे अकृतेऽपि इति यावत्, सङ्ग्रामहता वीराः स्वर्गं गच्छन्ति, ताश्च सुराङ्गनाः पुष्पवृष्ट्या अभिनन्द्य स्वयं वृण्वन्तीति शास्त्रं, किन्तु राक्षसानाम् अतिदुराचारतया सुराङ्गनानां पीडनकारितया च तेषां स्वयंवरणे पराङ्मुखत्वमिति भावः, हरिणा कपिना, वानरेण इत्यर्थः, "शुक्राहिकपिभेकेषु हरिर्ना कपिले त्रिषु" इत्यमरः ; अस्वीकृतेन अस्त्रतया प्रक्षिप्तेन, तरुणा वृक्षेण, पुष्पितेन इति भावः, हतः विनष्टः, असौ नक्तञ्चरः राक्षसः, तस्य तरोः, कुसुमैः पुष्पैः, अवकीर्णः अभिव्याप्तः, अभिहृष्टः सन् इत्यर्थः, स्वपिति निद्राति, रणभूमावेति शेषः । वसन्ततिलकं वृत्तम् ॥ ३४ ॥

स्वतान्विति ।—छिदुरा भङ्गुरा, विनश्वरीत्यर्थः, श्रीः शोभा येषां तथाभूताः;

हेमाङ्गदः। (सास्मितम्)। सखे। पश्य पश्य—

किमपि कपयः कर्माश्चर्यं महातरुशस्त्रिणो
विदधति यथा दिक्कूलेभ्यस्तथाऽपसरन्त्यमूः।
ध्रुवमवपतद्रक्षःश्रेणीविमुक्तनभोऽन्तर-
प्रतिभरणिकानिःस्थामानो दशाननकीर्त्तयः॥ ३६॥

रत्नचूडः। (ससम्भ्रमम्)। अहह! दारुणमुपस्थितम्—

---

क्रमेण क्षयस्यागमादिति भावः, अमी परिदृश्यमाना एते, रजनीचराः राक्षसाः, निजैः स्वीयैः, कायाभोगैः शरीरस्य परिपूर्णताभिः, देहविस्तारैरित्यर्थः, "आभोगः परिपूर्णता" इत्यमरः, अकाण्डे अनवसरे, अप्रासङ्गिके इत्यर्थ, "काण्डोऽस्त्री दण्ड-बाणार्व-वर्गावसरवारिषु" इत्यमरः, तमस्विनी तामसीं रात्रिं, विदधत जनयन्तः सन्तः, कृष्णवर्णत्वादिति भावः, स्वतनुरुचिभिः निजदेहकान्तिभिः, इतः अस्मिन् प्रदेशे, वानराधिष्ठितप्रदेशे इत्यर्थ, व्योम आकाशं, दीर्घाह्नो दीर्घदिवसां, सृजता कुर्वता, पिङ्गलवर्णप्रभया इति भावः, अधः निम्नदेशे, भुवीत्यर्थ, नितराम् अत्यर्थम्, उद्दीप्यमानां ज्वलनाभेन दीप्यमानानामित्यर्थः, हरयः वानरा एव, हुतभुजः अग्नयः तेषां, धूमच्छायां धूमकान्तिं, दधति धारयन्ति, वानरा भूमिष्ठाः पिङ्गलवर्णा दीप्यमानाश्चेति अग्निसाम्यं, राक्षसास्तु रथारूढत्वादुपरिवासिनः, पराजयलाभेन भङ्गुरश्रियः; कृष्णवर्णाश्चेति धूमसाम्यमिति भावः। उपमाऽलङ्कारः। हरिणी वृत्तम्॥ ३५॥

किमपीति।—कपयः वानराः, महातरुशस्त्रिणः प्रकाण्डवृक्षप्रहरणाः सन्तः, अत्युन्नतान् वृक्षान् अस्त्ररूपेण प्रयुञ्जानाः सन्तः इत्यर्थः, किमपि अनिर्वचनीयम्, आश्चर्यं विस्मयजनकं, कर्म क्रिया, यथा विदधति कुर्वन्ति, तथा अमूः एताः, दशाननकीर्त्तयः रावणयशांसि, अवपतन्तीभिः अवलुठन्तीभिः, रणभूमाविति शेषः, रक्षसां राक्षसानां, श्रेणीभिः पङ्क्तिभिः, रथारोहिभिरिति भावः, विमुक्तं विरहितं, युद्धहवे पतनादिति भावः, यत् नभोऽन्तरम् आकाशमध्यं, तस्य प्रतिभरणिकया प्रतिपूरणेनेत्यर्थः, उच्चैस्तैः कपिसैन्यैरिति भावः, राक्षससैन्यमध्ये समापतद्भिः वृक्षप्रहरणधारिभिः कपिसैन्यैः रथारूढराक्षससैन्यनिपातनात् तैः नभोऽन्तरस्य प्रतिपूरणं बोद्धव्यम्; निःस्थामानः, स्थाम बलं, निजसैन्यरूपबललक्षणमित्यर्थः, येषां तथाभूताः, क्षीणाः सत्यः इत्यर्थः, "द्रविणं तरः सहोबलशौर्याणि स्थाम शुष्मं च। शक्तिः पराक्रमप्राणौ" इत्यमरः; दिक्कूलेभ्यः दिगन्तेभ्यः, अपसरन्ति अपगच्छन्ति, येषां

रक्षोनिपिष्टकपिमुक्तमहीध्रचूर्ण-
पूर्णान्तराभिरिषुवृष्टिभिरुज्जिहानः ।
रोषाट्टहासदहनप्रसरैस्तडित्वां-
ल्लङ्काधिपः किमपि सन्तमसं तनोति ॥ २७ ॥

हेमाङ्गदः । ( सर्वं निर्वर्ण्य ) । अहो ! क्षुद्रैरपि सम्भूय भूयोभिः (ण) एको महान् सुकरः कदर्थयितुम् ; (त) यतः,—

दृप्यद्दिक्पालदन्तावलबहलमदावग्रहोग्राभिरुच्चां
ताराभिर्दीप्यमानं दिशि विदिशि दशग्रीवमुद्ग्रीवयन्तः ।

---

सहायेन रावणस्य यशः दिगन्तप्रसारि सञ्जातं, तेषामभावेन दिगन्तेभ्यः रावणयशसः सङ्कोचनं युक्तमेवेति भावः । हरिणी वृत्तम् ॥ २६ ॥

रक्ष इति ।—रक्षोभिः राक्षससेनाभिरित्यर्थः, निपिष्टाः निःशेषेण पिष्टाः, चूर्णीकृता इत्यर्थः, कपिभिः वानरसेनाभिरित्यर्थः, मुक्ताः निक्षिप्ताः, राक्षसविनाशार्थमिति भावः, ये महीध्राः पर्वताः, तेषां चूर्णेन क्षोदेन, रजोरूपेणेति भावः, पूर्णं व्याप्तम्, अन्तरं मध्यं यासां ताहृशीभिः, इषुवृष्टिभिः बाणवर्षणैः, उज्जिहानः उद्गच्छन्, युद्धाय उत्तिष्ठन् इत्यर्थः, लङ्काधिपः रावणः, रोषेण क्रोधेन, ये अट्टहासाः विकटहसितानि, ते एव दहनप्रसराः अग्निविस्ताराः, क्रोधेन मुखादीनां रक्तवर्णत्वेन हासस्य च सुतीव्रत्वेन अग्निवत् सन्तापकत्वादिति भावः, तैः, तडित्वान् विद्युत्वान्, दीप्तिमान् भवन्निति भावः, अथ च लङ्काधिप एव तडित्वान् मेघ इति व्यस्तरूपकम् ; "अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः । धाराधरो जलधरस्तडित्वान्" इत्यमरः, रावणस्य कृष्णवर्णत्वादिति भावः, किमपि अनिर्वचनीयं, सन्तमसं गाढान्धकारं, तनोति विस्तारयति, वर्षितशर-जालेन पर्वतचूर्णेन च नभःप्रदेशस्य आवृतत्वात् स्वस्य कृष्णवर्णत्वाच्च अन्धकारस्य गाढत्वं बोद्धव्यम् । मेघस्य अन्धकारजनकत्वञ्च प्रसिद्धमेवेति भावः । वसन्ततिलकं वृत्तम् ॥ २७ ॥

( ण ) क्षुद्रैरपि हीनैरपि, बलहीनैरपीति यावत् । सम्भूय मिलित्वा । भूयोभिः बहुभिः ।

( त ) महान् उत्तमः, बलवानिति यावत् । सुकरः सुखकरः, अनायाससाध्य इत्यर्थः । कदर्थयितुं क्लेशयितुम्, अभिभवितुमित्यर्थः ।

ए ते निःशेषसेतुग्रथनसमधिकैः शस्त्रिणः शैलपादै-
रुद्यामानः कपीन्द्रा रजनीचरपुरीमुत्तरेण प्लवन्ते ॥ १८ ॥

रत्नचूडः। (सविषादम्)। हन्त! महत् विषममिव पश्यामि, यदमी निष्कृपकृपाणपाट्यमानप्रतिभटविकटोरःकपाटकण्टकितकपोलभित्तयः सन्तानपातिनीभिरनीकरुधिरधाराभिरति-

---

दृश्यत इति।—निःशेषं निरवशेषं, सम्पूर्णं यथा तथेत्यर्थः, यत् सेतुग्रथनं सेतुबन्धनं, तस्मात् समधिकैः अवशिष्टैरित्यर्थः, अतिरिक्तैरिति यावत्, सेतुबन्धने सम्पूर्णे सति ये शैलपादाः अवशिष्टाः आसन् तैरिति निष्कर्षः, शैलपादैः पर्वतखण्डैः, शस्त्रिणः आयुधवन्तः, तान् शस्त्ररूपेण व्यवहरन्तः इत्यर्थः, उद्दामानः अत्युग्रवीर्य्याः, अनिवार्य्यपराक्रमा इत्यर्थः, उच्छृङ्खलाः इति यावत्, एते पुरतो दृश्यमाना इत्यर्थः, कपीन्द्राः महाकपयः, दृप्यताम् अहङ्कारिणां, दर्पशालिनामित्यर्थः, दिक्पालदन्तावलानां दिक्पालाः दिशां रक्षकाः धारका वा, ये दन्तावला हस्तिनः तेषां, दिक्पालानाम् इन्द्रादीनां, ये दन्तावलाः तेषामित्यर्थो वा, ऐरावतादीनामष्टानां दिग्गजानां, "दन्ती दन्तावलो हस्ती" इत्यमरः; "ऐरावतः पुण्डरीकः वामनः कुमुदोऽञ्जनः। पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः॥" इति चामरः; बहलः प्रभूतः, यो मदः दानवारि, तस्य अवग्रहे वृष्टिप्रतिबन्धे, मदस्रावनिरोधे इत्यर्थः, रावणस्य सक्रोधदृष्टिपातेनैव भयात् तेषां स्रावनिरोधादिति भावः, "वृष्टिर्वर्षं तद्विघातेऽवग्रहावग्रहौ समौ" इत्यमरः; उग्राभिः उत्कटाभिः, क्रूराभिरिति यावत्, अक्ष्णां नेत्राणां, ताराभिः कनीनिकाभिः, दिशि विदिशि दिशोर्मध्ये, अग्न्यादिकोणे इत्यर्थः, दीप्यमानं प्रज्वलन्तं, दशग्रीवं रावणम्, उत् उन्नता, ग्रीवा कन्धरा यस्य स उद्ग्रीव ऊर्द्ध्वग्रीवः तं कुर्वन्तः सन्तः, रजनीचरपुरीं राक्षसनगरीं लङ्काम्, उत्तरेण लङ्कायाः उत्तरस्यां दिशीत्यर्थः, प्लवन्ते उत्पतन्ति, उत्तरद्वारमवरुन्धन्तीति भावः। स्रग्धरा वृत्तम् ॥ १८ ॥

(ख) हन्त। खेदे। विषमं दारुणं, सङ्कटमित्यर्थः। निष्कृपेति।—निष्कृपैः दारुणैः, यद्वा—निष्कृपं निर्दयं यथा तथा, कृपाणैः करवालैः, पाट्यमानाः विदार्य्यमाणाः, प्रतिभटानां विपक्षसैन्यानां, विकटाः विशालाः, ये उरःकपाटाः कपाटवत् विस्तृतवक्षःस्थलानीत्यर्थः, तैः दृष्टैरिति भावः, कण्टकिताः रोमाञ्चिताः, कपोलभित्तयः गण्डदेशाः येषां तथोक्ताः; यद्वा—कपोलभित्तिः गण्डदेशः, अत्याकलमिति भावः येः तथोक्ताः। सन्तानपातिनीभिः धारया पतन्तीभिः,

प्रवृद्धवीरपानगोष्ठीमहोत्सवाः (थ) समन्तादभिद्रवन्ति यातु-धानाः (द) प्लवङ्गमयूथपतीन्।

हेमाङ्गदः। (सहर्षम्)। सखे! कृतं विषादेन, (ध) यदेषः,—

दशमुखशरपीडितापयानो-
द्यमपरिपुच्छयमानवानराणि।
सरभसमभिसान्त्वयन् बलानि
द्विषमभियोधयति प्लवङ्गराजः॥२९॥

रत्नचूडः। (दृष्ट्वा सखेद-हासाद्भुतम्)। अहह!—

प्रवाहिणीभिरिति यावत्। अनीकेति।—अनीकानां सैन्यानां, युद्धे हताहतानामिति भावः, रुधिरधाराभिः रक्तप्रवाहैः। अतिप्रवृद्धेति।—अतिशयेन प्रवृद्धः वृद्धिं गतः, वीराणां शूराणां, पानगोष्ठीमहोत्सवः पानगोष्ठीवत् सुरापानसमितिवत्, महान् उत्सवः उल्लासः येषां तथाभूताः।

(द) समन्तात् सर्वतः, चतुर्दिक्षु इत्यर्थः। अभिद्रवन्ति आक्रामन्ति इत्यर्थः, अभिघ्नन्तीत्यर्थो वा। यातुधानाः राक्षसाः, "राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः। यातुधान पुण्यजनो नैरृतो यातु-रक्षसी॥" इत्यमरः। प्लवङ्गमयूथपतीन् वानरेन्द्रान्, कपिसेनाध्यक्षानित्यर्थः।

(ध) कृतम् अलं, "कृतं युगेऽलमर्थे स्यात् विहिते हिंसिते त्रिषु" इति मेदिनी; विषादेन वैमनस्येन, खेदेनेति यावत्, विषादं मा कुरु इति समुदितार्थः।

दशमुखेति।—प्लवङ्गराजः वानराधीशः, सुग्रीवः इत्यर्थः, दशमुखस्य रावणस्य, शरैः बाणैः, पीडिता व्यथिताः, अत एव अपयानम् अपक्रमः, पलायनमित्यर्थः, "अप-क्रमोऽपयानञ्च" इत्यमरः, तस्य उद्यमे उपक्रमे, परिपुच्छयमानाः पुच्छम् उत्क्षिपन्तः, एतत्तु पशुसाधारणानां स्वभाव एव यत्, ते पलायनकाले पुच्छम् उत्तोल्य धावन्तीति, वानराः कपयो येषु तानि, बलानि सैन्यानि, अभिसान्त्वयन् प्रियवचनेन प्रोत्साहयन्निति भावः, सरभसं सत्वरं, द्विषं शत्रुं, रावणमिति यावत्, अभियोधयति युद्धार्थमाभिमुख्येन गच्छतीत्यर्थः। पुष्पिताग्रा वृत्तम्॥ २९॥

अस्त्राणि प्लवगाधिपेन विहिताः पौलस्त्यवक्षःस्थली-
सङ्घट्टानलदत्तदावविपदः सीदन्ति भूमीरुहाः।
उत्पाट्य प्रहितश्च शैलशिखरो लङ्केन्द्रहस्तावली-
निष्पिष्टो निजकुञ्जनिर्झरजलैर्जम्बालपिण्डायते॥ ४०॥

हेमाङ्गदः। (विहस्य)। सखे! दशकन्धरमधिकृत्य न किञ्चिदेतत्—(न)

तथैतेनोद्धृत्य स्फटिकशिखरी सोऽपि विदधे
समन्तादा-मूलत्रुटितवसुधाबन्धविधुरः।

अस्त्राणीति।—प्लवगाधिपेन वानरराजेन, सुग्रीवेण इत्यर्थः, अस्त्राणि अस्त्र-स्वरूपाणीत्यर्थं, विहिताः प्रयुक्ताः, आयुधत्वेन निक्षिप्ता इत्यर्थः, भूमीरुहाः वृक्षाः, पौलस्त्यस्य रावणस्य, वक्षःस्थल्याम् उरःस्थले, प्रस्तरकठिनायामिति भावः, सङ्घट्टेन सङ्घर्षणेनेत्यर्थं, यः अनलः अग्निः उत्थित इति भावः, तेन दत्ता उत्पादिता इति यावत्, दावविपत् वनाग्निघटनं येषां तथाभूताः सन्तः, दग्धाः सन्त इति भावः, "दवदावौ तु वनवह्नौ वनेऽप्युभौ" इति मेदिनी, सीदन्ति अवसादं गच्छन्ति, भस्मीभूता भवन्ति इत्यर्थः, तथा उत्पाट्य उन्मूल्य, आकर्षणेन उत्खायेत्यर्थः, शैलादिति शेषः, प्रहितः प्रेरितः, रावणं प्रति निक्षिप्त इत्यर्थः, शैलशिखरश्च पर्वतशृङ्गञ्च, लङ्केन्द्रस्य लङ्केश्वरस्य रावणस्य, हस्तावलीभिः भुजसमूहैः, विंशतिसङ्ख्यकहस्तैरिति यावत् निष्पिष्टः चूर्णितः सन् निजस्य आत्मनः, स्वकीयस्येति यावत्, कुञ्जस्य लतादिपिहितस्थानस्य, निर्झरजलैः प्रस्रवणसलिलप्रवाहैः, जम्बालपिण्डायते कर्दमपिण्ड इवाचरति। "निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शाद-कर्दमौ" इत्यमरः। शार्दूलविक्रीडितं वृत्तम्॥ ४०॥

(न) दशकन्धरं रावणम्, अधिकृत्य विषयीकृत्य, एतत् शैलशृङ्गचूर्णीकरणम्, न किञ्चित् अकिञ्चित्करम्, रावणसम्बन्धे एतत्पर्वतचूर्णीकरणस्य किमपि गुरुत्वं नास्ति, अनायाससाध्यमेतदिति निष्कर्षः।

तथेति।—एतेन रावणेन, सः शिवावासत्वेन सुप्रसिद्धः अन्येषामसाध्यश्च इत्यर्थः, स्फटिकशिखरी अपि स्फटिकधवल-कैलासपर्वतोऽपि, तथा तेन प्रकारेण, उद्धृत्य उत्-क्षिप्य, समन्तात् सर्वतः, आ-मूलं मूलपर्यन्तं, यद्वा—आ-मूलात् मूलादारभ्य, त्रुटितेन

अमुं येनाद्यापि त्रिपुरहरनृत्यव्यतिकरः
पुरस्तादन्येषामपि शिखरिणामुल्ललयति ॥४१॥

किञ्च तर्कयामि—

अस्त्रीकृतस्तरुवरो हरिपुङ्गवेन
लङ्केन्द्रवक्षसि मृणालमृदुः पपात।
तत्र स्थितैस्तु कुसुमैः कुसुमेषुरेनं
सीतावियोगविधुरं दृढमाजघान ॥४२॥

रत्नचूडः। (विहस्य)। सखे! किमुच्यते, महासत्त्ववतामुपरि (प) खल्वसौ रावणः। तथा हि—

---

छिन्नेन, वसुधाबन्धेन पृथिवीबन्धनेन, पृथिव्या सह संयोगकारणभूतेन दृढबन्धनेनेत्यर्थः, विधुरः विकलः, शिथिल इत्यर्थः, विश्लिष्टो वा, विच्छिन्न इत्यर्थः, "वैकल्येऽपि च विश्लेषे विधुरं विकले त्रिषु" इति विश्वप्रकाशः; विदधे कृतः, 'तथा' इत्यस्य तादृश इत्यर्थो वा, तेन च—स्फटिकशिखरी उद्धृत्य समन्तात् तथा तादृश, या-मूलत्रुटितवसुधा-बन्धविधुरः कृत इत्यर्थः, येन वैधुर्य्येण, अद्यापि इदानीमपि, त्रिपुरहरस्य शङ्करस्य, नृत्यव्यतिकरः नर्त्तनव्यतिषङ्गः, नर्त्तनव्यापार इत्यर्थः, यद्वा—नृत्यमेव व्यतिकरः व्यसनं, कैलासस्य विपदित्यर्थः, चञ्चलीभावादिति भावः, "अथ व्यतिकरः पुंसि व्यसन-व्यतिषङ्गयोः" इति मेदिनी; अन्येषां कैलासव्यतिरिक्तानां, शिखरिणां पर्वतानां, पुरस्तात् पूर्वम्, अमुं कैलासम्, उल्ललयति चालयति, कम्पयतीत्यर्थः, छिन्नमूलत्वात् अन्येषां पर्वतानां कम्पनात् पूर्वमेव कैलासः कम्पीभवतीति निष्कर्षः। शिखरिणी वृत्तम् ॥ ४१ ॥

निश्चिन्त्य अस्त्रीकृत इति।—हरिपुङ्गवेन वानरराजेन, अस्त्रीकृतः प्रहरणीकृतः, अस्त्रतया निक्षिप्त इत्यर्थः, तरुवरः महावृक्षः, लङ्केन्द्रस्य रावणस्य, वक्षसि उरसि, मृणालमिव तु पुनः, पद्मादेर्नालमिवेत्यर्थः, मृदुः कोमलः सन्, पपात पतितो बभूव; तु पुनः, कुसुमेषुः कामः, तत्र तरुवरे, स्थितैः वर्त्तमानैः, अस्त्रैरिति यावत्, कुसुमैः रावणस्य मदन-उद्दीपनभूतैरिति भावः, सीतावियोगेन जानकीविरहेण, विधुरं कातरम्, एनं रावणं, दृढम् अत्यर्थं यथा तथा, निर्दयं यथा तथेत्यर्थः, आजघान प्रहृतवान्।

खेटूकृत्य हुतेषु मूर्द्धसु जवादग्नेः स्फुटित्वा बहि-
र्व्याकीर्णेष्वलिकेषु दैवलिपिभिर्दृष्टेऽपि रामायणम्।
चित्तेनास्खलितेन यस्त्वधिकं ब्रह्माणमप्रीणयत्
कस्तस्मै प्रथमाय मानिषु महावीराय वैरायते ? ॥ ४३ ॥

हेमाङ्गदः। सखि! पश्य पश्य, भयानकमद्भुतं च वर्त्तते—

विशिखौघविकीर्णगण्डशैले
तरुसञ्चूर्णितशक्तितोमरे च।
कपि-राक्षसराजयोरजस्रं
तुमुले भान्ति तलातलिप्रपञ्चाः ॥ ४४ ॥

---

(प) महासत्त्ववतां मनस्विश्रेष्ठानां, महाबलानां वा, उपरि श्रेष्ठे, वर्त्तते इति शेषः। उपरि प्रधानमित्यर्थो वा।

खेटूति।—खेटूकृत्य छित्त्वा, स्वयमेवेति भावः, स्वेषु निजेषु, मूर्द्धसु शिरःसु, हुतेषु कृतहोमेषु, अग्नौ आहुतिरूपेण निक्षिप्तेषु सत्सु इत्यर्थः, जवात् वेगात्, अग्नेः अग्निकुण्डात्, अग्नेः जवात् इति वा अन्वयः, स्फुटित्वा विदीर्य, बहिः स्फुटनेन अग्नेर्बहिरागमनात् बहिःस्थिते इत्यर्थः, व्याकीर्णेषु विक्षिप्तेषु, प्रकाटितेषु इत्यर्थः, अलिकेषु ललाटेषु, ललाटास्थिषु इत्यर्थः, "ललाटमलिकं गोधिः" इत्यमरः; दैवलिपिभिः विधातृलिखिताक्षरैः, रामायणं रामस्य अयनं गतिः, लङ्कायामागमनमित्यर्थः, यद्वा—अयनं चरितं, रामस्य चापरोपादिकार्यमित्यर्थः, रामकर्त्तृकमात्मनो वधमिति यावत्, दृष्टेऽपि प्रत्यक्षीकृतेऽपि, यः अस्खलितेन अविचलितेन, चित्तेन मनसा, तदधिकं तस्मात् पूर्वस्मादित्यर्थः, अधिकं यथा तथा, ब्रह्माणं पितामहम्, अप्रीणयत् तोषयामास, मानिषु मानवत्सु, प्रथमाय श्रेष्ठायेत्यर्थः, महावीराय शूरश्रेष्ठाय, तस्मै, रावणायेति शेषः, कः को जनः, वैरायते ? विरुध्यति ? तं प्रति वैरमाचरति ? इत्यर्थः, न कोऽपीति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ४३ ॥

विशिखेति।—विशिखौघेन शरसमूहेन, विकीर्णाः विक्षिप्ताः, निराकृता इति यावत्, रावणेनेति भावः, गण्डशैलाः गिरिच्युतस्थूलोपलाः, सुग्रीवप्रहिता इति भावः, यत्र तादृशे, "गण्डशैलास्तु च्युताः स्थूलोपला गिरेः" इत्यमरः, तथा तरुभिः वृक्षैः, महावृक्षप्रहारैरित्यर्थः, सञ्चूर्णिताः निष्पेषिताः, सुग्रीवेणेति भावः, शक्तयः तोमराश्च

नूनमिदानीं—

> श्वासोर्मिप्रतिबन्धतुन्दिलगलप्रच्छिन्नहारावली-
> रत्नैरापतयालुभिः कृतफणप्राग्भारभङ्गभ्रमः ।
> ग्रीवाभावनिरन्तरालमिलितैः स्तब्धैः शिरोभिर्भुवं
> धत्ते वानरवीरविक्रमभरात् भुग्नैर्भुजङ्गाधिपः ॥ ४५ ॥

---

अस्त्रविशेषाः, रावणप्रहिता इति भावः यत्र तथाभूते, कपि-राक्षसराजयोः सुग्रीव-रावणयोः, अजस्रम् अनवरतं, तुमुले रणसङ्कुले महायुद्धे इत्यर्थः, "तुमुलं रणसङ्कुले" इत्यमरः; यद्वा—तुमुले रणे, घोरे सङ्ग्रामे इत्यर्थः, "तुमुल व्याकुले रणे" इति विश्वप्रकाशः; तलातलिप्रपञ्चाः तलैश्च तलैश्च चपेटैश्च चपेटैश्च प्रहृत्य यत युद्धं कृतं तत तलातलि हस्ताहस्ति युद्धमित्यर्थः, "तलश्चपेटे तालद्रौ" इति मेदिनी; तत्-प्रपञ्चाः तद्विस्ताराः, भान्ति राजन्ते ॥ ४४ ॥

श्वासेति ।—भुजङ्गाधिपः सर्पराजः, वासुकिरित्यर्थः, वानरवीरस्य कपिषु शूरस्य, सुग्रीवस्य इत्यर्थं, विक्रमभरात् पदविक्षेपभारात्, युद्धकाले सक्रोधप्रचण्डपदताडनादित्यर्थः, आपतयालुभिः पुनः पुनः पतनशीलैः, छिन्नहारादिति भावः, श्वासोर्मीणां निःश्वासतरङ्गाणां, तरङ्गवत् उच्छलितभावेन प्रवहतां निःश्वासानाम्, अतिभारेण परिश्रान्ततया अविरतप्रवृत्तोच्छ्वासानामित्यर्थः, यद्वा—श्वासोर्मीणां निश्वासवेगानाम्, "ऊर्मिः स्त्री-पुंसयोर्वीच्यां प्रकाशे वेग-भङ्गयोः" इति मेदिनी, प्रतिबन्धेन निरोधेन, बाधितत्वेनेत्यर्थः, तुन्दिलात् उच्छूनात्, स्फीतादित्यर्थः, गलात् कण्ठदेशात्, प्रच्छिन्नायाः त्रुटितायाः, हारपरिणाहापेक्षया गलदेशस्य अतीव स्फीतत्वेन तत्र परिमातुमशक्यत्वात् हारच्छेदनं बोद्धव्यं, तुन्दिलशब्दस्य स्थूलोदरार्थकत्वेऽपि अत्र स्फीततामात्रे उपचारः, हारावल्याः मौक्तिकमालायाः, रत्नैः मणिभिः, कृतः जनितः, फणानां फटानां, सहस्रसङ्ख्यकानामिति भावः, प्राग्भारस्य विस्तारस्य, भङ्गभ्रमः त्रोटनभ्रान्तिः, न्युब्जताभ्रान्तिरिति वा, नमनभ्रान्तिरित्यर्थः, यस्य तथाभूतः सन्, ग्रीवाभावेन कण्ठविरहेण, सर्पजातेश्चक्षुःश्रवस्त्वादिति भावः, निरन्तरालम् अविच्छिन्नं यथा तथा, मिलितैः संयुक्तैः, स्तब्धैः निश्चलैः, किन्तु भुग्नैः अवनतैः, शिरोभिः मस्तकैः, सहस्रफणमण्डलैरिति यावत्, भुवं पृथिवीं, धत्ते धारयति । शार्दूलविक्रीडितं वृत्तम् ॥ ४५ ॥

(सविषादम्)। अहह ! बाहुयन्त्रेण(फ) आपीड्य वानरराजं सुग्रीवं किमाह रावणः,—

अस्मद्बाहुवनान्दोल-सुलभं फलमाप्नुवन् ।
नियुद्धलाघवक्रान्त ! शाखामृग ! सुखी भव ॥ ४६ ॥

रत्नचूड़ः। (सहर्षम्)। सखे ! करणकौशलमोचितात्मा विपक्षदुर्वचनतुद्यमानहृदयो हृदयङ्गमम्(ब)आभद्भाति वानरेन्द्रः,—

विंशत्या युगपत् क्षमैरपि भुजैराकर्षणच्छेदयो-
रच्छिन्नं दशमं शिरः कथयति छिन्नानि यानि क्रमात् ।

---

(फ) बाहुयन्त्रेण बाहुः भुज एव, यन्त्रं पीड़नसाधनद्रव्यविशेषः तेन ।

अस्मदिति ।—नियुद्धे बाहुयुद्धे, "नियुद्धं बाहुयुद्धे स्यात्" इत्यमरः ; यत् लाघवं क्षिप्रहस्तत्वं, यद्वा—लाघवं लघुता,न्यूनता इत्यर्थः, पराभव इत्यर्थो वा, तेन क्रान्तः अवसन्नः तत्सम्बुद्धौ, शाखामृग ! हे वानर ! "कपिप्लवङ्गप्लवग-शाखामृगवलीमुखाः । मर्कटो वानरः कीशो वनौकाः" इत्यमरः ; अस्माकं बाहुवनेन भुजारण्येन, भुजनिवहेन इत्यर्थः, यः आन्दोलः आलम्बनं, पीड़नमिति यावत्, तेन सुलभं सुप्रापम्, अनायासलभ्यमित्यर्थः, फलं परिणामं, मृत्युरूपमिति भावः, आप्नुवन् लभमानः सन्, सुखी भव, यातनानुभवाभावादिति भावः । अनुष्टुप् वृत्तम् ॥ ४६ ॥

(ब) करणेति ।—करणस्य इन्द्रियस्य, साधकतमस्य वा, उपायस्य वा, गात्रस्य वा, "करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः ; कौशलेन नैपुण्येन, हस्तादि-कौशलेन वा, उपायविशेषेण वा, कामरूपित्वात् मायाबलेन देहं सङ्कुच्य वा इत्यर्थः, मोचितः त्याजितः, रावणेनेति, रावणभुजबन्धनादिति वा भावः, आत्मा शरीरं यस्य येन वा तथाभूतः । विपक्षेति ।—विपक्षस्य शत्रोः, रावणस्य इत्यर्थः, दुर्वचनेन कटुवाक्येन, तिरस्कारवचनेनेत्यर्थः, तुद्यमानं भिद्यमानं, हृदयम् अन्तः-करणं यस्य तथोक्तः । हृदयङ्गमं मनोज्ञम् ।

विंशत्येति ।—युगपत् समकालम्, आकर्षण-च्छेदयोः आकर्षण-कर्त्तनयोः, आकर्षणपूर्वकच्छेदने इत्यर्थः, क्षमैरपि समर्थैरपि, विंशत्या भुजैः बाहुभिः, अच्छिन्नम् अकर्त्तितं, दशमं दशानां पूरणं, शिरः मस्तकं, यानि शिरांसि, क्रमात् क्रमशः,

तान्याराध्य महेश्वराणि भवतः शीर्षाणि तुल्यं दश
च्छिन्दानो दशभिर्नखैर्यदि पुनः शाखामृगेन्द्रः सुखी ॥ ४७ ॥

अपि च, रे रे राक्षस!—

दशमुखवधनाट्यसूत्रधारो
रघुपतिरस्य च पारिपार्श्विकोऽहम्।

---

छिन्नानि त्रुटितानि, कथयति, आराध्य सेवितः, महेश्वर शङ्करः ये. तानि, भवतः दश शीर्षाणि दशभिर्नखैः यदि पुनः छिन्दानः निकृन्तन् भवामीति शेषः, तदा शाखामृगेन्द्रः अहं सुखी स्यामिति शेषः। दशमं शिरः यानि छिन्नानि कथयति तानि दशशीर्षाणीत्यसम्भवं, प्रत्युत नव शीर्षाणीति युक्तं, तदत्र पद्यकृत प्रमाद इव प्रतिभातीति चिन्त्यम्। यद्वा—दशमं दशानां पूरणं, दशसङ्ख्याकमित्यर्थः, शिरः मस्तकं, तत्रात शेषः, विंशत्या विंशतिसङ्ख्यकैः, भुजैः बाहुभिः, युगपत् एकदैव, आकर्षण-च्छेदयोः आकर्षण-कर्त्तनयोः आकर्षणपूर्वकच्छेदने इत्यर्थः, समैरपि समर्थैरपि, एकभुजेनाकर्षणम् अपरभुजेन छेदनम्, एवं विंशतिभुजेषु द्वाभ्यां द्वाभ्यां भुजाभ्यां दशानामेव शिरसां युगपत् आकर्षण-च्छेदनयोः समर्थैरपि इत्यर्थः, अच्छिन्नम् अवशिष्टं मम, यानि शिरांसि, क्रमात् पौर्वापर्य्यानुसारेण, इदमादौ, इदं तत परम, इदं ततः परम एव क्रमेणेत्यर्थः, छिन्नानि कृत्तानि, कथयति वक्ति, भुजानां विंशतिसङ्ख्याकत्वात् दशशिरसोऽपि छेदनसम्भवेऽपि दैवयोगात् तत्र यत् अच्छिन्नं स्थितं तेनैव अपरेषां नवानां छेदनक्रमं निर्देष्टुं समर्थं भवतीति समुदायार्थः, आराध्यः सेवितः, महेश्वरः शङ्करः यैः ताद्दशानि, भवतः तव, तानि महादेवाराधनार्थं छिन्नानि नवसङ्ख्याकानि इत्यर्थः, शीर्षाणि शिरांसि, तथा दश दशमं शिरश्च इत्यर्थः, यद्वा—तानि नवसङ्ख्याकशिरःसहितानि इत्यर्थः, दश शीर्षाणि, तुल्यं युगपदेव, त्वया एकमेकं कृत्वा क्रमात् छिन्नम्, अहन्तु एकदैव, येन किमपि कस्यापि छेदनक्रमं कथयितुं न शक्नुयादिति भावः, दशभिर्नखैः दशसङ्ख्याककरजैः, त्वया विंशत्या भुजैः नवसङ्ख्याकं शिरोमात्रं छिन्नम्, अहन्तु भुजद्वयमात्रस्य दशसङ्ख्याकनखमात्रेण दशैव शिरांसीति भावः, यदि पुनः यदा च, छिन्दानः निकृन्तन्, भवामीति शेषः, तदा शाखामृगेन्द्रः वानराधीशः, सुखी दुःखाभाववान्, भवेदिति शेषः, न पुनस्तव शङ्करानन्दीलसुखभक्तिनेति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ४७ ॥

दशेति।—रघुपतिः रामचन्द्रः, दशमुखस्य रावणस्य, वध एव विनाश एव,

प्रकरणफलबीजभाविकाना-

ममृतभुजां समुपास्महे समाजम् ॥ ४८ ॥

इत्यभिदधानेनैवोत्प्लुत्य निर्दयं शिरसि ताडितो रथध्वजदण्डावलम्बो कथञ्चिदाश्वसिति (भ) रावणः। (सर्वतोऽवलोक्य सहर्षम्)। सखे! पश्य पश्य—

यन्माल्यग्रथनावशेषविकलैः सन्तानकैर्नाकिनां

भर्त्रे गर्भगमेव दाम निभृतं स्वर्मालिकैर्गुम्फितम्।

---

नाट्यम् अभिनेयं वस्तु, तस्य सूत्रधारः प्रधाननटः, अहञ्च अस्य रघुपतेः नाट्यस्य वा, पारिपार्श्विकः सूत्रधारस्य पार्श्वचरो नटविशेषः, "सूत्रधारेण सहितः संलापं प्रकरोति यः। सूत्रधारसमो वाऽपि स भवेत् पारिपार्श्विकः॥" इत्युक्तलक्षणः, प्रकरणं नाटकविशेषः, तस्य फलं प्रतिपाद्यरूपं, बीजं कारणं, नायकादिव्यापारविशेष इति भावः, तद्भावकानां तदनुभाविनृणां, पक्षे—प्रकृष्टं करणम् उत्प्लुतादि, तस्य फलं कार्य्यं ताडनादि, तस्य बीजं कर्कशवचनादिकं, तद्भावकानां तदनुभविनृणाम्, अमृतभुजाम् अमृतमिव अमृतं नाटकास्वादजनितं सुखं भुञ्जते इति तथोक्तानां, सहृदयानामित्यर्थः, पक्षे—देवानां, समाजं सभां, पक्षे—समूहं, समुपास्महे आराधयामः, तव वधेनेति शेषः। पुष्पिताग्रा वृत्तम् ॥ ४८ ॥

(भ) इति एवम्, अभिदधानेनैव कथयता एव सुग्रीवेणेति शेषः, उत्प्लुत्य उल्लम्फ्य। ताडितः प्रहृतः। रथेति।—रथस्य स्यन्दनस्य, ध्वजदण्डं पताकायष्टिम्, अवलम्बते धारयतीति तादृशः, आघातेन विघूर्णितम् आत्मानं स्थिरीकर्त्तुमिति भावः। आश्वसिति प्राणिति, प्रकृतिस्थो भवतीत्यर्थः।

यदिति।—यस्य दशास्यस्य मूर्द्धः, माल्यं दाम, तस्य ग्रथनात् गुम्फनात्, अवशेषाणि अतिरिक्तानि, अतिरिक्तत्वात् परित्यक्तानीति भावः, अत एव विकलानि म्लानानीत्यर्थः, विशीर्णानीति भावः तैः, सन्तानकैः देवतरुविशेषकुसुमैः, "पञ्चैते देवतरवो मन्दारः पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्॥" इत्यमरः; नाकिनां देवानां, भर्त्रे अधिपतये, इन्द्राय इत्यर्थः, इन्द्रार्थमिति यावत्, तादर्थ्ये चतुर्थी; गर्भगमेव गर्भः कुक्षिः इव गर्भः, "गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके" इति मेदिनी, तस्मिन् गच्छति तिष्ठतीति तादृशं द्रव्यविशेषमध्यस्थितं, द्रव्यविशेषस्य आवरणेनावृतं, येन बाह्यतो माल्यत्वेन प्रतीतिर्न जायते

तस्मिन्नद्य दशास्यमूर्द्धनि नवप्रस्तावनामापदां
पश्यन्तो रभसोघभर्त्सितभियः क्रोशन्ति नः स्यन्दनाः ॥४९॥

हेमाङ्गदः। (सविषादम्)। अहह! सोऽप्यास्वस्य दशकण्ठेनापि मुष्टिना ताडितो मूर्च्छितः कपीन्द्रो नील-हनूमद्भ्यामाश्वास्यमानोऽपसार्य्यते (म)।

रत्नचूडः। सखे! प्रधनस्य (य) हि प्रथमे पर्व्वणि शतकृत्वो (र) विजयन्ते पराजीयन्ते च वीराः, तत्र को विषादः।

हेमाङ्गदः। (अग्रतोऽवलोक्य)। सखे रत्नचूड! दिष्ट्या वर्द्धसे यदयमनुप्रासः,—

---

इति भाव, "गर्भगम्" इत्यत्र "गर्भकम्" इति पाठे—गर्भकं केशमध्ये धार्य्यं, ननु शिर प्रभृतिप्रकाशस्थानेषु, रावणस्य दृष्टिपातभयादिति भावः, "केशमध्ये तु गर्भकम्" इत्यमरः, दाम माल्यं, स्वर्गालिकैः स्वर्गोद्यानपालैः, निभृतम् अतिगुप्तं यथा तथा, गुम्फितं ग्रथितम्, अद्य इदानीं, तस्मिन् पूर्वोक्तरूपे, दशास्यमूर्द्धनि रावणशिरसि, आपदां विपत्तीनां, विनाशरूपाणामनर्थानामित्यर्थः, नवप्रस्तावनां नवीनां सूचनां, पश्यन्तः आलोकयन्तः, नः अस्माकं, स्यन्दनाः रथाः, रभसोघेन हर्षसमूहेन, आनन्दातिशयेनेत्यर्थः, "रभसो वेग-हर्षयोः" इत्यमरः; भर्त्सिताः तिरस्कृताः, निराकृताः इत्यर्थः, भीः भयं येषां तथाभूताः सन्तः, आनन्दावेगेन निर्भीकाः सन्तः इत्यर्थः, क्रोशन्ति उच्चैःशब्दं कुर्वन्ति, घर्घरशब्दं कुर्वन्तीत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ४९ ॥

(म) सोऽपि रावणशिरांसि ताड़यितापि। आस्वस्य आस्वस्थीभूय, प्रकृतिस्थेन भूत्वेत्यर्थः, दशकण्ठेन इत्यनेनान्वयः। कपीन्द्रः वानरेश्वरः सुग्रीवः। आश्वास्यमानः सान्त्व्यमानः, शुश्रूष्यमाण इत्यर्थः। अपसार्य्यते अपनीयते।

(य) प्रधनस्य युद्धस्य, "युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्" इत्यमरः।

(र) पर्व्वणि प्रस्तावे, उपक्रमे इत्यर्थः, प्रथमावस्थायामिति यावत्, "पर्व्व स्यादुत्सवे ग्रन्थौ प्रस्तावे विषुवादिषु" इति धरणिः। शतकृत्वः शतं शतं वारानित्यर्थः। विजयन्ते पराभवन्ति, शत्रूनिति शेषः, पराजीयन्ते पराभूयन्ते, शत्रुभिरिति शेषः, कदाचित् शत्रून् पराभवन्ति, कदाचिच्च शत्रुभ्यः पराभवं प्राप्नुवन्तीत्यर्थः।

कुशिकसुतसपर्य्याद्दृष्टदिव्यास्त्रतन्त्रो
भृगुपतिसहयुध्वा वीरभोगीणबाहुः ।
दिनकरकुलकेतुः कौतुकोत्तानचक्षु-
र्बहुमतरिपुकर्मा कार्मुकी रामभद्रः ॥ ५० ॥

रत्नचूडः । ( सहर्षं राममवलोक्य रावणं प्रति ) । राक्षसराज !—

बालेनापि विलूनधूर्जटिधनुःस्तम्भेन बाहूष्मभि-
र्येन खेदयता मनोहरमृजूचक्रे मुनिर्भार्गवः ।

कुशिकेति ।—कुशिकसुतस्य विश्वामित्रस्य, सपर्य्यया अर्च्चया, सेवया इत्यर्थः, "पूजा नमस्याऽपचितिः सपर्य्याऽर्च्चाऽर्हणाः समाः" इत्यमरः, दृष्टम् अवलोकितं, प्राप्तमित्यर्थः, दिव्यस्य अलौकिकस्य, अस्त्रस्य आयुधस्य, तन्त्रं शास्त्रभेदः, वेदस्य शाखान्तरं वा, अस्त्रवेद इत्यर्थः, धनुर्वेद इत्यर्थो वा येन तथोक्तः, "तन्त्रं कुटुम्बकृत्ये स्यात्……।……शास्त्रभेदे परिच्छदे ॥ श्रुतिशाखान्तरे—" इति मेदिनी, तथा भृगुपतिना परशुरामेण, सहयुध्वा सह युद्धवान्, परशुरामेण सह कृतयुद्ध इत्यर्थः, परशुरामविजेता इति भावः, वीरभोगीणौ वीरयोग्यौ इत्यर्थः, बाहू भुजौ यस्य तथाविधः आ-जानुलम्बितबाहुरित्यर्थः, दिनकरकुलकेतुः सूर्य्यवंशध्वजः, कौतुकेन कुतूहलेन, सुग्रीव-रावणयोः युद्धदर्शनौत्सुक्येनेत्यर्थः, रावणदर्शनकौतूहलेन इत्यर्थो वा, उत्ताने उन्नमिते, रावणस्य रथस्थत्वात् स्वस्य च भूस्थत्वादिति भावः, चक्षुषी नेत्रे यस्य तथोक्तः, बहुभिः अनेकैः, जनैरिति शेषः, मतम् आदृतं, रिपुषु शत्रुषु, कर्म क्रिया, युद्धव्यापार इत्यर्थः यस्य तादृशः, कार्मुकी धनुष्मान्, रामभद्रः रामचन्द्रः, अनुप्राप्त इति गद्यस्थवाक्येनान्वयः । मालिनी वृत्तम् ॥ ५० ॥

बालेनेति ।—बालेनापि शिशुनाऽपि, विलूनः छिन्नः, भग्नः इत्यर्थः, धूर्जटेः शिवस्य, धनुःस्तम्भः स्तम्भोपमविशालं कार्मुकं येन तथाभूतेन, तथा बाहूष्मभिः बाह्वोः भुजयोः, ऊष्मभिः तेजोभिः, बलैरिति भावः, खेदयता खिन्नीकुर्वता, सन्तापयता इत्यर्थः, "खेदस्तु खेदने घर्मे" इति मेदिनी, येन बालेन रघुनन्दनेन, मुनिः भार्गवः परशुरामः, अत्यर्थं कुटिलः सर्वथा अनमनीयश्च इति भावः, मनोहरं मनोज्ञं यथा तथा, अनायासेन इति तस्य व्यवहारेण इति वा भावः, ऋजूचक्रे सरलीकृतः, दमित इति भावः, दृश्यते च लोके, अत्यर्थं कुटिलं ( वक्रं ) शुष्कं वा वंशदण्डादिकं खेदनेन

स प्राप्तो रघुनन्दनः किमपरं तेनाधुना नेष्यते
धन्यो बालिसमानकर्त्तृकवधश्लाघाऽतिभूमिं भवान् ॥ ५१ ॥

हेमाङ्गदः। (सकौतुकम्)। सखे! तूष्णीमास्वहे (ख) तावत्, शृणुवः किं ब्रवीति रावणः। (कर्णं दत्त्वा)। कथमेवमाह, साधु रे चविर्याडिम्भ! (ग) साधु—

यत्कन्यामभिलष्यता निमिपतेर्न स्थाणवीयं मया
दोर्लीलातुलितावतारितहरग्रावणाऽपि रुग्णं धनुः।
तत् द्रक्ष्यन्त्यधुना कियन्तमवधिं यावद्भवानित्यमो
देवेन्द्रद्विपदानदुर्दिनभिदो रौद्राचिषो मार्गणाः ॥ ५२ ॥

---

यथा ऋजूकुर्वन्ति लोकाः, स्तब्धीभूतं वा अङ्गप्रत्यङ्गादिकं स्वेदेनेव मृदूकुर्वन्ति, तद्वत् इति भावः, स तादृशः महावीरः, रघुनन्दनः रामचन्द्रः, प्राप्तः समागतः, अपरम् अन्यत्, किं, कर्त्तव्यमिति शेषः, अधुना इदानीं, तेन रघुनन्दनेन, भवान् बालिनः बालिराजस्य, बालिवधस्येति भावः, समानः तुल्यः, कर्त्ता निष्पादकः यस्य तादृशो यो वधः विनाशः, बालिवधे यः कर्त्ता तत्कर्त्तृकवध इत्यर्थः, रामकर्त्तृकवध इति भावः, तेन या श्लाघा प्रशंसा, तस्याः अतिभूमिम् अतिशयं, नेष्यते प्रापयिष्यते, अतः भवान् धन्यः पुण्यवान्, तव विजेतारं यः अवधीत्, तस्य केनचिदनुचरेण तव हननस्य औचित्येऽपि तेनैव तव विनाशप्राप्तिः श्लाघनीयैवेति निष्कर्षः। शार्दूलविक्रीडितं वृत्तम् ॥ ५१ ॥

(ख) तूष्णीं मौनम्, आस्वहे तिष्ठावः।

(ग) चविर्याडिम्भ! चविर्याशिशो! "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः।

यदिति।—निमिपतेः निमिवंशीयानामधिपतेः जनकस्य, कन्यां तनयां सीताम्, अभिलष्यता स्पृहयता, मया दोर्लीलया भुजविलासेन, अवलीलयेति भावः, तुलितः परिमितः, कियान् गुरुः इति निर्णयार्थं क्रीडाकन्दुकवत् अवहेलया उत्तोल्य तुलनीकृत इत्यर्थः, पश्चात् अवतारितः अवनामितः, स्वस्थाने एव स्थापित इत्यर्थः, हरग्रावा हरस्य गिरिः, कैलास इत्यर्थः येन तथाभूतेनापि, धनुर्भङ्क्तुं समर्थेनापीति भावः "ग्रावाणौ शैलपाषाणौ" इत्यमरः; यत् यतः, स्थाणवीयं शाम्भवं, हरस्येदमि

( सविस्मयम् )। कथम्, अद्यापि तृणीकृतजगत्त्रयः स एवास्य तावान् अहङ्कारग्रन्थिः !! (श)

रत्नचूडः। ( सोत्प्रास-स्मितम् )। सखे ! कथम्, इदमेव भवन्तं विस्मापयते (ष)—

मानाध्मातः स्वां किलोत्कृत्य ताव-
न्मूर्द्धश्रेणीमेकशेषोत्तमाङ्गः।

---

मत्वेत्यर्थः, धनुः चापः, न रूप न भपम्. इष्टदेवस्येश्वरस्य मानमङ्गाभियोग भावः, तत् तस्मात् ; अत्र तच्छब्दस्य हेत्वर्थकत्वे कृते अर्थासङ्गतेः वक्ष्यमाणा एषा व्याख्या सम्यक्त्वेन प्रतीयते ; यथा—धनुर्न कम्पनमिति यत् तत् आश्चर्यम्, इति कृत्वेति शेषः ; अधुना इदानीमेव, देवेन्द्रद्विपस्य इन्द्रगजस्य ऐरावतस्य, दानं मद-वारि, तस्य दुर्दिनं वर्षणमिति भावः, "मेघच्छन्नेऽह्नि दुर्दिनम्" इति कोषात् दुर्दिनशब्दस्य मेघावृत-दिनार्थकत्वेऽपि अत्र उपचारात् मेघकार्य्यवर्षणार्थे प्रयोगो बोद्धव्यः, तद्वदः तच्छीलिन इति यावत्, रौद्राः तीव्राः, "रौद्रो घर्मे रसे चण्ड्यां स्त्री तीव्रे भीषणे त्रिषु" इति मेदिनी ; अर्धेन्दुः प्रभाः येषां तथाभूताः, रौद्रसम्पातात् दुर्दिनं गच्छतीति ध्वन्यते ; अमी मम तूणस्था हस्तस्था वा, मार्गणाः शराः, "मार्गणं याचनेऽन्वेषे मार्गणस्तु शरेऽर्थिनि" इति हैमः ; कियन्तम् अवधिं यावत् किं परिमितं कालं यावत्, भवान्, स्थास्यति जीविष्यति वा इति शेषः, इति द्रक्ष्यन्ति अवलोकयिष्यन्ति, भवदायुषः सीमानं द्रक्ष्यन्ति, अचिरमेव भवान् मरिष्यतीति भावः। यद्वा— कियन्तम् अवधिं काल यावत् भवान् इति द्रक्ष्यन्ति ? भवन्तम् अवलोकयिष्यन्ति ? न तु चिरं द्रक्ष्यन्ति, अविलम्बमेव भवन्तं संहरिष्यन्तीति भावः। भवानिति निपातेनाभिहितत्वात् प्रथमा। शार्दूलविक्रीडितं वृत्तम् ॥ ५२ ॥

( श ) तृणीकृतेति।—तृणीकृतं तृणवत् तुच्छीकृतं, जगत्त्रयं त्रिभुवनं येन तादृशः, सः त्रिलोकविख्यातः, अहङ्कारग्रन्थिः गर्वबन्धः, ग्रन्थिवत् सुदृढाहङ्कारः इत्यर्थः, अद्यापि अधुनाऽपि, अस्यामवस्थायामपीत्यर्थः, तावानेव तत्परिमित एव, पूर्ववदेवेत्यर्थः, वर्त्तते इति शेषः।

( ष ) सोत्प्रास-स्मितं सोल्लुण्ठन-हास्यं, सोपहास हास्यमित्यर्थः, उपहाससूचक-हास्यं कृत्वेति यावत्। विस्मापयते विस्मितं करोति।

मानाध्मात इति।—मानेन गर्वेण, आध्मातः पूरितः, अतिमानीत्यर्थः, अयं रावण

स्त्रीमर्द्धाङ्गे वञ्चयित्वा मुखेन

प्रीतः शम्भोरेकपादे पपात॥ ५३॥

(ऊर्द्धमवलोक्य च सवितर्कम्)। भगवतो दिवस्पतेरिव रथो दाशरथि-मुपतिष्ठते। (ख)

हेमाङ्गदः। (दृष्ट्वा सहर्षम्)। सखे! स एवायं, किं न पश्यसि, लोचनमार्गसहस्रचन्द्रकमेचकितमाहेन्द्रकवचहस्तो मातलिः!! (ग)। (क्षणं निर्वर्ण्य विहस्य च)।—

विविधमणिमयूखमञ्जरीभिः

कृतसुरचापसहस्रसन्निपाते।

---

इति अध्याहार्य्यं, किलेति प्रसिद्धौ, स्वा निजा, मूर्द्धश्रेणी शिरःपङ्क्तिं, नवमस्तकमिति यावत्, उत्कृत्य छित्त्वा, एकमेव एकसङ्ख्यकमेव, शेषम् अवशिष्टम्, उत्तमाङ्गं शिरः यस्य तथाभूतः सन्, मुखेन तेनैव एकेन आननेन, प्रीतः सन्तुष्टः सन्, अर्द्धाङ्गे देहार्द्धे, वर्त्तमानामिति शेषः, स्त्रीं भार्य्यां, गौरीमिति भावः, वञ्चयित्वा त्यक्त्वा इत्यर्थः, शम्भोः हरस्य, हर-गौरीरूपस्येति भावः, एकपादे एकस्मिन् चरणे, दक्षिणचरणे इति यावत्, दक्षिणस्यैव हरार्द्धाङ्गत्वात् इति भावः, पपात प्रणिपातम् अकरोत्, न तु स्त्रियाः गौर्य्याः पादे इति भावः, मानोन्नतत्वात् गौरीमपि न गणयामासेति निष्कर्षः। शालिनी वृत्तं, "मात्तौ गौ चेच्छालिनी वेद-लोकैः" इति तल्लक्षणात्॥ ५३॥

(ख) दिवस्पतेरिन्द्रस्य। उपतिष्ठते उपेत्य वर्त्तते, रामचन्द्रस्य समीपे तिष्ठतीत्यर्थः, यद्वा—उपतिष्ठते सेवते, सेवार्थं समागत इत्यर्थः।

(ग) स एवायम् इन्द्र एव एवायम्। लोचनेति।—लोचनानां नेत्राणां, मार्गसहस्रे अध्वसहस्रे, सहस्रलोचनस्य सहस्रसङ्ख्यकच्छिद्रे इत्यर्थः, चन्द्रकैः मयूरपुच्छस्थचन्द्राकृतिविचित्रवर्णसमूहैः, मेचकितः चित्रितः, अलङ्कृत इत्यर्थः, मयूरपुच्छचन्द्राकृतिसहस्रलोचनाङ्कित इति यावत्, माहेन्द्रकवचः इन्द्रवर्म, हस्ते पाणौ यस्य तादृशः। मातलिः इन्द्रसारथिः।

विविधेति।—देवराज इन्द्रः, अधिसमरं समरे, विभक्त्यर्थे अव्ययीभावः; विविधानां विचित्राणां, मणीनां रत्नानां, मयूखमञ्जरीभिः किरणवल्लरीभिः, उच्चस्य मञ्जरीवत् परिदृश्यमानकिरणराशिभिरिति यावत्, कृतं आरोपितं, सुरचापानां शक्रधनुषां, सहस्रस्य सन्निपातः समावेशः यस्मिन् तादृशे, अत्र रामोपस्थानार्थे

अधिसमरमहारयत् विमाने
निजमपि कार्मुकमत्र देवराजः ॥ ५४ ॥

(आकाशे कर्णं दत्त्वा)। किमाह रावणप्रतीहारः,—(क) अरे रे पुरुहूतसूत !—(ख)

दर्पोऽयं भवतः सुरासुरचमूदोःकाण्डकण्डूविष-
ज्वालाजाङ्गुलिकेन जङ्गलभुजां पत्याऽपि न त्याजितः ?।
येनैन्द्रे रथ-वर्मणी रघुशिशोरस्योपनीते त्वया
राजद्विष्टमिदं विधाय स कथं शक्तोऽपि वर्त्तिष्यते ? ॥५५॥

---

प्रेरिते अस्मिन्, विमाने व्योमयाने, शून्यमार्गे गमनोपयोगिनि रथे इत्यर्थः, निजं स्वकीयं, कार्मुकं धनुरपि, अहारयत् प्रेषयामास। पुष्पिताग्रा वृत्तम्—"अयुजि न-युगरेफतो यकारो युजि तु न-जौ ज-र-गाश्च पुष्पिताग्रा" इति लक्षणात् ॥ ५४ ॥

(क) रावणप्रतीहारः रावणद्वारपालः, रावणदेहरक्षिसैन्यविशेषो वा, प्रतीहार-शब्दस्य द्वाररक्षकार्थकत्वेऽपि अत्र उपचारात् देहरक्षकार्थो बोद्धव्यः।

(ख) पुरुहूतसूत ! इन्द्रसारथे ! "इन्द्रो मरुत्वान् मघवा··· । पुरुहूतः पुरन्दरः ॥" इत्यमरः।

दर्प इति।—सुरासुराणां देव-दैत्यानां, याः चम्वः सेनाः, तासां ये दोःकाण्डाः भुजस्कन्धाः भुजवर्गा वा, भुजसमूहा इत्यर्थः, "काण्डोऽस्त्री दण्डबाणार्व-वर्गावसर-वारिषु" इत्यमरः; तेषां कण्डूरेव कण्डूतिरेव, युद्धस्पृहा एव इति भावः, विषज्वाला विषतेजः, सर्पादिदंशनजनितविषस्य यातना इत्यर्थः, तस्याः जाङ्गुली विषप्रशमन-विद्या ता वेत्तीति जाङ्गुलिकः तेन विषवैद्येन इत्यर्थः, तत्कण्डूपशमनकारिणेति यावत्, सुरासुरभुजदर्पहारिणेति भावः, "जाङ्गुली विषविद्यायाम्" इति मेदिनी; "विषवैद्यो जाङ्गुलिकः" इत्यमरः; जङ्गलं पिशितं, मांसमित्यर्थः, भुञ्जते इति जङ्गलभुजः तेषां राक्षसानामित्यर्थः, "जङ्गलं निर्जनस्थाने विशिङ्गा पिशितेऽस्त्रियाम्" इति मेदिनी; पत्याऽपि प्रभुणाऽपि, रावणेनापि इत्यर्थः, भवतः तव, अयम् एषः, दर्पः अहङ्कारः, न त्याजितः ? न विनाशितः ? इति यावत्, न दूरीभूतः ? इति भावः, येन त्वया ऐन्द्रे इन्द्रसम्बन्धिनी, रथ-वर्मणी स्यन्दन-कवचे, अस्य रघुशिशोः रामस्य, उपनीते प्रापिते, दत्ते इति यावत्, स भवान् इदम् एवम्प्रकारं, राजद्विष्टं राजद्रोहं,

रत्नचूडः। (श्रुतिमभिनीय)। किमाह रामः,—सत्यमिदं भोः! यच्छील: (ग) स्वामी, तच्छीलास्तस्य प्रकृतयः, (घ) यदेवमपि स्वामिनो मूलोच्छेदिना दुर्णयेन विकत्थन्ते (ङ)।

हेमाङ्गदः। (आकाशे कर्णं दत्त्वा)। किमाह रावणः,—अरे तापसवटो!—

क्रोधेन ज्वलिता मुहूर्त्तमनु च स्वैरेव निर्वापिताः
क्लीवैरम्बुमहोर्मिभिर्मखभुजां पत्युः सहस्रं दृशः।
यैर्दृष्टा भुवनत्रयीविजयिभिः सर्वङ्कषाः सन्त्यमी
ते सम्प्रत्यपि मे नयापनययोर्निर्वाहमूलं भुजाः॥ ५६॥

रत्नचूडः। (कर्णं दत्त्वा विहस्य)। किमाह रामः,—

---

विधाय कृत्वा, शक्तोऽपि समर्थोऽपि, आत्मानं रक्षितुमिति शेषः, कथं केन प्रकारेण, वर्त्तिष्यते? जीविष्यति? नैव क्षणमपि जीविष्यतीत्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥ ५५॥

(ग) यच्छीलः यत्स्वभावः।

(घ) तच्छीलाः तत्स्वभावाः। प्रकृतयः अमात्याः, पौरवर्गा वा।

(ङ) मूलोच्छेदिना समूलविनाशिना। दुर्णयेन दुराचारेण। विकत्थन्ते श्लाघन्ते।

क्रोधेनेति।—भुवनत्रयीविजयिभिः त्रिभुवनजेतृभिः, यैः भुजैः, मुहूर्त्तं क्षणकालं, क्रोधेन कोपेन, ज्वलिताः प्रदीप्ताः, अनु च पश्चाच्च, ज्वलनानन्तरमेवेत्यर्थः, स्वैरेव निजैरेव, क्लीवैः अविक्रमैः, विक्रमाभावसूचकैरित्यर्थः, भयव्यञ्जकैरिति यावत्, निष्फलैरिति भावः, "क्लीबं नपुंसके षण्ढे वाच्यलिङ्गमविक्रमे" इत्यमरः; अम्बुमहोर्मिभिः वाष्पजलतरङ्गैः, नेत्रजलप्रवाहैरित्यर्थः, निर्वापिताः उपशमिताः, निष्प्रभीकृताः इत्यर्थः, मखभुजां देवानां, पत्युः अधिपस्य इन्द्रस्य, सहस्रं दृशः नेत्राणि, दृष्टाः अवलोकिताः, सर्वङ्कषाः सर्वविद्रावका इति यावत्, नयापनययोः नीति-दुर्नीत्योः, निर्वाहे सम्पादने, मूलं हेतुभूताः, मे मम, ते पूर्वोक्तरूपाः, अमी परिदृश्यमानाः, भुजाः बाहवः, सम्प्रत्यपि इदानीमपि, सन्ति वर्त्तन्ते, एभिरेव भुजैस्त्वां निहनिष्यामीति भावः। शार्दूलविक्रीडितं वृत्तम्॥ ५६॥

छित्त्वा मूर्द्ध्नः किमिति स वृतो धूर्जटिर्यद्यमीषां
दोःस्तम्भानां त्रिभुवनजयश्रीरियं वास्तवी ते ?।
मूर्द्धानो वा न खलु भवतो दुर्लभाः सम्भवेयु-
र्यत् देवस्य त्वमसि जगतां शिल्पिनोऽपि प्रपौत्रः॥ ५७॥

यत् पुनर्ब्रवीषि, "सम्प्रत्यपि ते भुजाः सन्ति" इति, तदधुनैव ज्ञास्यन्ते। (च)

हेमाङ्गदः। (कर्णं दत्त्वा)। किमाह रावणः,—अरे रे राजन्यडिम्भ! भवतः पुराणपितामहेन बहु तावदनरण्येनैव ज्ञातम्, (छ) इदानीं भवानपि ज्ञास्यति।

---

छित्त्वेति।—यदि त तव, अमीषां परिदृश्यमानानां, दोःस्तम्भानां बाहुरूपस्तम्भानाम्, इय त्वदुक्ता इत्यर्थः, त्रिभुवनजयश्रीः त्रिलोकविजयलक्ष्मीः, वास्तवी पारमार्थिकी, वस्तुत. बाहुबलेनैव सिद्धेति यावत्, तदा मूर्द्ध्नः शिरांसि, छित्त्वा कर्त्तित्वा, स धूर्जटिः शिवः, किमिति कथं, वृतः? प्रार्थितः? त्रिभुवनजयश्रियमिति शेषः; त्वया स्व-मस्तकच्छेदने च यत् साहसं प्रदर्शितं, तदपि न वास्तवसाहसवशेन, परन्तु तत्र कारणविशेषो विद्यते इत्याह—मूर्द्धान इति। वा पक्षान्तरे, यत यतः, त्व जगतां भुवनत्रयस्य, शिल्पिनः कारोः, स्रष्टुरित्यर्थः, देवस्य ब्रह्मण इत्यर्थः, प्रपौत्रः पुत्रस्य पौत्रः, असि भवसि, अतः भवतः तव, मूर्द्धानोऽपि शिरांस्यपि, न खलु नैव, दुर्लभाः दुष्प्रापाः, सम्भवेयु गण्येयुरिति यावत्, सुलभा एवेति भावः, त्वया ज्ञातं यत् मम शिरांसि यावन्ति छिन्नानि भवान्ति, तावन्त्यत्र मम प्रपितामहः पुनर्योजयिष्यति, तत् कथं शिरःकर्त्तनात् मम भयमिति बुद्ध्यैव त्वया स्वशिरांसि छित्त्वा शङ्करस्तोषितः, वास्तवं तव न साहसिकत्वमिति तात्पर्य्यम्। मन्दाक्रान्ता वृत्तम्॥ ५७॥

(च) ज्ञास्यन्ते, अस्माभिरिति शेषः। "ज्ञास्यन्ते" इति पाठस्तु न समीचीनतया प्रतिभाति, 'तत्' इत्यस्य कर्मत्वेन "ज्ञास्यते" इत्यस्यैव युक्तत्वादिति सुधीभिर्बोद्धव्यम्।

(छ) पुराणपितामहेन प्रपितामहादीनामपि पितामहेनेत्यर्थः, बहुपूर्वतनपुरुषेणेति यावत्। अनरण्येनैव सूर्य्यवंशीयराजविशेषेणैव। बहु समधिकं यथा तथेत्यर्थः, विशेषभावेनेति यावत्। ज्ञातं, मम भुजाः सन्ति न वा इतीति शेषः, यद्वा—भुजबलमिति शेषः। अनरण्यो रावणेन रणे निहत इति पुराणम्।

रत्नचूडः। (कर्णं दत्त्वा विहस्य)। किमाह रामः,—अरे रे राक्षसीपुत्र!—

न दूये नः पूर्वं नृपतिमनरण्यं यदवधी-
र्जयो वा मृत्युर्वा युधि भुजभृतां कः परिभवः?।
जितं तु त्वां कारागृहविनिहितं हैहयपतेः
पुलस्त्यो यत् भिक्षामकृत करुणस्तत् व्यथयति॥ ५८॥

हेमाङ्गदः। (कर्णं दत्त्वा)। किमाह रावणः,—आः क्षत्रियवटो! वाचाट! कथम्, अपूर्वशिल्पो (ज) रजनिचरेन्द्रचरितचन्द्रेऽपि लक्ष्म लिखसि (झ), तदद्य न भवसि (ञ)।

हेमाङ्गदः। (सम्भ्रममवलोक्य)। कथम्, उपक्रान्तमेव शरसम्प्रहारदुर्दिनं मन्दोदरीदयितेन। (ट)

---

न दूये इति।—नः अस्माकं, पूर्वं पूर्वपुरुषम्, अनरण्यं तदाख्यं, नृपतिं राजानं, यत् अवधीः हतवानसि, तेन न दूये न परितप्ये, भुजभृतां बाहुशालिनां, युधि युद्धे, जयो वा विजयलाभो वा, मृत्युर्वा मरणं वा, उभयोरेकतरमित्यर्थः भवति, तत्र परिभवः अवमाननं, कः? नैवेत्यर्थः, तु किन्तु, पुलस्त्यः तव पितामहः, करुणः दीनः सन्, हैहयपतेः कार्त्तवीर्य्यस्य, कारागृहविनिहितं बन्धनागारनिहितं, जितं पराभूतं, कार्त्तवीर्य्येणेति भावः, त्वां भवन्तं, यत् भिक्षां याच्ञां, तव मुक्तिप्रार्थनामित्यर्थः, अकृत कृतवान्, तत् भिक्षणं, व्यथयति तापयति, मामिति शेषः, जगत्प्रसिद्धस्य ब्रह्मतनयस्य मुनेर्दीनभावेन भिक्षाकरणदर्शनादिति भावः। शिखरिणी वृत्तम्॥ ५८॥

(ज) वाचाट! वाचाल! असम्बद्धबहुभाषिन्! इत्यर्थः। अपूर्वशिल्पी नूतनशिल्पकरः, त्वमिति शेषः, अपूर्वत्वञ्च इतः पूर्वं केनापि अचरिते एव कलङ्कालेखनादिति भावः।

(झ) रजनीति।—रजनिचरेन्द्रस्य निशाचरराजस्य, रावणस्येत्यर्थः, चरितचन्द्रे चन्द्रवत् निर्मलचरिते इत्यर्थः। लक्ष्म कलङ्कम्। लिखसि चित्रयसि, आरोपयसीत्यर्थः।

(ञ) अद्य एव, इदानीम् इत्यर्थः, न भवसि न तिष्ठसीत्यर्थः, न जीवसीति भावः, त्वमिति शेषः।

रत्नचूडः । कथं, मैथिलीवल्लभेनापि प्रत्युपक्रान्तमेव । (ठ)
(विहस्य)—

पतन्ति रामभद्रेण खण्डिता रावणेषवः ।
पूर्वार्द्धैः फलिभिर्वेगात् पश्चार्द्धैः पत्रिभिश्चिरात् ॥ ५९ ॥

किञ्च—

अक्षेषु केतुदण्डे च सारथौ च हयेषु च ।
खेलन्ति राक्षसेन्द्रस्य स्यन्दने रामपत्रिणः ॥ ६० ॥

हेमाङ्गदः । (सभयम्) । अहह !—

अन्धकारीकृतव्योमा बाणवर्षेण रावणः ।
रामारूढं तिरोधत्ते शताङ्गं शातमन्यवम् ॥ ६१ ॥

---

(ट) उपक्रान्तम् आरब्धम्, शरसमुद्दर्दिनं बाणवर्षणमित्यर्थः । मन्दोदरीदयितेन मन्दोदरीवल्लभेन ।

(ठ) मैथिलीवल्लभेन जानकीप्रियेण । प्रत्युपक्रान्तं प्रत्यारब्धं, प्रतिकूलमारब्धमित्यर्थः, शरसमुद्दिनमिति शेषः, रावणवर्षितशरनिवारणार्थं प्रतिकूलभावेन शरवर्षणमारब्धमिति निष्कर्षः ।

पतन्तीति ।—रामभद्रेण रामचन्द्रेण, खण्डिताः द्विधाकृताः, रावणस्य इषवः शराः, फलिभिः शस्त्राग्रैः, लौहनिर्मिताग्रविशिष्टैरित्यर्थः, "फलं ··शस्त्राग्रे व्युष्टि-लाभयोः" इति हैमः, पूर्वार्द्धैः द्विधा खण्डितस्य प्रथमार्द्धांशैः, फलोपलक्षितप्रथमार्द्धभागा इत्यर्थः, वेगात् सत्वरं, भारवल्लौहफलसंयुक्तत्वादिति भावः, तथा पत्रिभिः पत्रवद्भिः, पक्षयुक्तैरित्यर्थः, पश्चार्द्धैः द्विधा खण्डितस्य शेषार्द्धांशैः, पक्षोपलक्षितपश्चाद्भागा इत्यर्थः, चिरात् दीर्घकालेन, विलम्बादित्यर्थः, वाताहतइगतिवशेनेति भावः, पतन्ति स्खलन्ति । अनुष्टुप् वृत्तम् ॥ ५९ ॥

अक्षेषु इति ।—रामपत्रिणः रामशराः, "कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः" इत्यमरः; राक्षसेन्द्रस्य रक्षोराजस्य रावणस्य, स्यन्दने रथे, अक्षेषु चक्रेषु, रथावयवविशेषचक्रेषु इत्यर्थः, "अक्षमिन्द्रिये । ना द्यूताङ्गे कर्षे चक्रे व्यवहारे कलिद्रुमे ॥" इत्यमरः; केतुदण्डे च ध्वजयष्ट्यां च, सारथौ च सूतेऽपि, हयेषु च अश्वेषु, अपि, रथादीनि तद्घोटकैर्वाथंः, खेलन्ति क्रीडन्ति, एकस्मादन्यत्र, तस्मादन्यत्र, एवं सर्वत्र पर्यायक्रमेणानिशं पतन्तीत्यर्थः ॥ ६० ॥

(चिरं दृष्ट्वा सविस्मयम्)। सखे!—

नानाविधानि शस्त्राणि शस्त्रैर्नानाविधैरपि।
इमौ हि प्रतिकुर्वाते न कश्चिदतिरिच्यते॥ ६२॥

रत्नचूड:। एवमेतत्—

यत् रावणो बहुभिरेष भुजैः करोति
तत् राघवः प्रतिकरोति भुजद्वयेन।
कर्म द्वयोर्यदपि तुल्यफलं तथाऽपि
रक्षोभटाद्दशगुणं नरवीरशिल्पम्॥ ६३॥

---

अन्धकारीकृतेति।—बाणवर्षेण शरवर्षणेन, अन्धकारीकृतं समाच्छन्नमिति यावत्, व्योम आकाशं येन तथाभूतः, रावणः राक्षसराजः, रामेण रघुराघेण, आरूढम् अधिष्ठितं, शतं मन्यवः क्रतवः, यज्ञा इत्यर्थः यस्य सः शतमन्युः शतक्रतुः, शताश्वमेधयाजीत्यर्थः, "मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः; शतमन्योरिदं शातमन्यवम् ऐन्द्रं, शताङ्गं रथं, "शताङ्गः स्यन्दनो रथः" इत्यमरः; तिरोधत्ते अन्तर्भूतणिजन्तोऽयं प्रयोग:, तिरोधापयतीत्यर्थः, आच्छादयतीति यावत्, बाणवर्षेणेति भावः। अनुष्टुप् वृत्तम्॥ ६१॥

नानेति।—इमौ राम-रावणौ, नानाविधैः विविधैः, शस्त्रैः आयुधैः, नानाविधानि विविधानि, शस्त्राणि आयुधानि, प्रतिकुर्वाते निर्यातयतः, निवारयत इत्यर्थः, विफलीकुरुतः इति यावत्, हीति अवधारणे, कश्चिदपि कोऽपि, अनयोरिति शेषः, न अतिरिच्यते न अतिरिक्तो भवति, कोऽपि अपरमपि अतिक्रमितुं न समर्थो भवतीत्यर्थः, तुल्यतयैवानयोर्युद्धं वर्त्तते इति भावः। अनुष्टुप् वृत्तम्॥ ६२॥

यदिति।—एषः अयं, रावणः दशाननः, बहुभिः अनेकैः, विंशत्येति भावः, भुजैः बाहुभिः, यत्, कर्मेति शेषः, करोति सम्पादयति, राघवः रामः, भुजद्वयेन बाहुद्वयमात्रेणैव, तत्, कर्मेति शेषः, प्रतिकरोति प्रतिकूलतया सम्पादयति, भुजद्वयमात्रेण विंशतिभुजनिष्पादितस्य कर्मणः प्रतिविधानं करोतीत्यर्थः, यदपि यद्यपि, द्वयोः उभयोः राम-रावणयोः, कर्म कार्य्यं, तुल्यफलं समफलं, कृति-प्रतिकृतिभ्यामिति भावः, तथाऽपि नरवीरस्य नरेषु मनुष्येषु मध्ये, वीरस्य एकमात्रशूरस्य, मनुष्यमध्ये वीरश्रेष्ठस्य, रामस्य राघवस्य, शिल्पं कलाविशेषः, युद्धकौशलमिति यावत्, रक्षोभटात् राक्षसवीरात्, दशगुणं दशावृत्तं, बहुलतया श्रेष्ठमित्यर्थः, वर्त्तते इति शेषः। वसन्ततिलकं वृत्तम्॥ ६३॥

हेमाङ्गदः । (विहस्य) । सखे !—

विंशत्याऽपि भुजैरेष द्वौ भुजावभियोधयन् ।
अदूषितद्वन्द्वयुद्ध-मर्य्यादो दशकन्धरः ॥ ६४ ॥

(सखेद-भयं च) । कथम्, अयं रावणो माहेन्द्रस्यन्दनात् (ड)—

तस्याखिलभीमस्य ध्वजदण्डस्य लाञ्छनम् ।
दर्पदीप्तः क्षुरप्रेण मायूरं पिच्छमच्छिनत् !! ॥ ६५ ॥

रत्नचूडः । (सहर्षम्) । सखे ! पश्य पश्य, कुलिशकेतु-केतनविमाननाविलक्रुद्धेन (ढ)—

दिक्पालद्विपदर्पदानलहरीसौरभ्यगर्भानिलैः
पक्षैरेव समस्तराक्षसकथाकल्पान्तकर्णेजपाः ।
दीयन्ते रघुपुङ्गवेन कतिचित् पौलस्त्यमौलिष्वमी
पौलोमीनयनाम्बुशीकरकणावग्राहिणो मार्गणाः ॥ ६६ ॥

---

विंशत्येति ।—एषः अयं, दशकन्धरः दशग्रीवः रावणः, विंशत्या विंशतिसङ्ख्यकैः, भुजैः बाहुभिः, द्वौ भुजौ बाहुद्वयं, रामस्येति शेषः, अभियोधयन्नपि युद्धं कारयन्नपि, न दूषिता न लङ्घिता इति यावत् द्वन्द्वयुद्धस्य द्वैरथसङ्ग्रामस्य, रथद्वयारूढयोः वीरयोः सम्मुख-सङ्ग्रामस्येत्यर्थः, मर्य्यादा स्थितिः, नियमः इत्यर्थः, येन तथोक्तः, "मर्य्यादा सीमनि स्थितौ" इति मेदिनी ; वर्त्तते इति शेषः । परिहासोक्तिरियम् । अनुष्टुप् वृत्तम् ॥ ६४ ॥

(ड) माहेन्द्रस्यन्दनात् ऐन्द्ररथात् ।

तस्येति ।—दर्पेण गर्वेण, दीप्तः प्रज्वलितः, गर्व्वोद्धतः इत्यर्थः, रावणः इति शेषः, क्षुरप्रेण तदाख्येन अस्त्रेणेत्यर्थः, अखिलानां प्रभुसैन्यानां, भीमस्य भयङ्करस्य, तस्य प्रसिद्धस्य, ध्वजदण्डस्य पताकायष्टेः, लाञ्छनं चिह्नभूतं, मायूरं मयूरसम्बन्धि, पिच्छं बर्हम्, अच्छिनत् चिच्छेद । अनुष्टुप् वृत्तम् ॥ ६५ ॥

(ढ) कुलिशेति ।—कुलिशकेतोः वज्रलाञ्छनः, वज्रधरस्य इन्द्रस्य इत्यर्थः, "केतुर्ना रुक्पताकारि-ग्रहोत्पातेषु लक्ष्मणि" इति मेदिनी ; केतनं ध्वजः, ध्वजदण्डः इति यावत्, "केतनन्तु ध्वजे कार्य्ये निमन्त्रण-निवासयोः" इत्यजयः ; तस्य विमाननया अपमानेन, छेदनरूपमर्य्यादालङ्घनेनेत्यर्थः, दिग्धः रञ्जितः, क्रुद्धश्च रुष्टश्च तेन ।

दिक्पालेति ।—रघुपुङ्गवेन रघुश्रेष्ठेन रामेण, दिक्पालद्विपानां दिक्पालानाम्

हेमाङ्गदः। (सखेदाद्भुतम्)। कथं, किरीटपरम्परापरिभव-ममृष्यमाणेन बाणवर्षाद्वैतमातन्वता (घ) राक्षसराजेन—

विदेहकन्याकुचकुम्भकोटि-
कठोरतासाक्षिणि सायकोऽयम्।
रामस्य जन्मान्तरमेलकार-
श्री-कौस्तुभे वक्षसि हा! निखातः ॥ ६७ ॥

(सव्यथमवलोक्य)। सखे!—

---

इन्द्रादीनां, ये द्विपाः गजाः तेषाम् ऐरावतादीनां दिग्गजानां, दर्पेण अहङ्कारेण, आरोपिता इति भावः, या दानलहरी मद-वारितरङ्गः, मदवारिप्रवाह इत्यर्थः, तस्याः सौरभं सौगन्ध्यं, गर्भे अभ्यन्तरे येषां तादृशाः, अनिलाः वायवः येषां तथाभूतैः, पक्षैरिव पुङ्खैरिव उपलक्षिताः, तादृशपक्षसमन्विता इत्यर्थः, समस्तानां सकलानां, राक्षसकथानां राक्षस इति शब्दानां, कल्पान्तस्य प्रलयस्य, सर्वथा उच्छेदस्येत्यर्थः, "संवर्त्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि" इत्यमरः; कर्णेजपाः सूचकाः, "कर्णेजपः सूचकः स्यात्" इत्यमरः; पौलोम्याः पुलोमदुहितुः शच्याः, नयनाम्बूनाम् अश्रूणां, ये शीकरकणाः जलबिन्दवः, रावणकर्तृकराज्यापहरणेन निःसृता इति भावः, तेषाम् अवग्राहिणः विघातिनः, प्रतिबन्धिन इत्यर्थः, "वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ" इत्यमरः; शच्याः शोकहारिण इति भावः, अमी दृश्यमाना एते, कतिचित् मार्गणाः शराः, "मार्गणो याचके शरे" इति मेदिनी; पौलस्त्यस्य रावणस्य, मौलिषु किरीटेषु, "मौलिः किरीट-धम्मिल्लौ" इत्यमरः; दीयन्ते निक्षिप्यन्ते। शार्दूलविक्रीडितं वृत्तम् ॥ ६६ ॥

(घ) किरीटेति।—किरीटानां मुकुटानां, दशसङ्ख्याकानामिति भावः, परम्परा श्रेणिः, तस्याः परिभवं तिरस्कारं, शराघातेन छेदनादिरूपमिति भावः, अमृष्यमाणेन असहमानेन। बाणवर्षाद्वैतम् अद्वितीयं शरवर्षणमित्यर्थः, अतुलनीयं शरनिक्षेपमिति यावत्, आतन्वता विस्तारयता, कुर्वता इत्यर्थः।

विदेहेति।—विदेहकन्यायाः मैथिलतनयायाः सीतायाः, कुचौ स्तनौ, कुम्भाविव घटाविव, तयोः कोटेः अग्रभागस्य, चूचुकस्येत्यर्थः, या कठोरता काठिन्यं, तस्य साक्षिणि साक्षात् द्रष्टरि, अनुभाविनीति यावत्, जन्मान्तरे मूर्त्तिभेदे, विष्णुदेहे इति यावत्, मेल-कारी सङ्गिनावित्यर्थः, श्री-कौस्तुभौ लक्ष्मी-कौस्तुभाख्यमणी यस्य

एकेनैव निवातकङ्कटभिदा लङ्कापतेः पत्रिणा
विद्धोऽयं यदि नाम कोऽपि जगतामुल्लाघनो राघवः।
चक्षुर्वर्त्मसहस्रनिःसरदसृग्धारौघझाङ्कारिणा
माहेन्द्रेण तु वर्मणा विवृणुते वीरः सहस्रं व्रणान्॥ ६८॥

रत्नचूडः। (सहर्षम्)। राघवेणापि—

सीतास्तनस्तवककुङ्कुमपङ्कलोप-
सङ्कल्पपातकिनि वक्षसि रावणस्य।

---

यत्र वा तादृशे, रामस्य सीतापतेः, वक्षसि उरसि, अयं सायकः शरः, निखातः विद्धः, निचितः इत्यर्थः, हा! इति खेदे। उपजाति वृत्तम्॥ ६७॥

एकेनैवेति।—एकेनैव एकसङ्ख्यकेनैव, निवातं नास्ति वातः वायुप्रवेश इति यावत् यत्र तथाभूतं, वायुप्रवेशस्यापि रन्ध्रविहीनमित्यर्थः, शरीरेण सह दृढसम्बद्धमिति यावत्, कङ्कटम् उरश्छदं, वर्मेति यावत्, "अथ तनुत्र वर्म दंशनम्। उरश्छदः कङ्कटकः" इत्यमरः; भिनत्ति विदारयतीति तथोक्तेन, लङ्कापतेः रावणस्य, पत्रिणा शरेण, "कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः" इत्यमरः, जगतां भुवनानां, त्रिभुवनमध्ये इत्यर्थः, कोऽपि अनिर्वचनीयचरित इति, अद्वितीयः इति वा भावः, उल्लाघनः निरामयः, नीरोग इत्यर्थः, यद्वा—उल्लाघनः निपुणः, युद्धकुशलीत्यर्थः, "उल्लाघो निपुणे हृष्टे शुचि-नीरोगयोरपि" इत्यमरः; यद्वा—उल्लाघः नीरोगः, तं करोतीति उल्लाघ-शब्दात् "तत्करोति तदाचष्टे" इति णिचि कृते ल्युटा उल्लाघनः नीरोगजननः, रोगशान्तिकरः इत्यर्थः, उत्पातविध्वंसीति यावत्, "उल्लाघो निरुजः" इति वैयाकरणाश्च, अयं वीरः शूर, राघवः रामः, यदि नाम यद्यपीत्यर्थः, नामेति विस्मयद्योतकमव्ययं, विद्धः ताडितः, तु किन्तु, चक्षुषां नयनानां, वर्माणि पद्धतीनां सहस्रसङ्ख्यकानामिति भावः, वर्त्मसहस्रात् रन्ध्रसहस्रात्, निःसरतः निर्गच्छतः, असृग्धारौघस्य रक्तप्रवाहसमूहस्य, झाङ्कारिणा झङ्कारशब्दवता, माहेन्द्रेण ऐन्द्रेण, वर्मणा कवचेन, सहस्रनेत्रचिह्नितेनेति भावः, सहस्र व्रणान् क्षतानि, विवृणुते प्रकाशयति, वर्मणः महेन्द्रशरीरवर्त्तिना सहस्रनेत्राणां प्रकाशवर्त्मरन्ध्रेण प्रस्तुतत्वात् तद्वर्मावृतदेहस्य रामस्य एकाङ्गे क्षतेऽपि सहस्रनेत्रवर्त्मभ्यः शोणितस्रावात् सहस्रव्रणशालित्वमिव प्रकाशते इति भावः। शार्दूलविक्रीडितं वृत्तम्॥ ६८॥

सीतेति—सीतायाः जानक्याः, स्तनौ कुचौ स्तवकाविव पुष्पगुच्छाविव, तयोः

न्यस्तः शरो विबुधकुञ्जरदन्तघात-

रूढव्रणार्बुदचतुष्टयमध्यवर्त्ती ॥ ६९ ॥

रामभद्रः। ( कर्णं दत्त्वा सविस्मयम् )। एकेन सव्यपाणिना विशिख-मुत्खाय (त) त्रिमाह रावणः,—साधु रे मनुष्यडिम्भ! साधु—

त्रैविक्रमः सकलदानवजीवितव्य-

विद्यासमाप्तिलिपिरेष सुदर्शनो मे।

यस्मिन् निपत्य हृदये दलितारजाल-

ज्योतिस्तुषारमयमाभरणं बभूव ॥ ७० ॥

---

कुङ्कुमपङ्कस्य काश्मीरद्रवस्य, लोपे खण्डने, प्रोञ्छने इत्यर्थः, वैधव्यादिति आलिङ्गना-दिति वा भावः, यः सङ्कल्पः इच्छा, तेन पातकिनि पापयुक्ते, "लोप" इत्यत्र "लेप" इति पाठे—सीतायाः स्तनस्तवकयोः कुङ्कुमपङ्कस्य लेपः लेपनं, सीता वशीकृत्य तस्याः स्तनद्वये प्रसाधनार्थमिति आश्लेषेणेति वा भावः, तत्र यः सङ्कल्प, तेन पातकिनि पाप-युक्ते, रावणस्य दशाननस्य, वक्षसि उरसि, शरः बाणः, विबुधकुञ्जरस्य सुरगजस्य, ऐरावतस्येत्यर्थः, दन्तैः दशनैः, चतुर्भिरिति शेषः, तस्य चतुर्दन्तत्वादिति भावः, घातेन प्रहारेण, रूढानां जातानां, व्रणार्बुदानां मांसपिण्डीभूतक्षतदेशानां, चतुष्टयस्य चतुःसङ्ख्यकस्य, क्षतचिह्नचतुष्टयस्येत्यर्थः, मध्यवर्त्ती यथा तथा मध्यभागे इत्यर्थः, न्यस्तः निखातः। वसन्ततिलकं वृत्तम् ॥ ६९ ॥

(त) सव्यपाणिना दक्षिणहस्तेन वामहस्तेन वा, दशसङ्ख्यकानां वामहस्तानां दक्षिणहस्तानां वा एकेन हस्तेन इत्यर्थः, "सव्यं वामे च दक्षिणे" इत्यमरः। विशिखं शरम, उत्खाय उत्पाट्य।

त्रैविक्रम इति।—सकलानां समस्तानां, दानवानाम असुराणां, जीवितव्यं जीवनमेव, विद्या ज्ञानं, तस्याः समाप्तिलिपिः समाप्तिसूचकलेखः, समापक इत्यर्थः, दानवगणप्राणान्तक इति यावत, त्रैविक्रमः त्रिविक्रमो विष्णुः तत्सम्बन्धी, एष सुदर्शनः चक्राकारास्त्रविशेषः, मे मम, यस्मिन् यत्र, हृदये वक्षसि, निपत्य पतित्वा, दलितं खण्डितं निष्पिष्टं वा, यत् अरजालं चक्रप्रान्तसमूहः, यद्वा—अरजालं रथाङ्गाङ्गसमूहः, चक्रमध्यशलाकासमूह इत्यर्थः, "अरमङ्गे रथाङ्गस्य शीघ्र-शीघ्रगयोरपि" इति शाश्वत., तस्य ज्योतिषा प्रभया, तुषारमयं शिशिरमयम्, अतिशीतलमिति

तस्मिन्नपि रुधिरदर्शनं कुर्वाणेन भवता दर्शितेयं सुरासुर-वीरातिशायिनी हस्तवत्ता। (थ)

रथचूडः। अहह ! विपक्षगिरामुद्गारेण सर्वग्रन्थिगुरुणा दूरं दीप्यमानस्य—(द)

सुविनिहितचन्द्रहासव्रणकिणवलयोपहसितहारेषु।
रामस्य मार्गणगणाः पतन्ति दशकण्ठकण्ठेषु ॥ ७१ ॥

हेमाङ्गदः। (सचमत्कारम्)। सखे ! पश्य पश्य—अनुरूप-वीरसंवादप्रमोदभरद्विगुणिताविष्टम्भसङ्क्षोभितभुवनत्रयस्य निर-

---

ाव ; यद्वा—तुषारमयं तुहिनात्मकं, तुषारवदतिशीतमिति भावः. आभरणं भूषणं, ाभूव, सुदर्शनास्त्रप्रहारेण व्यथा दूरे आस्ताम्, प्रत्युत तज्ज्वालया मम हृदयस्य ोभैवाभूदिति भावः। वसन्ततिलकं वृत्तम् ॥ ७० ॥

(थ) तस्मिन्नपि तादृशे वक्षस्यपि। सुरेति।—सुरासुरवीरेषु देव-दानवशूरेषु, ातिशायिनी उत्कर्षशालिनी, देव दानववीरेभ्योऽपि अधिकेत्यर्थः। हस्तवत्ता प्रशस्त-हस्तशालित्वं, भुजवीर्य्यशालित्वमित्यर्थः।

(द) विपक्षगिरां शत्रुवचसाम्, उद्गारेण उच्चारणेन। सर्वेति। सर्वैर्ग्रन्थिभिः ...समंहान् तेन ; यद्वा—सर्वेषु समस्तेषु, ग्रन्थिषु पर्वसु, वंशादिग्रन्थिवत् अतिकठिनेषु ाक्येषु इत्यर्थः, अपीति शेषः, यद्वा—ग्रन्थिषु बन्धेषु, सर्वविधबन्धनेषु इत्यर्थः, गुरुणा ...हता, अत्यर्थं कठिनेनेत्यर्थः, "ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेद-पर्वणोः" इति मेदिनी ; ...पक्षगिरां शत्रुवाक्यानां, शत्रोः साहङ्कारवाक्यानामित्यर्थः, उद्गारेण उच्चारणेन, शत्रोः ...ाहङ्कारवचसा इत्यर्थः। दूरम् अतिमात्रम्। दीप्यमानस्य प्रज्वलतः, कुप्यत ...त्यर्थः। वक्ष्यमाणश्लोकस्थ-रामस्य इत्यनेनान्वयः।

सुविनिहितेति।—रामस्य राघवस्य, मार्गणगणाः शरसमूहाः, सुष्ठु विनिहितस्य ...ापितस्य, कर्त्तनार्थं कण्ठदेशे इति भावः, चन्द्रहासस्य दशग्रीवकरवालस्य, रावणस्य ...सेरित्यर्थः, "चन्द्रहासो दशग्रीवकरवालेऽसिमात्रके" इति मेदिनी ; ये व्रणाः ...तानि, तेषां किणवलयैः मांसग्रन्थिमण्डलैः, वलयाकारशुष्कक्षतचिह्नैरिति यावत्, उपहसिताः अवज्ञाताः, अनादरेण परित्यक्ता इति भावः, हाराः येषु तथाभूतेषु, ...शकण्ठस्य रावणस्य, कण्ठेषु दशसु ग्रीवासु, पतन्ति निपतन्ति भवन्तीत्यर्थः। ...ार्य्या वृत्तम् ॥ ७१ ॥

न्तरप्रक्षीयमाणबाणपञ्जरमध्यवर्त्तिना (म) रामभद्रेण क्रीड़ा-
शकुन्तकौतुकं पूर्य्यते (न) राक्षसराजस्य। नूनमिदानीम्—

उदञ्चन्न्यञ्चद्भूर्विवृतनिभृतानामनुफणं
मणीनां विद्युद्भिः क्षणमुषितपातालतिमिरः।
भुजक्रीड़ावल्गद्दशमुखपदन्यासगरिम-
प्रगल्भैर्निश्वासैरजनि भुजगानामधिपतिः ॥ ७२ ॥

---

(म) अनुरूपेति।—अनुरूपेण सुसदृशेन, वीरसंवादेन वीरसम्मेलनेन, वीर्य्य-प्रतिद्वन्द्विना सह युद्धेनेति यावत्, यः प्रमोदभरः हर्षातिशयः, तेन द्विगुणितः द्विरावृत्तः, यः अवष्टम्भः गर्वः, यद्वा—अवष्टम्भः प्रारम्भः, द्विगुणोत्साहेन युद्धारम्भ इत्यर्थः, "अवष्टम्भः सुवर्णे च स्तम्भ-प्रारम्भयोरपि" इति मेदिनी ; तेन सङ्क्षोभितं चञ्चलीकृतं, भुवनत्रयं त्रैलोक्यं येन तथोक्तस्य, राक्षसराजस्येत्यनेनान्वयः। निरन्तरेति।—निरन्तरम् अजस्रं, प्रक्षीयमाणाः प्रक्षिप्यमाणाः, रावणेनेति भावः, बाणाः शराः, पञ्जरमिव पक्ष्यादिबन्धनगृहमिव, तस्य मध्यवर्त्तिना मध्यस्थितेन।

(न) क्रीड़ेति।—क्रीड़ाशकुन्तस्य क्रीड़ापक्षिणः, चित्तविनोदनाय पोषितस्य पक्षिण इत्यर्थः, कौतुकं कौतूहलम्। पूर्य्यते सफलीक्रियते।

उदञ्चदिति।—भुजगानां सर्पाणाम्, अधिपतिः राजा, वासुकिरित्यर्थः, उदञ्चन्ती उन्नमन्ती, युद्धप्रसङ्गेन लम्फनादिव्यापारक्षणे रावणपदन्यासभरविरहादिति, शिथिल-भावेन रावणकर्त्तृकपदविन्यासकाले इति वा भावः, तथा न्यञ्चन्ती अवनमन्ती, गाढतया तत्पदन्यासभरादिति भावः, या भूः पृथ्वी, तया हेतुना विवृतानि प्रकाशं गतानि, निभृतानि सङ्कुचितानि च, यथाक्रममिति भावः तेषाम्, उन्नमने विवृतानाम्, अवनमने च निभृतानामिति निष्कर्षः, अनुफणं प्रतिफणं, सहस्र-सङ्ख्यकफणासु इत्यर्थः, मणीनां रत्नानां, विद्युद्भिरिव विद्युद्भिः प्रभाभिरिति यावत्, क्षणं क्षणे क्षणे, उन्नमनक्षणे इत्यर्थः, मुषितं नाशितं, पातालतिमिरं रसातलान्ध-कारं येन तथाभूतः सन्, भुजक्रीड़या बाहुलीलया, हस्तकौशलप्रदर्शनेनेत्यर्थः, वल्गन् सत्वरम्, यो दशमुखः रावणः, तस्य पदन्यासस्य चरणविक्षेपस्य, यो गरिमा गुरुत्वं, भारवत्त्वमिति यावत्, तेन प्रगल्भाः उद्धताः, दीर्घाः इति यावत् तैः, निश्वासैः श्वासवायुभिः, उपलक्षित इति शेषः; विशेषणे तृतीया ; अजनि जातः। शिखरिणी वृत्तम् ॥ ७२ ॥

रत्नचूडः । (सभयमवलोक्य) । सखे ! एवमेतत्—

रक्षोविक्षोभवेगोच्छलितजलनिधिव्यक्तमातङ्गचक्र-
क्रुध्यद्दिङ्नागमुक्तोद्वहनगुरुभरामद्य नागाधिराजः ।
अङ्गैरङ्गेषु मग्नैरविरलवलिना वामनेनातिपीवना
देहेनापह्नुवानः फणफलकपरीणाहमुर्वीं बिभर्त्ति ॥७१॥

(ऊर्ध्वमवलोक्य) । कथमितस्ततो वैमानिकैरपक्रम्यते (प) गगन-तलात् ?

हेमाङ्गदः । (सचमत्कारम्) । अहो ! त्रिभुवनभयङ्करमायोधन-मुपक्रान्तं महावीराभ्याम् । तथा हि—

ध्यायत्ययं गाधिसुतादधीतान्
दिव्यास्त्रमन्त्रान् मनुवंशवीरः ।

---

रक्ष इति ।—नागाधिराजः वासुकिः, रक्षसः राक्षसस्य रावणस्य, विक्षोभः चाञ्चल्यं, रणक्षेत्रे सवेगमितस्ततः विचरणमिति यावत्, तस्य वेगेन भारातिशय्येनेत्यर्थः, उच्छलितः उद्वेलितः, वेलातिक्रान्तः इत्यर्थः, यः जलनिधिः समुद्रः, तेन हेतुना व्यक्तानि प्रकटानि, दर्शनं गमितानीत्यर्थः, यानि मातङ्गचक्राणि जल-हस्तिसमूहाः, "मातङ्गनक्र" इति पाठे—व्यक्ता ये मातङ्गा जलहस्तिनः, नक्राश्च जलजन्तुभेदाश्च, तेभ्यः क्रुध्यद्भिः कुप्यद्भिः, दिङ्नागैः दिग्गजैः, मुक्तं त्यक्तं, यत् उद्वहनम् उत्कृष्टं धारणम्, अष्टसु दिक्षु दृढभावेन धारणमित्यर्थः, तेन हेतुना गुरुर्भरात्, तदभिरूढस्य भारस्य एकस्यैव वासुकेर्मस्तके प्रदानादिति भावः, भरः भारः यस्याः तथोक्ताम्, दिग्गजानां पृथ्वीधारणं पुराणप्रसिद्धम्, उर्वीं पृथ्वीम्, अविरल-वलिना बहुलवलीयुक्तेन, वामनेन खर्वेण, अतिपीवना अतिस्थूलेन, सर्वस्यैव जातभारासहत्वात् देहं सङ्कुच्य कुण्डलीभूततया अवस्थानादिति भावः, देहेन कायेन, फणफलकपरीणाहं फणसमूहविस्तारम्, अपह्नुवानः सङ्कोचयन् इत्यर्थः, अत एव अङ्गेषु कायेषु, कुण्डलीभूतेषु इति भावः, मग्नैः गूढैः, अङ्गैः कायैः, कुण्डलीभूतैरुपलक्षितः सन् इति भावः, अद्य अधुना, अस्मिन् समये इत्यर्थः, बिभर्त्ति धारयति । स्रग्धरा वृत्तम् ॥ ७१ ॥

(प) वैमानिकैः विमानचारिभिः । अपक्रम्यते पलाय्यते ।

ध्यायतीति ।—अयम् एषः, मनुवंशवीरः मनुकुलोत्पन्नशूरः, रामः इत्यर्थः, गाधि-

ब्रह्मोपदिष्टामिह शस्त्रविद्या-
मसौ तदाऽऽकाङ्क्षति राक्षसेन्द्रः ॥७४॥

तदावामप्यपसरावः । (इत्यपसृत्याऽऽसाते) । (फ)

(हेमाङ्गदः) । (समन्तादवलोक्य) । सखे! यथा भुवनसङ्क्षोभः तथा तर्कयामि, (ब) तामिस्रं भानवीयेन, भानवीयं राहवीयेण, (भ) राहवीयं वैष्णवीयेन, वैष्णवीयं पौष्पकेतवेन (म) पौष्पकेतवं च पाशुपतेन अस्त्रमस्त्रेण प्रतिकुर्वाणयोः पुलस्त्य-ककुत्स्थकुलैक-वीरयोस्तुमुलमायोधनं (य) वर्त्तते ।

रत्नचूडः । सखे ! कृति-प्रतिकृतीनामविशेषेऽपि (र) जेतव्य-

---

श्रुतात् विश्वामित्रात्, अधीतान् शिक्षितान्, दिव्यास्त्रमन्त्रान् जृम्भकादीनां दिव्यायुधानामुपस्थापनार्थं मन्त्रवर्णानित्यर्थं, ध्यायति चिन्तयति, असौ अयं, राक्षसेन्द्रः रक्षोराजः रावणः, इह रणक्षेत्रे, तदा तस्मिन् काले, पुरेति भावः, यदा—तदा तस्मिन् काले, रामो यदा मन्त्रवर्णान् स्मरति, तस्मिन् अवसरे इति भावः, ब्रह्मणा वेधसा, उपदिष्टां कथितां, शस्त्रविद्याम् अस्त्रविद्याम्, आकाङ्क्षति अभिलषति, स्मरतीति भावः, आलोचनार्थमिति शेषः । इन्द्रवज्रा वृत्तम् ॥ ७४ ॥

(फ) अपसृत्य किञ्चिद्दूरं गत्वा, आसाते तिष्ठतः ।

(ब) भुवनसङ्क्षोभः भुवनानां जगतां, सङ्क्षोभः चाञ्चल्यं, विक्षोभ इति यावत् । तर्कयामि सम्भावयामि ।

(भ) तामिस्रं तमिस्रा तामसी रात्रिर्देवता अस्येति तथोक्तम्, अस्त्रमिति शेषः, तिमिरबाणमित्यर्थः, भानवीयेन भानुः सूर्यः देवता यस्य तथोक्तेन, अस्त्रेणेति शेषः, सौरबाणेनेत्यर्थः । भानवीयं सूर्यदैवतं, सौरं बाणमित्यर्थः, राहवीयेण राहुदैवतेन, राहुबाणेनेत्यर्थः ।

(म) राहवीयं राहुबाणम्, वैष्णवीयेन विष्णुदेवताकास्त्रेण, वैष्णवबाणेनेत्यर्थः । वैष्णवीयं वैष्णवबाणं, पौष्पकेतवेन पुष्पकेतुः कामः तद्दैवतेन, कामबाणेनेत्यर्थः ।

(य) पौष्पकेतवं कामबाणं, पाशुपतेन पशुपतिदेवताकेन, पाशुपतबाणेनेत्यर्थः । प्रतिकुर्वाणयोः निवारयतोः, छिन्दतोरिति यावत् । आयोधनं युद्धम् ।

(र) कृति-प्रतिकृतीनां कार-प्रतीकाराणां, क्षेप-प्रतिक्षेपाणामित्यर्थः, प्रयोग-संहाराणामिति यावत् । अविशेषेऽपि अभिन्नतायामपि, समानतायामपीत्यर्थः ।

मिति रामस्य मर्त्तव्यमिति रावणस्य निर्णय-निर्भरः अयं सर्वास्त्रमोक्षः। (ल) विशिखमुखोपस्थायिनीनां (व) च पुनर्दैवतानामबलीयानाटोपः कल्प्यते। (श) तथा हि—

यद्दैवतं क्षिपति पत्रिषु राक्षसेन्द्रः
स्नेहेन तत् रघुपतेर्मृदु सन्निधत्ते।
यां देवतामुपदधाति च रामभद्र-
स्तामादसौ दशमुखस्य शनैरुपैति ॥ ७५ ॥

(ल) निर्णयेति।—निर्णयस्य निश्चयस्य, निर्भरः अतिशयः यस्मिन् तथाभूतः। सर्वेति।—सर्वेषां सर्वविधानाम्, अस्त्राणां बाणानां, मोक्षः प्रयोगः, अनेन अस्त्रेण रामो हन्तव्यः मया च जेतव्यमिति रावणस्य निश्चयः, अनेन अस्त्रेण रावणो हन्तव्यः मया च जेतव्यमिति रामस्य निश्चयः सर्वेषु एव अस्त्रप्रयोगेषु अस्तीति भावः। यद्वा—रामस्य सर्वास्त्रमोक्षः जेतव्यमिति, रावणस्य सर्वास्त्रमोक्षः मर्त्तव्यमिति निर्णय-निर्भरः, रामस्य अस्त्रपातन-कौशलदर्शनेन एव निर्णीयते यत् रामेणावश्यमेव जेतव्यं, रावणस्यास्त्रपातनव्यापारदर्शनेन च एवं निर्णीयते यत् रावणेनावश्यमेव मर्त्तव्यमिति निष्कर्षः।

(व) विशिखेति।—विशिखानां शराणां, मुखेषु अग्रभागेषु इत्यर्थः, उपतिष्ठन्ति अधितिष्ठन्तीति तथोक्तानां, बाणाधिष्ठात्रीणाम्।

(श) अबलीयान् दुर्बलः, मन्दीभाव इत्यर्थः, एकत्र स्नेहेन जिघांसाऽभावात्, अन्यत्र जिघांसासत्त्वेऽपि निजपीडनभयादिति भावः। आटोपः सम्भ्रमः, कार्य्येषु व्यग्रतेति भावः। कल्प्यते तर्क्यते, मयेति शेषः, उभयोर्भावविशेषदर्शनेनेति भावः।

यद्दैवतमिति।—राक्षसेन्द्रः रक्षोराजः रावणः, पत्रिषु शरेषु मध्ये, यद्दैवतं यां देवतां, रावणस्य मन्त्रबलेन समागत्य बाणाग्रे अधिष्ठितमिति भावः, क्षिपति प्रयुङ्क्ते, तत् दैवतं, रघुपतेः रामस्य, रामं प्रतीत्यर्थः, स्नेहेन प्रेम्णा, रामानुरागेणेत्यर्थः, मृदु मन्दं यथा तथा, जिघांसुतां विहाय अतिकोमलभावेनेति भावः, सन्निधत्ते सन्निहितं भवति, रामभद्रश्च रघुनाथश्च, यां देवतां पत्रिषु यं दैवम्, उपदधाति स्थापयति, आवाहयतीति यावत्, प्रयुज्यमाने अस्त्रे इति शेषः, असौ देवता, दशमुखस्य दशाननस्य रावणस्य, त्रासात् भयात्, रावणाङ्गे आघाते कृते स प्रकुप्य मां दण्डयिष्यति इति भयवशादित्यर्थः, शनैः मन्दं यथा तथा, तीव्रतया प्रहर्त्तुकामाऽपि मृदुभावेनेति भावः, उपैति उपगच्छति। वसन्ततिलकं वृत्तम् ॥ ७५ ॥

( नेपथ्ये ) ।—

यद्यत् लूनं दशमुखशिरस्तस्य तस्यैव कान्तौ
सङ्क्रामन्त्यामतिशयवती शेषवक्त्रेषु लक्ष्मीः ।
यो यः लूनो दशमुखभुजस्तस्य तस्यैव वीर्यं
लब्ध्वा दृप्यन्त्यधिकमधिकं बाहवः शिष्यमाणाः ॥७६॥

( नेपथ्ये कलकलः ) ।

उभौ । ( सहर्ष-रोमाञ्चमाकर्ण्य ) । अये ! शब्दोपष्टम्भसंवर्त्तकेन कर्मणा निर्मितानि त्रिभुवनकोषस्य कोऽयमिन्द्रियाणि शोषयति ? ( च )

( पुनर्नेपथ्ये कलकलः ) ।

उभौ । ( सभयाद्भुतम् ) । अये ! कथम्, अयं कपटकण्ठीरव-वैकुण्ठकण्ठकठोरकोलाहलकाहलो महानिर्घोषः (छ) प्रजा-

---

यदिति ।—दशमुखस्य रावणस्य, यत् यत् शिरः मस्तकं, लूनं छिन्नं, रामेणेति शेषः, तस्य तस्यैव शिरसः, कान्तौ दीप्तौ, सङ्क्रामन्त्यां सङ्क्रममाणायां सत्यां, शेष-वक्त्रेषु अवशिष्टेषु अच्छिन्नेषु मुखेषु, लक्ष्मीः कान्तिः, अतिशयवती आत्यन्तिकीत्यर्थः, भवतीति शेषः, रावणस्य स्वाभाविकी या कान्तिः प्रत्येकशिरसि आसीत्, सा कान्तिः एकैकस्मिन् शिरसि छिन्ने, तत्तत् शिरः परित्यज्य अन्येषु शिरःसु सङ्क्रम्य तदवयवभूत-मुखानां शोभाऽतिशयं जनयतीति निर्गलितार्थः, दशमुखस्य दशाननस्य, यो यो भुजः बाहुः, लूनः छिन्नः, तस्य तस्यैव भुजस्य, वीर्यं बलं, लब्ध्वा प्राप्य, शिष्यमाणाः अवशिष्टाः, बाहवः भुजाः, अधिकम् अधिकम् अत्यन्तमधिकं यथा तथा, दृप्यन्ति दर्पयुक्ता भवन्ति, प्रभूतबलशालिनो भवन्तीत्यर्थः । मन्दाक्रान्ता वृत्तम् ॥ ७६ ॥

( च ) शब्दोपष्टम्भेति ।—शब्दानां ध्वनिविशेषाणाम्, उपष्टम्भः धारणं, शब्द-ज्ञानमित्यर्थः, तस्य संवर्त्तकेन सम्पादकेन, कर्मणा अदृष्टजनकव्यापारेण, निर्मि-तानि सृष्टानि, इन्द्रियाणि शब्दज्ञानसाधनानि श्रवणेन्द्रियाणीत्यर्थः, त्रिभुवनकोषस्य त्रिलोकीभाण्डागारस्य, कोऽयं कलकलध्वनिरित्यर्थः । योऽयं कलकलध्वनिः इन्द्रि-याणि शोषयति, सोऽयं कलकलध्वनिः कस्य ? इति समुदितार्थः ।

( छ ) कपटेति ।—कपटेन छलेन, कण्ठीरवः सिंहः, तद्रूपः यो वैकुण्ठः विष्णुः, नृसिंहावतारधारीत्यर्थः, "विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः"

कोषभङ्गमपर्वणि प्रक्रमते ॥ (घ) नूनं चेदानीं कालकूटोपदिग्धैरिव (क) कण्ठध्वनिभिरेव मूर्च्छयतो (ख) भुवनानि भैरवस्य स्मरति सभयमद्य परमेष्ठी । (ग)

(पुनर्नेपथ्ये) ।—

दिव्यास्त्रैर्भूर्भुवःस्वस्त्रितयडमरणोड्डामरैर्योधयित्वा
लूनोच्छिन्नैः शिरोभिर्दशभिरभिनभो दर्शितैकादशार्कः ।
काकुत्स्थेनावकीर्णो निजविशिखशिखायोगपीठोपकॢप्त-
ब्रह्मास्त्रेणाधिशेते रजनिचरपतेर्वीरशय्यां कबन्धः ॥७७॥

---

इत्यमरः ; तस्य कण्ठात् गलदेशात्, यः कठोरकोलाहलः भीषण-कलकलनिनादः, तद्वत् काहलः शब्दविशेषो यस्य तादृशः, यद्वा—काहलः शुष्कः, नीरस इत्यर्थः, प्रचण्डः इति भावः, "काहलस्तरणायुधे। शब्दमात्रेऽपि पुंलिङ्गस्त्रिषु शुष्के भृशे खले" इति मेदिनी। महानिर्घोषः भीषणशब्दः।

(घ) प्रजाकोषभङ्गं प्रजानां जनानां, कोषः पात्रम्, आधार इत्यर्थः, अवस्थितिस्थानमिति यावत्, "कोषोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके" इति मेदिनी ; तस्य भङ्गं विनाशं, ब्रह्माण्डक्षयमित्यर्थः, अपर्वणि अप्रस्तावे, प्रसङ्गाभावेऽपीत्यर्थः, अकाले इति यावत्, ब्रह्माण्डक्षयस्य निर्दिष्टसमये अनागतेऽपीति भावः, "पर्वः स्यादुत्सवे ग्रन्थौ प्रस्तावे विषुवादिषु" इति मेदिनी। प्रक्रमते आरभते।

(क) कालकूटेति।—कालकूटेन हलाहलेन, उपदिग्धैरिव विलिप्तैरिव।

(ख) मूर्च्छयतः मोहयतः।

(ग) भैरवस्य संहाररूपिणो हरस्येत्यर्थः, स्मरणार्थधातुयोगे कर्मणि षष्ठी। परमेष्ठी ब्रह्मा।

दिव्यास्त्रैरिति।—काकुत्स्थेन ककुत्स्थवंशोद्भवेन रामेण, भूः पृथ्वी, भुवः अन्तरीक्षं, स्वः स्वर्गः, तेषां त्रितयस्य त्रयस्य, डमरणं चमत्करणं, विप्लवो वा, भयोत्पादनमित्यर्थः, भयेन भूरादिलोकत्रयस्थानां पलायनमिति यावत्, "डिम्बे डमर-विप्लवौ" इत्यमरः ; तेन उड्डामरैः अत्युत्कटैः, अतिभीषणैरित्यर्थः, तेजस्वै-रिति यावत्, दिव्यास्त्रैः विश्वामित्रात् लब्धैरलौकिकप्रभावैरायुधविशेषैः, योधयित्वा युद्धं कारयित्वा, निजविशिखशिखा स्वीयशराग्रभाग एव, "विशिखस्तोमरे शरे" इति मेदिनी ; योगपीठं योगासनं, तत्र उपकॢप्तम् आसादितं, यत् ब्रह्मास्त्रं ब्रह्मपु

सर्वे। (श्रुत्वा सहर्षं-कबन्धमूर्द्धनमवलोक्य सविस्मयमन्योऽन्यम्)। पश्य पश्य प्रलयकालकरालकालानलज्वालापुञ्जपिञ्जराणि (घ) रावणशिरांसि। (सत्वरमुपसृत्य चाधस्तात् पश्यन्तः)।

हेमाङ्गदः। (सकरुणम्)। हा महावीरप्रकाण्ड लङ्केश्वर! पर्य्यवसितोऽसि (ङ)—

भिन्नैरावणगन्धसिन्धुरशिरःसम्पातिभिर्मौक्तिकैः
शश्वद्विश्वजयप्रशस्तिरचनावर्णावलीशिल्पिने।
नाकान्तःपुरिकाकपोलविलसत्काश्मीरपत्राङ्कुर-
श्रीविन्यासविलासभीषणभुजस्तम्भाय तुभ्यं नमः॥७८॥

---

अखण्डितः बाणः तेन, लूनानि निकृत्तानि, उत्क्षिप्तानि च ऊर्द्धं नीतानि च तैः, दशभिः दशसङ्ख्यकैः, शिरोभिः मस्तकैः, अभिनभः नभसि, विभक्त्यर्थे अव्ययीभावः; दर्शिताः लक्षिताः, एकादश गणनया एकादशसङ्ख्यकाः, अर्काः सूर्य्याः, येन तथाविधः, रावणशिरांसि दश प्रकृतः सूर्य्यश्चैक इति एकादशानां सूर्य्याणां दर्शनमिति भावः, अवकीर्णः पातितः, ब्रह्मास्त्रेणैवेति भावः, रजनिचरपतेः राक्षसेन्द्रस्य, कबन्धः अपमूर्द्धकलेवरं, शिरःशून्य शरीरमित्यर्थः, "कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरः; वीरशय्यां रणभूमिम्, अधिशेते आश्रित्य स्वपितीत्यर्थः। स्रग्धरा वृत्तम्॥ ७७॥

(घ) प्रलयेति।—प्रलयकाले कल्पान्तसमये, करालः भीषणः, यः कालानलः रौद्राग्निः, त्रिजगद्दाहकारकाग्निरित्यर्थः, तस्य ज्वालापुञ्जः शिखासमूहः, तेन पिञ्जराणि पिङ्गलवर्णानि, प्रलयाग्निना दह्यमानानीवेति भावः; यद्वा—ज्वालापुञ्जवत् पिञ्जराणि, निःशेषं रक्षःक्षयादिति भावः।

(ङ) महावीरप्रकाण्ड! महावीरेषु शूरश्रेष्ठेष्वपि, प्रकाण्ड! प्रशस्त! प्रशंसनीय इत्यर्थः। पर्य्यवसितोऽसि समाप्तिं गतोऽसि, मृतोऽसीत्यर्थः।

भिन्नैरावणेति।—हे रावण! इत्यध्याहार्य्यं, भिन्नं विदारितं, त्वयेति भावः, ऐरावणस्य ऐरावतनाम्नः, गन्धसिन्धुरस्य गन्धगजस्य, "ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः" इत्यमरः; यत् शिरः मस्तकं, तस्मात् सम्पातिभिः सम्पतनशीलैः, मौक्तिकैः मुक्ताफलैः, गजकुम्भस्य मुक्तोत्पत्तिस्थानत्वादिति भावः, शश्वत् सततं, विश्वजयस्य त्रिभुवनविजयस्य, या प्रशस्तिरचना प्रशंसालिपिः, तस्याः वर्णावलीनाम् अक्षरपङ्क्तीनां,

(निर्वर्ण्य)। सखे रत्नचूड़ !—

ध्रुवं पतितपङ्क्तिकन्धरकबन्धपीड़ाभरा-
न्निजावनमनक्रमोन्नमितचक्रवालाचलम्।
महीवलयमर्द्धकुण्डलितविग्रहाधारक-
प्रतीष्टफणमण्डलो वहति काद्रवेयाधिपः॥७९॥

रत्नचूड़ः। सखे! सर्वमतिशायि (च) रावणस्य। पुराऽपि (छ) खलु—

---

म्लिपिने निर्मावे, नाकान्तःपुरिकाणां स्वर्गकामिनीनां, कपोलेषु गण्डदेशेषु, विलसन् स्फुरन्, यः काश्मीरपत्राङ्कुरः कुङ्कुमरचितपत्रावलीप्ररोहः, तस्य श्रीविन्यासेन सौन्दर्यसम्पादनेन, यो विलासः शृङ्गारसूचकहावविशेषः, तस्य भीषणाः भयङ्कराः, तद्विघातकत्वादिति भावः, भुजा बाहव एव, स्तम्भाः स्थूणाः यस्य तथाभूताय, तद्भयात्ताः सुरसुन्दर्यः सर्वं विलासं परित्यज्य विरसाः स्थिता इति भावः, तुभ्यं नमः, अस्त्विति शेषः। शार्दूलविक्रीडितं वृत्तम्॥७८॥

ध्रुवमिति।—कद्रोस्तदाख्याया दक्षकन्यायाः कश्यपपत्न्याः अपत्यानि पुमांसः काद्रवेयाः नागाः, सर्पविशेषा इत्यर्थः, "नागाः काद्रवेयाः" इत्यमरः, तेषाम् अधिपः वासुकिः, अर्द्धं यथा तथा कुण्डलितः वलयितः, वलयवत् वृत्ताकारेणावस्थित इत्यर्थः, रावणस्य देहभारेण सरलतया अवस्थातुमशक्यत्वात् इति भावः, विग्रहः देह एव, आधारकः आधार एव आधारकः आश्रयः, स्वार्थे कन्-प्रत्ययः; तेन प्रतीष्टम् अवलम्बितं, फणमण्डलं फणासङ्घसमित्यर्थः येन तथाभूतः सन्, पतितः भूमौ लुठितः, पङ्क्तिकन्धरस्य दशग्रीवस्य, "पङ्क्तिर्दशाक्षरच्छन्दो दशसङ्ख्याऽऽलिषु स्त्रियाम्" इति मेदिनी; यः कबन्धः शिरःशून्यं शरीरं, तेन पीडाभरात् व्यथाऽतिशयात्, निजेन स्वकीयेन, अवनमनक्रमेण अधोगमनकल्पेन, उन्नमिताः ऊर्द्धमुत्थिताः, चक्रवालाचलाः "महेन्द्रो मलयः सह्यो हिमवान् गन्धमादनः। विन्ध्यश्च पारि(या)पात्रश्च सप्तैते कुल-पर्वताः॥" इत्युक्ताः कुलपर्वताः यस्मिन् तत् यथा तथा, यद्वा—निजावनमनक्रमेण उन्नमितः चक्रवालाचलः लोकालोकपर्वतः, सीमापर्वत इत्यर्थः यस्मिन् तद्यथा तथा, "लोकालोकश्चक्रवालः" इत्यमरः; महीवलयं भूमण्डलं, वहति धारयति, महीवलयस्य अधोगमनेन भूधराणामुच्चत्वं भवतीति भावः; ध्रुवम् उत्प्रेक्षे। पृथ्वी वृत्तं, "ज-सौ ज-स-य-ला वसु-ग्रहयतिश्च पृथ्वी गुरुः" इति लक्षणात्॥७९॥

(च) अतिशायि अतिशयितम्।

चलति जगतीजैत्रे यत्र स्वभोगिचमूभटै-
र्वलयितमहादेहस्तम्भो बिभर्त्ति भुवस्तलम् ।
प्रचलदखिलक्ष्माभृन्मूलोपलव्यतिघट्टितो-
ल्वणमणिशिलाजल्पाकीभिः फणाभिरहीश्वरः ॥८०॥

इदानीं पुनरुत्क्रान्तवायुरतिदुर्वहो देहबन्धः । (ज)

हेमाङ्गदः । (अग्रतोऽवलोक्य) । कथम्, इयं दशकन्धरस्य कबन्धाभिमुखी शोकविह्वला मन्दोदरी निशाचरीभिरपकृष्यते (झ) । (कर्णं दत्त्वा आकाशे) । कष्टम् !! चपलकपिकुलानुक्रियमाण-करुणकाकुप्रकारकातरस्वरा मन्दोदरी किमाह महावीर-वरवर्णिनी (ञ)—

---

(छ) पुराऽपि पूर्वमपि ।

चलतीति ।—जगतीनां भुवनानां, जैत्र एव जैत्रः विजयो तस्मिन्, यत्र रावणे, चलति गच्छति सति युद्धार्थं प्रयोजनान्तरसिद्ध्यर्थं वा इति भावः, अहीश्वरः नागराजः, स्वभोगिचमूभटैः निज-सर्पसैन्ययोधैरित्यर्थः, वलयितः कुण्डलितः, भयादिति, रावणपदभारासहत्वादिति वा भावः, महान् विशालः, देह एव काय एव, स्तम्भः स्थूणा यस्य तथाभूतः सन्, प्रचलतां प्रकम्पमानानां, रावण-चरणविन्यासभरादिति भावः, अखिलानां समस्तानां, क्ष्माभृतां पर्वतानां, मूलोपलैः मूलप्रस्तरैः, भूम्यधःस्थितैः मूलरूपप्रस्तरभागैरित्यर्थः, व्यतिघट्टिताः सङ्घर्षिताः, अत एव उल्वणाः उज्ज्वलाः, या मणिशिलाः फणस्थरत्नरूपाः शिलाः, तासां जल्पाकीभिः कथयित्रीभिः, प्रकाशयित्रीभिरिति यावत्, फणाभिः सहस्रसङ्ख्यकैः फणैः, भुवस्तलं भूतलं, बिभर्त्ति धारयति । हरिणी वृत्तम् ॥ ८० ॥

(ज) उत्क्रान्तवायुः निर्गतप्राणवायुरित्यर्थः । अतिदुर्वहः अतिशयेन वोढुम् अशक्यः, नागराजेनापि इति शेषः, सजीवितापेक्षया जीवितशून्यस्य भारवत्त्वातिशयादिति भावः । देहबन्धः शरीरभार इति यावत् ।

(झ) अपकृष्यते आकृष्य नीयते ।

(ञ) चपलेति ।—चपलेन चञ्चलेन, लघुचित्तेन इत्यर्थः, दुष्टमनसा इति यावत्, कपिकुलेन वानरसमूहेन, अनुक्रियमाणः अनुक्रियमाणः, साद्दश्यं नीयमानः इत्यर्थः, करुणः शोकपूर्णः, काकुप्रकारः शोकात् विकृतिमापन्नः, कातरः व्याकुलः,

भूयिष्ठानि मुखानि चुम्बति भुजैर्भूयोभिरालिङ्गते
चारित्रव्रतदेवताऽपि भवता कान्तेन मन्दोदरी।
हा! लम्बोदरकुम्भमौक्तिकमणिस्तोमैर्ममैकावली-
शिल्पे वागधमर्णिकस्य भवतो लङ्केन्द्र! निद्रारसः!! ॥८१॥

उभौ। (सखेदम्)। इदमशक्यानुभवं चक्षुःश्रोत्रस्य। प्रतिकृतानां विद्विषामपि व्यसनम् (ट) अतिमात्रं हृदयमर्माणि

---

स्वरः ध्वनिः यस्याः तथाभूता। महावीरेति।—महावीरस्य वीरश्रेष्ठस्य रावणस्य, वरवर्णिनी "शीते सुखोष्णसर्वाङ्गी ग्रीष्मे च सुखशीतला। भर्तृभक्ता च या नारी सा भवेत् वरवर्णिनी॥" इत्युक्तलक्षणा पतिव्रता अतिमहीयसी भार्य्या।

भूयिष्ठानीति।—लङ्केन्द्र! हे लङ्काधिप! चारित्रव्रतस्य सच्चरित्रताव्रतनियमस्य, सतीत्वपालनरूपनियमस्येत्यर्थः, देवताऽपि अधिष्ठात्री देवी अपीत्यर्थः, अतिसाध्वी अपीत्यर्थः, मन्दोदरी तव महिषी अद्य, भवता त्वया, कान्तेन धवेन, पतिनेत्यर्थः, "कान्ता नार्य्यां प्रियङ्गौ स्त्री शोभने त्रिषु ना धवे" इति मेदिनी; दशाननेन विंशतिभुजेन च हेतुनेति भावः, भूयिष्ठानि बहूनि, मुखानि आननानि, चुम्बति, तथा भूयोभिः बहुभिः, विंशत्या इति भावः, भुजैः बाहुभिः, आलिङ्गते आश्लिष्यते, त्वयैति शेषः, सत्या बहुमुखचुम्बनस्य बहुभुजालिङ्गनस्य च पातिव्रत्यहानिकरत्वेन अन्याय्यत्वेऽपि भर्तुस्तव दशमुखवत्त्व-विंशतिभुजवत्त्वेन तत्तत् न मे पातिव्रत्यहानिकरं सञ्जातमिति भावः, हा! खेदे, लम्बोदरस्य गजाननस्य, कुम्भे शिरःस्थपिण्डाकारदेशे, ये मौक्तिकमणयः मुक्ताख्यरत्नानि, तेषां स्तोमैः निचयैः, मम एकावली एकसरं माल्यम्, एकयष्टिको हारविशेष इत्यर्थः, तस्याः शिल्पे रचने, वाचा वाक्येन, अधमर्णिकस्य ऋणिकस्य, भवतः तव, निद्रारसः!! निद्रायामनुरक्तिः!! शोचित एव इति भावः; गणेशं निर्जित्य तस्य कुम्भं विदार्य्य तस्मादाहृतमौक्तिकैः एकावलीं रचयित्वा तुभ्यं दास्यामीत्यङ्गीकारवचसा त्वं मम अधमर्णः आसीः, इदानीं तत् ऋणमपरिशोध्य तव निद्रायाम् अन्याय्यरूपायाम् अनुरागो शोचित इति तात्पर्य्यम्। शार्दूलविक्रीडितं वृत्तम्॥ ८१॥

(ट) चक्षुःश्रोत्रस्य चक्षुषी श्रोत्रे चेति चक्षुःश्रोत्रं तस्य, समाहारद्वन्द्वः, अशक्यानुभवम् अशक्यः न सहनीयः, अनुभवः अनुभूतिरपि यस्य तादृशम्, अनुभवितुमप्यसमर्थमित्यर्थः, चक्षुर्भ्यां द्रष्टुं श्रोत्राभ्यां श्रोतुञ्च न शक्यते इति भावः। प्रतिकृतानां निर्यातितानां, पराजितानामित्यर्थः, विद्विषामपि शत्रूणामपि। व्यसनं विपत्।

छिनत्ति। (सविमर्शम्)। अहह! न किञ्चिदनीषत्करं नाम कृतान्तस्य (ठ)—

वन्दारुवृन्दारकवृन्दवन्दी-
मन्दारमालामकरन्दबिन्दून्।
मन्दोदरीयं चरणारविन्द-
रेणूत्करैः कर्कशतामनैषीत्॥८२॥

(नेपथ्ये)।—

नीयन्ते वनदेवताभिरमरक्षौणीरुहो नन्दनं
नीतो वल्लभपालकेन च निजामुच्चैःश्रवा मन्दुराम्।

---

(ठ) अनीषत्करम् अनल्पकरम्, अकिञ्चित्करमित्यर्थः, दुष्करमिति भावः। कृतान्तस्य दैवस्य, "कृतान्तौ यम-दैवयोः" इत्यमरः।

वन्दार्विति।—इयम् आगच्छन्ती, मन्दोदरी रावणमहिषी, चरणारविन्दयोः पादपङ्कजयोः, रेणूत्करैः धूलिनिचयैः, वन्दारवः वन्दनशीलाः, ये वृन्दारकाः देवाः, "अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः। वृन्दारका दैवतानि—" इत्यमरः; तेषां वृन्दस्य समूहस्य, या बन्द्यः हठहृताः स्त्रियः, चरणनिपतिता इति भावः, तासां मन्दारमालायाः पारिजातपुष्पमालायाः, केशपाशग्रथिताया इति भावः, मकरन्दबिन्दून् पुष्परसकणान्, "मकरन्दः पुष्परसः" इत्यमरः, कर्कशतां काठिन्यमित्यर्थः, "कर्कशो भाण्डभेदे ना दर्पणे कठिने त्रिषु" इति मेदिनी, अनैषीत् प्रापयामास। इन्द्रवज्रा वृत्तम्॥८२॥

नीयन्त इति।—वनदेवताभिः काननदेवीभिः, नन्दनवनाधिष्ठात्रीभिर्देवीभिरित्यर्थः, अमरक्षौणीरुहः देवमहीरुहाः, "पञ्चैते देवतरवो मन्दारः पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्॥" इत्युक्ताः पञ्च-देवतरवः इत्यर्थः, "वृक्षो महीरुहः शाखी विटपी पादपस्तरुः" इत्यमरः, रावणेन ये बलात् लङ्कायामानीताः, ते इति भावः, नन्दनं देवोद्यानं, नीयन्ते प्राप्यन्ते, रावणभयापगमादिति भावः, वल्लभपालकेन वल्लभानां सुलक्षणतुरङ्गाणां, पालकेन रक्षकेण, "वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरङ्गमे" इति मेदिनी, अश्वपालेनेत्यर्थः, "अश्वारक्षो तुरङ्गभुजां च स्यात् वल्लभपालकः" इति हारावली, उच्चैःश्रवाः स्वनामख्यातः इन्द्राश्वः, निजां स्वां, मन्दुरां वाजिशालां, "वाजिशाला तु मन्दुरा" इत्यमरः; नीतः

रक्षोभिश्च विभीषणप्रणयिभिः कारागृहान्मोचित-
स्वर्वन्दीवदनावलोकनिबिडव्रीडो बिडौजाः कृतः ॥८३॥

रत्नचूड़ः। (सहर्षम्)। सखे! तदेहि, लङ्केश्वरकाराधिवास-चिरप्रवासस्त्वं बन्धुवर्गमीक्षावहे (ड)। (इति परिक्रामन्तौ विलोक्य सहर्षमन्योऽन्यम्)। सखे पश्य पश्य, प्रहारजर्जरवलीमुखाच्छभल्ल-गोलाङ्गूलग्रामसंवल्गनवल्गितसुग्रीवो लक्ष्मणनिहितधन्वा (ढ) विभीषणभुजावलम्बी विजयश्रिया किमपि प्रदीप्तरमणीयो रामभद्रः। अयं हि सम्प्रति—

पौलस्त्यन्यस्तशक्तिव्रणकिणकणिकालक्ष्मणो लक्ष्मणोरः-
पीठान्निर्मुक्तलज्जो विबुधपुरवधूक्लृप्तपुष्पाभिषेकः।

---

प्रापितः, अत्रापि पूर्ववत् रावणभयापगमो हेतुर्बोद्धव्यः; विभीषणप्रणयिभिः विभीषण-सुहृद्भिः, रक्षोभिः राक्षसैः, बिडौजा इन्द्रः, "इन्द्रो मरुत्वान्मघवा बिडौजाः पाक-शासनः" इत्यमरः; कारागृहात् बन्धनालयात्, मोचितानां त्याजितानां, बहिर्निर्गमितानामित्यर्थः, स्वर्वन्दीनां स्वर्गीयहठहृतमहिलानां, वदनावलोकेन मुख-सन्दर्शनेन, निबिडा घना, अतिशायिनीत्यर्थः, व्रीडा लज्जा यस्य तथाभूतः, कृतः, मया एता मच्छरणा न परित्राता इति धियेति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ८३ ॥

(ड) लङ्केश्वरेति।—लङ्केश्वरस्य रावणस्य, काराऽधिवासे बन्धनागारे, चिरं दीर्घकालं, प्रवसतीति प्रवासिनं तं वासकारिणम्। ईक्षावहे पश्यावः।

(ढ) प्रहारेति।—प्रहारैः ताडनैः, रावणसैन्यैरिति भावः, जर्जराः कुट्टिताः, भग्नाङ्गा इत्यर्थः, अतिव्यथितदेहा इति भावः, ये वलीमुखा वानराः, "कपिप्लवङ्ग-प्लवग-शाखामृगवलीमुखाः। मर्कटो वानरः" इत्यमरः; अच्छभल्ला भल्लुकाः, "ऋक्ष-भल्लुके। ऋक्षाच्छभल्लभालूकाः" इत्यमरः, गोलाङ्गूलाः गो-लाङ्गूलवत् लाङ्गूलं येषां तथाभूताः, वानरविशेषा इति यावत्, तेषां ग्रामस्य समूहस्य, संवल्गने सयमने, वेदनानिवारणे इत्यर्थः वेदनानिवारणार्थं सान्त्वनावाक्यप्रयोगे इत्यर्थो वा, वल्गितः वेष्टितः, गत इत्यर्थो वा, सुग्रीवो वानराधिपतिः यस्य तादृशः, सुग्रीवमुखेन कपिसैन्यानि अतिव्यथितानि प्रीणयन्निति भावः। लक्ष्मणेति।—लक्ष्मणे तदाख्ये अनुजे, निहितं न्यस्तं, धनुः कार्मुकं येन तथोक्तः।

पौलस्त्येति।—पौलस्त्येन रावणेन, न्यस्ता निक्षिप्ता, या शक्तिरस्त्रविशेषः, तस्याः

सद्यो मसारमन्यं रजनिचरपुरीभद्रपीठप्रतिष्ठं
दृष्ट्वा तुष्यत्पुलस्त्यो जगति विजयते जानकीजानिरेकः ॥८४॥

(इति निष्क्रान्तौ)।

इति दशग्रीववधो नाम षष्ठोऽङ्कः।

---

## सप्तमोऽङ्कः।

(नेपथ्ये)।—

तमिस्रामूर्च्छालत्रिजगदगदङ्कारकिरणे
रघूणां गोत्रस्य प्रसवितरि देवे सवितरि।

---

तया च त्रपया लज्जया, किञ्चिदञ्चिता गुञ्जमालाग्रन्थिभिः, गुञ्जाञ्चितस्थाने ईषत् यन्थ्यावग्रथ इत्यर्थः, लक्ष्म चिह्नं यस्य तथाभूतात्, लक्ष्मणस्य रामानुजस्य, उरःपीठात् वक्षःस्थलात्, प्रशस्तवक्षःस्थलादित्यर्थः, तादृशोरःस्थलमवलोक्य इति भावः, निर्मुक्ता निर्गलिता, लज्जा यस्य तथोक्तः, लक्ष्मणोरः शक्तिविद्धं दृष्ट्वा तत्प्रशमनेनापि रामस्य लज्जा न गता, इदानीं रावणं हत्वा सा लज्जा गतेति भावः, त्रिभुवनपुरस्य देवनगरस्य स्वर्गस्य, वधूभिः अङ्गनाभिः, विद्याधरीभिरित्यर्थः, कृप्तः विहितः, कृत इति यावत्, पुष्पैः कुसुमैः, पारिजातादिभिरिति यावत्, अभिषेकः अभिषिञ्चनं, वर्षणमित्यर्थः, पुष्पवृष्टिरिति यावत् यस्य तथाविधः, सद्यः तत्क्षणात्, रावणवधात् परमेवेत्यर्थः, अन्यम् अपरं, मसारं पीठं, विभीषणमिति यावत्, रजनीचरपुर्याः राक्षसराजधान्याः लङ्कायाः, भद्रपीठे सिंहासने, प्रतिष्ठा स्थानम्, अवस्थानमित्यर्थः, आरोहणमिति यावत् यस्य तादृशं दृष्ट्वा अवलोक्य, तुष्यन् सन्तोषं गच्छन्, पुलस्त्यः तदाख्यः रावणपितामहः यस्य तथोक्तः, एकः अद्वितीयः, अप्रतिमवीर इति भावः, यद्वा—एकः केवलः, "एके मुख्यान्यकेवलाः" इत्यमरः; जानकी जाया यस्य स जानकीजानिः सीतापतिः रामः, जगति भुवने, विजयते सर्वोत्कर्षेण वर्त्तते; यद्वा—जगति एकः मुख्यः, त्रिभुवनमध्ये श्रेष्ठ इत्यर्थः, जानकीजानिः विजयते। स्रग्धरा वृत्तम् ॥८४॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्येण कृता
अनर्घराघवषष्ठाङ्कव्याख्या समाप्ता।

क्रमेण च—

सहैव सुग्रीव-विभीषणाभ्यां
सौमित्रि-सीतापरिपूर्णपार्श्वः ।
उपैति वैवस्वतवंशवृत्त-
मेध्यामयोध्यामथ पुष्पकेण ॥ ३ ॥ ( युग्मम् )

( ततः प्रविशति विमानयानेन विजयाभिरामो (क) रामः सीता-
लक्ष्मणौ सुग्रीव-विभीषणौ च ) ।

सुग्रीवः । ( रामं प्रति ) । देव ।—

किं-कुर्वाणपयोधिसेवितगृहोद्यानाऽधुनाऽऽलोक्यतां
लङ्केयं रघुवंशविक्रमकथाबीजप्ररोहस्थली ।

---

रावणसहवासिना रभसा वधजनितेनेति भावः, रभसेन हर्षेण, विशुद्धायाः सीतायाः लाभजनितेनेति भावः, "रभसो वेग-हर्षयो." इत्यमरः ; व्रीडया लज्जया, निष्कलङ्केन मया स्वतः शुद्धा सीता जानताऽपि अग्निप्रवेशं कारितेति कृत्वेति भाव., जडः निश्चलः, स्तब्धः इत्यर्थः, आसीदिति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

सहैवेति ।—अथानन्तरमेव, सुग्रीव-विभीषणाभ्यां कपि-राक्षसराजाभ्यां, सह सार्द्धं, तथा सौमित्रिर्लक्ष्मणः, सीता जानकी च, ताभ्यां परिपूर्णौ व्याप्तौ, युक्तौ इत्यर्थः, पार्श्वौ पार्श्वद्वयं यस्य तथाभूतः, वामे सीता दक्षिणे लक्ष्मण निधायेति भावः, राघव इति शेषः, पुष्पकेण तदाख्येन विमानेन, वैवस्वतवंश्यानां सूर्यवंश्यानां, वृत्तेन चारित्रेण, मेध्यां पूताम्, अयोध्यां तन्नाम्नीं स्वां राजधानीम्, उपैति गच्छति । उपजातिवृत्तम् ॥ ३ ॥

(क) विजयेति ।—विजयेन जयलाभेन, शत्रुपराभवेणेत्यर्थः, अभिरामः मनोज्ञः, रम्यदर्शन इत्यर्थः, हृष्टात्मा इति भावः ।

किमिति ।—अधुना इदानीं, किं-कुर्वाणानि किमाचाराणि, पयोधिसेवितानि समुद्रमध्यवर्त्तीनि, यद्वा—किमिति प्रश्नार्थकं कुत्सार्थकं वा अव्ययं, किम् ? भवतः वशोऽस्मिदानीं किमित्यर्थः, करोमीति शेषः, यद्वा—किं कुत्सितः, भवता वन्धनेन कदार्थितोऽहमित्यर्थः, "किं कुत्सायां वितर्के च निषेधप्रश्नयोरपि" इति मेदिनी ; इति कुर्वाणेन कुर्वता, एवमभिदधानेनेत्यर्थः, पयोधिना सागरेण, सेवितानि जुष्टानि, सागरोपकूलवर्त्तीनीति भावः, गृहाणि भवनानि, उद्यानानि उपवनानि च यस्याः

देवेनात्र दशाननस्य दशभिश्छिन्नैः शिरोभिः क्रमा-
देकैकेन शतं शतं शतमखस्यामोदिता दृष्टयः ॥ ४ ॥

रामः। देवि वैदेहि ! दृश्यतामितो (ख) लङ्कां पूर्वेण (ग) सुवेलं पश्चिमेन (घ)—

त्वदर्थीयक्रव्यात्कपिकुलकबन्धव्यतिकरैः
करालेयं भूमिर्भुवनभयमद्यापि तनुते ।
अभूवन्नम्भोधेरिह रुधिरमय्यो युवतयः
सहस्रं साहस्रास्त्रिदिवयुवतीनां च पतयः ॥ ५ ॥

---

तथाभूता, रघुवंशस्य रघुकुलोत्पन्नस्य रामचन्द्रस्येत्यर्थः, यो विक्रमः शौर्य्यं, तस्य कथायाः आलापस्य, यत् बीजं कारणं, तस्य प्ररोहस्थानम् उत्पत्तिस्थानम्, इयम् एषा, लङ्का राक्षसनगरी, आलोक्यतां दृश्यताम्, अत्र लङ्कायां, देवेन भवतेत्यर्थः, दशाननस्य रावणस्य, क्रमात् क्रमशः, एकमेकं कृत्वेत्यर्थः, छिन्नैः त्रुटितैः, दशभिः शिरोभिः दशसंख्यकैः मस्तकैः, छिन्नानां दशानां शिरसामिति भावः, एकैकेन एकेन एकेन शिरसा इत्यर्थः, शतमखस्य शतक्रतोः इन्द्रस्य इत्यर्थः, शतं शतं दशशतमित्यर्थः, दृष्टयः नेत्राणि, आमोदिताः तोषिताः, एकेन शिरसा कर्त्तितेन शतसंख्यकानां नेत्राणाम्, एवं-क्रमेण दशभिः शिरोभिः दशशतानां नेत्राणां प्रीतिर्भवता सम्पादिता इति निष्कर्षः। शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

(ख) इतः अस्मात् प्रदेशात्।

(ग) पूर्वेण पूर्वस्यां दिशीत्यर्थः।

(घ) पश्चिमेन पश्चिमायां दिशीत्यर्थः।

त्वदर्थीयेति।—त्वमेव अर्थः प्रयोजनं ययोः तौ त्वदर्थीयौ त्वत्प्रार्थिनौ, रावणोऽहञ्चेति भावः, तयोः ये क्रव्यात्-कपिकुले राक्षस-वानरकुले, रावणस्य क्रव्यात्कुलं मम च कपिकुलमित्यर्थः, तयोः कबन्धव्यतिकरैः शिरःशून्यकलेवरसम्बन्धैः, करालाः भीषणा, इयम् एषा, भूमिः रणस्थली, अद्यापि इदानीमपि, भुवनस्य जगतः, भयं त्रासं, तनुते विस्तारयति, उत्पादयतीत्यर्थः, इह अस्यां भूमौ, अम्भोधेः समुद्रस्य, रुधिरमय्यः शोणिताप्लुताः, सहस्रं युवतयः नद्य इति भावः, यद्वा—अम्भोधेः समुद्रस्य, समुद्रतो स्वे इति भावः, इह अस्यां भूमौ, अस्मिन् स्थाने इत्यर्थः, सहस्रं युवतयः युवानः इत्यर्थः, तरुणाः इति यावत्, रुधिरमय्यः हताः त्रिदिवयुवतीनां सुराङ्गनानां, साहस्राः

अपि च—

उद्यम्य दृष्टनिजपन्नगरत्नमाला-
न्यस्त्राणि चन्दनतरूनुपरि भ्रमन्तः।
द्यां ज्योतिरिङ्गणमयीमिह मेघनाद-
मायातमोऽपलपितां कपयो वितेनुः ॥ ६ ॥

सीता। अज्जउत्त! अवि इध ज्जेव्व भुअंगपासबंधणं सीदाए अणुहाविदा (ङ) तुम्हे? *

रामः। आं मैथिलि! आम् (च)—

चर्वितपीनाहिगणक्षणिति विनिष्ठ्यूतफणिमणिरभीशाम्।
बन्धनवैधुर्य्यं व्यधुनोदिह नौ स विहगेन्द्रः ॥ ७ ॥

---

* आर्य्यपुत्र! अपि इहैव भुजङ्गपाशबन्धनं सीतयाऽनुभाविता यूयम्?

---

सङ्कल्पकाः, पतयश्च मनोरथ, अभूवन् अजनिषत, उड्डामहता वीराः अमी मताः सुराङ्गनाभिः वव्रच्छन्ते इति आस्वादिति भावः। शिखरिणी वृत्तम् ॥ ५ ॥

उद्यम्येति।—इह अस्मिन् प्रदेशे, कपयः वानराः, मेघनादस्य इन्द्रजितः, मायातमोभिः मायावीविद्याकल्पितान्धकारैः, अपलपिता गोपिताम्, आवृतामिति यावत्, द्याम् आकाशम्, दृष्टानि अवलोकितानि, निजानि स्वानि, चन्दनवृक्षसंसृष्टानीति यावत्, पन्नगरत्नमालाणि केवलं सर्पशिरोमणयः, चन्दनतरुस्थितसर्पशिरोमणिमालावीत्यर्थः येषु तादृशान्, चन्दनतरून् चन्दनवृक्षान्, चन्दनवृक्षपादपानीत्यर्थः, अस्त्राणि प्रहरणानि, उद्यम्य उद्धृत्य, उपरि ऊर्द्ध्वदेशे, भ्रमन्तः विचरन्तः सन्तः, ज्योतिरिङ्गणमयीं खद्योतात्मिकां, खद्योतव्याप्तामिव इत्यर्थः, "खद्योतो ज्योतिरिङ्गणः" इत्यमरः, वितेनुः विस्तारयामासुः, चक्रुरित्यर्थः, अन्धकारे यथा खद्योताः विस्फुरन्ति, तथा मायान्धकारे चन्दनतरुपादपेषु उद्यतेषु तरस्थाना भुजङ्गानां केवलं शिरोरत्नानि आकाशे भान्ति स्मेति भावः। वसन्ततिलकं वृत्तम् ॥ ६ ॥

(ङ) अपि प्रश्नार्थकमव्ययम्, अनुभाविता किम्? इत्यर्थः, "अपि सम्भावना-प्रश्न-शङ्का-गर्हासमुच्चये" इति मेदिनी। भुजङ्गपाशबन्धनं नागपाशबन्धनम्। अनुभाविताः अनुभवं कारिताः, प्रापिता इति यावत्।

(च) आम् इति निश्चयार्थकं (स्वीकार) अव्ययं, त्वं यत् पृच्छसि तत् सत्यमेवेत्यर्थः, "आ प्रागनिश्चयस्मृत्योः" इति मेदिनी।

( विमृश्य सस्मितम् )। अहो ! वैषम्यमस्या जातेः, (छ)—

द्वे तावत् करणे रसान् रसयितुं शब्दांश्च रूपाणि च
श्रोतुं द्रष्टुमथैकमिन्द्रियमुरो गत्यै निगूढं पदम्।
अन्येष्वप्यशनेषु सत्सु जगतः प्राणाः स्वदन्तेतरां
मातः कद्रु ! यदि प्रसौति भवती भूयः सुतानीदृशान् ॥ ८ ॥

---

चर्वितेति।—इह अस्मिन् प्रदेशे, चर्वितः भक्षितः, पीनः स्थूलः, अहिगणो भुजङ्गसमूहः येन तथोक्तः, "चर्वितपीता" इति पाठे—आदौ चर्वितः पश्चात् पीतः चर्वणेन द्रवीभूतत्वात् पानविषयीकृत इत्यर्थः, अहिगणो येन तथोक्तः, अभीक्ष्णं पुनः पुनः, ठण् इति "ठण्" इति शब्दं कृत्वा, विनिष्ठ्यूतः उद्गीर्णः, मणिः सर्पशिरोरत्नं, सर्पनखकचर्वणकाले मुखाभ्यन्तरगतः इति भावः, येन तथाविधः, स प्रसिद्धः नागारिः, विहगेन्द्रः पक्षिराजः गरुडः, नौ आवयोः, घनं महत्, बन्धनेन नागपाशबन्धनेन, वैधुर्य्यं व्यथां, यद्वा—घन दृढ, यत् बन्धन नागपाशेन संयमनं, तेन वैधुर्य्यं वैकल्यं, "विधुरन्तु प्रविश्लेषे न द्वयोर्विकले त्रिषु" इति मेदिनी, व्यधुनोत् अपनीतवानित्यर्थः। आर्य्या वृत्तम् ॥ ७ ॥

( छ ) वैषम्यं वैपरीत्यम्, अद्भुतत्वमिति यावत्। अस्या जातेः सर्पजातेरित्यर्थः।

द्वे इति।—रसान् मधुरादीन्, आस्वादनीयानि द्रव्याणीत्यर्थः, रसयितुम् आस्वादयितुं, द्वे द्विसङ्ख्यके, तावत् करणे इन्द्रिये, रसनारूपे इति यावत्, द्विजिह्वत्वादिति भावः, "करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः, सर्वेषां प्राणिनां रसनेन्द्रियम् एकम् एव, सर्पाणान्तु द्वे इति अद्भुतत्वमिति भावः ; अथ किञ्च, शब्दांश्च श्रवणेन्द्रियग्राह्यान्, श्रोतुम् आकर्णयितुं, रूपाणि च दर्शनेन्द्रियग्राह्याणि च, द्रष्टुम् अवलोकयितुम्, एकम् एकमात्रम्, इन्द्रिय करणं, चक्षुःश्रवस्त्वात् चक्षुषैव दर्शन-श्रवणे सम्पाद्येते इति भावः, प्राण्यन्तराणां दर्शनार्थं श्रवणार्थञ्च पृथक् पृथक् इन्द्रियद्वयं विद्यते, सर्पस्य तु एकेनैव दर्शनेन्द्रियेण तदुभयकर्मसम्पादनात् वैषम्यमिति निष्कर्षः, उरसा वक्षःस्थलेन, गत्यै गमनाय, निगूढं गुप्तं, पदं चरणम्, अस्तीति शेषः, यद्वा—गत्यै गमनाय, उरः वक्षःस्थलं, निर्दिष्टमिति शेषः, पदं चरणन्तु, निगूढं गुप्तं, लोकलोचनागोचरमिति भावः, सर्व एव प्राणिनः चरणाभ्यामेव गच्छन्ति, चरणं तेषां गमनसाधनं, सर्पाणान्तु तद्विपरीतमित्यद्भुतत्वम्, अन्येषु अपरेषु, अशनेषु भोजनीयेषु, सत्सु विद्यमानेषु अपि, जगतः भुवनस्य, प्राणाः जीवनानि, जीवनहेतवो वायवः

(सर्वे हसन्ति)।

सीता। (सस्नेह-स्मितं लक्ष्मणमवलोक्य रामं प्रति)। अज्जउत्त! सोमित्तिकित्तिकंदलीए उप्पत्तिखेत्तं कदरो उण संणिवेसो? * (ज)

रामः। (सहर्ष-रोमाञ्चम्)। देवि मैथिलि! अयमितो हस्तदक्षिणेन दशरथ-दशकन्धरस्कन्धावारैकप्रवीरयोः (झ) लक्ष्मण-मेघनादयोर्द्वन्द्वयुद्धव्यतिकरसाक्षी सुवेलपादः (ञ)।

सीता। जहिं एव्व—†

* आर्य्यपुत्र! सौमित्रिकीर्त्तिकन्दल्या उत्पत्तिक्षेत्रं कतरः पुनः सन्निवेशः?

† यत्रैव—

इत्यर्थः, "श्वसनः स्पर्शनो वायुः···।···जगत्प्राण-समीरणाः॥" इत्यमरः, स्वदन्तेतराम् अतिशयेन स्वदन्ते, रोचन्ते इत्यर्थः, यद्वा—अतिशयेन स्वादवो भवन्तीत्यर्थः, सर्पाणां पवनाशनत्वादिति भावः, मातः! हे जननि! कद्रु! भवती त्वं, यदि चेत्, भूयः पुनरपि, ईदृशान् एवम्भूतान्, सुतान् पुत्रान्, प्रसौति जनयति, तदा चित्रं भवेदिति शेषः। यद्वा—यदीति निन्दार्थकमव्ययं, "यदि गर्हा-विकल्पयोः" इति मेदिनी; भवती भूयो बाहुल्येन, ईदृशान् यदि—निन्दितान्, अद्भुतानिति यावत्, सुतान् प्रसौति इत्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥ ८॥

(ज) सौमित्रिकीर्त्तिकन्दल्याः सौमित्रेर्लक्ष्मणस्य, कीर्त्तिर्यशः, तस्याः कन्दली नवः अङ्कुरः तस्याः, "कन्दली स्यात् गुल्मभेदे नवाङ्कुरे" इति विश्वः; यद्वा—कीर्त्तिरेव कन्दली गुल्मविशेषः तस्याः, "कन्दली तु मृग-गुल्मभेदयोः" इति मेदिनी; सन्निवेशः स्थानम्।

(झ) इतः अस्मात् स्थानात्, अस्यां दिशि वा, हस्तदक्षिणेन हस्तस्य दक्षिण-भागे। दशरथेति।—दशरथ-दशकन्धरयोः दशरथ-रावणयोः, स्कन्धावारेषु सैन्येषु सेनानिवेशेषु वा, एकप्रवीरयोः अद्वितीययोधयोः।

(ञ) द्वन्द्वयुद्धेति।—द्वन्द्वयुद्धस्य द्वैरथयुद्धस्य, द्वयोर्वीरयोः सम्मुखयुद्धस्येत्यर्थः, व्यतिकरः सम्बन्धः, तस्य साक्षी साक्षात् द्रष्टा। सुवेलपादः सुवेलस्य तदाख्यस्य गिरेः, पादः प्रत्यन्तदेशः।

अणुराअरोमकंटअसेअजलेहिं णिसाअरी कावि।
उद्दीविअणिव्वाविअदइदचिदाणलमणुमरेदि ? * ॥ ९ ॥

रामः। आं जानकि ! आम्। इदमेव तत् लक्ष्मणवीरलक्ष्मी-
स्वयंवरकौतुकागारम् (ट)। इह हि—

आनीतद्रोणशैलेन सौमित्रेः शल्यहारिणा।
अक्रियन्त जगन्त्येव निःशल्यानि हनूमता ॥ १० ॥

---

* अनुरागरोमकण्टकस्वेदजलैर्निशाचरी काऽपि।
उद्दीपितनिर्वापितदयितचिताऽनलमनुम्रियते ? ॥ ९ ॥

---

अनुरागेति।—यत्र इति गद्यस्थेनान्वयः, यत्र यस्मिन् स्थाने, काऽपि निशाचरी राक्षसी, मेघनादपत्नीति भावः, अनुरागात् भर्त्तरि प्रेमातिशयात्, यानि रोमकण्टकानि रोमाञ्चाः, स्वेदजलानि च घर्मोदकानि च तैः, उद्दीपितः प्रज्वालितः, निर्वापितश्च प्रशमितश्च, दयितस्य प्रियस्य, चिताऽनलः चिताऽग्निः तं, इन्धनकण्टकवत् अनुरागजनितरोमकण्टकेन इन्धनेन उद्दीपितम् अनुरागजनितस्वेदजलेन च निर्वापितं चिताग्निमित्यर्थः, अनु लक्ष्यीकृत्य, म्रियते ? अनुमृता भवति ? भर्त्तारमनुगन्तुं चिताग्निम् अनुप्रविशति ? इत्यर्थः ॥ ९ ॥

(ट) लक्ष्मणेति।—लक्ष्मणवीरलक्ष्म्याः लक्ष्मणस्य सौमित्रेः, वीरलक्ष्म्याः विजयश्रिया इत्यर्थः, स्वयंवरस्य आत्मना पतित्वेन वरणस्य, कौतुकागारम् उत्सवगृहं, वैवाहिकमङ्गलसूत्रधारणार्थं गृहं वा, "कौतुकन्त्वभिलाषे स्यादुत्सवे नर्म-हर्षयोः। विवाहसूत्र-गीतादिभोगयोरपि न द्वयोः ॥" इति मेदिनी।

आनीतेति।—आनीतः उपस्थापितः, द्रोणशैलः पर्वतविशेषः येन तथोक्तेन; अन्ये "द्रोण" इति गन्धमादनस्यैव नामान्तरं, यतः रामायणादौ लक्ष्मणप्राणरक्षार्थं हनूमत्कर्त्तृकगन्धमादनानयनप्रसङ्ग एव दृश्यते; सौमित्रेः लक्ष्मणस्य, शल्यहारिणा शल्याख्यास्त्राघातजनितव्यथां नाशयता, हनूमता तदाख्यप्रसिद्धवानरवीरेण, जगन्ति एव भुवनत्रयमेव, निःशल्यानि शल्यशून्यानि, अक्रियन्त कृतानि, शल्यवेधजन्यतापहारकौषधाविष्करणात् लक्ष्मणव्यथायां त्रिजगद्वासिनां सर्वेषामेव व्यथितत्वात् इति भावः। अनुष्टुप् वृत्तम् ॥ १० ॥

सीता। (स्मृतिमभिनीय सानुरागम्)। अज्जउत्त! किक्किंधेसरकंधावारधुरंधरो रहुउलकुटुंबविहुरबंधु (ठ) सो कहिं हणूमंतो? *

रामः। देवि निमिराजनन्दिनि!—

सुप्ते निशाचरपतौ रविबिम्बवर्त्ती
तातो मया दशरथः स्वयमेव दृष्टः।
तस्याज्ञया रघुपुरीं प्रहितः पुरैव
राज्याभिषेकविधिसम्भृतये हनूमान्॥ ११॥

(विमानवेगनाटितकेन)। देवि! प्रणम्यतामयमितो भगवान् अम्बुराशिः,—(ड)

लक्ष्मीरस्य हि यादः कृष्णोरःस्थाऽपि सुभटभुजवसतिः।
इन्दुः स च मृडचूडामणिरपि जगतामलङ्कारः॥ १२॥

---

* आर्यपुत्र! किष्किन्धेश्वरस्कन्धावारधुरन्धरो रघुकुलकुटुम्बविधुरबन्धुः स कुत्र हनूमान्?

---

(ठ) किष्किन्धेति।—किष्किन्धेश्वरस्य किष्किन्ध्याऽधिपतेः सुग्रीवस्य, स्कन्धावारेषु सैन्येषु स्कन्धावारे सेनानिवेशे वा, धुरन्धरः अर्पितकार्यभारवहनक्षमः, श्रेष्ठ इत्यर्थः। रघुकुलकुटुम्बेषु रघुवंशीयानां पोष्यवर्गेषु, "कुटुम्बं पोष्यवर्गे च" इत्यमरमाला, ये विधुराः आपन्नाः, तेषां बन्धुः मित्रम्।

सुप्ते इति।—निशाचराणां राक्षसानां, पत्यौ स्वामिनि, रावणे इत्यर्थः, सुप्ते क्षयं गते सति, रविबिम्बवर्त्ती सूर्यमण्डलस्थः, तातः पिता, दशरथः मया स्वयमेव साक्षादेव, दृष्टः अवलोकितः, तस्य तातस्य, अनुज्ञया आदेशेन, पुरैव पूर्वमेव, राज्याभिषेक एव विधिः, यद्वा—राज्याभिषेकस्य यो विधिः विधानं, नियम इत्यर्थः, तस्य सम्भृतये सम्भाराय, आयोजनायेत्यर्थः, भरतद्वारा इति भावः, हनूमान् रघुपुरीम् अयोध्यां, प्रहितः प्रेषितः। वसन्ततिलकं वृत्तम्॥ ११॥

(ड) इतः अस्मात् स्थानात्, अस्यां दिशि इत्यर्थो वा। अम्बुराशिः समुद्रः।

लक्ष्मीरिति।—कृष्णस्य नारायणस्य, उरसि वक्षसि, तिष्ठति वसति इति तथोक्ता, तथा सुभटानां सुवीराणां, भुजेषु बाहुषु, वसतिः वासः यस्याः तथाभूता, लक्ष्मीरपि

( सविमर्शम् ) ।—

स्यादेव तोयममृतप्रकृतिर्यदि स्या-
देकान्तमद्भुतमिदं पुनरद्भुतं नः ।
लक्ष्मी-तुषारकर-कौस्तुभ-पारिजात-
धन्वन्तरिप्रभृतयो यदपां विवर्त्ताः ॥ १३ ॥

अपि च देव !—

आकण्ठदृष्टशिरसाऽप्यविभाव्यपृष्ठ-
पार्श्वोदरेण चिरमृग्भिरुपास्यमानः ।
नाभीसरोरुहजुषा चतुराननेन
प्रीतं किलात्र भगवानरविन्दनाभः ॥ १४ ॥

---

शोरपि, तथा मृडस्य हरस्य, "—गिरीशो गिरिशो मृडः ।··· हर स्मरहरो भर्गः" इत्यमरः; चूडामणिः शिरोरत्नं, जगतां भुवनानाम्, अलङ्कारः भूषणं, भूषणस्वरूपमित्यर्थः, स प्रसिद्धः, इन्दुश्च चन्द्रोऽपि, अस्य अम्बुराशेः समुद्रस्य, यादः हि जलजन्तुभेद एव, "यादांसि जलजन्तवः" इत्यमरः; अस्मादेवामरोद्भवादिति भावः । आर्य्या वृत्तम् ॥ १२ ॥

स्यादिति ।—यद् तोयं जलम्, अमृतप्रकृतिः अमृतस्य सुधारसस्य, प्रकृतिः योनिः, उत्पत्तिहेतुरित्यर्थः, जलात् यदि अमृतस्य उत्पत्तिरिति यावत्, "प्रकृतिः योनौ लिङ्गे च" इत्यमरः; स्यात् भवेत्, तदा स्यादेव भवेदेव, अमृतप्रकृतिकत्वमस्य सम्भवत्येवेति भावः, इदं तोयस्य अमृतप्रकृतिकत्वम्, एकान्तम् अत्यन्तम्, अद्भुतम् आश्चर्य्यं न, यद्वा—तोयमेव यदि अमृतप्रकृतिः स्यात्, तदा एकान्तमद्भुतं न स्यात्, अमृतस्य द्रवत्वात् समुद्रोत्पन्नत्वं सम्भवतीति भावः, इदं पुनः एतदेव, वक्ष्यमाणव्यापार एवेत्यर्थः, नः अस्माकम्, अद्भुतम् आश्चर्य्यं, प्रतिभातीति शेषः, यत् लक्ष्मीः श्रीः, तुषारकरश्चन्द्रः, कौस्तुभं मणिविशेषः, पारिजातः सुरतरुविशेषः, तथा धन्वन्तरिः वेदस्य प्रवर्त्तयिता स्वर्गचिकित्सकः, एतत्प्रभृतयः एतदादयः, एते तथा उच्चैःश्रवादयश्च इत्यर्थः, अपां जलानां, विवर्त्ताः परिणामाः, एषां तोयस्य च परस्परवैसादृश्यात् विरुद्धगुणत्वाच्चेति भावः । वसन्ततिलकं वृत्तम् ॥ १३ ॥

आकण्ठेति ।—भगवान् षडैश्वर्य्यसम्पन्नः, अरविन्दं पद्मं, नाभौ नाभिदेशे यस्य स तादृशः, विष्णुरित्यर्थः, आकण्ठं कण्ठपर्य्यन्तं, दृष्टानि नेत्रविषयीभूतानीत्यर्थः, शिरांसि

( सीता वन्दते ) ।

लक्ष्मणः । यत् सत्यमुत्सर्पिणी धर्मोत्तराणां सिद्धिः, (ढ)—
जरयतु जगत् कल्पोच्छित्तौ पिपर्त्तु पयोधरान्
वहतु वडवावक्त्रज्योतिर्दधातु सुधाभुजः ।
भवतु वपुषा यावांस्तावानगस्त्यरुषा पुन-
र्निधिरयमपामीषत्पानस्तपासि ! नमोऽस्तु वः ॥ १५ ॥

---

मस्तकानि, चत्वारि इति भावः यस्य तथोक्तेनापि, अविभाज्यपृष्ठ-पार्श्वोदरेण समान-पृष्ठ-पार्श्व-जठरेण, कण्ठपर्य्यन्तशिरोदर्शनेनापि अस्य पृष्ठादिकं क्वेति न विभावयितुं शक्यते चतुर्मुखत्वादिति भावः, यद्वा—अविभाव्यम् अतर्क्यम्, अदृश्यत्वादविज्ञेय-मित्यर्थः, पृष्ठ-पार्श्वोदरं यस्य तादृशेन, स्तवनार्थं मुखमात्रस्यैव ऊर्द्ध्वीकरणात् अङ्गान्तराणां नाभिसरोरुहाभ्यन्तरे एव वर्त्तमानत्वादिति भावः, नाभीसरोरुहजुषा नाभिपद्मस्थितेन, चतुराननेन चतुर्मुखेन ब्रह्मणा, चिरं दीर्घकालं व्याप्य, ऋग्भिः वैदिकमन्त्रविशेषैः, उपास्यमानः स्तूयमानः, ननु, अयं अम्बुराशौ, शेते स्वपिति, तिष्ठतीति प्रसिद्धौ । वसन्ततिलकं वृत्तम् । १४ ॥

( ढ ) उत्सर्पिणी वर्द्धमाना, महतीति यावत् । धर्मः उत्तरः प्रधानं येषां तथोक्तानां धर्मनिष्ठानामित्यर्थः । सिद्धिः साफल्यं, कृतकृत्यता इत्यर्थः ।

जरयत्विति ।—अयम् एषः, अपां निधिः समुद्रः, कल्पोच्छित्तौ कल्पस्य ब्रह्मणो दिनस्य, उच्छित्तौ विनाशे, अवसाने इत्यर्थः, प्रलयकाले इति यावत्, "कल्पः शास्त्रे विधौ न्याये संवर्त्ते ब्रह्मणो दिने" इति मेदिनी ; जगत् भुवनं, जरयतु जीर्णं करोतु, आप्लावनेन विध्वंसयत्वित्यर्थः, "जरयतु" इत्यत्र "जनयतु" इति पाठे—कल्पोच्छित्तौ कल्पस्य प्रलयस्य, उच्छित्तौ उच्छेदे, उपरमे इत्यर्थः, प्रलयानन्तरमिति यावत्, "संवर्त्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि" इत्यमरः ; जगत् जनयतु उत्पादयतु, "एतस्माद्वा आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी" इति श्रुतेः ; पयोधरान् मेघान्, पिपर्त्तु पूरयतु, आदित्यकिरणाकृष्ट-समुद्राम्भसा मेघपूरणादिति भावः, वडवायाः अश्वायाः, वक्त्रज्योतिः मुखानलं, वाडवानलमित्यर्थः, वहतु धारयतु, सुधाभुजो देवान्, दधातु पुष्णातु अमृतदाने-नेति भावः, वपुषा शरीरेण, यावान् यत्परिमाणः, तावान् तत्परिमाणः, भवतु अस्तु, पुनः किन्तु, अगस्त्यस्य कुम्भसम्भवस्य मुनेः, रुषा कोपेन, ईषत्पानः, ईषत्

रामः । ( सबहुमानम् ) । वत्स ! किमुच्यते—

मुनेः कलशजन्मनो जयति काऽपि गम्भीरता
यया चुलुकमम्भसामपि निधिः समुत्पद्यते ।
अमुष्य पुनरीश्महे न विवरीतुमुत्तुङ्गतां
यया भवति नोच्चकैरहह ! सोऽपि विन्ध्याचलः ॥ १६ ॥

अपि च वत्स ! दुरवगाहगम्भीरस्वभावानि महतां चरितानि । (ग) तथा हि—

जगद्विगमघस्रघस्मरसहस्रभानुप्रभा-
परिक्वथितपाथसो लवणकूटमेवार्णवः ।
अयं क्षणमभूदथ ज्वलति कालरुद्रानले
चटच्चटदिति स्फुटन् भवति स्म यावत् क्षणात् ॥ १७ ॥

---

चुलुकमात्रं, गण्डूषमात्रमेव इति यावत्, पानं पेयता यस्य तादृशः, चुलुकपरिमितवत् सुखपेयः इत्यर्थः, तस्मात् हे तपांसि ! वः युष्मभ्यं, नमः अस्तु, तपोरूपधर्मनिष्ठानां न किमप्यसाध्यमिति भावः । अगस्त्यस्य समुद्रपानवार्त्ता प्रसिद्धैव न पुनरुक्ता । हरिणी वृत्तम् ॥ १५ ॥

मुनेरिति ।—कलशात् कुम्भात्, जन्म उत्पत्तिः यस्य तथाभूतस्य, मुनेरगस्त्यस्य, काऽपि अनिर्वचनीयेत्यर्थः, गम्भीरता दुरवगाहप्रकृतित्वं, जयति सर्वोत्कर्षेण वर्तते इत्यर्थः, यया गम्भीरतया, अम्भसां निधिरपि समुद्रोऽपि, चुलुकं गण्डूषः, समुत्पद्यते सम्पद्यते, गण्डूषीक्रियत इत्यर्थः, अमुष्य अगस्त्यस्य, उत्तुङ्गतां महोन्नतत्वं, महत्त्वमिति यावत्, विवरीतुं प्रकटयितुं, न पुनः नैव, ईश्महे प्रभवामः, यया उत्तुङ्गतया, सः अत्युन्नतत्वेन प्रसिद्धः, विन्ध्याचलोऽपि विन्ध्यगिरिरपि, उच्चकैः उन्नतः, न भवति न पुनर्वर्द्धते इति भावः, अहह ! आश्चर्यम् । पृथ्वी वृत्तम् ॥ १६ ॥

( ग ) दुरवगाहेति ।—दुरवगाहः दुष्प्रवेशः, दुर्बोध इत्यर्थः, गम्भीरः अगाधश्च इति यावत्, स्वभावः स्वरूपं येषां तादृशानि । चरितानि आचरणानि ।

जगदिति ।—अयम् एषः, अर्णवः समुद्रः, जगतां भुवनानां, विगमस्य अवसानस्य, ध्वंसस्येत्यर्थः, यः घस्रः दिनं, प्रलयकाल इत्यर्थः, "घस्रो दिनाहनी" इत्यमरः; तत्र घस्मरः अद्मरः, भक्षक इत्यर्थः, विनाशहेतुरिव इति भावः, "भक्षको घस्मरोऽद्मरः" इत्यमरः; यः सहस्रभानुः सूर्यः, प्रलयकालिकः द्वादशसूर्य इति यावत्,

सीता। अज्जउत्त ! जलणिहिमज्झवट्टिणो लंकापोदअस्स जंबूदीवोवसंजमणसिंखलेव्व को एसो पड़िहासदे ? * (त)।

रामः। देवि मेदिनीनन्दिनि ! पतितपौलस्त्यजगद्विजयकेतु-दण्डानुकारी ककुत्स्थकुटुम्बदुःखसंविभागदायादस्य वानरपतेः कीर्त्तनमयोऽयं महासेतुः। (थ)

---

* आर्य्यपुत्र ! जलनिधिमध्यवर्त्तिनो लङ्कापोतस्य जम्बूद्वीपोपसंयमनशृङ्खलेव क एष प्रतिभासते ?

---

तस्य प्रभया तेजसा, परिक्लापितः प्रतिपक्षः, अत्यर्थं शोषित इति यावत्, अत एव पिण्डितः पिण्डाकारतां प्रापितः सन्, क्षणं क्षणमात्रेण, लवणकूटमेव लवणराशिरिव, "पुञ्ज-राशी तूत्करः कूटमस्त्रियाम" इत्यमरः; अभूत्, दृश्यते च लोके, समुद्रतीर-वासिनः लवणोदधेर्जलमग्निसन्तापेनोत्क्वाथ्य संशोष्य च लवणतया परिणमयन्तीति, अथानन्तर, कालरुद्रानले संहारक-रुद्राग्नौ, ज्वलति प्रज्वलिते सति, क्षणात् प्रज्वलनक्षण एव, चटचटदिति अव्यक्तध्वनिनेति भावः, स्फुटन् विदीर्य्यमाणः सन्, यावत् साकल्येन, सम्पूर्णभावेनेत्यर्थः, "यावत्तावच्च साकल्ये एवार्थेऽपि समुच्चये" इत्यमरः; न भवति स्म न तिष्ठति स्म, क्षणमात्रेण विनाशं गतः इत्यर्थः, भस्मीभूत इति यावत्, यः समुद्रः द्वादशसूर्य्यकिरणेन शोषितः लवणराशिरूपेण परिणतोऽभविष्यत्, यश्च कालाग्नितेजसा निःशेषं दग्धीभविष्यति, तस्य चुलुकीकरणमसम्भवमपि अगस्त्येन सत् कृतं, तस्मात् महतां न किमप्यसाध्यमिति भावः। पृथ्वी वृत्तम् ॥ १७ ॥

(त) जलनिधेः समुद्रस्य, मध्यवर्त्तिनः मध्यदेशे अवस्थितस्य। लङ्कापोतस्य लङ्कारूपवहित्रस्य। जम्बूद्वीपोपसंयमनेति।—जम्बूद्वीपे सप्तसु द्वीपेषु जम्बूवृक्षचिह्निते स्वनामप्रसिद्धद्वीपविशेषे, यत् उपसंयमनं बन्धनं, तस्य शृङ्खलेव लौहनिर्मितरज्जुरूप-वस्तुविशेष इव, पोतो हि महत्या रज्ज्वा तीरे बध्यते इति दिक्। प्रतिभासते ? प्रतीयते ? परिदृश्यते ? इति यावत्।

(थ) मेदिनीनन्दिनि। पृथिव्यात्मजे। सीतायाः भूमिकर्षणकाले लाङ्गलाग्रे भूमितः प्रादुर्भावात् मेदिनीनन्दिनीत्वम्। पतितेति।—पतितः भूमौ लुण्ठितः, पौलस्त्यस्य रावणस्य, यः जगद्विजयः त्रिजगद्वशीकरणं, तस्य केतुदण्डः ध्वजयष्टिः, जगद्विजयसूचकध्वजदण्डः इत्यर्थः, तदनुकारी तादृशः, पौलस्त्यनिधनेन तस्य ध्वजदण्डस्यापि पतनादिति भावः। ककुत्स्थेति।—ककुत्स्थकुटुम्बस्य ककुत्स्थ-वंशीयपरिजनस्य, अस्मदादेरिति भावः, यत् दुःखं क्लेशः, तस्य संविभागः सम्यक्

सीता (सहर्षम्)। दिट्ठिआ (ट) अज्जउत्तदंसणपच्चासाए बंधप्परोहणमहोसहं (ध) सेदुबंधो दीसइ। (अञ्जलिं बद्ध्वा)। भअवं! णमो दे। *

राम:। देवि विश्वम्भरासम्भवे! (न) पश्य पश्य—

यथा दूरापातित्रिदिवयुवतीनेत्रसुलभा-
मपां भर्त्ता हारावलिवलयलक्ष्मीं वितनुते।
तथाऽयं माणिक्यस्फटिककनकग्रावशिखरै-
रशून्यात्मा सेतुः प्रभवति महानायक इव ॥ १८ ॥

---

* दिष्ट्या आर्य्यपुत्रदर्शनप्रत्याशाया बन्धप्ररोहणमहौषधं सेतुबन्धो दृश्यते। भगवन्! नमस्ते।

---

विभागः, तत्र दायं विभाज्यद्रव्यम्, आदत्ते गृह्णाति इति दायादः अंशहरः तस्य, समदुःखभागिन इत्यर्थः। वानरपतेः सुग्रीवस्य। कीर्त्तनमयः कीर्त्तिमयः, कीर्त्तिस्वरूप इत्यर्थः। महासेतुः विशालसेतुः।

(ट) दिष्ट्या भाग्येन।

(ध) आर्य्यपुत्रेति।—आर्य्यपुत्रस्य भर्त्तुः तव, दर्शनाय साक्षात्प्राप्तये, या प्रत्याशा तृष्णा, स्पृहा इति यावत् तस्याः। बन्धप्ररोहणेति।—बन्धस्य स्थापनस्य, प्ररोहणम् अङ्कुरोद्भावनम्; यद्वा—बन्धस्य दृढीकरणस्य इत्यपः, प्ररोहणं प्ररुह्यते अनेनेति प्ररोहणं वीजं, हेतुभूतम् इत्यर्थः, तदेव महौषधं महौषधस्वरूप इत्यर्थः।

(न) विश्वम्भरासम्भवे। पृथिवीतनये। "भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा। गोत्रा कुः पृथिवी पृथ्वी—"इत्यमरः।

यथेति।—अपां भर्त्ता समुद्रः, दूरात् विप्रकृष्टदेशात्, आपतन्ति निःसरन्ति भवन्तीति दूरापातीनि विप्रकृष्टदेशादपि दर्शनसमर्थानीत्यर्थः, त्रिदिवयुवतीनां देवाङ्गनानां, यानि नेत्राणि नयनानि, तासां खेचरत्वात् नेत्राणां दूरापातित्वमिति भावः, तेषां सुलभां सुखदर्शनीयामिति यावत्, हारावलीवलयस्य हारावलीवेष्टनस्य, पृथिव्या इति भावः, लक्ष्मीं श्रियं, यथा वितनुते विस्तारयति, धत्ते इति यावत्, तथा माणिक्य-स्फटिक-कनकग्रावशिखरैः माणिक्यमयैः स्फटिकमयैः काञ्चनमयैश्च शैलशृङ्गै-रित्यर्थः, अशून्यात्मा पूरितावयवः, अयम् एषः, सेतुः आलिः, महानायक इव महान् मध्यमणिरिव, तस्या एव हारावल्या इति भावः, "नायको नेतरि श्रेष्ठे हारमध्य-

अपि चास्मिन् बध्यमाने—

> शैलप्रवेशात् प्रचलीभवद्भिः
> कल्लोलकूटैरभिताडितानाम् ।
> आसीन्निवृत्त्याऽचलगामिनीना-
> मम्भोधिरेव प्रभवो नदीनाम् ॥ १९ ॥

(सुग्रीवं प्रति)। सखे !—

> तथा सेतुश्रद्धोत्कलितकपिनिक्षिप्तशिखरि-
> प्रतिष्ठावर्द्धिष्णु क्षणमथ नदीभिः प्रतिवहन् ।
> समुत्खातक्षोणीधरकुहरपूर्त्तिव्यतिकर-
> प्रसृष्टाहङ्कारः स्मरसि तदवस्थो निधिरपाम् ? ॥ २० ॥

---

मध्यावपि" इति मेदिनी ; प्रभवति प्रकर्षेण तिष्ठतीत्यर्थः, पृथिव्याः द्वारवत् परिदृश्यमानस्य अम्भोधेः बध्यति शोभमानस्य माणिक्यादिप्रस्तरघटितस्य सेतोर्मध्यमणित्वं बोद्धव्यमिति निष्कर्षः । शिखरिणी वृत्तम् ॥ १८ ॥

शैलेति ।—शैलानां पर्वतानां, सेतुनिमित्तमानीतानां पर्वतानामिति भावः, प्रवेशात् अन्तर्गमनात्, जलमध्ये स्थापनादिति भावः, प्रचलीभवद्भिः प्रकर्षेण चञ्चलीभूतैः, जलप्रवाहप्रतिरोधादिति भावः, कल्लोलकूटैः तरङ्गराशिभिः, अभिताडितानाम् आहतानाम्, अत एव निवृत्य प्रत्यावृत्य, पुरोभागे गमनाशक्त्या पश्चादपसृत्येत्यर्थः, अचलगामिनीनां पर्वताभिमुखीनां, अत एवागतास्तैवाचलेषु गच्छन्तीनामिति यावत्, नदीनां सरिताम्, अम्भोधिरेव समुद्र एव, प्रभवः उत्पत्तिस्थानम्, आसीत् अभूत् ; नदीनां पर्वता एव प्रभवाः, अत्र तु शैलप्रवेशात् कल्लोलताडनेन परावृत्य पर्वतानेव प्रतिगच्छन्त्यः नद्यः समुद्रादिव प्रसूता इति भावः । इन्द्रवज्रा वृत्तम् ॥ १९ ॥

तथेति ।—तथा तादृशः, सेतुबन्धनकाले परिदृष्ट इत्यर्थः, सेतुश्रद्धया सेतुकरणानुरागेण, उत्कलितैः उत्सुकैः, कपिभिः वानरैः, निक्षिप्तानां पातितानां, शिखरिणां पर्वतानां, प्रतिष्ठया स्थित्या, वर्द्धिष्णु वर्द्धनशीलः, स्फीतकलेवर इत्यर्थः, क्षणं तत्क्षणमात्रेण, नदीभिः समुद्रेण गच्छन्तीभिः सरिद्भिः, प्रतिवहन् प्रातिकूल्येन गच्छन्, निम्नाभिमुखमप्रसरन्नित्यर्थः, अथानन्तरं, समुत्खातानां समुत्पाटितानां, समुत्पाट्य निहितानामिति यावत्, क्षोणीधराणां पर्वतानां, कुहराणि विवराणि, "कुहरं शुषिरं विवरं बिलम्" इत्यमरः ; तेषां पूर्त्तिः पूरणं, जलप्रवाहेणेति भावः, तया

सुग्रीवः । देव ! भवच्चरितचित्रशालिकायाम् (प) अस्माकं चेतसि किं किं नाम न लिखितमस्ति ? अपि च—

सेतूद्योगे सपदि लवणादन्यमन्तस्तिमिभ्यः
कालेनापां मधुरमपि हि स्वादमुद्भेदयन्त्यः ।
शैलक्षेपोच्छलितसलिलव्यूहतुच्छे समन्तात्
वारां पत्यौ पटुतररयं निम्नगाः सन्निपेतुः ॥ २१ ॥

विभीषणः । देव मनुवंशमौक्तिकमणे !—(फ)

---

व्यतिकरेण सम्बन्धेन समूहेन वा, प्रमृष्टः अपनीतः, अहङ्कारः अहं महानिति बुद्धिः यस्य तथाभूतः, बहुभिः प्रवाहैरपि कुहराणामपूरणीयत्वात् कुहरमध्ये आवर्त्तीभावाच्चेति भावः, तदवस्थः बन्धनस्थ इत्यर्थः, अपां निधिः समुद्रः, यदासीदिति शेषः, तत् स्मरसि ? त्वमिति शेषः । अत्र वाक्यार्थः कर्मतयाऽन्वेति । शिखरिणी वृत्तम् ॥ २० ॥

(प) भवदिति ।—भवतः तव, चरितमेव चरित्रमेव, चित्रशालिका आलेख्यगृहं तस्य, तत्स्वरूपे इत्यर्थः ।

सेतूद्योगे इति ।—सेतोः सेतुबन्धनस्य, उद्योगे उपक्रमे, सपदि तत्क्षणात्, शैलानां पर्वतानां, पर्वतखण्डानामिति यावत्, क्षेपात् पातनात्, उच्छलितैः उत्क्षिप्तैः, स्फीतैरिति यावत्, सलिलव्यूहैः जलसङ्घातैः, तुच्छे विरलजलतां नीते इति भावः, वारां पत्यौ जलनिधौ, निम्नगाः नद्यः, "अथ नदी सरित् । स्रोतस्वती द्वीपवती स्रवन्ती निम्नगाऽऽपगा ॥" इत्यमरः; कालेन अन्तस्तिमिभ्यः अन्तर्गतेभ्यः तिमिमत्स्येभ्यः, तादर्थ्ये चतुर्थी; अपां जलानां, स्वादम् आस्वादं, लवणात् अन्यम् अपरम्, अत एव मधुरम्, उद्भेदयन्त्यः जनयन्त्यः सत्यः, पटुतरः प्रबलतरः, रयः वेगः यस्मिन् तत् यथा तथा, समन्तात् सर्वतः, सन्निपेतुः सन्निपतन्ति स्म, लवण समुद्रजले नदीनां मधुरजलानाम् सम्पातात् माधुर्यं सम्पद्यते इति भावः । मन्दाक्रान्ता वृत्तम् ॥ २१ ॥

(फ) मनुवंशेति ।—मनोः स्वायम्भुवप्रजापतेः, वंशे कुले, यद्वा—कार्य्य-कारणयोरभेदोपचारात् मनवः मनुजाः एव, वंशाः वेणवः, मुक्ताकरविशेषा इति भावः, गजमुक्ताऽऽदिवत् वंशस्यापि मुक्तोद्भवविशेषत्वात्, तेषु, मौक्तिकाः मुक्तावत् शुभ्राऽऽशययुक्ताः पुरुषाः इति भावः, तेषु मणे ! रत्न ! प्रधानमित्यर्थः ।

सद्यः पीत्वा दरीभिर्जलधिमथ चिरात् दृष्टमैनाकबन्धु-
प्रीतिप्रौढाश्रुपूरद्विगुणमहिमभिर्निर्झरैः पूरयन्तः।
ये विन्यस्ताः पुरस्तान्निशि निशि निवहैरोषधीनां ज्वलद्भि-
स्ते दृश्यन्ते तदात्वोषितकपिशिबिरस्मारिणः सेतुशैलाः॥ २२॥

सीता। (सविस्मयम्)। अज्जउत्त! गोरीगुरुणो गिरिंदस्स जुवराओ (व) जलणिहिगब्भवसदो मेणाओ जाणामि पक्खच्छेअं वि विणा थावरीभूदो * (भ)।

---

* आर्यपुत्र! गौरीगुरोर्गिरीन्द्रस्य युवराजो जलनिधिगर्भवसतिर्मैनाको जानामि पक्षच्छेदमपि विना स्थावरीभूतः।

---

सद्य इति।—पुरस्तात् प्रथमं, विन्यस्ताः सन्निवेशिताः, सेतुबन्धनेति भावः, सद्यः सन्निवेशमात्रेणैव, दरीभिः गुहाभिः, शैलानामिति भावः, जलधिं समुद्रं, समुद्रजलमिति यावत्, पीत्वा, अथ जलधिपानानन्तरं, चिरात् दीर्घकालानन्तरमित्यर्थः, दृष्टे अवलोकिते, जलाल्पभावात् दृष्टिगोचरं गत इत्यर्थः, मैनाके हिमालयात्मजे तदाख्ये पर्वतविशेषे एव, समुद्रगर्भस्थिते इति भावः, बन्धौ स्वजने, या प्रीतिः स्नेहः, तया हेतुना प्रौढैः महद्भिः, अश्रुपूरैः आनन्दजनितनेत्राम्बुनिवहैः, चिरकालादर्शनानन्तरम् अकस्माद्दर्शनजनितानन्दसमुद्भूतैरिति भावः, द्विगुणः द्विराहतः, महिमा माहात्म्यम्, आधिक्यमित्यर्थः येषां तादृशैः निर्झरैः प्रस्रवणनिःसृतजलप्रवाहैः, पूरयन्तः पूर्णतामापादयन्तः, दरीभिः पानात् यावन्ति जलानि क्षयं गतानि, ततोऽधिकं यथा तथा पूरयन्त इति भावः, ये सेतुशैलाः सेतुरूपपर्वताः इत्यर्थः, ते निशि निशि प्रतिरात्रं, ज्वलद्भिः ओषधीनां निवहैः समूहैः, तदात्वं तत्कालं, "तत्कालस्तु तदात्वं स्यात्" इत्यमरः, उषितानां कृतावस्थानानां, कपीनां वानराणां, शिबिराणि सैन्यानि, तेषां स्मारकाः, दृश्यन्ते, ओषधीनां तेजसा पर्वतानां पिङ्गलवर्णकपिसाम्यादिति भावः। यद्वा—निर्झरैः पूरयन्तः, तथा निशि निशि प्रतिरात्रं, ज्वलद्भिः दीप्यमानैः, ओषधीनां लतागुल्मविशेषाणां, निवहैः समूहैः उपलक्षिताः, ये सेतुशैलाः सेतुरूपपर्वताः, पर्वताश्च वा, शोभिता इत्यर्थः, विन्यस्ताः सन्निवेशिताः, निर्मिता इत्यर्थः, तदात्वोषितकपीनां शिबिरस्य सैन्यनिवासस्य, कपिसैन्यानामवस्थानार्थं कृतावासस्येत्यर्थः, स्मारिणः ते सेतुशैलाः पुरस्तात् अग्रतः, दृश्यन्ते अवलोक्यन्ते।

स्रग्धरा वृत्तम्॥ २२॥

रामः। (विहस्य)। आं जानकि! आम्—(म)

क्रौञ्चं विमुच्य पुत्रञ्च पितरञ्च हिमालयम्।

प्रविश्य जलधिं पक्षौ रक्षताऽनेन किं कृतम्? ॥ २१ ॥

सीता। ([illegible] पुष्पकं प्रति)। विमाणराअ! गअणमग्गचंकमणकोदूहलुल्लसिअमाणसाम्हि, (य) ता उस्समेहि (र) दाव। *

रामः। (सकौतुक-स्मितम्)। देवि रत्नगर्भागर्भरत्नशलाके! (ल) पश्य पश्य—

---

* विमानराज! गगनमार्गचङ्क्रमणकौतूहलोल्लसितमानसाऽस्मि; तदुन्नमय तावत्।

---

(व) गौरीगुरोः पार्वतीपितुः, गिरीन्द्रस्य नगाधिराजस्य, हिमालयस्येत्यर्थः। युवराजः यौवराज्याभिषिक्तः कुमार इत्यर्थः।

(भ) स्थावरीभूतः अचलीभूतः, छिन्नपक्ष इव सञ्जात इत्यर्थः, एकत्र समुद्रमध्ये एव स्थितेरिति भावः।

(म) आमिति निश्चयार्थकमव्ययम्, "आं ज्ञाननिश्चयस्मृत्योः" इति मेदिनी; त्वं यत् वदसि तत् परमार्थतः सत्यमेवेत्यर्थः।

क्रौञ्चमिति।—पुत्रं तनयं, क्रौञ्चं तदाख्यं गिरिं, तथा पितरं जनकं, हिमालयञ्च हिमगिरिञ्च, विमुच्य त्यक्त्वा, जलधिं सागरं, प्रविश्य पक्षौ पतत्रौ, रक्षता पालयता, अनेन मैनाकेन, किं किं कार्य्यं, कृतम्? सम्पादितम्? अयुक्तं कृतमिति भावः, नास्य सतोरपि पक्षयोः स्थावरताऽपनीता, न वा पुत्रस्नेहः नापि पितृभक्तिरिति सर्वथा दुर्दैवमस्येति भावः ॥ २१ ॥

(य) गगनेति।—गगनमार्गेण गमनमार्गेण वा आकाशपथेनेत्यर्थः, चङ्क्रमणे इतस्ततः भ्रमणे, चङ्क्रमणाय वा, कौतूहलेन कौतुकेन, उल्लसितं हृष्टं, मानसं चित्तं यस्याः तथाभूता।

(र) उन्नमय ऊर्द्धम् उत्पातय, माम् ऊर्द्धं नयेत्यर्थः। "उस्समेहि" इत्यस्य "उन्नम" इति संस्कृते उन्नम ऊर्द्धमुत्पत इत्यर्थः।

(ल) रत्नेति।—रत्नानि निधयः, गर्भे अभ्यन्तरे यस्याः तादृश्याः रत्नगर्भायाः पृथिव्याः, गर्भस्य कुक्षेः, रत्नशलाका इव रत्नमयशलाका इव शलाका तत्सम्बुद्धौ, अत्यन्तगौरतन्वङ्गि! इत्यर्थः।

यथा यथा परं व्योम विमानमधिरोहति ।
तथा तथाऽपसर्पन्ति पुरतः परितो दिशः ॥ २४ ॥

किञ्च—

आसन्नतपनाश्यान-त्वचः पुष्पकपीडिताः ।
गगनार्णवयादांसि स्तिम्यन्ति स्तनयित्नवः ॥ २५ ॥

अपि च—

अमी ते गम्भीरस्तनितरवरौद्रा नयनयो-
रनायुष्यं पुष्णन्त्यवतमसमुच्चैर्जलमुचः ।
विसर्पद्भिर्येषामुपरि परमिन्दोः परिमलै-
रसम्बाधज्योत्स्नातिमिरचयचित्रं वियदभूत् ॥ २६ ॥

---

यथेति ।—विमानं व्योमयानम्, अयं पुष्पकरथ इत्यर्थः, यथा यथा परम् अत्यर्थम्, ऊर्द्धमिति यावत्, व्योम आकाशम्, अधिरोहति उत्पतति, तथा तथा दिशः पूर्वादिदिक्समूहाः, पुरतः परं स्थानं, परितः समन्तात्, "पुरतः परितः" इत्यत्र "परतः परतः" इति पाठः सुष्ठुतया प्रतिभाति, परतः परतः उत्तरोत्तरमित्यर्थः, अपसर्पन्ति पलायन्ते, दिङ्निर्णयो न स्यादिति भावः । अनुष्टुप् वृत्तम् ॥ २४ ॥

आसन्नेति ।—आसन्नेन सन्निहितेन, तपनेन सूर्य्येण, तत्तेजसेति भावः, आश्यानाः शुष्काः, त्वच इव त्वचः बाह्यदेशा इति भावः येषां तथोक्ताः, तथा पुष्पकेण तदाख्यविमानेन, पीडिताः विदारिताः, खण्डीकृता इति भावः, गगनमेव आकाशमेव, अर्णवः समुद्रः, असीमत्वात् नीलत्वाच्चेति भावः, तस्य यादांसि जलजन्तुभूताः, "यादांसि जलजन्तवः" इत्यमरः; स्तनयित्नवः मेघाः, "अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः" इत्यमरः; स्तिम्यन्ति आर्द्रतां भजन्तीति यावत्, अस्मानिति शेषः; यद्वा—स्तिम्यन्ति मन्दीभवन्ति, शनैः शनैर्गच्छन्तीति यावत् । यद्यपि "ष्टिमिर् आर्द्रीभावे" इत्यस्य दैवादिकस्याकर्मकत्वं, तथाऽप्यत्र अन्तर्भूतण्यर्थो बोद्धव्यः । अनुष्टुप् वृत्तम् ॥ २५ ॥

अमी इति ।—गम्भीरं गभीरं, स्तनितं गर्जितमेव, रवः ध्वनिः, तेन रौद्राः भीषणाः, उच्चैर्महान्तः, अमी एते, जलमुचः मेघाः, "अभ्र मेघो वारिवाहो जलमुक् धूमयोनयः" इत्यमरः; ते तव, नयनयोः चक्षुषोः, अनायुष्यम् अनायुःप्रयोजकं, दर्शनशक्तिव्याघातकमिति भावः, अवतमसं क्षीणं तमः, अल्पं तमः इत्यर्थः, "क्षीणे-

सुग्रीवः। ( अधोऽवलोक्य सकौतुकं रामं प्रति )। देव! दूरादर्वाक्

( ब )अवलोकय तावत्—

निह्नुतोन्नतनतप्रविभक्तिः स्वस्ववर्णविनिविष्टपदार्था।

अम्बुराशिपरिवेषवती भूश्चित्रकुट्टिममिव प्रतिभाति॥ २७॥

अपि च देव!—

अयमनेन महोदधिभोगिना

वलयितो वसुधाफणमण्डलः।

---

ऽवतमसं तमः" इत्यमरः; पुष्यन्ति पुष्टं कुर्वन्ति, वर्द्धयन्तीत्यर्थः, स्वल्पेन तमसा मग्ने आच्छन्नीति भावः, इन्दोश्चन्द्रस्य, उपरि ऊर्द्ध्वं पदम् अधश्च, विसर्पद्भिः प्रसरद्भिः, येषां मेघानां, परिमलैः विमर्दोत्थगन्धैः, मेघानां परस्परघर्षणजनित-गन्धैरित्यर्थः, "स्यात् परिमलोऽतिमर्दोत्थितमनोहरगन्धयोस्त्वपि" इति मेदिनी; न सम्यक् बाधा व्याघातः यस्याः तथाभूता, ज्योत्स्ना कौमुदी, तिमिरचयस्य अन्धकार-समूहस्य, चन्द्रिका ज्योत्स्ना चन्द्रिकाऽसतिमिरचयश्चेति भावः, तेन चित्रं शबलं, अर्द्धं शुक्लवर्णं अर्द्धञ्च कृष्णवर्णमित्यर्थः, वियत् आकाशम्, अभूत्, यदा इन्दोरुपरि मेघा विसर्पन्ति, तदा ज्योत्स्ना अव्याहता वर्त्तते, यदा च अधः विसर्पन्ति, तदा तिमि-राणि जायन्ते, एवम् ऊर्द्ध्वाधोविसर्पणक्रमेण ज्योत्स्ना-तिमिरयोरुभयोरपि अव्याहतत्वं जायते इति भावः। "परिमलैः" इत्यत्र "परिकरैः" इति पाठकल्पना साधीयसी सङ्गताऽपि च इति मन्ये, मेघानां परिमलस्य, तेन च परिमलेन ज्योत्स्ना-तिमिरयोः व्याघातस्य च असम्भाव्यत्वादिति सुधीभिर्विवेक्तव्यम्। परिकरैः समूहैः, मेघानां समूहैरित्यर्थः। शिखरिणी वृत्तम्॥ २६॥

( ब ) अर्वाक् अधः इत्यर्थः।

निह्नुतेति।—निह्नुता गोपिता, लक्ष्याविषयीभूता इति यावत्, उन्नत-नतयोः उच्च-नीचयोः, स्थानयोरिति शेषः, प्रविभक्तिः प्रकृष्टो विभागः यस्याः तथोक्ता, स्वेषु स्वेषु निजेषु निजेषु, वर्णेषु शुक्लपीतादिषु, विनिविष्टाः अवस्थिता इत्यर्थः पदार्थाः वस्तूनि यस्याः सा वा तादृशी, दूरत्वात् शुक्लादिवर्णवत्त्वेनैव पदार्था ज्ञायन्ते, न तु नद-गुल्म-वृक्ष-प्रासादादिविशेषेणेति भावः, अम्बुराशिः समुद्र एव, परिवेषः वेष्टनं तद्वती, समुद्रपरिवेष्टिता इत्यर्थः, भूः पृथ्वी, चित्रं नानावर्णं, विविधवर्णशोभितमित्यर्थः, कुट्टिममिव बद्धभूमिरिव, सौधतलमिवेति भावः, प्रतिभाति राजते। रथोद्धता वृत्तं, "रात् परैर्न-र-ल-गै रथोद्धता" इति तल्लक्षणात्॥ २७॥

जगदनर्घमवाप्य भवादृशं
किमपि रत्नमहङ्कुरुतेतराम् ॥ २८ ॥

सीता। (पुरो दर्शयन्ती)। को एसो कप्पाणलज्जालाकलाव-कड्ढिज्जमाणजलणिहिलवणत्थवकणिम्मलअब्भंलिहसिहरसहस्स-महुरो महोहरो पलोइज्जदि ? * (अ)

विभीषणः। देवि!—

पुरः प्रालेयशैलोऽयं यस्मिन् मकरकेतवे।
मृतसञ्जीवनी दुर्गा महौषधिरजायत ॥ २९ ॥

* क एष कल्पानलज्वालाकलापकृष्यमाणजलनिधिलवणस्तवकनिर्मलाभ्रंलिह-शिखरसहस्रमधुरो महीधरः प्रलोक्यते ?

अयमिति।—अनेन परिदृश्यमानेन, महोदधिरेव समुद्र एव, भोगी भुजङ्गः तेन, वलयितः वेष्टितः, अयम् एषः, वसुधा पृथिवी एव, फणः फणा, कुण्डलीभूतसर्पस्य फणा इत्यर्थः, तस्य मण्डलः समूहः, जगतां भुवनानां, त्रिभुवनमध्ये इत्यर्थः, अनर्घम् अमूल्यं, दुष्प्रापमिति यावत्, भवादृशं त्वत्सदृशं, किमपि अनिर्वचनीयं, रत्नं मणिम्, अवाप्य प्राप्य, अहङ्कुरुततराम् अतिशयेन अहङ्करोति। द्रुतविलम्बितं वृत्तं, "द्रुतविलम्बितमाह न-भौ भ-रौ" इति तल्लक्षणात् ॥ २८ ॥

(अ) कल्पानलेति।—कल्पानलस्य प्रलयाग्नेः, ज्वालाकलापेन शिखासमूहेन, कृष्यमाणस्य पच्यमानस्य, जलनिधेः समुद्रस्य, लवणस्तवकवत् लवणराशिवत्, निर्मलेन विशदेन, अभ्रंलिहेन मेघस्पर्शिना, शिखराणां शृङ्गाणां, सहस्रेण मधुरः मनोहरः। प्रलोक्यते दृश्यते ?

पुर इति।—पुरः अग्रतः, अयं परिदृश्यमानः, प्रालेयशैलः तुषाराचलः, हिम-गिरिरित्यर्थः, "अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्। प्रालेयं मिहिका" इत्यमरः" वर्त्तते इति शेषः, यस्मिन् प्रालेयशैले, दुर्गा गौरी एव, मकरकेतवे कामाय, मदनजीवनार्थमिति यावत्, तादर्थ्ये चतुर्थी; मृतः सञ्जीव्यते अनयेति मृतसञ्जीवनी मृतस्य प्राणदायिनी, महौषधिः अजायत उदपद्यत, नेत्रानलेन दग्धः कामः गौरी-परिणयात् परं हरेण पुनर्जीवनं प्रापित इति पुराणम्, अत एव मृतस्य कामस्य पुनर्जीवनदानात् गौर्य्या महौषधित्वं युक्तमिति भावः। अनुष्टुप् वृत्तम् ॥ २९ ॥

सीता। (सकौतुकम्)। अवि इध ज्जेव्व चंदसेहरणअणाणले आहुदीभूदो भअवं मम्महो? *

विभीषणः। आं देवि! आम्। इयमुत्तरेण देवदारुवनलेखा विषमशरदुरन्तसाक्षिणी (व)—

पुरा पुरां भेत्तुरिह त्रिनेत्री-
शृङ्गाटके तुल्यरुषि स्थितेऽपि।
धग्धग्धगित्यज्ज्वलदेकमन्ये
तद्धूमपीड़ामपि नासहेताम्॥ २०॥

रामः। किमुच्यते—

नीललोहितललाटलाञ्छने
लोचने जयति कोपपावकः।

* अपि इहैव चन्द्रशेखरनयनानले आहुतीभूतो भगवान् मन्मथः?

(व) उत्तरेण उत्तरस्यां दिशि। देवदारुवनलेखा देवदारुकाननश्रेणी। विषमेति।—विषमशरस्य कामस्य, दुरन्तः दुरवसानं, दुःखदायकविनाश इत्यर्थः, दाह इति यावत्, तस्य साक्षिणी साक्षाद्द्रष्ट्री।

पुरेति।—पुरा पूर्वम्, इह अस्मिन् देवदारुवने, पुरां भेत्तुः त्रिपुरारेः हरस्य, त्रिनेत्री नेत्रत्रयमेव, शृङ्गाटकं वारिकण्टकं, "पानिफल" इति बङ्गभाषया, "सिङ्गाड्" इति च हिन्दीभाषया प्रसिद्धं तस्मिन्, "शृङ्गाटकं भवेद्वारि-कण्टके च चतुष्पथे" इति मेदिनी; तुल्यरुषि समक्रोधे, स्थितेऽपि वर्त्तमानेऽपि, नेत्रत्रयमेव युगपत् तुल्यरूपतया क्रोधप्रज्वलितमपीत्यर्थः, एकं ललाटस्थं तृतीयनेत्रमित्यर्थः, धक् धक् धक् इति शब्दम्, अज्ज्वलत् प्रज्वलितमभवत्, अन्ये अपरे, अवशिष्टे द्वे नेत्रे इत्यर्थः, तस्य तृतीयनेत्राग्नेरित्यर्थः, धूमपीड़ामपि अग्निसमुद्भूतधूमजदुःखमपि, न असहेतां न अक्षमेतां, सोढुं समर्थे न भवेतामित्यर्थः, निमीलिते एव आस्तामिति भावः। उपजाति वृत्तम्॥ २०॥

नीलेति।—नीललोहितस्य हरस्य, "कृत्तिवासाः"…"भर्गः"… "मृत्युञ्जयः सर्वज्ञो धूर्जटिर्नीललोहितः। हरः स्मरहरो भर्गः—" इत्यमरः; ललाटलाञ्छने भालदेशस्य चिह्नभूते, भालावस्थिते इत्यर्थः, भालभूषणे इति भावः, लोचने नेत्रे, कोपपावकः क्रोधाग्निः, जयति सर्वोत्-

रंहितस्य जगदन्तहेतवे
यस्य सज्ज्वलनमात्मभूरभूत् ॥ २१ ॥

सीता। (रामं प्रति)। अज्जउत्त! तधा णिरणुक्कोसो (ख) कधं उण पडिणिउत्तो (ग) महादेओ देईए? * (घ)।

रामः।—

स्मरपरिभवनिःसहायदीर्घै-
रथ सुभगङ्करणैरियं तपोभिः।
तदकृत यदसौ निजेऽपि देहे
जयति जगत्पतिरात्मना द्वितीयः ॥ २२ ॥

* आर्यपुत्र! तथा निरनुक्रोशः कथं पुनः प्रतिनिवृत्तो महादेवो देव्याः?

---

वर्त्तते, आत्मभूः कामः, जगतां भुवनानाम्, अन्तहेतवे संहाराय, प्रलयकाले त्रिजगद्विनाशायेत्यर्थः, रंहितस्य चापितस्य, यस्य कोपपावकस्य, सज्ज्वलनं प्रज्वलन-कारणं, सन्धुक्षकमिन्धनम् इति यावत्, अभूत् अजायत। रथोद्धता वृत्तम् ॥ २१ ॥

(ख) निरनुक्रोशः निर्दयः, "कृपा दयाऽनुकम्पा स्यादनुक्रोशः" इत्यमरः।

(ग) प्रतिनिवृत्तः? विरतः? क्रोधादिति शेषः।

(घ) देव्याः गौर्य्याः।

स्मरेति।—इयं देवी पार्वती, स्मरस्य कामस्य, परिभवेण तिरस्कारेण, विनाशे-नेत्यर्थः, निःसहायैः सहायशून्यैः, हरवशीकरणे इति भावः, तेन हेतुना दीर्घैरपि महाक्लेशैरित्यर्थः, बहुदिनं व्याप्य प्रवृत्तैरिति यावत् तथाभूतैः, पूर्वं स्मरसाहाय्येन देवं वशीकर्त्तुमना आसीत्, ततस्तद्भस्मीकरणात् सहायाभावमवलोक्य महत्तप एव सहायोऽवलम्बित इति भावः, असुभगा सुभगा क्रियते एभिरिति तथोक्तानि तैः सुभगङ्करणैः भर्त्तुः प्रियत्वसम्पादकैरित्यर्थः, तपोभिः तपश्चर्याभिः, तत् तथा, अकृत कृतवती, यत् यथा, येन वा इत्यर्थः, जगत्पतिः विश्वेश्वरः, असौ हरः, निजे स्वकीये, देहेऽपि शरीरेऽपि, आत्मना शरीरेण, गौरीस्वरूपेण इत्यर्थः, पार्वतीदेहेनेति यावत्, "आत्मा पुंसि स्वभावे च···शरीर-ब्रह्मणोरपि" इति मेदिनी; यद्वा—आत्मना आत्मनैव, स्वेच्छयैवेत्यर्थः, द्वितीयः द्वयोः पूरणः, अर्द्धनारीश्वरः सम्पन्नः, जयति सर्वोत्कर्षेण वर्त्तते। पुष्पिताग्रा वृत्तम् ॥ २२ ॥

विभीषणः । ( सपरिहासम् ) ।—

चिरमनया तपसित्वा कपाल-विष-विषधरैकचित्तस्य ।
चक्रे हरस्य मूर्त्तिः फलमर्द्धं फलदमर्द्धञ्च ॥ ३३ ॥

सीता । ( विहस्य तं प्रति सकौतुकम् ) । कदरस्सिं उण संणिवेसे भअवदीए सव्वमंगलाए पाणिग्गहणमंगलं (ख) आसी ? *

विभीषणः । इदं पुरस्तादोषधिप्रस्थं नाम नगराजनगरम् । (ग)

अत्र हि—

सम्प्रदातरि महौषधीमये भूधरे सुखमुवाह पार्वतीम् ।
मूढकङ्कणफणीन्द्रनिर्भयां तारकेश्वरकिशोरशेखरः ॥ ३४ ॥

* कतरस्मिन् पुनः सन्निवेशे भगवत्याः सर्वमङ्गलायाः पाणिग्रहणमङ्गलमासीत् ?

चिरमिति ।—अनया गौर्य्या, चिरं सुदीर्घकालं, तपसित्वा तपः तपस्याम्, इत्वा गत्वा, तपश्चरित्वा इत्यर्थः, कपालः नरशिरःकङ्कालं, विषं गरलं, "विष" इत्यत्र "वृष" इति पाठे—वृषो वाहनभूतो वृषभः, विषधरः भुजङ्गः एषु एकं केवलं, चित्तं मनः यस्य तथाभूतस्य, हरस्य महेश्वरस्य, अर्द्धं मूर्त्तेः शरीरार्द्धं, वामाङ्गमिति यावत्, फलं लाभः, तपसः परिणामः इति यावत्, तस्यास्तदर्द्धस्य लाभात्, यत् लभ्यते तदेव फलमिति भावः, अर्द्धञ्च अपरमर्द्धाङ्गं, दक्षिणाङ्गमिति यावत्, फलदम् अभीष्टदात्, चक्रे कृतं, गौरीतपसा वशं गतो हरोऽर्द्धनारीश्वरोऽभूदिति भावः । आर्य्या वृत्तम् ॥ ३३ ॥

(ख) सन्निवेशे प्रदेशे । सर्वमङ्गलायाः गौर्य्यां, "उमा कात्यायनी गौरी काली हैमवतीश्वरी । शिवा भवानी रुद्राणी सर्वाणी सर्वमङ्गला ॥" इत्यमरः । पाणिग्रहणमङ्गलं शुभविवाहः ।

(ग) पुरस्तात् अग्रे । ओषधिप्रस्थम् ओषध्यः फलपाकान्ता लतागुल्मादयः, ताः प्रतिष्ठन्ते अत्र इति ओषधिप्रस्थम् ; ओषधिप्रधानं प्रस्थं सानुदेशो यस्य तादृशमिति वा ओषधिप्रस्थं हिमालयः, तस्य ओषधिभूमित्वात् । नगराजनगरं नगराजस्य पर्वताधिपस्य, नगरं राजधानी ।

सम्प्रदातरीति ।—महौषधीमये महत्यः महाफलाः, ओषध्यः लतादिविशेषाः, तन्मये तद्बहुले इति यावत्, भूधरे पर्वते, हिमवतीति यावत्, हिमालयस्य ओषध्युत्पत्तिस्थानत्वादिति भावः, सम्प्रदातरि सम्यक् प्रदानकर्त्तरि सति, तारकाणां ताराणाम्, ईश्वरः प्रभुश्चन्द्रः, किशोरः शिशुः, बालचन्द्र इत्यर्थः, कलामात्रचन्द्र इति

रामः। आं देवि! इहैव—

पितरि निजतुहिनसम्पत्कल्पितहैमन्तविभ्रमे गौरी।
निर्मदभुजङ्गभूषणमभीषणं प्रियकरं भेजे॥ २५॥

सीता। (सस्मितम्)। अज्जउत्त! अवि एदस्सिं ज्जेव्व मअणतणुदहणवइअरणिरप्पणो फुडमविस्ससंतीए (घ) गोरीए चंदचूड़ो संघड़िदो (ङ) णिअसरीरेण? *

रामः। (विहस्य)। आं देवि!—

* आर्य्यपुत्र! अप्येतस्मिन्नेव मदनतनुदहनव्यतिकरनिरात्मीयः स्फुटमविश्वसन्त्या गौर्य्या चन्द्रचूडः सङ्घटितो निजशरीरेण?

यावत्, शेखरं शिरोभूषणं यस्य तथाभूतः, हरः इत्यर्थः, मूढः विवश इति यावत्, उन्मत्त इति भावः, हिमालयस्य हिमस्य महौषधीनाञ्च प्रभावादिति भावः, कञ्चुकः वस्त्ररूपः, फणीन्द्रः भुजङ्गराजः, तस्मात् निर्भया भयरहिता, फणीन्द्रस्य मूढत्वादेवेति भावः, पार्वती गौरी, सुखं सानन्दम्, उवाह परिचयति स्म। रथोद्धता वृत्तम्॥ २४॥

पितरीति।—निजतुहिनसम्पदा स्वकीयहिमानीरूपैश्वर्य्येण, कल्पितः कृतः, हेमन्तस्य तदाख्यस्य ऋतोः, विभ्रमः विलासः विशिष्टा भ्रान्तिश्च येन तथाभूते, पितरि जनके, हिमगिरौ इत्यर्थः, पितृगृहे इति यावत्, गौरी पार्वती, निर्मदः निरौद्धत्यः, प्रशान्त इत्यर्थः, शिवाङ्गे अवस्थानात् परित्यक्तनिजस्वाभाविकखलतादिदोष इति भावः, भुजङ्ग एव सर्प एव, भूषणम् अलङ्कारो यस्य तादृशम्, अत एव अ-भीषणम् अ-भयङ्करं, प्रियस्य अभीष्टस्य हरस्य, करं पाणिं, भेजे जग्राहेत्यर्थः। आर्य्या वृत्तम्॥ २५॥

(घ) मदनेति।—मदनस्य कामस्य, तनुदहनं शरीरदाहः, तद्व्यतिकरेण तत्-सम्बन्धेन, तद्धेतुनेति यावत्, निरात्मीयः स्वजनरहितः, निःसङ्गाभिलाषीति भावः, मदनस्य आत्मभूत्वात् तद्विनाशेन निरात्मीयः इति तात्पर्य्यम्; अतः स्फुटं सम्यक्, अविश्वसन्त्या मामपि परित्यज्य क्षणेन गमिष्यतीति धिया विश्वासमकुर्वन्त्या इति यावत्।

(ङ) चन्द्रचूडः शशिशेखरः, हर इत्यर्थः। सङ्घटितः योजितः, हर-गौरीरूपेण निजार्द्धाङ्गे भावनीकृत इत्यर्थः।

एतस्यां हि तुषारभूधरशिरःसीम्नि प्रियार्द्धेन च
स्वेनार्द्धेन च तादृशे पशुपतौ वृत्तेऽर्द्धनारीश्वरे।
शेषेणार्द्धयुगेन सप्रहसनं गौरीसखीभिस्तदा
चक्रे दक्षिण-वामयोर्विनिमयादन्योऽर्द्धनारीश्वरः॥ १६॥

अपि च—

सम्भोगानतिरिच्यमानविभवो यद्विप्रलम्भो रस-
स्ताद्दृश्यं मिथुनं परस्परपरिस्यूतं नमस्कुर्महे।

एतस्यामिति।—एतस्या हि अत्रैव, तुषारभूधरशिरःसीम्नि हिमाचलशिखर-प्रदेशे, प्रियायाः गौर्याः, अर्द्धेन अर्द्धावयवेन, स्वेन निजेन, अर्द्धेन अर्द्धावयवेन च, पशुपतौ हरे, तादृशे तथाभूते, अर्द्धनारीश्वरे अर्द्धं नारी अर्द्धमीश्वरः तथाभूते, वृत्ते जाते सति, तदा तस्मिन् समये, गौर्याः पार्वत्याः, सखीभिः सहचरीभिः, सप्रहसनं सोपहासं यथा तथा, शेषेण अर्द्धयुगेन गौर्या अपरेण अर्द्धेन शिवस्य च अन्येन अर्द्धेनेत्यर्थः, दक्षिण-वामयोः दक्षिणाङ्ग-वामाङ्गयोः, विनिमयात् विपर्य्यासात्, दक्षिणे गौर्य्या अर्द्धं वामे हरस्यार्द्धमिति भावः, अन्यः अपरः, अर्द्धनारीश्वरः चक्रे कृतः। शार्दूलविक्रीडितं वृत्तम्॥ १६॥

सम्भोगेति।—यदित्यव्ययं यस्येत्यर्थः, यस्य हरस्य, विप्रलम्भः वियोगः, प्रियतमा-ऽप्राप्त्यवस्थाविशेषरूप इति यावत्, रसः शृङ्गारः, स चतुर्द्धा; तदुक्तं दर्पणे—"यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ। स च पूर्व्वराग-मान प्रवास करुणात्मक-श्चतुर्द्धा स्यात्॥ श्रवणात् दर्शनात् वाऽपि मिथः संरूढरागयोः। दशाविशेषो यो-ऽप्राप्तौ पूर्व्वरागः स उच्यते॥ श्रवणन्तु भवेत्तत्र दूत-वन्दि-सखीमुखात्। इन्द्रजाले च चित्रे च साक्षात् स्वप्ने च दर्शनम्॥ अभिलाषश्चिन्ता स्मृति-गुणकथनोद्वेग सम्प्रलापाश्च। उन्मादोऽथ व्याधिर्जडता मृतिरेति दशात्र कामदशाः॥ अभिलाषः स्पृहा चिन्ता प्राप्त्युपायादिचिन्तनम्। उन्मादश्चापरिच्छेदश्चेतनाचेतनेष्वपि॥ अलक्ष्यवाक् प्रलापः स्याच्चेतसो भ्रमणात् भृशम्। व्याधिस्तु दीर्घनिःश्वास-पाण्डुता कृशतादयः॥ जड़ता हीनचेष्टत्वमङ्गानां मनसस्तथा॥" इत्यादि, विस्तरभयादत्र न लिखितम्। सम्भोगात् "दर्शन-स्पर्शनादीनि निषेवेते विलासिनौ। यत्रानुरक्तावन्योऽन्यं सम्भोगोऽयमुदाहृतः॥" इत्युक्तलक्षणात् उभयोः सम्मेलनरूपादिति यावत्, अनतिरिच्यमानः अनधिक इति यावत्, विभवः सामर्थ्यं यस्य तथाभूतः, सर्व्वत्रैव सम्भोगापेक्षया विप्रलम्भस्यैवाधिक्यं दृश्यते, इह तु तद्विपरीतमिति भावः, परस्परपरिस्यूतम् अन्योऽन्यमिलितं, तत् प्रसिद्धं,

एकस्याः प्रतिबिम्बसम्भृतविपर्य्यासे मुहुर्दर्पणे
सव्याङ्गस्थितिकौतुकं शमयति स्वामी स यत्रापरः ॥ १७ ॥

विभीषणः । देव !—

स्वच्छन्दैकस्तनश्रीरुभयमतमिलन्मौलिचन्द्रः फणीन्द्र-
प्राचीनावीतवाही सुखयतु भगवानर्द्धनारीश्वरो वः ।
यस्यार्द्धे विश्वदाहव्यसनविसृमरं ज्योतिरर्द्धे कृपोद्य-
द्वाष्पं चान्योऽन्यवेगप्रहतिसमसमाकारि चक्षुस्तृतीयम् ॥ १८ ॥

---

दिव्यं देवलोकसम्बन्धि, मिथुनं द्वन्द्वं, स्त्री-पुंसौ इत्यर्थः, "स्त्री-पुंसौ मिथुनं द्वन्द्वम्" इत्यमरः ; नमस्कुर्महे वन्दामहे, यत्र मिथुने, दर्पणे आदर्शे, प्रतिबिम्बेन प्रतिच्छायया, सम्भृतः सञ्जातः, विपर्य्यासः वैपरीत्य, वामं दक्षिणं दक्षिणं वाममित्येवं-रूपमिति भावः यस्य तादृशे सति, मुहुः पुनः पुनः, एकस्याः गौर्य्याः, सव्याङ्गे वामाङ्गे, स्थितिरवस्थानं, तेन कौतुकं कौतूहलं, वैचित्र्यजनकव्यापारमिति यावत्, अपरः दक्षिणाङ्गस्थः, स्वामी ईश्वरः, "स्वामी त्वीश्वरः पतिरीशिता" इत्यमरः ; सः हरः, शमयति शान्तिं नयति, अयमीशस्य वामाङ्गे मां धारयतीति स्वसौभाग्याय मुग्धाया गौर्य्या दर्पणे वामं दक्षिणं दक्षिणञ्च वामं दृश्यते इत्याशयेन हरेण "पश्य तावत् दक्षिणे किं वामे च किम् ?" इति गौर्य्यै प्रदर्शनात् तत् कौतुक मुहुरपनीतमिति निष्कर्षः । शार्दूलविक्रीडितं वृत्तम् ॥ १७ ॥

स्वच्छन्देति ।—स्वच्छन्दा स्वतन्त्रा, द्वितीयस्तनेन असंश्लिष्टेति यावत्, एकस्य वामस्य इति यावत्, स्तनस्य कुचस्य, श्रीः शोभा यत्र तथोक्तः, उभयमतः उभाभ्यां स्वीकृतः, उभयसाधारण इत्यर्थः, मिलन् अन्योऽन्य सङ्गच्छन्, उभयोरेवार्द्धचन्द्रधरत्वादिति भावः, मौलिचन्द्रः शेखरेन्दुः यस्य तथाभूतः, फणीन्द्रः भुजङ्गराज एव, प्राचीनावीतं दक्षिणस्कन्धे तिर्य्यग्भावेन परिहितं यज्ञसूत्रमित्यर्थः, वहति धारयतीति तथोक्तः, वामस्कन्धस्य गौरीदक्षिणाङ्गे विलीनत्वादिति भावः, "उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे। प्राचीनावीतमन्यस्मिन् निवीतं कण्ठलम्बितम् ।" इत्यमरः ; भगवान् षडैश्वर्य्यसम्पन्नः, अर्द्धनारीश्वरः सम्मिलितगौरी-शङ्करः, वः युष्मान्, सुखयतु सुखीकरोतु, यस्य अर्द्ध-नारीश्वरस्य, अर्द्धे अर्द्धाङ्गे, दक्षिणललाटे इति भावः, विश्वेषां जगतां, दाहे भस्मीकरणे, संहारकरणे इति यावत्, व्यसनम् आसक्तिः, तेन विसृमरं प्रसरणशीलं, ज्योतिः तेजोरूपमित्यर्थः, अर्द्धे अन्यस्मिन् अर्द्धाङ्गे, वामललाटे इति भावः, कृपया करुणया,

अपि च—

> स्वेदार्द्रवामकुचमण्डलपत्रभङ्ग-
> संशोषिदक्षिणकराङ्गुलिभस्मरेणुः।
> स्त्री-पुं-नपुंसकपदव्यतिलङ्घिनी वः
> शम्भोस्तनुः सुखयतु प्रकृतिश्चतुर्थी॥ २९॥

(अन्यतश्च दर्शयन्)।—

> आधत्ते दनुसूनुसूदनभुजाकेयूरवज्राङ्कुर-
> व्यूढोल्लेखपदावलीवलिमयैरङ्गैर्मुदं मन्दरः।

---

विशदाहदर्शनादिति भावः, उद्यत् उद्गच्छत्, बाष्पम् अस्रु यस्मात् तथाभूतश्च, अत एव अन्योऽन्यस्य परस्परस्य, ज्योतिषो बाष्पस्य चेत्यर्थः, वेगप्रहत्या वेगप्रतिघातेन, परस्परं वेगसंरोधव्यापारेण इत्यर्थः, अग्नेर्जलशोषणचेष्टया, जलस्य च अग्निनिर्वापणचेष्टया इति भावः, सिमसिमाकारि सिमसिमाइत्यव्यक्तं शब्दं कुर्वत्, अग्नौ स्वल्पजलसंयोगे सिमसिमाशब्दः सञ्जायते इति भावः, तृतीयं ललाटस्थमिति यावत्, चक्षुः नयनम्, अस्तीति शेषः। स्रग्धरा वृत्तम्॥ २८॥

स्वेदार्द्रेति।—स्वेदार्द्रस्य घर्मासक्तस्य, हरस्य कामावेशेन कराङ्गुलिस्पर्शजनित-सत्त्वोद्रेकादिति भावः, वामकुचमण्डलस्य वामस्तनवलयस्य, यः पत्रभङ्गः पत्रावली-रचना, तस्य संशोषी संशोषणशीलः, पत्रभङ्गस्य आर्द्रताऽपहारीत्यर्थः, दक्षिणकरा-ङ्गुलीनां दक्षिणहस्तस्याङ्गुलीनां, हरस्येति भावः, भस्मरेणुः विभूतिचूर्णं यस्याः तथाभूता, स्त्री-पुं-नपुंसकपदव्यतिलङ्घिनी स्त्री-पुं-नपुंसकानां स्त्रीलिङ्ग-पुंलिङ्ग-क्लीबलिङ्गानां, पदं स्थानं लक्ष्म वा, "पदं व्यवसिति-त्राण-स्थान लक्ष्माङ्घ्रि वस्तुषु" इत्यमरः, तस्य व्यतिलङ्घिनी अतिक्रामणी, स्त्रीलिङ्ग-पुंलिङ्ग-क्लीबलिङ्गैरवाच्येति भावः, अर्द्धनारी-श्वरतन्वाः स्त्रीत्वं वक्तुं न शक्यते सपुरुषत्वात्, पुंस्त्वं वक्तुं न शक्यते सस्त्रीकत्वात्, क्लीबत्वञ्च वक्तुं न शक्यते स्त्रीत्व-पुंस्त्वयोः सत्त्वादिति भावः, अत एव चतुर्थी प्रकृति-त्रयातिरिक्ता, प्रकृतिः लिङ्गं, "प्रकृतिर्योनिलिङ्गयोः" इति विश्वः; शम्भोः हरस्य, तनुः मूर्त्तिः, अर्द्धनारीश्वरमूर्त्तिरिति यावत्, वः युष्मान्, सुखयतु सुखं ददतु। वसन्त-तिलकं वृत्तम्॥ २९॥

आधत्ते इति।—मन्दरः तदाख्यगिरिविशेषः, दनुसूनूनां दानवानां, सूदनस्य संहारिणः, विष्णोरित्यर्थः, भुजासु बाहुषु, चतुर्ष्विति भावः, ये केयूराः अङ्गदाः, भूषण-

आधारीभूतकूर्मपृष्ठकषणप्रक्षीणमूलोऽधुना
जानीमः परतः पयोधिमथनादुच्चैस्तरोऽयं गिरिः ॥ ४० ॥

रामः । ( निर्वर्ण्य सस्मितम् ) ।—

तत्तादृक्फणिराजरज्जुकषणं संरूढपक्षच्छिदा-
घातारुन्तुदमप्यहो ! कथमयं मन्थाचलः सोढवान् ? ।
एतेनैव दुरात्मना जलनिधेरुत्थाप्य पापामिमां
लक्ष्मीमीश्वरदुर्गतव्यवस्थितिव्यस्तं जगन्निर्मितम् ॥ ४१ ॥

---

विशेषा इति यावत्, तेषां तेषु वा ये वज्राङ्कुरव्यूहाः हीरकाङ्कुरनिचयाः, क्षुद्र-क्षुद्र-हीरकसमूहा इत्यर्थः, तैः उल्लेखेन उद्घर्षणेन, याः पदावल्यः चक्रश्रेण्यः, रेखासमूहाः इत्यर्थः, "पद व्यवसित-त्राण-स्थान-लक्ष्माङ्घ्रि-वस्तुषु" इत्यमरः, ता एव वलयः जरानिमित्तचर्मसंकोचविशेषाः, सङ्कुचितचर्माणीत्यर्थः, "वलिर्दैत्यप्रभेदे च···जरया स्रस्तचर्मणि ···जठरावयवेऽपि च" इति मेदिनी, तन्मयैः तद्युक्तैरित्यर्थः, अङ्गैः अवयवैः, मुदम् आनन्दम्, धत्ते जनयति, दर्शकानामिति भावः, अधुना इदानीम्, अयम् एषः, गिरिः मन्दराचलः, आधारीभूतेन अधिकरणीभूतेन, कूर्मस्य कच्छपस्य, पृथ्वीधरस्य द्वितीयावतारस्येति भावः, पृष्ठेन पृष्ठदेशेन सह, कषणात् घर्षणात्, प्रक्षीणं प्रकर्षेण क्षयं गतं, मूलम् अधोदेश इत्यर्थः यस्य तथाभूतः अत एव पयोधिमथनात् समुद्रमन्थनात्, परतः पूर्वमिति भावः, उच्चैस्तरः अत्युच्चैः, आसीदिति शेषः, एतत् जानीमः मन्यामहे, यद्वा—पयोधिमथनात् परतः परवर्त्तिकाले, पयोधिमथनानन्तरम् अधुना इत्यर्थः, जानीमः अवगच्छामः, अयं गिरिः उच्चैस्तरः, आसीदिति शेषः । पूर्वं विष्णुना समुद्रमन्थनार्थं मन्दरः बाहुभिरावेष्ट्य कूर्मपृष्ठे स्थापितः, ततश्च तस्य बाहुकेयूरहीरकघर्षणेनास्य मध्यभागेषु वलिरूपा रेखा जाताः, कूर्मपृष्ठघर्षणेन च मूलदेशस्य क्षीणतयेदानीन्तनापेक्षया पूर्वावस्थाया उच्चत्वमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ४० ॥

तदिति ।—अयम् एषः, मन्थाचलः मन्दरपर्वतः, तत् प्रसिद्धं, तादृक् तथाविधं, दृढमिति भावः, फणिराजः वासुकिरेव रज्जुः गुणः, तया कषणं घर्षणम्, आकर्षणमिति यावत्, संरूढा जाता, या पक्षच्छिदा पक्षयोः छेदः, तस्याः घातेन घर्षणेन, यद्वा—संरूढः सञ्जातः, यः पक्षच्छिदायाः पक्षच्छेदनकाले, घातः प्रहारः, तेन हेतुना अरुन्तुदमपि मर्मव्यथाजनकमपि, कथं केन प्रकारेण, सोढवान् ? सह्यं कृतवान् ?

सीता । (सोद्वेगम्) । इमिणा ज्जेव्व मत्थुसेसीकिददुद्धसाअरेण (च) चंदमुद्धरिअ पउसिदभत्तुणो इत्थिआजणस्स उवरि चारहडी (छ) विढत्ता * ।

(सर्वे हसन्ति) ।

विभीषणः । (तदेव रामसूक्तं भावयन् (ज)) । अहह ! !—

प्रक्षेप्तुमुदधौ लक्ष्मीं भूयोऽपि वलते मनः ।
किन्तु प्रक्षिप्त एवायं पुनरायाति चन्द्रमाः ॥ ४२ ॥

* अनेनैव मस्तुशेषीकृतदुग्धसागरेण चन्द्रमुद्धृत्य प्रोषितभर्तृकस्य स्त्रीजनस्योपरि चारहटी विस्तीर्णा ।

अहो । आश्चर्य्यम्, एतेनैव अनेनैव, दुरात्मना दुष्टचित्तेन, मन्दराचलेनेति शेषः, जलनिधेः समुद्रात्, इमाम् एतां, कार्य्यदर्शनेन प्रत्यक्षवत् प्रतीयमानामिति भावः, पापां पापाचारां, चापल्यात् दुर्वृत्तामिति यावत्, लक्ष्मीं श्रियम्, उत्थाप्य उद्धृत्य, जगत् भुवनम्, ईश्वरो धनी, दुर्गतः दरिद्रः, इति व्यवस्थया अयमीश्वरः, अयं दुर्गतः इति व्यवहारेण, व्यस्तं व्याकुलं, दुःस्थमिति यावत्, निर्मितं कृतम्, पूर्वं लक्ष्म्या विरहेण सर्वमेव जगत् तुल्यावस्थम् आसीत्, अतः न कस्यापि केनापि सह विसंवादोऽपि आसीत्, ततश्च लक्ष्मीसद्भावेन परस्परं विसंवादाकुलमभूदिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ४१ ॥

(च) मस्त्विति ।—मस्तु दधिमण्डं, दध्नः जलमित्यर्थः, "मण्डं दधिभवं मस्तु" इत्यमरः ; तदेव शेषः अवशेषो यस्य तथाभूतः, कृतः अनुष्ठितः, मस्तुशेषत्वेन परिणत इत्यर्थः, सारभूतसुधासमुद्धरणात् असाराशेन संस्थापित इति भावः, दुग्धसागरः क्षीरार्णवः येन तादृशेन, दुग्धसागरं विलोडयतेति भावः । अनेनैव मन्दरेणेवेत्यर्थः ।

(छ) चारहटी पौरुषमित्यर्थः, देशिकप्रयोगोऽयम् । ननु सीतायाः स्वात्मानमुद्दिश्य अयमुपालम्भो न युज्यते, तस्याः प्रोषितभर्त्तृकात्वस्याभावादिति चेन्न, मायामृगस्य वधार्थं कियन्तं कालमवधिं कृत्वा रामे देशान्तरं गत्वा पुनरदर्शनं गतवति तस्याः प्रोषितभर्तृकात्वस्य सिद्धेः, तदुक्तं—"कुतश्चित् कारणात् यस्याः पतिर्देशान्तरं गतः । दत्त्वाऽवधिं भृशार्त्ता सा भवेत् प्रोषितभर्तृका ॥" इति ।

(ज) रामसूक्तं रामस्य सुवचनम् । भावयन् चिन्तयन् ।

प्रक्षेप्तुमिति ।—मनः चित्तं, भूयोऽपि पुनरपि, लक्ष्मीं कमलाम्, उदधौ समुद्रे,

( विमृश्य आकाशे )—

कस्मैचित् कपटाय कैटभरिपोरुरःपीठदीर्घालयां
देवि! त्वामभिवाद्य कुप्यसि न चेत्तत् किञ्चिदाचक्ष्महे।
यत्ते मन्दिरमम्बुजन्म किमिदं विद्यागृहम्? यच्च ते
नीचान्नीचतरोपसर्पणमपामेतत् किमाचार्य्यकम्? ॥ ४३ ॥

लक्ष्मणः। (सहासम्)। हन्त! सुरासुरमल्लभटीतूर्य्यतालनर्त्तकी सकलराजकुलखलीकारखर्जूला साहसिकजनसहस्र-

---

प्रवेष्टुं निर्गन्तुं, यतते चेष्टते, इच्छतीत्यर्थः, किन्तु प्रविष्ट एव पातित एव, दैवनिर्बन्धेनेति भावः, अयम् एषः, चन्द्रमाः चन्द्रः, पुनः भूयः, आयाति आगच्छति, उत्तिष्ठतीत्यर्थः; तथा आगमः, सूर्य्याचन्द्रमसौ पश्चिमसमुद्रं प्रविश्य पूर्वसमुद्रेणोत्तिष्ठते इति। अस्योपरिचय एव जगतां दुर्व्यवहारस्य मोक्षमिति धिया विभीषणस्योक्तिः। अनुष्टुप् वृत्तम् ॥ ४२ ॥

कस्मैचिदिति।—देवि! हे लक्ष्मि! चेत् यदि, न कुप्यसि न क्रोधं करोषि, तत् तदा, कस्मैचित् कपटाय वञ्चकाय, यद्वा—कस्मैचित् अनिर्देश्याय, कपटाय वञ्चनायै, छलनायै इत्यर्थः, छलग्राहिणी त्वं किमपि छलमुद्भाव्य आश्रितजनं परित्यक्तुमिति भावः, कैटभरिपोः कैटभाख्यदानवारेः, नारायणस्य इत्यर्थः, उरः वक्षःस्थलमेव, पीठम् आसनं, दीर्घः दीर्घकालीनः, आलयः वासस्थानं यस्याः तथोक्तां, केचित् परप्रतारकाः दुर्जना यथा निजदुष्कार्य्यं प्रच्छादयितुं निजमानसं भावं गोपायित्वा महदाश्रयमवलम्ब्य वर्त्तन्ते, अवसरे च जनान् वञ्चयन्ति, तथा त्वमपि निजचञ्चलतापरत्वं गोपायितुं महतो विष्णोर्वक्षःस्थलमाश्रित्य वर्त्तसे इति तात्पर्य्यम्; त्वा भवतीम्, अभिवाद्य नमस्कृत्य, किञ्चित् किमपि, आचक्ष्महे ब्रूमः, अम्बुजन्म पद्मं, यत् ते तव, मन्दिरं गृहम्, इदम् एतत् अम्बुजन्म, किं विद्यागृहम्? शिक्षास्थानम्? कपटताशिक्षायाः स्थानम्? इत्यर्थः, आपाततः दर्शनमात्रेण मनोहरत्वं कण्टकाकीर्णनालत्वं पद्मस्य यथा, तथा तव आपातरमणीयत्वं किन्तु परिणामवैरस्यमिति भावः, यच्च ते तव, नीचात् पामरात्, अधमजनादित्यर्थः, नीचतरोपसर्पणम् अतिदुर्जनसेवित्वमित्यर्थः, एतत् किम् अपां जलानाम्, आचार्य्यकम्? आचार्य्यकर्म? उपदेशः? इत्यर्थः, पद्मसङ्गेन जलसम्पर्कात् जलानि यथा नीचात् नीचं गच्छन्ति, तथा त्वया शिक्षितमिति भावः। लक्ष्मीरापातरम्या परिणामविरसा नीचगामिनी चेति तात्पर्य्यार्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ४३ ॥

अस्त्रान्धकारखेलनखद्योतो मधुमथनजीमूतविलासविद्युल्लता किमेवमुपालभ्यते? (भ) इयं हि—

गुणवद्भिः सह सङ्गममुच्चैः पदमाप्तुमुत्सुका लक्ष्मीः।
वीरकरवालवसतिर्ध्रुवमसिधाराव्रतं चरति॥ ४४॥

जीता। (साभ्यसूयमिव)। णिअदेव्वदुव्विलासविआरालसो लोओ लच्छीदेवीए दुज्जसवअणाइं(ञ) गाएदि। (पुरो दमयन्ती)।

(भ) सुरासुरेति।—सुरासुरमल्लाना देवासुरवीराणां, भटीतूर्य्ये रणवाद्यविशेषे, यद्वा—सुरासुरेषु देव दानवेषु, ये मल्लभट्टाः बलवन्तो योद्धारः, प्रधानवीरा इत्यर्थः, "मल्लः पात्रे कपोले च मत्स्यभेदे बलीयसि" इति मेदिनी; तेषां तूर्य्यस्य वाद्यविशेषस्य, तालेन मानविशेषेण, नर्त्तकी नर्त्तनशीला। सकलेति।—सकलानां समस्तानां, राजकुलानां नृपवंशीयानां, खलीकारे वञ्चने, एकं नृपं वञ्चयित्वा नृपान्तराश्रयणेन, तं वञ्चयित्वा अपरनृपाश्रयणेन, एवं सर्वेषां नृपाणां वञ्चनव्यापारे इति भावः, खर्ज्जूला कण्डूतिमती, सततासक्तेति यावत्। साहसिकेति।—साहसिकाः साहसे दुष्करकर्मणि निरताः साहसिकाः, तादृशाः जनाः लोकाः, वीरा इत्यर्थः, तेषां सङ्घस्य अस्त्रान्धकारेषु अस्त्रवर्षणजनिततिमिरेषु, अनवरतशरवर्षणेष्वित्यर्थः, समरक्षेत्रेषु इति भावः, यत् खेलनं क्रीडनं, विचरणमित्यर्थः, तस्मिन् खद्योतो ज्योतिरिङ्गणसदृशी। मधुमथनेति।—मधुमथनः मधुसूदनः विष्णुः एव, जीमूतः मेघः, तेन विलासे क्रीडाविशेषे, विद्युल्लता सौदामनी, तत्स्वरूपिणीत्यर्थः, किं कथम्, एवम् इत्थम्, उपालभ्यते? अधिक्षिप्यते? निन्द्यते इत्यर्थः, उपहस्यते इति भावः।

गुणवद्भिरिति।—वीराणां शूराणां, करवाले असौ, वसतिः वासो यस्याः तथाभूता, वीरजनलभ्या इति भावः, लक्ष्मीः कमला, गुणवद्भिः सह सङ्गममेव उच्चैः पदम् आप्तुं लब्धुम्; यद्वा—उच्चैः उन्नतं, पदं स्थानम, अभ्युदयमित्यर्थः, आप्तुं लब्धुं, गुणवद्भिः सगुणैः, सज्जनैरित्यर्थं, सह सार्द्धं, सङ्गमं साहचर्य्यं, कर्त्तुमिति शेषः, उत्सुका उद्युक्ता सती, आग्रहान्विता सतीत्यर्थः, असिधाराव्रतम् असिधारायां खड्गधारायां, भ्रमणरूपं व्रतं नियमं, चरति अनुतिष्ठति, ध्रुवम् उत्प्रेक्षे। आर्य्या वृत्तम्॥ ४४॥

(ञ) निजेति।—निजस्य स्वस्य, दैवदुर्विलासस्य भाग्यविपर्य्ययस्य, दुर्दैवस्येति यावत्, विचारे विवेके, अलसः विमुख इत्यर्थः। दुर्यशोवचनानि निन्दावाक्यानि।

को एसो दीसदि दिअसकूडोकिदजोण्हाविच्छड्डपडिरूवो (ट) गिरी ? *

विभीषणः। देवि !—

सोऽयं कैलासशैलः स्फटिकमणिभुवामंशुजालैर्ज्वलद्भि-
श्छाया पीताऽपि यत्र प्रतिकृतिभिरुपस्थाप्यते पादपानाम्।
यत्रोपान्तोपसर्पत्तपनकरधृतस्यापि पद्मस्य मुद्रा-
मुद्दामानो दिशन्ति त्रिपुरहरशिरश्चन्द्रलेखामयूखाः॥ ४५॥

रामः। हन्त!! शतधा दृश्यमानोऽपि न चक्षुरकौतुकं (ठ) करोति—

---

* निजदेवदुर्विलासविचारालसो लोको लक्ष्मोदेव्या दुर्यशोवचनानि गायति। क एष दृश्यते दिवसकूटीकृतज्योत्स्नाविच्छर्दप्रतिरूपो गिरिः ?

---

(ट) दिवसेति।—दिवसानां दिनानां, कूटं राशिः दिवसकूटं, बहूनां दिनाना-मेकत्र सम्मेलनमिति यावत्, अदिवसकूटं दिवसकूटं कृता दिवसकूटीकृता दिवसराशि-वदाचरिता इत्यर्थः, या ज्योत्स्ना चन्द्रिका, तस्या विच्छर्दः विस्तारः, तस्य प्रतिरूपः सदृशः, अतिशुभ्र इत्यर्थः।

सोऽयमिति।—सः प्रसिद्धः, अयम् एषः, कैलासशैलः कैलासपर्वतः, दृश्यते इति शेषः, यत्र कैलासशैले, स्फटिकमणिभुवां स्फटिकशिलासम्भूतानां, पादपानां ज्वलद्भिः अंशुजालैः मयूखनिचयैः, पीताऽपि निगीर्णाऽपि, छाया छाया ; यद्वा—यत्र कैलास-शैले, स्फटिकमणिभुवां स्फटिकाख्यमणिमयस्थलीनां, ज्वलद्भिः दीप्यमानैः, अंशुजालैः किरणसमूहैः, पीताऽपि ग्रस्ताऽपि, व्याप्तत्वात् अदृष्टाऽपीति यावत्, पादपानां वृक्षाणां, स्वच्छस्फटिकमणौ प्रतिफलितानामिति भावः, छाया प्रतिबिम्बं, प्रतिकृतिभिः प्रतिबिम्बैः, उपस्थाप्यते व्यज्यते, किञ्च, यत्र कैलासशैले, उद्दामानः उत्कटाः, विसृमराः इति यावत्, त्रिपुरहरस्य शङ्करस्य, शिरसि मूर्द्धनि, या चन्द्रलेखा शशिकला, तस्याः मयूखाः किरणाः, उपान्ते प्रान्तदेशे, उपसर्पतः समागच्छतः, सञ्चरतः इत्यर्थः, तपनस्य सूर्य्यस्य, करैः किरणैः, धृतस्यापि स्पृष्टस्यापि, विकसितस्यापीति भावः, पद्मस्य कमलस्य, मुद्रां सङ्कोचं, दिशन्ति कुर्वन्ति। स्रग्धरा वृत्तम्॥ ४५॥

(ठ) अकौतुकं कौतुकशून्यं, दर्शननिस्पृहमित्यर्थः।

गिरिः कैलासोऽयं दशवदनकेयूरविलस-
न्मणिश्रेणीपद्माङ्कुरमकरमुद्राङ्कितशिलः ।
अमुष्मिन्नारुह्य स्फटिकमयसर्वाङ्गविमले
निरीक्षन्ते यक्षाः फणिपतिपुरस्यापि चरितम् ॥ ४६ ॥

अपि च—

दशमुखभुजदण्डमण्डलीनां
दृढपरिपीडनपीतमेखलोऽयम् ।
जलगृहकवितर्दिकासुखानि
स्फटिकगिरिर्गिरिशस्य निर्ममीते ॥ ४७ ॥

विभीषणः । (सीतां प्रति) । देवि ! दृश्यतामसौ—

---

गिरिरिति ।—अयम् एषः, कैलासः तदाख्यः, गिरिः पर्वतः, दशवदनस्य रावणस्य, केयूरेषु अङ्गदेषु, विलसन्तीनां स्फुरन्तीनां, मणिश्रेणीनां हीरकपङ्क्तीनां, हीरकखण्डैः घटितानामित्यर्थः, पद्माङ्कुराणां तदुपलक्षितानाम्, अम्बुजपत्रसदृशानामित्यर्थः, मकराणां मकराकृतीनां, मुद्रया रेखाविशेषेण, अङ्किताः चिह्निताः, शिलाः पाषाणाः यस्य तथा-भूतः, पर्वतोत्तोलनसमये पाषाणगात्रे केयूरसङ्घर्षणादिति भावः, तथा स्फटिकमयैः स्फटिकात्मकैः, सर्वाङ्गैः समस्तावयवैः, विमले विशदे, अमुष्मिन् पर्वते, आरुह्य अधिष्ठाय, यक्षाः देवयोनिविशेषाः, फणिपतिपुरस्यापि वासुकिनगरस्यापि, पातालस्यापीत्यर्थः, चरितं व्यवहारं, निरीक्षन्ते पश्यन्ति, शुभ्रपर्वतगात्रे तस्य प्रतिबिम्बपतनादिति भावः । शिखरिणी वृत्तम् ॥ ४६ ॥

दशमुखेति ।—अयम् एषः, स्फटिकगिरिः स्फटिकमयाचलः, कैलासपर्वत इत्यर्थः, दशमुखस्य रावणस्य, भुजा एव बाहव एव, विशालत्वात् दण्डा इवेत्यर्थः, दण्डमण्डल्यः अर्गलसमूहाः, अर्गलसदृशदृढकठिनबाहव इत्यर्थः, तेषां दृढपरिपीडनेन निर्भर-निष्पेषणेनेत्यर्थः, पीता निम्नीभूतेति यावत्, मेखला नितम्बः, मध्यभाग इत्यर्थः यस्य तथाभूतः सन्, गिरिशस्य शम्भोः, जलगृहमिव जलगृहकं जलयन्त्रगृहं, कविभिरुत्प्रेक्षितसदृशमित्यर्थः, निपीडितस्थानात् जलस्रवणेनेति भावः, तस्य वितर्दिका वेदिका, तत्समीपे उपवेशनस्थानमित्यर्थः, "स्यात् वितर्दिस्तु वेदिका" इत्यमरः; तथा सुखानि आनन्दान्, निर्ममीते करोति । पुष्पिताग्रा वृत्तम् ॥ ४७ ॥

कैलासाद्रितटीषु धूर्जटिजटाऽलङ्कारचन्द्राङ्कुर-
ज्योत्स्नाकन्दलिताभिरिन्दुदृषदामद्भिर्नदीमातृकाः ।
गौरीहस्तगुणप्रवृद्धवपुषः पुष्यन्ति धात्रेयक-
भ्रातृस्नेहसहोढषण्मुखशिशुक्रीडासुखाः शाखिनः ॥४८॥

अपि च, अस्य नित्यमधित्यकावासी परमेश्वरः,—

सहस्राक्षैरङ्गैर्नमसितरि नीलोत्पलमयी-
मिवात्मानं मालामुपनयति पत्यौ मखभुजाम् ।
जिघृक्षौ च क्रीडारभसिनि कुमारे सह गणै-
र्हसन् वो भद्राणि द्रढयतु मृडानीपरिवृढः ॥ ४९ ॥

कैलासेति ।—कैलासाद्रितटीषु कैलासपर्वततटेषु, शाखिनः वृक्षाः, धूर्जटेः शिवस्य, जटानां लग्नकेशानाम्, अलङ्कारः भूषणभूतः, यश्चन्द्राङ्कुरः शशिकला, बालचन्द्र इत्यर्थः, तस्य ज्योत्स्नाभिः चन्द्रिकाभिः, कन्दलिताभिः अङ्कुरिताभिः, निःसृताभिरिति यावत्, "कन्दलं त्रिषु कपालेऽप्युपरागे नवाङ्कुरे" इति मेदिनी ; इन्दुदृषदां चन्द्रकान्तशिलानाम्, अद्भिः जलैः, चन्द्रकान्तमणिनिःसृतैरिति भावः, नदी माता येषां तादृशाः नदीमातृकाः नद्यम्बुपालिताः, नदीजलैरिव पोषिता इत्यर्थः, "देशो नद्यम्बु-वृष्ट्यम्बु सम्पन्नव्रीहिपालितः । स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥" इत्यमरः ; गौर्याः पार्वत्याः, हस्तगुणेन स्वकरलालनेन, प्रवृद्धं प्रकर्षेण वृद्धिं गतं, वपुः शरीरं येषां तथोक्ताः, तथा धात्रेयकः धात्री उपमाता, गौरीति यावत्, पालनकर्त्रीत्वादिति भावः, तस्याः अपत्यं पुमान् धात्रेयकः धात्रीपुत्रः, स चासौ भ्राता चेति धात्रेयकभ्राता, स्कन्द इति यावत्, तस्य स्नेहेन वात्सल्येन, सहोढं सहप्राप्तं, सुलभमिति यावत्, षण्मुखशिशुना बालकेन कार्त्तिकेयेन, क्रीडासुखं खेलनानन्दः येषां तथाभूताः सन्तः, यद्वा—षण्मुखेन सह या शिशुक्रीडा बाल्यक्रीडा, तया सुखम् आनन्दो येषां तथाभूताः सन्तः, पुष्यन्ति विकसन्ति । शार्दूलविक्रीडितं वृत्तम् ॥ ४८ ॥

सहस्राक्षैरिति ।—मखभुजां देवानां, पत्यौ अधीश्वरे, इन्द्रे इत्यर्थः, सहस्राक्षैः सहस्रनयनयुक्तैः, अङ्गैः कलेवरैः, नमसितरि नतिं कुर्वति सति, अत एव आत्मानं स्वं, नीलोत्पलमयीम् इन्दीवररचिताम्, मालामिव स्रजमिव, नेत्राणां नीलोत्पलसदृशत्वा-दिति भावः, उपनयति प्रापयति, क्रीडारभसिनि क्रीडावेगिनि, खेलनाय चञ्चले इत्यर्थः, खेलनासक्ते इति भावः, कुमारे कार्त्तिकेये, जिघृक्षौ च ग्रहीतुमिच्छौ च सति,

किञ्च—

यस्याश्च भ्रमिघूर्णमानवसुधाचक्राधिरूढे भृशं
मेरौ पार्श्वनिविष्टवासरनिशाचक्रे परिभ्राम्यति ।
तैजस्यस्तडितो भवन्तु शतशो दृष्टा हि जाताः कथं
तामस्योऽपि स वः पुनातु जगतामन्त्येष्टियज्वा विभुः ॥ ५० ॥

लक्ष्मणः ।—

जयति परिमुषितलक्ष्मा भयादनुपसर्पतेव हरिणेन ।
इह केसरिकरजाङ्कुरकुटिला हरमौलिविधुलेखा ॥ ५१ ॥

---

त्वां मालारूपामिन्दुकलेवरयष्टिमिति शेषः, चक्षुषाम् उत्पलसाम्यात् मालात्वेन भ्रान्तिरिति भ्रान्तिमदलङ्कारः ; "साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थिता" इति दर्पणे ; गणैः प्रमथवर्गैः, "गणः प्रमथ-सङ्घौघे चण्डी-सैन्यप्रभेदयोः" इति मेदिनी , सह साकं, हसन् हास्यं कुर्वन्, मृडानीपरिवृढः गौरीप्रभुः, उमाकान्तः इत्यर्थः, "प्रभुः परिवृढोऽधिपः" इत्यमरः ; वः युष्माकं, भद्राणि शुभानि, द्रढयतु दृढीकरोतु, विदधात्वित्यर्थः । शिखरिणी वृत्तम ॥ ४९ ॥

यस्याश्चेति ।—यस्य विभोः, नाट्ये नर्त्तने, या भ्रमिः भ्रमणं, तया घूर्णमानं भ्रमन्तं, यत् वसुधाचक्रं भूमण्डलं, तत्र अधिरूढे अधिष्ठिते, तदुपरिवर्त्तिनीति यावत्, पार्श्वयोः वाम-दक्षिणयोः भागयोः, निविष्टम् अवस्थितं, भ्रान्तम् अविरतं परिभ्रमन्तं, चक्रवद्भावर्त्तमानमित्यर्थः, वासर-निशाचक्रं दिवा-रात्ररूपं चक्राङ्गं, दिवा-रात्रसमूहो वा यस्य तथाभूते, मेरौ सुमेरौ, भृशम् अत्यर्थं, परिभ्राम्यति सति परिचलति सति, घूर्णमाने सतीत्यर्थः, शतशः बहुश इति यावत्, तैजस्यः तेजोरूपाः, तामस्योऽपि तमोरूपा अपि, तडितः विद्युतः, कथं जाताः उत्पन्नाः, दृष्टाश्च लक्षिताश्च, भवन्तु ? हि आश्चर्यमेतदिति भावः ; मेरौ भ्रमति तत्पार्श्ववर्त्तिनोर्दिन-रात्र्योरपि भ्रमणेन यथाक्रमं तैजस्यस्तामस्यश्च विद्युतः सञ्चरन्तीति निष्कर्षः, जगतां भुवनानाम, अन्त्येष्टिः अन्त्ययज्ञः, संहार इति यावत्, तस्य यज्वा याज्ञिकः, संहारव्रती इत्यर्थः, स विभुः परमेश्वरः शिवः, वः युष्मान्, पुनातु पवित्रीकरोतु । शार्दूलविक्रीडितं वृत्तम ॥ ५० ॥

जयतीति ।—इह अस्मिन् कैलासतटे, केसरिणः सिंहस्य, करजाङ्कुरः नखप्ररोहः, नखाग्रमित्यर्थः, तद्वत् कुटिला वक्रा, अत एव भयात् सिंहनखराघातजन्याद्भयादित्यर्थः, अनुपसर्पतेव अनागच्छतेव, पलायमानेनेवेति यावत्, हरिणेन मृगेण,

सीता। (सपरिहासम्)। एदस्स दंदसूअ-णरकोडि-मुंड-मालामंडणस्स मसाणवासिणो (ड) भूसणदाए ज्जेव्व रोहिणीवल्लहस्स (ढ) कलंको, किं तवस्सिणा कुरंगएण? * (ण)

विभीषणः। (विहस्य)। शङ्के, भगवानपि न मृगाङ्कमलङ्कारकामः कलयति (त)। तथा हि—

सहचरपिशाचपरिषत्प्रसत्तये कामचारतो रजनीम्।
कारयितुमिव कपाली शिरसि निशाकरमयं वहति॥ ५२॥

(सर्वे हसन्ति)।

---

* एतस्य दन्दशूक-नरकोटि-मुण्डमालामण्डनस्य श्मशानवासिनो भूषणतयैव रोहिणीवल्लभस्य कलङ्कः, किं तपस्विना कुरङ्गकेण?

---

स्वच्छनष्टपिणीति भावः, परिमुषितं परिहृतं लक्ष्म कलङ्को यया तथाभूता, निष्कलङ्केति भावः, हरमौलिविधुलेखा शङ्करशिरश्चन्द्रकला, जयति राजते। आर्या वृत्तम्॥ ५१॥

(ड) दन्दशूकेति।—दन्दशूकः सर्पः, "सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः। दर्वीकरो दीर्घपृष्ठो दन्दशूको विलेशयः॥" इत्यमरः, नरकोटिः ब्रह्मकपालानि, मुण्डमाला नरमुण्डश्रेणी च, मण्डनानि भूषणानि यस्य तथाभूतस्य। श्मशानवासिनः श्मशाने एव तिष्ठतः, हरस्येति भावः।

(ढ) रोहिणीवल्लभस्य चन्द्रस्य। कलङ्कः दुर्यश इति यावत्।

(ण) तपस्विना दीनेन, निर्दोषेण इति यावत्। कुरङ्गकेण तु मृगेण अल्पार्थे कन्-प्रत्ययः। सदाचारविहीनस्य हरस्य शिरसि वास एव चन्द्रस्य कलङ्कः, न तु मृगः, अत एव मृगलाञ्छनत्वं चन्द्रस्य न कलङ्कहेतुः, किन्तु शङ्करशिरोभूषणत्वमेव तस्य हेतुरिति भावः।

(त) अलङ्कारकामः भूषणार्थी। कलयति धारयति।

सहचरेति।—अयम् एषः, कपाली कपालभृत्, हरः इत्यर्थः, सहचराणां सङ्गिनां, पिशाचानां देवयोनिविशेषाणां, परिषदः समूहस्य, प्रसत्तये प्रसादार्थं, सन्तोषार्थमिति यावत्, कामचारतः स्वेच्छातः, रजनीं रात्रिं, कारयितुमिव आयामयितुमिवेत्यर्थः, निशाकरं चन्द्रं, वहति धारयति, पिशाचानां निशाविहारित्वात् तेषां सन्तोषाय अयं निशां कारयितुमिव निशाकरं धारयतीति निष्कर्षः। आर्या वृत्तम्॥ ५२॥

रामः। ( सबहुमानम् )।—

श्रीकण्ठस्य कपर्दबन्धनपरिश्रान्तोरगग्रामणी-

सन्दष्टां मुकुटावतंसकलिकां वन्दे कलामैन्दवीम्।

या बिम्बप्रतिपूरणाय परितो निष्पीड्य सन्दंशिका-

यन्त्रेणेव ललाटलोचनशिखिज्वालाभिरावर्त्यते ॥ ५२ ॥

( पुष्पकं प्रति )। विमानराज! मनागुन्नम्यताम्, ( क ) आलोकयतु मैथिली सुमेरुशिखराणि।

विभीषणः। ( सीतां प्रति )। देवि! पश्य पश्य—

मेरोर्मेदुरयन्ति सम्प्रदमधःसम्पातिभिर्ज्योतिषा-

माटोपैर्विटपोपरिस्थिततरुच्छायाभृतोऽधित्यकाः।

---

श्रीकण्ठस्येति।—श्रीकण्ठस्य श्रीः शोभा कण्ठे यस्य तस्य शङ्करस्य, "श्रीकण्ठः कुरुजाङ्गले। शङ्करे च—" इति हारावली; कपर्दः जटाजूटः, "कपर्दोऽस्य जटाजूटः" इत्यमरः; तस्य बन्धनेन संयमनेन, परिश्रान्तः क्लान्तः, यः उरगग्रामणीः भुजगाधिपतिः, सर्पराजः वासुकिरित्यर्थः, "स्यात् ग्रामणीः प्रधानेऽधिपतौ च त्रिषु नापिते पुंसि" इति मेदिनी; तेन सन्दष्टां कवलिताम्, वेष्टितामिति यावत्, मुकुटस्य किरीटस्य, मुकुटप्रायस्य जटाजूटस्येति भावः, अवतंसकलिकाम् अलङ्कारकोरकं, कलिकाकारभूषणस्वरूपामित्यर्थः, इन्दोरियम् ऐन्दवी तां चान्द्रीं, कलां षोडशांशं, कलामात्रं चन्द्रमित्यर्थः, वन्दे प्रणमामि, या कला, बिम्बप्रतिपूरणाय सम्पूर्णं मण्डलं कर्त्तुमित्यर्थः, "बिम्बोऽस्त्री मण्डलं त्रिषु" इत्यमरः; परितः उभयोः प्रान्तयोः, सन्दंशिका "सँडाशी" इति प्रसिद्धा एव, यन्त्रः सुदृढभावेन धारणोपायविशेषः इति यावत्, स च वासुकिरेव इति भावः, तेन निष्पीड्य धृत्वा, स्वमेवेति भावः, ललाटलोचन-शिखिनः भालनेत्राग्नेः, ज्वालाभिः शिखाभिः, आवर्त्यते इव द्रवीक्रियते इव। अन्यदपि हिरण्यादिकं तथा पूरणाय सन्दंशिकया धृत्वा अग्निज्वालया आवर्त्यते इति लौकिकम्। शार्दूलविक्रीडितं वृत्तम् ॥ ५२ ॥

( क ) उन्नम्यताम् उर्द्धम् उत्थीयताम्, ऊर्द्धमुत्पत्यतामित्यर्थः।

मेरोरिति।—अधःसम्पातिभिः अधःसञ्चारिभिः, ज्योतिषां सूर्य्यादीनाम्, आटोपैः तेजःसमूहैरित्यर्थः, विटपोपरिस्थिततरुच्छायाः विटपानां स्तम्बानां, गुल्मजातीयवृक्षाणामित्यर्थः, "विटपो न स्त्रियां स्तम्ब-शाखाविस्तारपल्लवे" इति मेदिनी; उपरि

निष्पीतासु च मासि मासि विबुधैरिन्दोः कलासु क्रमा-
दुद्दामप्लवमानलाञ्छनमृगच्छिन्नाग्रदर्भाङ्कुराः ॥ ५४ ॥

लक्ष्मणः। (सीतां प्रति)।—

एतासु पर्वतनितम्बतटीषु पश्य
मध्यन्दिनेऽपि हरिचन्दनवाटिकेयम्।
पक्षस्थितद्युमणिबिम्बतयाऽतिदीर्घ-
च्छायावितानमधुरा मुदमादधाति ॥ ५५ ॥

---

अग्रभागे, च्युताः पतिता इत्यर्थः, याः तरुच्छायाः समीपस्थवृक्षाणां छायाः, ताः बिभ्रतीति तथोक्ताः, तथा मासि मासि प्रतिमासं, क्रमात् किञ्चित् किञ्चित् कृत्वेत्यर्थः, विबुधैः देवैः, निष्पीतासु भक्षितासु, इन्दोश्चन्द्रस्य, कलासु एकैकेषु अंशेषु, अमृतरूपासु इति भावः, "पर्य्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः" इति रघुवंशे कालिदासः; उद्दामम् उच्छृङ्खलं यथा तथा, प्लवमानेन उत्फलता, लम्फता इत्यर्थः, चन्द्राङ्के निश्चलभावेन धारणात् पूर्वं प्लवनराहित्यमासीत्, इदानीं विबुधैस्तस्य भक्षितत्वात् प्लवनप्रत्यूहाभावेनेति भावः, लाञ्छनमृगेण कलङ्करूपिणा हरिणेन, छिन्नं त्रुटितं, भक्षितमित्यर्थः, अग्रं शीर्षदेशः येषां तथाभूताः, दर्भाङ्कुराः कुशप्ररोहाः यासु तथाभूताः, अधित्यकाः पर्वतस्य ऊर्द्ध्वभूमयः, "उपत्यकाऽद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका" इत्यमरः; मेरोः सुमेरुगिरेः, सम्पदं शोभां, मेदुरयन्ति पुष्टां कुर्वन्ति, वर्द्धयन्तीति यावत्। शार्दूलविक्रीडितं वृत्तम् ॥ ५४ ॥

एतास्विति।—एतासु पुरो दृश्यमानासु, पर्वतस्य अचलस्य, सुमेरोरित्यर्थः, नितम्बतटीषु कटकप्रदेशेषु, मध्यभागेषु इत्यर्थः, इयं परिदृश्यमाना, हरिचन्दनवाटिका देवतरुविशेषनिर्मितवनश्रेणी, "पञ्चैते देवतरवो मन्दारः पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥" इत्यमरः; यद्वा—हरिचन्दनं गोशीर्षाख्यचन्दनवृक्षविशेषः, तेषां वाटिका वनराजिः, "हरिचन्दनन्तु गोशीर्षे ज्योत्स्ना-कुङ्कुमयोरपि" इति मेदिनी; मध्यन्दिनेऽपि मध्याह्नेऽपि, पक्षे पार्श्वे, "पक्षो मासार्द्धके पार्श्वे गृहे साध्यविरोधयोः" इति मेदिनी; स्थितं वर्त्तमानं, द्युमणेः सूर्य्यस्य, बिम्बं मण्डलं यस्य तत्तया, अतिदीर्घच्छायावितानेन अतिदीर्घा अत्यायता, बहुदूरव्यापिनीत्यर्थः, या छाया अनातपः, तस्याः वितानेन विस्तारेण, "वितानो यज्ञ उल्लोचे विस्तारे पुं-नपुंसकम्"

अपि च—

भूमिः स्वर्णतया फलोत्तरतरुस्मेरस्य मेरोस्तटी-
सीमन्तोऽयमनूरुसारथिरथप्रस्थानघण्टापथः ।
अस्मिन्नुह्यते कथञ्चन हयैरुद्दामचण्डातप-
ज्वालाजालविलीनकाञ्चनशिलाजम्बालमग्नः प्रधिः ॥ ५६ ॥

( निरूप्य च सहर्ष-स्मितम् )। कथम्, उपर्य्युपरि पुष्करावर्त्तकानभ्रमु-
वल्लभः !! ( ट )। ( विमृश्य )।—

अद्यायं विबुधेन्द्रबान्धववधूसम्भुक्तसन्तानक-
स्रग्दाम्नीममरावतीं विहरते निर्वैरमैरावणः ।

---

इति मेदिनी ; मधुरा मनोहारिणी सती, मुदम् आनन्दम्, आदधाति जनयति, पश्य अवलोकय । अत्र वाक्यार्थः कर्मतयाऽन्वेति । वसन्ततिलकं वृत्तम् ॥ ५५ ॥

भूमेरिति ।—भूमिः स्थानम्, सुमेरोरुपत्यकाप्रदेशस्य इत्यर्थः, "भूमिः क्षितौ स्थानमात्रे" इति हैमः ; स्वर्णतया काञ्चनमयतया, फलोत्तरैः फलप्रधानैः, फल-पूर्णैरिति भावः, तरुभिः वृक्षैः स्मेरस्य विकसितस्य, समुज्ज्वलस्येत्यर्थः, मेरोः सुमेरोः, अयम् एषः, तटीसीमन्तः सीमन्तवत् परिदृश्यमानः प्रदेशः, अनूरुसारथेः सूर्यस्य, रथप्रस्थाने स्यन्दनसञ्चालने, घण्टापथः संसरणं, प्रशस्तराजमार्गविशेषः इत्यर्थः, "घण्टापथः संसरणम्" इत्यमरः , दृश्यते इति शेषः, अस्मिन् घण्टापथे, हयैः अश्वैः, सूर्यस्य सप्तभिरश्वैरित्यर्थः, उद्दामचण्डातपानाम् उत्कटसुतीव्रसूर्यकिरणानां, ज्वालाजालेन शिखासमूहेन, यद्वा—चण्डः तीव्रः, आतपः सन्तापो यस्य सः चण्डातपः सूर्यः, उद्दामः प्रखरः, यश्चण्डातपः सूर्यः, तस्य ज्वालाजालेन किरणसमूहेन, विलीना द्रवीभूता, या काञ्चनशिला स्वर्णमयप्रस्तरः, सैव जम्बालः कर्दमः, "निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शाद-कर्दमौ" इत्यमरः ; तत्र मग्नः प्रविष्टः, प्रधिः नेमिः, चक्रप्रान्त इत्यर्थः, "चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमान्" इत्यमरः ; उह्यते उत्तोल्यते । शार्दूलविक्रीडितं वृत्तम् ॥ ५६ ॥

(ट) पुष्करावर्त्तकान् मेघविशेषान्, उपर्य्युपरियोगे द्वितीया । अभ्रमुवल्लभः ऐरावतः, "ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः" इत्यमरः ।

अद्येति ।—अद्य इदानीम्, अयम् एषः, ऐरावणः ऐरावतः, विबुधेन्द्रस्य देवराजस्य]

यं दोर्मात्रपरिच्छदो युधि मुदोत्क्षिप्य प्रतीच्छन् मुहुः
सन्तेने दशभिर्निजैरपि मुखैः साराविणं रावणः ॥ ५७ ॥

सुग्रीवः। सत्यमगोचरे गिरां दशकण्ठक्रीड़ितानि (ध)—
एकैके निवसन्ति ते भुजभृतः कस्मै निगृह्णामहे ?
वीरश्रेवमियं पुनर्वसुमती पौलस्त्यमाबिभ्रती।
बाली त्वाह्वयमानमेनमपि यच्चक्रे क्षते चक्षुषी
पश्यामः श्रवसी क्षते च शृणुमस्तद्दक्तुमल्पे वयम् ॥ ५८ ॥

इन्द्रस्य, वासवाः स्वजनाः, देवाः इत्यर्थः, तेषां वधूभिः अङ्गनाभिः, सम्भुक्ताम् उपभुक्तां, सन्तानकस्रजा देवतरुविशेषस्य पुष्पमालानां, दाम समूहः यस्यां तथाभूताम्, अमरावतीं देवनगरीं निर्वैरं निर्विरोधं यथा तथा, निःशङ्कं यथा तथेत्यर्थः, रावणभयापगमादिति भावः, विहरते विचरति, दोर्मात्र बाहुमात्रं, परिच्छदः उपकरणं, सहाय इति यावत् यस्य तथाभूतः, अस्त्रादीनां कथा दूरे आस्तां, केवलबाहुमात्रसहाय इति भावः रावणः दशाननः, युधि युद्धे, यम् ऐरावणं, मुदा आनन्देन, अक्लेशेनेत्यर्थः, उत्क्षिप्य ऊर्द्ध्वं निक्षिप्य, मुहुः पुनः पुनः, प्रतीच्छन् बाहुभिः गृह्णन्, दशभिः दशसङ्ख्यकैः, निजैः स्वकीयैः, मुखैरपि आननैरपि, साराविणं सम्यक् शब्दम्, उच्चैः शब्दमित्यर्थः, सिंहनादमिति भावः, सन्तेने वितस्तार, कृतवान् इत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ५७ ॥

(ध) अगोचरे गिरां गिरां वाचाम्, अगोचरे अविषये। दशेति।—दशकण्ठस्य दशग्रीवस्य रावणस्य, क्रीडितानि चेष्टितानीत्यर्थः, दशकण्ठचरितं वाचामगम्यमिति भावः।

एकैके इति।—ते प्रसिद्धाः, एकैके अनेके इत्यर्थः, भुजभृतः बाहुशालिनः, बाहुशौर्य्यसम्पन्ना इत्यर्थः, निवसन्ति पृथिव्यां तिष्ठन्ति, कस्मै भुजभृते निगृह्णामहे ? निग्रहं कुर्मः ? कं भुजभृतं निन्दामः ? इत्यर्थः, न कमपि निन्दां कुर्म इति भावः ; कस्मै इति सम्प्रदानविवक्षया कर्मणि चतुर्थी, पुनः किन्तु, पौलस्त्यं रावणम्, आबिभ्रती धारयन्ती, इयम् अस्माकमधिष्ठानभूता एषा, वसुमती पृथ्वी, वीरश्रेवं शूरभूमिः, वीरपुरुषप्रसविनीत्यर्थः, बाली तु किष्किन्ध्येश्वरः कपिराज पुनः, आह्वयमानं विजयाय स्पर्द्धमानम्, एनं महावीरं रावणमपि, यत् चक्रे कृतवान्, यथा परिभूतवानित्यर्थः ; तत् चक्षुषी चक्षुर्द्वयं, क्षते दृष्टे इत्यर्थः इति इतो, पश्यामः

राम. । ( सबहुमानम् ) ।—

स किं वाच्यो बाली भुजकुलिशमूलेन दशतो
दशग्रीवं यस्य प्रतिजलधि सन्ध्याविधिरभूत् ? ।
कथं वा निर्वाच्यः स च दशमुखः ? यस्य दमने
मनागासीत् बालिव्ययचरितमेवोपकरणम् ॥ ५९ ॥

सीता । ( रामं प्रति ) अज्जउत्त ! किं उण एदं दलिद-कप्पूरसलाआमलङ्कगोरअं ( म ) गअणंगणे दीसइ ? *

---

* आर्य्यपुत्र ! किं पुनरेतत् दलितकर्पूरशलाकाखण्डगौरं गगनाङ्गणे दृश्यते ?

---

अवलोकयामः, श्रवसी च कर्णौ च, "कर्ण-शब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः" इत्यमरः ; कृते श्रुते इत्यर्थः, इति हेतोः शृणुमः आकर्णयामः ; यद्वा—चक्षुषी कृते विहिते, निर्मिते इत्यर्थः, इति हेतोः पश्यामः, श्रवसी च कर्णौ च, कृते विहिते, निर्मिते इत्यर्थः, इति हेतोः शृणुमः, कृते इत्यस्य विशेषणेति कर्त्तृपदमूह्यं, किन्तु वयं तत् रावण-वालिनोर्वीर्य्योदयचरितमिति भावः, वक्तुं कथयितुम्, अलं असमर्था इत्यर्थः, अलौकिकपौरुषावेताविति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ५८ ॥

स इति ।—स एतादृशः, बाली किष्किन्ध्येश्वरः, किं कथं, वाच्यः ? वक्तुं शक्यः ? न कथमपि तस्य चरितं वक्तुं शक्यते अस्माभिरित्यर्थः, भुज एव बाहुरेव, कुलिशं वज्रं, तस्य मूलेन कक्षेणेत्यर्थः, दशग्रीवं रावणं, दशतः पीडयतः, यस्य बालिनः, प्रतिजलधि जलधौ जलधौ, पूर्व्वादि-सागरचतुष्टये इत्यर्थः, सन्ध्याविधिः सन्ध्यावन्दनम्, अभूत् सम्पन्नोऽजायत स च महावीरत्वेन प्रसिद्ध इत्यर्थः, दशमुखः रावणः, कथं वा केन प्रकारेण वा, निर्वाच्यः ? निःशेषं वक्तुं शक्यः ? न कथमपीत्यर्थः, यस्य दशमुखस्य, दमने विनाशने, मनाक् एकदेशतः, बालिनः व्ययः विनाशनमेव, चरितम् आचरणं, कार्य्यमिति यावत्, तदेव उपकरणं सामग्री, कार्य्यसाधनहेतुभूतमिति यावत्, आसीत् अभवत्, रावणवधार्थमेव बालिवधः कृतः, अन्यथा बालिसहायस्य तस्य अशक्यविनाशत्वमिति भावः । शिखरिणी वृत्तम् ॥ ५९ ॥

( म ) दलितेति ।—दलितं पिष्टं, यत् कर्पूरशलाकाखण्डं कर्पूरविरचित-शलाकांशं, तद्वत् गौरं शुभ्रं, "शुक्ल-शुभ्र-शुचि-श्वेत-विशद-श्येत-पाण्डुराः । अवदातः सितो गौरः" इत्यमरः ।

विभीषणः। (सीतां प्रति)। देवि! चन्द्रलोकोपकण्ठमधि-
रूढो विमानराजः। (प) दृश्यतां च भगवानयम्—

यं प्राक्प्रत्यगवागुदञ्चि ककुभां नामानि सम्बिभ्रतं
ज्योत्स्नाजालझलज्झलाभिरभितो लुम्पन्तमन्धं तमः।
प्राचीनादचलादितस्त्रिजगतामालोकबीजाद्बहि-
र्निर्यान्तं हरिणाङ्कमङ्कुरमिव द्रष्टुं जनो जीवति ॥ ६० ॥

---

(प) चन्द्रलोकेति।—चन्द्रलोकस्य चन्द्रमण्डलस्य, उपकण्ठं समीपम्। अधि-रूढः आरूढः, समागत इति यावत्।

यमिति।—यत्र प्रथमम् अञ्चति गच्छति, उदेतीत्यर्थः, सूर्य्य इति शेषः, यद्वा—या प्रथमम् अञ्चति पूजयति, सूर्य्यमिति शेषः, प्राञ्चति प्राप्नोति, सूर्य्यमिति शेषः इति वा इति निरुक्त्या प्राक् प्राची, पूर्वा दिगित्यर्थः, यत्र प्रति प्रतीपं, पश्चादित्यर्थः, दिनान्ते इति यावत्, अञ्चति गच्छति, सूर्य्य इति शेषः, पूजयति सूर्य्यमिति वा व्युत्पत्त्या प्रत्यक् प्रतीची, पश्चिमा दिगित्यर्थः, यत्र अव तिर्य्यक्, अञ्चति गच्छति, यद्वा—अव अर्क्को मध्ये, अञ्चति गच्छतीति निरुक्त्या अवाक् अवाची, दक्षिणा दिगित्यर्थः, यत्र उत् उत्तरम्, ऊर्द्ध्वं वा, अञ्चति गच्छतीति निरुक्त्या उदक् उदीची, उत्तरा दिगित्यर्थः, तथ्वदञ्चि, ककुभां दिशां, नामानि अभिधानानि, सम्बिभ्रतं धारयन्तं, ददतमिति भावः, सूर्य्याचन्द्रमसोर्गतिवशेनैव प्राच्यादिव्यवहारादिति भावः, अभितः समन्तात्, ज्योत्स्नाजालस्य कौमुदीपटलस्य, झलज्झलाभिः आस्फालैः, आविर्भावै-रिति यावत्, "आदास्फाले झलज्झला" इति हारावली; अन्धं तमः गाढान्धकारं, लुम्पन्तं हरन्तम्, इतः अस्मात्, जगतां भुवनानाम्, आलोकस्य द्योतस्य, प्रकाश-स्येत्यर्थः, यद्वा—आलोकस्य दर्शनस्य, दर्शनसाधनस्येत्यर्थः, "आलोकस्तु पुमान् द्योते दर्शने वन्दिभाषणे" इति मेदिनी; बीजात् हेतुभूतात्, प्राचीनात् पूर्वदिग्भवात्, अचलात् पर्व्वतात्, उदयाचलादित्यर्थः, बहिः निर्यान्तं निर्गच्छन्तम्, अङ्कुरमिव प्ररोहमिव, अन्योऽप्यङ्कुरो बीजात् बहिर्निर्गच्छतीति दृश्यते, य हरिणाङ्कं चन्द्रं, द्रष्टुम् अवलोकयितुं, जनः लोकः, जीवति प्राणिति, यस्य दर्शनं जनस्य जीवनकारणमिति, दृष्टिविघातके निखिलविश्वावरणकारिणि गाढान्धकारे भीताः सन्तस्तत्र निःश्वासाश्च प्राणिनः कदा चन्द्र उदेष्यति, कदा जीवलोकं पश्यन्तः जीवाम इत्याशया कथञ्चित् प्राणितीति वा भावः। शार्द्दूलविक्रीडितं वृत्तम् ॥ ६० ॥

अपि च—

स श्रीकण्ठकिरीटकुट्टिमपरिष्कारप्रदीपाङ्कुरो
देवः कैरवबन्धुरन्धतमसप्राग्भारकुक्षिम्भरिः ।
संस्कर्त्ता निजकान्तिमौक्तिकमणिश्रेणीभिरेणीदृशां
गीर्वाणाधिपतेः सुधारसवतीपौरोगवः प्रोदगात् ॥ ६१ ॥

अपि च—

प्राणायामोपदेष्टा सरसिजवने यौवनोन्मादलीला-
गोष्ठीनां पीठमर्दस्त्रिभुवनवनितानेत्रयोः प्रातराशः ।

---

स इति।—श्रीकण्ठस्य हरस्य, किरीटं मुकुटमेव, कुट्टिमः निबद्धभूमिः, पाषाणादिनिबद्धाभ्यन्तरभूमिरूपगृहविशेषः इति भावः, "कुट्टिमोऽस्त्री निबद्धा भूः" इति हारावली ; तस्य परिष्कारे अलङ्करणे, शोभासम्पादने इत्यर्थः, प्रकाशकरणे इति यावत्, प्रदीपाङ्कुरः क्षुद्रदीपस्वरूप इत्यर्थः, अन्धतमसानां गाढान्धकाराणां, प्राग्भारेण उत्कर्षेण, प्रगाढान्धकारसमूहेनेत्यर्थः, कुक्षिम् उदरं, बिभर्त्ति परिपूरयतीति तथोक्तः, प्रबलान्धकारग्रासी, गाढान्धकारध्वंसीत्यर्थः, निजकान्तयः स्वकीयद्युतयः एव, मौक्तिकमणयः मुक्तारत्नानि, तेषां श्रेणीभिः पङ्क्तिमयैरित्यर्थः, एणीदृशां मृगनयनानां स्त्रीणां, संस्कर्त्ता अलङ्कारकः, आह्लादजनक इति यावत्, गीर्वाणानां देवानाम्, अधिपतेः प्रभोः इन्द्रस्य, सुधायाः अमृतस्य, या रसवती पाकस्थानं, "रसवत्यां तु पाकस्थान-महानसे" इत्यमरः ; तस्याः पौरोगवः अध्यक्षः, "पौरोगवस्तदध्यक्षः" इत्यमरः, कैरवाणां कुमुदानां, बन्धुः सखा, स प्रसिद्धः, देवः चन्द्रः, प्रोदगात् प्रकर्षेण उदियाय । शार्दूलविक्रीडितं वृत्तम् ॥ ६१ ॥

प्राणायामेति।—सरसिजानां पद्मानां, वने कानने, प्राणायामस्य प्राणवायु-निरोधविशेषस्य, अथवा निमीलनस्येत्यर्थः, प्राणायामे च निमीलनस्य सम्भवादिति भावः, उपदेष्टा आचार्यः, पद्मनिमीलनकर इति भावः, यौवनेन तारुण्येन, य उन्मादः मत्तता, चित्तचाञ्चल्यमिति यावत्, तस्य लीलागोष्ठीनां विलासातिशयानामित्यर्थः, पीठमर्दः अनुनायकभेदः, नायकस्य शृङ्गारसहायविशेष इत्यर्थः, उक्तञ्च भरतेन—"पीठमर्दो विटश्चैव विदूषक इति त्रयः । शृङ्गारे नर्मसचिवा नायकस्यानुनायकाः ॥" इति, त्रिभुवनवनितानां त्रिलोकीललनानां, नेत्रयोः लोचनयोः, स्त्रीणां बहुत्वेऽपि नेत्रयोरिति द्वित्वं जात्यपेक्षमिति बोध्यम् ; प्रातराशः प्रातर्भोजनं, चालिनः किञ्चित्

कामायुष्टोमयज्वा शमितकुमुदिनीमौनमुद्राऽनुरागः
शृङ्गाराद्वैतवादी विभवति भगवानेष पीयूषभानुः॥ ६२॥

लक्ष्मणः। (विलोक्य सकौतुकम्)।—

कर्णोत्तंसयवाङ्कुरं करतले कृत्वा हसित्वा मिथः
संहूतः पुरुहूतपौरयुवतीवर्गेण कौतूहलात्।
ग्रामात्त्किक्षुभितोऽयमङ्कहरिणः कुर्वीत किं किं कला-
कल्यामिन्दुमयीमजस्रघटनोद्घाटश्लथावस्थिताम्॥ ६३॥

---

भुक्त्वा यथा रतेषु प्रवर्त्तन्ते, तथा कामिन्यश्च प्रथमं चन्द्रं दृष्ट्वा सञ्जातमन्मथवेगाः कामिषु प्रवर्त्तन्ते इति भावः; यद्वा—बुभुक्षवो यथा प्रातर्भोजनेन तृप्तिं लभन्ते, तथा समीपस्थ-भर्तृकाः कामिन्यः चन्द्रदर्शनेन प्रीतिं लभन्ते इति भावः, "प्रातराशः कल्यवर्त्तः प्रातर्भोजनमित्यपि" इति हारावली; कामस्य मदनस्य, आयुष्टोमे आयुर्वृद्धिकरयागे, कामस्य सञ्जीवनार्थं क्रियाविशेषे इत्यर्थः, यज्वा याज्ञिकः, होतेत्यर्थः, कामोद्दीपक इति भावः, शमितः शान्तिं नीतः, कुमुदिन्याः कैरविण्याः, मौनं तूष्णीम्भावः, मुद्रा निमीलनञ्च, तयोः अनुरागः येन तथोक्तः, कुमुदिनीविकाशक इति भावः, यद्वा— शमितः कुमुदिन्याः कैरविण्याः, मौनमुद्रायां निमीलनरूपतूष्णीम्भावे इत्यर्थः, अनुरागः आसक्तिः येन तादृशः, कुमुदिनीमुद्राभञ्जन इति भावः, शृङ्गारः उज्ज्वलाख्य-रसविशेषः, तस्य अद्वैतं द्वितयराहित्यं, वदतीति तथोक्तः, शृङ्गार एव एकमात्र-रसोऽस्ति नान्य इतिवादीत्यर्थः, भगवान् महनीयः, एषः अयं, पीयूषभानुः अमृतरश्मिः, चन्द्र इत्यर्थः, विभवति विशेषेण भवति, उदेतीत्यर्थः। स्रग्धरा वृत्तम्॥ ६२॥

कर्णोत्तंसेति।—पुरुहूतस्य इन्द्रस्य, "इन्द्रो मरुत्वान् मघवा…पुरुहूतः पुरन्दरः" इत्यमरः, पौरयुवतीवर्गेण पुरस्त्रीजनगणेनेत्यर्थः, कौतूहलात् कौतुकात्, कर्णोत्तंसः कर्णभूषणं, यो यवाङ्कुरः यवप्ररोहः तं, करतले पाणौ, कृत्वा गृहीत्वेत्यर्थः, मिथः परस्परं, हसित्वा हास्यं कृत्वा, संहूतः आकारितः, बहुभिराहूत इत्यर्थः, "हूतिराकारणाऽऽह्वानं संहूतिर्बहुभिः कृता" इत्यमरः; अत एव ग्रासस्य कवलस्य, भोजनस्य इत्यर्थः, आर्त्या पीड़या, भक्ष्याभावजनितक्लेशेनेत्यर्थः, बुभुक्षयेति यावत्, क्षुभितः व्याकुलः, चञ्चलीभूत इति यावत्, अयम एषः, अङ्कहरिणः चन्द्रस्य क्रोडवर्त्ती मृगः, अजस्रम् अविरतं, घटनाया योजनायाः, चन्द्रेण सह संयोगकारणीभूताया बन्धनरज्ज्वा इति भावः, उद्घाटेन उद्घाटनेन, बन्धनमोचनार्थं चालनेन इति यावत्, श्लथं शिथिलं यथा तथा,

सुग्रीवः ।—

रोमन्थप्रचलौष्ठसम्पुटसुखासीनश्चिरं कौतुकात्
दृष्टा सिद्धवधूभिरङ्कहरिणस्तालैरथोत्त्रासितः ।
मा भाङ्क्षीदनुमासनव्यघटनानिःसन्धिबन्धं वपुः
शीतांशोः क्षुभितस्तु शल्यवदयं दुःखाय वर्त्तिष्यते ॥ ६४ ॥

---

स्वर्गस्थितां विद्यमानाम्, इन्दुमयीं चान्द्रीमित्यर्थः, कलाकन्थां कलारूपां कन्थां चन्द्र-स्वरूपां भित्तिं, घटनाऽऽधारभूतामिति यावत्, "कन्था मन्मथभित्तौ स्यात् तथा प्रावरणान्तरे" इति मेदिनी ; किं किं कुत्सितां, शिथिलत्वात् विकृतामित्यर्थः, "किं कुत्सायां वितर्के च निषेध-प्रश्नयोरपि" इति मेदिनी, कुर्वीत ? विदधीत ? अपि तु शशाङ्करङ्गचपलत्वात् निरन्तरं विपर्य्यस्तां कुर्वीतेत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ६३ ॥

रोमन्थेति ।—चिरं दीर्घकालं, रोमन्थेन उद्गीर्य्य चर्वणेन, प्रचलं चञ्चलं, यत् ओष्ठ-सम्पुटं पुटाकारौष्ठद्वयं, तेन तद्यथा तथा इति वा, सुखासीनः, रोमन्थावस्थायां निमीलितनेत्रं निश्चलमवस्थित इत्यर्थः, अथानन्तरं, सिद्धवधूभिः सिद्धानां देवयोनि-विशेषाणां, वधूभिः अङ्गनाभिः, दृष्टा आलोक्य, तादृशं सुखावस्थितमिति शेषः, कौतुकात् नर्मणः, परिहासेच्छया इत्यर्थः, "कौतुकं त्वभिलाषे स्यादुत्सवे नर्म-हर्षयोः" इति मेदिनी, तालैः करतलशब्दविशेषैः, उत्त्रासितः भीषितः, अयम् एषः, अङ्कहरिणः अङ्कवर्त्ती मृगः, अनुमासं प्रतिमासं, नव्यघटनया नूतनभावेन योजनया, प्रतिमासं नूतनः चयः, ततश्च नूतना वृद्धिरिति नवीननिर्माणेन इत्यर्थः, निःसन्धिः सन्धिशून्यः, नीरन्ध्र इत्यर्थः, बन्धः स्थितिः यस्य तथोक्तं, यद्वा—नव्यघटनायाः नूतनयोजनायाः, चन्द्रस्य प्रतिमासं क्षय-वृद्धिभावात् संयोगकारणीभूतायाः बन्धनरज्ज्वाः, नूतनत्वात् इति भावः, निःसन्धिः रन्ध्रशून्यः, सुदृढ इति यावत्, बन्धः बन्धनं यत्र तादृशं, शीतांशोः चन्द्रस्य, वपुः शरीरं, मा भाङ्क्षीत् भग्नं न करोतु, बन्धनच्छेदनेन चन्द्रस्य विकृतिं कर्त्तुं न शक्नुयादित्यर्थः, तु किन्तु, क्षुभितः व्याकुलः सन्, बन्धनच्छेदनाक्षमः अनवरत-क्लेशया चञ्चलीभूतः सन् इत्यर्थः, शल्यवत् हृदयाविद्धशल्यमिव, दुःखाय क्लेशाय, वर्त्तिष्यते भविष्यति। वर्त्तिष्यते इति वर्त्तमाने भविष्यदुपचारः। शार्दूलविक्रीडितं वृत्तम् ॥ ६४ ॥

अपि च—

एतस्य कलामेकाममृतमयूखस्य पार्वतीरमणः।
वर्णावलिमिव वहति प्रतिमासं घट्यमानस्य ॥ ६५ ॥

रामः। (सादरं प्रणम्य)।—

त्वं गीर्वाणगणाय नित्यममृतस्रावं भवद्दीधिति-
र्धात्रीकर्म च वीरुधां विदधती धत्ते जगज्जीवितम्।
सोम! त्वामभिधाय मूर्द्धनि भवेत् कः कालकूटं गिलन्
कण्ठे तच्छलकालपाशवलयालीढोऽपि मृत्युञ्जयः? ॥ ६६ ॥

(सीतां प्रति)—

नेत्राणां मधुपर्कवत्समुदधेः सर्वाङ्गमेदस्करः
शृङ्गारस्य रसायनं मखभुजां पीयूषगण्डापतिः।

---

एतस्येति।—पार्वतीरमणः शम्भुः, प्रतिमासं मासि मासि, घट्यमानस्य नूतनी-क्रियमाणस्येत्यर्थः, एतस्य उपरि वर्तमानस्य, अमृतमयूखस्य सुधाकरस्य, चन्द्रस्य इत्यर्थः, एकां कलां षोडशभागैकभागं, वर्णावलीमिव यावतो वारान् घटितोऽयं तावदक्षरपङ्क्तिमिवेत्यर्थः, वहति धारयति। आर्या वृत्तम् ॥ ६५ ॥

त्वमिति।—सोम हे चन्द्र! त्वं गीर्वाणगणाय देवगणाय, देवगणवृद्ध्यर्थमिति भावः, नित्यं सततम्, अमृतस्रावम् अमृतरूपं स्रावहेतुं द्रव्यमित्यर्थः, धत्ते इति शेषः, भवतः तव, दीधितिः मयूखः, वीरुधां लतानां, वृक्षा—विटपानां, वृक्षाणामित्यर्थः, "वीरुध् लता-विटपयोः स्त्रियाम्" इति मेदिनी; धात्री उपमाता, तस्याः कर्म पोषणरूपं, विदधती कुर्वाणा सती, जगतां जङ्गमानां, जीवानामित्यर्थः, "जगत् स्यात् विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु" इति मेदिनी; जीवितं प्राणान्, धत्ते परिपालयति, रक्षतीत्यर्थः, चन्द्रमण्डलनिःसृतामृतेन वृक्ष-गुल्मादयः पुष्टिं लभमानाः यथेष्टं शस्यं प्रसुवते, तच्छस्यभक्षणेन प्राणिनो जीवन्तीति चन्द्रदीधितेः जगज्जीवनधारकत्वं बोद्धव्यं, त्वां मूर्द्धनि शिरसि, अभिधाय निहितमकृत्वा, न संस्थाप्येत्यर्थः, कालकूटं हलाहलं, गिलन् भक्षयन्, कण्ठे गलदेशे, तच्छलेन कालकूटव्याजेन, कालपाशवलयालीढः यमस्य बन्धनरज्जुवेष्टनेन व्याप्तः अपि, कः को जनः, मृत्युञ्जयः मृत्युविजयी, भवेत्? न कोऽपीत्यर्थः; यस्मात् शङ्करस्त्वां मूर्द्धि धृतवान्, अत एव स कालकूटभक्षणेनापि न मृतः इति तात्पर्यम्। शार्दूलविक्रीडितं वृत्तम् ॥ ६६ ॥

नेत्राणामिति।—नेत्राणां नयनानां, मधुपर्कः दधि-घृत-मधु-शर्करोदकमध्युतं द्रव्यं,

देवः किं स्तुमहे महेश्वरशिरोनेपथ्यरत्नाङ्कुरः
क्षीरोदार्णवशुक्तिमौक्तिकमयं दाक्षायणीनायकः ? ॥ ६७ ॥

सीता । (स्वगतम्) । अज्जउत्त ! समाणकुल-सील-रूव-जोव्वणाणं वि सवत्तीणं सीसे (फ) दिण्णो धण्णाए दक्खगोत्त-धवलाए रोहिणीए (ब) चलणो, जेण रोहिणीरमणो ज्जेव्व भअवं चंदो सुणीअदि । *

---

* आर्यपुत्र ! समानकुल-शील-रूप-यौवनानामपि सपत्नीनां शीर्षे दत्तो धन्यया दक्षगोत्रधवलया रोहिण्या चरणः, येन रोहिणीरमण एव भगवांश्चन्द्रः श्रूयते ।

---

तस्य सत्र यज्ञः, "सत्रम्" इति प्रसिद्धं भोजनस्थानमिति भावः, यद्वा—सत्रं सदादानं, "सदाव्रत" इति "दानसत्र" इति वा भाषया प्रसिद्धमित्यर्थः, अतीवानन्ददायकत्वादिति भावः, "सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च" इत्यमरः; उदधेः समुद्रस्य, सर्वाङ्गेषु सर्वावयवेषु, मेदस्करः मेदोवृद्धिकरः, स्फीतिजनक इत्यर्थः, चन्द्रोदयेनास्य वर्द्धनादिति भावः, शृङ्गारस्य तदाख्यरसविशेषस्य, रसायनं पुष्टिकर औषधविशेषः, कामोद्दीपकत्वादिति भावः, मखभुजां देवानां, पीयूषस्य अमृतस्य, गञ्जापतिः गृहाध्यक्षः, यद्यपि "गञ्जा स्यान्मदिरागृहम्" इत्यमरोक्तेः गञ्जा-शब्दस्य मदिरागृह एव मुख्यत्वं, तथाऽपि लक्षणयाऽत्र गृहमात्रे प्रयोगः; अथवा—गञ्जा खनिः, तस्याः पतिः प्रभुः, "गञ्जा खनौ सुरागेहे" इति मेदिनी; महेश्वरस्य हरस्य, शिरोनेपथ्यं शिरोभूषणं तस्य, यद्वा—शिरोनेपथ्ये मस्तकप्रसाधने, अलङ्कारधारणादिना मस्तकस्य शोभासम्पादने इत्यर्थः, "आकल्प-वेशौ नेपथ्यं प्रतिकर्म प्रसाधनम्" इत्यमरः, यद्वा—शिरोनेपथ्यं मस्तकालङ्कारः, "नेपथ्य स्यादलङ्कारे रङ्गभूम्यां नपुंसकम्" इति मेदिनी; तस्य रत्नाङ्कुरः मणिप्ररोहः, समुज्ज्वलहीरकबिन्दुरित्यर्थः, क्षीरोदार्णवः क्षीरसागरः एव, शुक्तिः मुक्तास्फोटः, मुक्तोत्पत्तिस्थानमित्यर्थः, तस्याः मौक्तिकं मुक्ताफलं, दाक्षायणीनां दक्षकन्यानाम् अश्विनीप्रभृतीनां सप्तविंशतितारकाणां, "दाक्षायण्योऽश्विनीत्यादितारा:" इत्यमरः; नायकः पतिः, अयं देवश्चन्द्रः, दृश्यते इति शेषः, किं स्तुमहे ? कथमेनं स्तोतुं शक्नुमः ? न कथमपीत्यर्थः, अपरिमितगुणशालित्वात् स्तोतुमशक्य इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ६७ ॥

(फ) सपत्नीनाम् एकपतिकानाम् अश्विनीप्रभृतीनाम् । शीर्षे शिरसि ।

(ब) धन्यया श्लाघ्यया, सुभगया इति यावत् । दक्षगोत्रधवलया दक्षस्य

राम:। (विहस्य)। अयि जानकि!—

प्रियोपभोगतुल्येऽपि ताराणां सप्तविंशतेः।
धत्ते किमपि सौभाग्यमञ्जरीमिह रोहिणी ॥ १८ ॥

(अग्रे च रूपयन्)।—

दलितकुमुदकोषोदञ्चदूष्मोपचार-
क्षणशमितचकोरीचन्द्रिकापानजाड्याः।
अभिसरमृगाक्षीमूकदूत्यः स्वदन्ते
शशिमणिमकरन्दोत्कन्दलाश्चन्द्रभासः ॥ १९ ॥

---

दक्षप्रजापतेः, गोत्रं कुलं, तत्र भवा सुन्दरी तया, "भवतः सुन्दरेऽनघे" इति विश्वः। रोहिण्या अश्विन्यादिसप्तविंशतितारासु चतुर्थ्या तारया।

प्रियेति।—इह जगति, रोहिणी तन्नाम्नी चन्द्रकान्ता, सप्तविंशतेः सप्तविंशति-सङ्ख्याकानां, "विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येय-सङ्ख्ययोः" इत्यमरादेकत्वम्; ताराणां नक्षत्राणां, चन्द्रभार्य्याणामिति यावत्, प्रियेण भर्त्रा, उपभोगः सम्भोगः, तस्य तुल्येऽपि साम्येऽपीत्यर्थः, सर्वासु समभावेन सम्भोगेऽपीति भावः, किमपि अनिर्वचनीय-वैलक्षण्यमिति यावत्, सौभाग्यं प्रियवाल्लभ्यं, तस्य मञ्जरीं व्याप्तिमिति भावः, यद्वा—मञ्जरीं तिलकविशेषं, सौभाग्यमेव मञ्जरीं मौक्तिकमिति वा, सौभाग्यरूपकल्पद्रुमस्य-वल्लरीमित्यर्थः, "मञ्जरी तिलकद्रुममुक्तयोर्वल्लरी द्वयोः" इति मेदिनी; धत्ते धारयति। अनुष्टुप् वृत्तम् ॥ १८ ॥

दलितेति।—दलितात् विकसितात्, कुमुदकोषात् कैरवमध्यात्, उदञ्चताम् उद्गच्छताम् ऊष्मणां सन्तापानां, दिवाभागे लब्धानां सूर्य्यातपानामित्यर्थः, उपचारेण व्यवहारेण, प्रयोगेणेत्यर्थः, सन्तापवितरणेनेति यावत्, क्षणात् अल्पेनैव कालेन, शमितं शान्तिं नीतं, चकोरीणां पक्षिविशेषाणां, चन्द्रिकापानेन कौमुदीपानेन, जाड्यं जडता, शैत्यमित्यर्थः याभिः तादृश्यः, अभिसरन्तीनाम् अभिसारिणीनां, मृगाक्षीणां हरिणनयनानां कामिनीनां, मूकाः वाक्यरहिताः, दूत्यः नायकसंयोग-विधायिन्य दूतीनां वाक्चातुर्य्यस्यैव उभयोः नायक-नायिकयोः सम्मेलनकारित्वम्, आसान्तु विना वाक्यं सम्मेलनकारित्वमिति दूतीव्यपदेशः, शशिमणीनां चन्द्र-कान्तोपलानां, मकरन्देन अमृतरसेनेव, चन्द्रकान्तमणिनिःसृतजलेन इत्यर्थः,

अपि च—

तैः सर्वङ्गीभवदभिसृतानेत्रसिद्धाञ्जनैर्वा
नीरन्ध्रैर्वा त्रिभुवनदृशामन्धपट्टैस्तमोभिः।
व्याप्तं पृथ्वीवलयमखिलं क्षालयन्नुच्छलद्भि-
र्ज्योत्स्नाजालैरयमुदयते शर्वरीसार्वभौमः ॥ ७० ॥

अपि च, जगतामनुग्रहाय—

उदयति कलमन्द्रैः कण्ठतालैरलीनां
कुमुदमुकुलकेषु व्यञ्जयन्नङ्गहारान्।
मदमुखरचकोरीतोषकर्मान्तिकोऽयं
तुहिनरुचिरधामा(ऽ)दक्षिणं लोकचक्षुः ॥ ७१ ॥

---

ऽप्युपरागे नवाङ्कुरे" इति मेदिनी; चन्द्रभासः इन्दुकिरणाः, खदन्ते रोचन्ते, प्रीतिं जनयन्तीति यावत्। मालिनी वृत्तम् ॥ ६९ ॥

तैरिति।—अयम् एषः, शर्वरीसार्वभौमः रजनीचक्रवर्त्ती, निशानाथः इति यावत्, सर्वङ्गीभवन्तीनां निखिलजगद्व्यापारवेदिनीनाम्, अखिलकामकलाऽभिज्ञानेन चतुराणामिति भावः, अभिसृतानाम् अभिसारिणीनां, "कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिका" इति लक्षणोक्तानामित्यर्थः, नेत्रसिद्धाञ्जनैर्वा नयनयोः सिद्धाञ्जनाख्याञ्जनरूपैर्वा, सिद्धाञ्जनं नाम नेत्रौषधविशेषः, तदक्तनेत्राणाम् अन्धकारेऽपि दृष्टिर्ज्वलतीति प्रसिद्धम्; नीरन्ध्रैर्वा सान्द्रैर्वा, प्रगाढैर्वा इत्यर्थः, वा-इयमुत्प्रेक्षायाम्, त्रिभुवनस्य त्रिलोक्याः, लोकत्रयवासिनामित्यर्थः, दृशां नेत्राणाम्, अन्धपट्टैः अन्धीकरणरूपाच्छादनैरित्यर्थः, तैः प्रसिद्धैः, तमोभिः तिमिरैः, व्याप्तं पूर्णम्, अखिलं समस्तं, पृथ्वीवलयं भूमण्डलम्, उच्छलद्भिः विकासं गच्छद्भिः ज्योत्स्नाजालैः कौमुदीधाराभिः, क्षालयन् अभिषिञ्चन्, विशोधयन् इत्यर्थः, प्रकाशयन् इति यावत्, उदयते उद्गच्छति। मन्दाक्रान्ता वृत्तम् ॥ ७० ॥

उदयतीति।—मदमुखराणां मदेन हर्षेण, चन्द्रिकापानजनितानन्देनेत्यर्थः, मुखराणाम् अबद्धमुखानाम्, उच्चैः कूजन्तीनामित्यर्थः, चकोरीणां पक्षिविशेषाणां, तोष एव प्रीतिसम्पादनमेव, कर्मान्तः कर्मस्थानम् अस्यास्तीति तथोक्तः, चकोरीणां सन्तोषक इत्यर्थः, दक्षिणं दाक्षिण्यजनकं, प्रीतिप्रदमिति भावः, लोकानां जगतां,

इदं चास्य—

> प्राचीनाचलचुम्बिचन्द्रमणिभिर्निर्व्यूढपाद्यं निजै-
> र्निर्यासैरुडुभिर्निजेन वपुषा दत्तार्घलाजाञ्जलि।
> अन्तःप्रौढकलङ्कतुच्छमभितः सान्द्रं परिस्तीर्यते
> बिम्बादङ्कुरभग्ननैशिकतमःसन्दोहमिन्दोर्महः ॥ ७२ ॥

---

चक्षुः नेत्रभूतः, यद्वा—"तुहिनरुचिरवामाऽऽद्यचक्षुः" इति पाठः, तथाहि चरदक्षिणं वामं, लोकचक्षुः लोकस्य जगतः, जगदात्मनो ब्रह्मण इत्यर्थः, चक्षुः नेत्रं, परमात्मनो दक्षिणचक्षुष्ट्वेन सूर्यस्य, वामचक्षुष्ट्वेन चन्द्रस्य च श्रुतत्वात्, अयम् एकः, तुहिनवत् तुषारवत्, शीतं वा शुभ्रं वा इति, सन्तापनिवारकं वा अत्युज्ज्वलं वा इति वा भावः, रुचिरं मनोज्ञं, धाम रश्मिर्यस्य स तादृशः, शीतकिरणो वा शुभ्रकिरणो वा चन्द्रः, अलीनां भ्रमराणां, कला मधुरास्फुटाः, मन्द्राः गम्भीराश्च तैः, कण्ठतालैः कण्ठा एव तालाः सङ्गीतक्रियामानानि तैः, यद्वा—कण्ठस्य कण्ठध्वनेरित्यर्थः, तालैः गीतकालक्रियाविशेषैः, कुमुदानां कैरवाणां, मुकुलकेषु कुड्मलसमूहेषु, ईषद्विकाशोन्मुखकोरकसमूहेषु इत्यर्थः, अङ्गहारान् अङ्गविक्षेपान्, अङ्गचालनानीत्यर्थः, नृत्यविशेष इति यावत्; "अङ्गहारोऽङ्गविक्षेपः" इत्यमरः; व्यञ्जयन् प्रकटयन् सन्, उदयति उद्गच्छति। मालिनी वृत्तम् ॥ ७१ ॥

प्राचीनेति।—प्राचीनाचलं पूर्वपर्वतं, चुम्बन्ति स्पृशन्तीति तथोक्ताः, पूर्वाचलस्थिता इत्यर्थः, ये चन्द्रमणयः चन्द्रकान्तोपलाः तैः, चन्द्रकान्तमणिनिःसृतजलैरित्यर्थः, निर्व्यूढं सम्पादितं, दत्तमित्यर्थः, पाद्यं पादोदकं यस्मै तत् तादृशं, निजैः स्वीयैः, निर्यासैः सारभूतैः, उडुभिः नक्षत्रैः, निजेन स्वीयेन, वपुषा अङ्गेन, अर्घपात्ररूपेणेति यावत्, दत्तः विहितः, अर्घः अर्घस्वरूपः, लाजाञ्जलिः यस्मै तथोक्तम्, उडूनां शुभ्रत्वेन लाजसाम्यम्, अन्तःप्रौढेन अभ्यन्तरस्थितेन उत्कटेन, कलङ्केन अङ्करूपेण मृगेण, तुच्छं हीनम्, अङ्कुरे एव उद्गममात्र एव, प्रकाशारम्भे एवेत्यर्थः, भग्नः विनाशित इत्यर्थः, नैशिकः निशाभवः, तमसाम् अन्धकाराणां, सन्दोहः समूहः येन तथाभूतं, सान्द्रं निरन्तरं, परिपूर्णमित्यर्थः, इन्दोश्चन्द्रस्य, बिम्बात् मण्डलात्, प्रसृतमिति शेषः, महः तेजः, अभितः समन्तात्, परिस्तीर्यते व्याप्नोति। शार्दूलविक्रीडितं वृत्तम् ॥ ७२ ॥

एतच्च—

मृगराजकरजभङ्गुरकिंशुककलिकावतंसिकाः सुदृशः ।
भयसङ्कुचदङ्कहरिणबहलोज्ज्वलमिन्दुमीक्षन्ते ॥ ७२ ॥

विभीषणः ।—

इन्दोरेककलाया रुद्रेणोद्धृत्य मूर्द्धनि धृतायाः ।
स्थानमिव तुच्छमेतत् कलङ्करूपेण परिणमते ॥ ७४ ॥

(विहस्य रामं प्रति) ।—

रोदसीकूपमण्डूकः कियदेष प्रकाशते ।
चन्द्रमा यदयं देव ! त्वत्कीर्त्तेः प्रतिगर्जति ? ॥ ७५ ॥

---

मृगराजेति ।—सुदृशः सुलोचनाः, रमण्यः इति यावत्, मृगराजस्य सिंहस्य, करजवत् नखरवत्, भङ्गुरा कुटिला, किंशुककलिका पलाशकोरकः, अवतंसः कर्णभूषणं यासां तथाभूताः सत्यः, भयेन त्रासेन, पलाशकलिकायां सिंहनखरभ्रमजनितेनेति भावः, सङ्कुचन् आकुञ्चन्, देहसङ्कोचमापद्यमान इत्यर्थः, यः अङ्कहरिणः क्रोडकुरङ्गः, तेन हेतुना बहलोज्ज्वलम् अत्यन्तमुज्ज्वलं, हरिणाङ्कप्रसारेण अधिकांशस्य प्रच्छादनविरहादिति भावः, इन्दुं चन्द्रम्, ईक्षन्ते पश्यन्ति । आर्य्या वृत्तम् ॥ ७२ ॥

इन्दोरिति ।—रुद्रेण हरेण, उद्धृत्य आहृत्य, षोडशकलाभ्यः आकृष्येत्यर्थः, मूर्द्धनि शिरसि, धृतायाः गृहीतायाः, इन्दोश्चन्द्रस्य, एकस्याः एकमात्रायाः, कलायाः षोडशांशभागस्य, स्थानमिव प्रदेश इव, तुच्छं शून्यम्, एतत् हरिणाङ्कस्थानमित्यर्थः, कलङ्करूपेण लाञ्छनरूपेण, परिणमते पर्य्यवस्यति । आर्य्या वृत्तम् ॥ ७४ ॥

रोदसी इति ।—हे देव ! रोदसी एव द्यावा-पृथिव्योर्मध्यमेव, "रोदसी रोदसी चापि दिवि भूमौ पृथक् पृथक् । सह-प्रयोगेऽप्यनयोः रोदः स्यादपि रोदसी ॥" इति विश्वः ; कूपः सुगभीरजलाधारविशेषः, तस्य मण्डूकः भेकस्वरूपः, कूपमण्डूकशब्देन एतदायाति यत्, द्यावा-पृथिव्योः किञ्चिन्मात्रमेव एष जानाति प्रकाशयति च, न रोदस्योरन्यत् किमपीति ; एष अयं, चन्द्रमाः चन्द्रः, कियत् किञ्चित् परिमाणं यथा तथा, प्रकाशते प्रकटीभवति, यत् यस्मात्, अयम् एष चन्द्रः, तव कीर्त्तेः यशसः, प्रतिगर्जति स्पर्द्धते, तव कीर्त्तिर्महत्त्वमेतस्य प्रकाशनमिति भावः ; यद्वा—रोदसीकूपमण्डूक एष कियत् किं परिमाणं, प्रकाशते ? प्रकाशयति ? इत्यर्थः, अन्तर्भूत-

सीता। (सस्मितम्)। जाणामि अज्जउत्तस्स कित्तिकंतीहिं पड़िप्पद्धं कदुअ पराजिदेण संपदि भअवदा हरिणंकेण कलंकसंघदी विढ़त्ता *(भ)।

(सर्वे हसन्ति। रामः लज्जते)।

सीता। (रामं प्रति)।—

सारंभं सिरिवच्छलंछणभुआपज्जत्थमंथाअल-
क्खोभोच्छलिदटुद्धसिंधुलहरीगब्भच्छईसच्छअं।
को गायेदि ण दे रहूण पहुणो अंधारपक्खंतरा-
संतुट्टंतमिअंकमंडलमलक्कुद्दामगोरं जसं? † ॥ ७६ ॥

* जानाम्यार्य्यपुत्रस्य कीर्त्तिकान्तिभिः प्रतिस्पर्द्धां कृत्वा पराजितेन सम्प्रति भगवता हरिणाङ्केन कलङ्कसंहतिरर्जिता।

† सारम्भं श्रीवत्सलाञ्छनभुजापर्य्यस्तमन्थाचल-
क्षोभोच्छलितदुग्धसिन्धुलहरीगर्भच्छविसच्छमम्।
को गायति न ते रघूणां प्रभोरन्धकारपक्षान्तरा-
संत्रुट्यन्मृगाङ्कमण्डलमलक्षोद्दामगौरं यशः? ॥ ७६ ॥

भिन्नक्रमोऽयं प्रयोगः, यत यस्मात् प्रकाशात्, त्वत्कीर्त्तेः प्रतिगर्जति? स्पर्द्धते? केवलं द्यावा-पृथिव्योः विभिन्नभावप्रकाशकस्य अस्य चतुर्दशभुवनमविततयशसा त्वया सह स्पर्द्धां हास्यजनिका इति भावः। अनुष्टुप् वृत्तम् ॥ ७५ ॥

(भ) कीर्त्तिकान्तिभिः यशःप्रभाभिः। प्रतिस्पर्द्धां संघर्षं, प्रतिजिगीषामित्यर्थः। हरिणाङ्केन मृगलाञ्छनेन, चन्द्रेण इत्यर्थः। कलङ्कसंहतिः पङ्कसमूहः अपवादसमूहश्च, "कलङ्कोऽङ्केऽपवादे च कालायसमलेऽपि च" इति मेदिनी। अर्जिता अधिगता।

सारम्भमिति।—आरम्भेण उपक्रमेण सहितं सारम्भं प्रथममेवेति यावत्, परतः कथम्भूतं वर्द्धिष्यते तन्न जाने इति भावः, श्रीवत्सः श्रीयुक्तो वत्सः महत्त्वलक्षणं श्वेतरोमावर्त्तविशेषः, लाञ्छनं चिह्नं यस्य सः श्रीवत्सलाञ्छनो विष्णुः, "विष्णुर्नारायणः कृष्णो···विधुः श्रीवत्सलाञ्छनः" इत्यमरः; तस्य भुजाभिः बाहुभिः, चतुर्भिरिति भावः, पर्य्यस्तः निक्षिप्तः, यः मन्थाचलः मन्दरपर्वतः, तस्य क्षोभेण विलोड़नेन, उच्छलितस्य आलोड़ितस्य, उच्छ्वसितस्य वा, दुग्धसिन्धोः क्षीरोदस्य, लहरीणां तरङ्गाणां,

राम:। (सहर्षस्मितम्)। अयि प्रिये! प्रियवादिनि!—

चन्द्रलोकादपि परं पदमारोपयन्ति माम्।
अमूरमृतबिन्दूनामनुप्रासास्तवोक्तय:॥ ७७॥

बिभीषण:। (सानुरागम्)।—

अद्योर्वीतलमूलघर्षणवशादुन्मृष्टचूडामणि-
श्रेणिश्रीपरिपीतपीवरतम:पूरे पुरे भोगिनाम्।
कर्णाभावनिरस्तकुण्डलरवव्यासङ्गमाधुन्वता
मूर्द्ध्नः पन्नगपुङ्गवेन सुभगं त्वत्कीर्त्तिराकर्ण्यते॥ ७८॥

---

गर्भस्य मध्यस्य, या छवि: कान्ति:, तत्सदृशं तत्तुल्यम, अतिशुभ्रमित्यर्थ:, अन्धकारपक्षस्य कृष्णपक्षस्य, अन्तरा मध्ये, संक्षुभ्यत् क्षयं गच्छत, यत् मृगाङ्कमण्डलं चन्द्रबिम्बं, तस्य खण्डवत् छेद इव, उद्दामगौरम् अतिधवलं, रघूणां रघुवंशीयानां, प्रभो: अधिपते:, रघुश्रेष्ठस्येत्यर्थ:, ते तव, यश: कीर्त्तिं, क: को जन:, न गायति? न कीर्त्तयति? न उच्चै: घोषयति? इत्यर्थ:, अपि तु सर्व एव गायन्तीति भाव:। शार्दूलविक्रीडितं वृत्तम्॥ ७६॥

चन्द्रलोकादपीति।—अमृतबिन्दूनां सुधाकणानाम्, अनुप्रासा: अनुरूपा: इत्यर्थ:, अनुप्रासवत् श्रुतिमधुरा इत्यर्थो वा, अमू: एता:, तव उक्तय: वचनानि, मां चन्द्रलोकात् अपि परम् ऊर्द्ध्वं श्रेष्ठं वा, पदम् स्थानम्, आरोपयन्ति आरोहयन्ति। अनुष्टुप् वृत्तम्॥ ७७॥

अद्येति।—अद्य इदानीम्, उर्वीतलस्य पृथ्वीतलस्य, मूले अधोदेशे, यत् घर्षणं निष्पेषणं, तद्वशात् तद्धेतो:, उन्मृष्टाना परिशुद्धानाम्, उज्ज्वलीभूतानामिति यावत्, चूडामणिश्रेणीना शिरोरत्नसमूहाना, श्रिया प्रभया, परिपीत: कवलित:, विनाशित: इति यावत्, पीवर: स्थूल:, सान्द्र इति यावत्, तमसाम् अन्धकाराणां, पूर: निचय: यस्य यत्र वा तथाभूते, भोगिनां भुजङ्गानां, पुरे नगरे, पाताले इत्यर्थ:, पन्नगपुङ्गवेन नागराजेन, वासुकिनेत्यर्थ:, कर्णाभावात् श्रवणेन्द्रियविरहात्, चक्षु:-श्रवस्त्वेति भाव:, निरस्त: निवृत्त:, कुण्डलाना कर्णभूषणविशेषाणां, रवस्य ध्वने:, कुण्डलाना परस्परसम्मेलनजनिताव्यक्तशब्दस्येत्यर्थ:, व्यासङ्ग: प्रत्यूह: यत्र तत् यथा तथा, मूर्द्ध्न: शिरांसि, सहस्रमिति शेष:, आधुन्वता कम्पयता सता, तव कीर्त्ति: यश:, सुभगं सुष्ठु यथा तथा, आकर्ण्यते श्रूयते, कर्णाभावेन कुण्डलपरिधानाभाव:

( विहस्य )।—

भोगीन्द्रः प्रमदोत्तरङ्गमुरगीसङ्गीतगोष्ठीषु ते
कीर्त्तिं देव ! शृणोतु विंशतिशती यच्चक्षुषां वर्त्तते ।
रक्ताभिः सुरसुन्दरीभिरभितो गीतां तु कर्णद्वयो-
दुःखः श्रोष्यति नाम किं स हि सहस्राक्षो न चक्षुःश्रवाः ? ॥७९॥

रामः । ( विलक्षस्मितेन विभीषणसूक्तमनुगृह्य (म) चन्द्रं सीतामुखं च पर्याय-
मालोक्य स्वगतम् । )—

आरब्धे दयितामुखप्रतिसमे निर्मातुमस्मिन्नपि
व्यक्तं जन्मसमानकालमिलितामंशुच्छटां वर्षति ।

---

मदान्दोलनजनितशब्दाभावेन सुखेन कीर्त्तिश्रवणञ्चेति बोध्यम् । शार्दूलविक्रीडितं
वृत्तम् ॥ ७८ ॥

भोगीन्द्र इति ।—हे देव ! भोगीन्द्रः सर्पराजः, वासुकिरित्यर्थः, उरगीणां
भुजङ्गीनां, सङ्गीतगोष्ठीषु गानसभासु, प्रमदेन हर्षेण, उत्तरङ्गम् उच्छ्वसितम्, उद्गत-
कौतूहलं यथा तथा इत्यर्थः, ते तव, कीर्त्तिं यशः, शृणोतु आकर्णयतु, श्रोतुं पारयतु
इत्यर्थः, यत् यतः, चक्षुषां नेत्राणां, विंशतिशती सहस्रद्वयमित्यर्थः, वर्त्तते विद्यते,
तस्येति शेषः, सहस्रफणत्वेन चक्षुषां सहस्रद्वयं, चक्षुःश्रवस्त्वाच्च श्रोत्राणामपि सहस्रद्वय-
मिति तस्य तव चरितश्रवणयोग्यता अस्तीति भावः, तु किन्तु, सहस्राक्षः दशशत-
लोचनः, इन्द्र इत्यर्थः, कर्णद्वयी कर्णयोर्द्वयी, श्रवणद्वयमात्रमित्यर्थः, तया दुःखः
दुःखितः, कर्णद्वयेन श्रवणयोग्याया: गाथायाः कर्णद्वयमात्रेण सम्यक् श्रवणा-
सामर्थ्यादिति भावः, अत एव अभितः समन्तात्, रक्ताभिः रक्तकण्ठीभिः, मधुर-
कण्ठीभिरित्यर्थः, यद्वा—रक्ताभिः त्वदनुरागिणीभिः, सुरसुन्दरीभिः देवाङ्गनाभिः,
गीता कीर्त्तिता, तत्कीर्त्तिमिति शेषः, किं नाम कथं नाम, श्रोष्यति ? श्रोतुं शक्ष्यति ?
नैव श्रोतुं शक्ष्यतीत्यर्थः, हि यतः, सः सहस्राक्षः, न चक्षुःश्रवाः चक्षुरेव श्रवः
श्रवणेन्द्रियं यस्य स तथाभूतः । शार्दूलविक्रीडितं वृत्तम् ॥ ७९ ॥

(म) विलक्षस्मितेन सलज्जहास्येन, निजप्रशंसावाक्यश्रवणादिति भावः । विभीषण-
सूक्तिं विभीषणस्य शोभनवाक्यं, श्रुतिमधुरवचनमित्यर्थः, अनुगृह्य अभ्युपपद्य,
स्वीकृत्येत्यर्थः, स्तुत्वेति भावः ।

आरब्धे इति ।—दयितायाः प्रियायाः सीतायाः इत्यर्थः, मुखस्य आननस्य,

आत्मद्रोहिणि रोहिणीपरिवृढे पर्य्यङ्कपङ्केरुह-
सङ्कोचादतिदुःखितस्य न विधेस्तच्छिल्पमुन्मीलितम् ॥ ८० ॥

( सीतां प्रति )।—

अनेन रम्भोरु! भवन्मुखेन
तुषारभानोस्तुलया धृतस्य।
ऊनस्य नूनं परिपूरणाय
ताराः स्फुरन्ति प्रतिमानखण्डाः ॥ ८१ ॥

---

प्रतिसमे प्रतिरूपे, अस्मिन् परिदृश्यमाने, रोहिणीपरिवृढे रोहिणीपतौ, चन्द्रे इत्यर्थः, "स्वामी त्वीश्वरः पतिरीशिता। अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः॥" इत्यमरः; निर्मातुं स्रष्टुम्, आरब्धेऽपि प्रक्रान्तेऽपि, व्यक्तं स्फुटं यथा तथा, जन्मसमानकाले निर्माणसमकाले, निखिलां समस्तां, ब्रह्मणा चन्द्रदेहे योजितामिति यावत्, अंशुच्छटां किरणश्रेणीं, वर्षति विकीरति सति, पद्मोपरि इति भावः, पर्य्यङ्कस्य आसनभूतस्य, पङ्केरुहः पद्मस्य, सङ्कोचात् मुद्रणात्, जातमात्रचन्द्रकिरणस्पर्शेनेति भावः, अतिदुःखितस्य अतिशयेन दुःखावस्थितस्य, विधेः ब्रह्मणः, आत्मनः स्वस्य, विधातुरिति यावत्, द्रोहिणि अनिष्टकारिणि सति, स्वकिरणेन पद्मसङ्कोचकारित्वादिति भावः, तच्छिल्पं सीतामुखानुरूपचन्द्रनिर्माणकौशलमित्यर्थः, न उन्मीलितं न सम्यक् प्रकाशितं, न चेतसि स्फुरितमित्यर्थः। "तच्चित्रमुन्मीलितं" "तच्छिल्पमुन्मीलति" इति च पाठान्तरद्वयम्। शार्दूलविक्रीडितं वृत्तम् ॥ ८० ॥

अनेनेति।—रम्भोरु! हे कदलीकाण्ड इव सुवृत्तमसृणोरुशालिनि! अनेन परिदृश्यमानेन, भवत्याः तव, मुखेन आननेन सह, तुलया तोलनयन्त्रेण, धृतस्य गृहीतस्य, तुलितस्येत्यर्थः, किन्तु ऊनस्य हीनस्य, तुषारभानोः शीतकिरणस्य चन्द्रस्य, परिपूरणाय पूर्त्तिसम्पादनाय, न्यूनतां दूरीकृत्य समत्वानयनायेत्यर्थः, ताराः नक्षत्राणि, प्रतिमानखण्डाः क्षुद्रक्षुद्रप्रतिच्छायाः, प्रतिनिधयः इत्यर्थः, "प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया। प्रतिकृतिरर्च्चा पुंसि प्रतिनिधिः—" इत्यमरः; स्फुरन्ति दीप्यन्ते, नूनम् उत्प्रेक्षे। हिरण्यादेस्तुलनायां न्यूनस्य क्षुद्रपरिमाणेन पूरणं कृत्वा यथा समीकरणं, तथाऽत्रापीति भावः। उपजाति-वृत्तम् ॥ ८१ ॥

किञ्चान्यदपि—

गोत्रे साक्षादजनि भगवानेष यत् पद्मयोनिः
शय्योत्थायं यदखिलमहः प्रीणयन्ति द्विरेफान्।
एकाग्रां यद्दधति भगवत्युष्णभानौ च भक्तिं
तत् प्रापुस्ते सुतनु! वदनौपम्यमम्भोरुहाणि॥ ८२॥

सीता। (सेरावनतमुखी)। अज्जउत्त! कधं उण संपुसमंडल-मेरिसं चंदमवमण्णिअ कलामेत्तं भअवदा भूदणाहेण चूडामणी-किदं (य) आसी? *

रामः। (सप्रश्रयम्)। प्रिये जानकि! त्रयाणामपि जगता-मुपजीव्योऽयममृतदीधितिः, यदि पुनः समग्रमेनं (र)

---

* आर्य्यपुत्र! कथं पुनः सम्पूर्णमण्डलमीदृशं चन्द्रमवमत्य कलामात्रं भगवता भूतनाथेन चूडामणीकृतमासीत्?

---

गोत्रे इति।—सुतनु! हे सुन्दरि! यत् यतः, पद्ममेव कमलमेव, योनिः उद्भवस्थानं यस्य तथोक्तः, एषः प्रसिद्धः सः, भगवान् ऐश्वर्य्यसम्पन्नः ब्रह्मा, गोत्रे कुले, "सन्तति-र्गोत्रजनन-कुलान्यभिजनान्वयौ" इत्यमरः, पद्मानामिति शेषः, साक्षात् स्वयम्, अजनि उत्पन्नः, यत् यतः, शय्योत्थायं शय्याया उत्थाय उत्थाय, विकसित्वैवेति भावः, अखिलं समस्तम्, अहः दिनं व्याप्येत्यर्थः, द्विरेफान् भ्रमरान्, प्रीणयन्ति तोषयन्ति, यच्च यतश्च, भगवति षडैश्वर्य्यसम्पन्ने, उष्णभानौ उष्णकिरणे, सूर्य्ये इत्यर्थः, एकाग्राम् ऐकान्तिकीं, प्रगाढामित्यर्थः, भक्तिम् अनुरागं, दधति धारयन्ति, तत् तस्मात्, अम्भोरुहाणि पद्मानि, ते तव, वदनौपम्यं मुखसादृश्यं, प्रापुः लेभिरे, सगोत्रत्वात् विधातुरनुकम्पा परोपकारानुष्ठानं सूर्य्यभक्तिश्चेति त्रयं पद्मानां तव मुखसादृश्यलाभकारणमिति भावः। मन्दाक्रान्ता वृत्तम्॥ ८२॥

(य) अवमत्य अवगणय्य। कलामात्रम् एकखण्डमात्रम्। भूतनाथेन महेश्वरेण। चूडामणीकृतं शेखरीकृतं, शिरोभूषणीकृतमित्यर्थः।

(र) उपजीव्य. उपभोग्यः, जीवनकारणमिति भावः। अमृतदीधितिः सुधाकरः, चन्द्र इत्यर्थः। समग्रं सम्पूर्णमण्डलम्, एनम् अमृतदीधितिम्।

मौलिना पिनाकपाणिरधारयिष्यत्, अङ्ग ! शिवनिर्माल्यमनुप-
भोग्य एवायम् ( ख ) अभविष्यत्।

( सर्वे हसन्ति )।

रामः। किञ्च, भवत्याऽपि मासप्रमितो दृश्यते एवायम्—

पीयूषाश्रपणं जगत्त्रयदृशामालानलेखालवो
विश्वोन्माथहुताशनस्य ककुभामुद्घाटनी कुञ्चिका।
वीरेषु प्रथमा च पुष्पधनुषो रेखा मृगाक्षीमुख-
श्रीणाञ्च प्रतिराजवीजमधिकानन्दो नवश्चन्द्रमाः॥ ८१॥

---

( ख ) मौलिना चूडया, शिरसेति यावत्, "चूडा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः। पिनाकपाणिः महेश्वरः। अङ्गेत्यामन्त्रणे, अङ्ग ! भोः ! शिवनिर्माल्यं शिवस्य महेश्वरस्य, निर्माल्यम् उपभुक्त, त्यक्तपुष्पादीत्यर्थः, तत्स्वरूप इति यावत्, शिरसा धृत्वा उपभुक्तत्वादिति भावः, अनुपभोग्यः अन्येषामुपभोगानर्हः, "अग्राह्यं शिवनिर्माल्यम्" इत्यनेन शिवनिर्माल्यस्य उपभोगनिषेधात्। अयम् चन्द्रदाधितिश्चन्द्रः।

पीयूषेति।—नवः चन्द्रमाः नवोदितश्चन्द्रः, जगत्त्रयस्य त्रिभुवनस्य, भुवनत्रयवासिजनानामित्यर्थः, दृशां नयनानां, पीयूषाश्रपणम् अमृतस्थाली, अमृतवर्षणकारीत्यर्थो वा, आनन्ददायक इति यावत्, विश्वेषां भुवनानां, त्रैलोक्यनिवासिनामित्यर्थः, उन्माथः उन्मथनकर्ता, आलोडनकारीत्यर्थः, चित्तचाञ्चल्यजनक इति यावत्, काम इति भावः, स एव हुताशनः वह्निः, तस्य आलातम् उल्मुकम्, अङ्गारः इत्यर्थः, "अलातमुल्मुकम्" इत्यमरः, कोषादौ "अलात" इति प्रयोगात् "आलात" इति यत् कविना प्रयुक्तं, तत् छन्दोऽनुरोधात् इति मन्तव्यं, तस्य लेखाया राजीया, लवः कणः, बिन्दुरित्यर्थः, ककुभां दिशाम्, उद्घाट्यते अनयेति उद्घाटनी परिष्कारकारिणी, कुञ्चिका मार्जनीत्यर्थः, यद्वा—उद्घाटनी उन्मोचनी, प्रकाशकारिणीत्यर्थः, कुञ्चिका "चावि" इति ख्यातः यन्त्रविशेषः, वीरेषु शूरेषु मध्ये, पुष्पधनुषः कामस्य, प्रथमा आद्या, रेखा चिह्नविशेषः, जगति के के वीराः सन्तीति गणनायां काम एव सर्वप्रथमो वीर इति प्रकाशनार्थं प्रथमकल्पितः अङ्कनाकारचिह्नविशेष इति भावः, मृगाक्षीणां हरिणनयनानां सुन्दरीणां, याः मुखश्रियः आननशोभाः, तासां प्रतिराजः प्रतिपक्षो

सीता। (अनुमोदमाना)। अज्जउत्त! परिपुण्णा गुणिणो जहिं कहिं वि सोहंति, खीणा उण सीसमारुहंति त्ति (व) हर-जड़ाचंदो ज्जेव्व पढमं णिदंसणं * (श)।

रामः। (विहस्य)। देवि! महाकुलक्षत्रियसम्भवे! एव-मेतत्—

सेतूपक्रमसम्भ्रमाहृतगिरिप्रक्षेपवेगोच्छल-
न्निःशेषाम्बुपरिस्फुटोदरदरीगम्भीरिमा सागरः।
चक्रे गोष्पदवद्विलङ्घितवतोऽप्यन्तर्भयं मारुतेः
पूर्णत्वादतिरिच्यते हि महतस्तुच्छस्य दुर्लङ्घ्यता ॥ ८४ ॥

* आर्य्यपुत्र! परिपूर्णा गुणिनो यस्मिन् कस्मिन्नपि शोभन्ते, क्षीणाः पुनः शीर्षमारोहन्तीति हरजटाचन्द्र एव प्रथमं निदर्शनम्।

दाता, तस्य बीजं कारणम्, अत एव अधिकं यथा तथा, आनन्दयतीति अधिकानन्दो, दृश्यते इति गद्यस्थेनान्वयः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ८३ ॥

(व) परिपूर्णाः सम्पूर्णाः, महान्त इति यावत्, दीर्घा इति भावः। क्षीणाः अपूर्णाः, दुर्बला इत्यर्थः, अधमाः ह्रस्वा वा इति यावत्। शीर्षं शिरः। आरोहन्ति आरूढ़ा भवन्तीत्यर्थः, आश्रयन्तीति भावः।

(श) हरजटाचन्द्रः शङ्करस्य जटायामवस्थितः शशी। निदर्शनं दृष्टान्तः, क्षुद्राणाम् उपरिस्थितिं विना अदर्शनात् शोभाविरहः, पूर्णानान्तु सर्वत एव दृश्यत्वात् सर्वदैव शोभेति भावः।

सेत्विति।—सेतोः आलिः, नद्यादीनां पारगमनोपायविशेषस्येति यावत्, उपक्रमे प्रारम्भे, सम्भ्रमेण त्वरया, आहृतानाम् आनीतानां, गिरीणां पर्वतानां, प्रक्षेपात् निक्षेपात्, समुद्रजले इति भावः, यो वेगः तेन उच्छलन्ति उल्लङ्घन्ति, निक्षेपवेगात् आदौ उच्छलितानि भूत्वा चतुर्षु पार्श्वेषु दूरमपसरन्तीति भावः, निःशेषाणि समस्तानि, यानि अम्बूनि जलानि, तैः हेतुभिः परिस्फुटः सुव्यक्तः, उदरमेव अभ्यन्तर-मेवेति यावत्, दरी गुहा, तस्याः गम्भीरिमा गाम्भीर्य्यं, गभीरता इत्यर्थः यस्य तथाभूतः, सागरः समुद्रः, गोष्पदवत् गोः पदपरिमितजलाधारवत्, गोपदक्षुद्रगर्त्तरूप-जलाधारवदिति वा, विलङ्घितवतोऽपि उत्प्लुतवतोऽपि, उत्तीर्णवतोऽपीत्यर्थः, मारुते-

(नेपथ्ये)।

देव! त्वर्य्यतां त्वर्य्यताम्। सन्निधत्ते (ष) खलु भगवद्वशिष्ठगृहीतो मङ्गलाभिषेकमुहूर्त्तः (स)।

रामः। (आकर्ण्य)। कथम्, अयोध्यायाः प्रत्यावृत्तो मारुतिः (ह) अस्मांस्त्वरयति।

सीता। (सहर्षम्)। अज्जउत्त! कधं अंजणाणंदणो (क) तुवरावेदि? ता भअवं पुप्फअ! अवणम; मेइणीसंणिहिदगअणमग्गेण (ख) गच्छम्ह। (अधोऽवलोक्य रामं प्रति)। अज्जउत्त! किं उण एदं तरुणजीमूदसामले महीवलए महुमहणवच्छत्थले (ग) कोत्थुभकिरणत्थवअं विअ जलंतं (घ) लक्खीअदि? *

---

* आर्य्यपुत्र! कथम् अञ्जनानन्दनस्त्वरयति? तत् भगवन् पुष्पक! अवनम; मेदिनीसन्निहितगगनमार्गेण गच्छामः। आर्य्यपुत्र! किं पुनरेतत् तरुणजीमूतश्यामले महीवलये मधुमथनवक्षःस्थले कौस्तुभकिरणस्तवक इव ज्वलँल्लक्ष्यते?

---

मिति शेषः, सीतामन्वेष्टुं लङ्कागमनकाले इति भावः, मारुतः हनूमतः, अन्तः मनसि, भयं त्रासं, चक्रे कृतवान्, जनयामासेत्यर्थः, परिपूर्णसागरस्य गभीरताज्ञानाभावात् सागरलङ्घनकाले मारुतेर्भयं न जातं, सेतुबन्धनकाले तु जलापसरणात् अतलस्पर्शत्वदर्शनेन भयमुत्पन्नमिति निष्कर्षः, हि यतः, महतः गुणाधिक्यात्, परिपूर्णादिति यावत्, तुच्छस्य गुणहीनस्य, शून्यस्येति यावत्, दुर्लङ्घ्यता दुरत्ययता, पूर्णत्वात् सम्पूर्णत्वमपेक्ष्य इत्यर्थः, अतिरिच्यते अतिरिक्ता भवति। शार्दूलविक्रीडितं वृत्तम्॥ ८४॥

(ष) त्वर्य्यतां त्वरा क्रियतां, शीघ्रमागम्यतामित्यर्थः। सन्निधत्ते सन्निहितः भवति।

(स) भगवद्वशिष्ठगृहीतः भगवता वशिष्ठेन निरूपित इत्यर्थः। मङ्गलाभिषेकमुहूर्त्तः माङ्गलिकाभिषेकसमयः।

(ह) प्रत्यावृत्तः प्रत्यागतः। मारुतिः हनूमान्।

(क) अञ्जनानन्दनः अञ्जनाकुमारः, हनूमानित्यर्थः।

(ख) मेदिनीति।—मेदिन्याः पृथिव्याः, सन्निहितः समीपवर्त्ती, यः गगनमार्गः आकाशपथः तेन, भूपृष्ठात् किञ्चिदूर्द्धदेशेनेत्यर्थः।

(ग) तरुणेति।—तरुणः अभिनवः, यः जीमूतः मेघः, तद्वत् श्यामले

रामः। (दृष्ट्वा विभीषणं प्रति)।—

तर्कुटङ्कलिखिताकमण्डल-
प्रोच्छलत्कणकदम्बभासुरम्।
शिल्पशालमिव विश्वकर्मणः
किं विभाति मृगतृष्णिकामयम्? ॥ ८५ ॥

विभीषणः। देव! स एषः,—

ज्येष्ठामूलीययात्रासरभसकरभीकाम्यकान्तारवर्त्मा
दूरेऽपि ज्योतिरक्ष्णोरपलपति मरुज्ज्वलज्जाङ्गलश्रीः।

---

कृष्णवर्णं. तस्मिन्। महीवलये भूमण्डले। मधुमथनस्य मधुदैत्यहन्तुः नारायणस्य, वक्षःस्थले उरसि।

(घ) कौस्तुभेति।—कौस्तुभस्य तदाख्यमणिविशेषस्य, किरणानां मयूखानां, प्रभाणामित्यर्थः, स्तबकः गुच्छः, राशिरित्यर्थः। ज्वलन् दीप्यमानः।

तर्क्विति।—तर्कुः कुविन्दादीनां सूत्रनिष्पादनार्थं चक्राकारयन्त्रविशेषः, तस्य टङ्केन शाणविशेषेण, यद्वा—तर्कुः च टङ्कः दारणं, घर्षणमिति भावः, "टङ्कः पाषाणदारणः" इत्यमरोक्तेः टङ्कस्य पाषाणदारणास्त्रविशेषार्थकत्वेऽपि अत्र उपचारात् घर्षणरूपदारणार्थो बोद्धव्यः, लिखितम् उद्घृष्टं, यत् अर्कमण्डलं सूर्यबिम्बं, तस्मात् प्रोच्छलता प्रोद्गच्छता, कणकदम्बेन स्फुलिङ्गसमूहेन, भासुरं दीप्यमानं, विश्वकर्मणः देवशिल्पिनः, शिल्पशालमिव कलागृहमिव, मृगतृष्णिकामयं मरीचिकामयं, मरीचिकावत् दृश्यमानमित्यर्थः, किम्, एतदिति शेषः, विभाति? राजते? पुरा सौरं तेजः सोढुमशक्तया सूर्यपत्न्या संज्ञया प्रार्थितः पिता विश्वकर्मा सूर्यं यन्त्रारूढं कृत्वा शाणयन्त्रेण तक्षणात् क्षीणतेजसमकरोदिति पुराणवार्ता। रथोद्धता वृत्तम् ॥ ८५ ॥

ज्येष्ठेति।—ज्येष्ठामूलीयः ज्यैष्ठमासः, "ज्येष्ठामूलीयमित्यन्ति मासमाषाढपूर्वकम्" इति हारावली, तत्र यात्रायां प्रयाणे, सरभसा सहर्षा, कामुकीति भावः, या करभी उष्ट्री, तस्याः काम्यं स्पृहणीयं, कान्तारवर्त्म दुर्गममार्गः यस्य तथाभूतः, ज्यैष्ठे च उष्ट्री कामुकी जायते इति प्रसिद्धिः; यद्वा—ज्येष्ठामूलीया ज्यैष्ठमाससम्बन्धिनी, या यात्रा प्रयाणं, दूरदेशगमनमित्यर्थः, तत्र सरभसा सवेगा, वेगगामिनीत्यर्थः, "रभसो वेग-हर्षयोः" इत्यमरः; मरुभूमौ उष्ट्रा एव त्वरितं गन्तुं शक्ता इति प्रसिद्धिः, या करभी

विश्वद्रीचोभिरश्मिन्निविडमुडुपतेः कान्तिभिः प्रस्नुवानाः
फेनायन्ते निजोष्मक्वथनपरिणमद्बुद्बुदं चन्द्रकान्ताः ॥ ८६ ॥

( सर्वे विमानावतरणं नाटयन्ति )।

रामः। ( विलोक्य सीतां प्रति )। देवि! दक्षिणेन—

सिंहलद्वीपमम्भोधि-सम्भूतमिदमुत्पलम्।
माणिक्याचलकिञ्जल्क-रमणीयमुदीक्ष्यते ॥ ८७ ॥

सीता। जहिं कासकुसुमसंकासो अगत्थहंसो (ङ) चरइ ?*

---

* यत्र काशकुसुमसङ्काशोऽगस्त्यहंसश्चरति ?

---

दृष्टी, तस्याः काम्य स्पृहणीयं, कान्तारवर्त्म दुर्गममार्गः यत्र तथाभूत, "कान्तारं वर्त्म दुर्गमम्" इत्यमरात कान्तारशब्दस्य दुर्गमवर्त्मार्थकत्वेऽपि यत् कान्तारवर्त्मा इति प्रयोगः, स "धनुर्ज्या" "कर्णकुण्डलम्" इत्यादिवत् समर्थनीयः; जाज्वलन्ती देदीप्यमाना, जङ्गलं निर्जनस्थानं, "जङ्गलं निर्जनस्थाने त्रिलिङ्गा पिशितेऽस्त्रियाम्" इति मेदिनी; यद्वा—जङ्गलो निर्जलो देशः तस्य इयं जाङ्गली जनविरहिता जलविरहिता वा, श्रीः शोभा यस्य तथाभूतः, मरुः धन्वदेशः, निर्जलवालुकामयदेशविशेषः इत्यर्थः, दूरेऽपि विप्रकर्षेऽपि, अक्ष्णोः नयनयोः, ज्योतिः तेजः, दृष्टिशक्तिमित्यर्थः, अपलपति हरति, दृष्टिप्रतिघातितेजस्कतया मरीरिति भावः, यस्मिन् मरौ, चन्द्रकान्ताः मणिविशेषाः, विश्वद्रीचोभिः जगद्व्यापिनीभिः, उडुपतेः चन्द्रस्य, कान्तिभिः प्रभाभिः, किरणैरिति यावत, प्रस्नुवानाः प्रस्नवन्तः सन्तः, स्रवज्जलाः सन्त इत्यर्थः, निजैः स्वकीयैः ऊष्मभिः सन्तापैः, मरुदेशभवैरिति भावः, यत् क्वथनं पाकः, तेन परिणमन् उद्गच्छन्, बुद्बुदः जलविकारो यस्मिन् तत् यथा तथा, फेनायन्ते फेनमुद्गिरन्ति। स्रग्धरा वृत्तम् ॥ ८६ ॥

सिंहलेति।—सिंहलद्वीपं लङ्काद्वीपं, दक्षिणेन सिंहलद्वीपस्य दक्षिणस्यां दिशि, अम्भोधिसम्भूतं समुद्रसञ्जातं, माणिक्यमया माणिक्यनिर्मिताः, अचलाः स्थिराः, ये किञ्जल्काः केशराः, तैः रमणीयं मनोहरम, इदम उत्पलं पद्मम, उदीक्ष्यते उच्चैः दृश्यते, जनैः अस्माभिर्वा इति शेषः। अनुष्टुप् वृत्तम ॥ ८७ ॥

( ङ ) काशेति।—काशस्य तृणविशेषस्य, कुसुमं पुष्प, तस्य सङ्काशः सदृशः, अतीव श्वेतवर्ण इत्यर्थ.। अगस्त्यहंसः अगस्त्य एव हंसः, यद्वा—अगस्त्याख्य-हंसविशेषः; अगस्त्याश्रमस्थहंस इत्यर्थो वा।

रामः। (स्मित्वा)। आं मैथिलि आम्। इहैव रोहण-गिरेरुपत्यकायां द्वितीयमायतनं मुनेर्लोपामुद्रावल्लभस्य। (च) स तत्रभवान् (छ)—

बृहत्पात्रप्राप्त्या विततजलमम्भोधिमुदरे
दधावीषद्‌ग्राह्यं किल कलशजन्मा कुलपतिः।
यमाराध्यन् विन्ध्याचलशिखरशोथैकभिषजं
विवस्वानाश्वीनं गगनमविरोधात् कलयति॥ ८८॥

अपि च—

निपीते येनाब्धौ स्तिमितगुरुभिः पक्षपटलैः
प्रयत्नादुड्डीय प्रतिपदमपव्यस्तपतिताः।

---

(च) रोहणगिरेः रोहणाख्यपर्वतस्य। उपत्यकायाम् आसन्नभूमौ, "उपत्यकाऽद्रेरासन्ना भूमिः" इत्यमरः। आयतनं स्थानम्, आश्रम इति यावत्। लोपामुद्रावल्लभस्य लोपामुद्राभर्त्तु, लोपामुद्रेति अगस्त्यभार्य्याया नाम, "अगस्त्यः कुम्भसम्भवः। मैत्रावरुणिरस्यैव लोपामुद्रा सधर्मिणी" इत्यमरः।

(छ) तत्रभवान् पूज्यः।

बृहदिति।—किलेति प्रसिद्धौ, कुलपतिः "मुनीनां दशसाहस्रं योऽन्नदानादि-पोषणात्। अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः॥" इत्युक्तलक्षणः, कलशजन्मा कुम्भसम्भवः, अगस्त्य इत्यर्थः, "अगस्त्यः कुम्भसम्भवः" इत्यमरः, ईषत् ग्राह्यं गण्डूष-मात्रेण पानीयं, बृहतः महतः, विस्तृतस्य इत्यर्थः, पात्रस्य आधारस्य, अगस्त्योदर-रूपस्येति भावः, यद्वा—ईषद्‌ग्राह्य, किन्तु बृहत्पात्रस्य सुविस्तीर्णखातरूपस्य आधारस्य, प्राप्त्या लाभेन, विततजलं विस्तृततोयम्, अम्भोधिं समुद्रम्, उदरे जठरे, दधौ धारयामास, विवस्वान् सूर्य्यः, विन्ध्याचलस्य विन्ध्यगिरेः, शिखराणां शृङ्गाणां, शोथस्य स्फीतिरूपरोगविशेषस्य, अत्युच्चवृद्धिरूपस्येति भावः, एकम् अद्वितीयं, भिषजं चिकित्सकं, "भिषग्वैद्यौ चिकित्सके" इत्यमरः; विनतीकृतविन्ध्याचलमिति भावः, यम् अगस्त्यम्, आराध्यन् सेवमानः सन्, आश्वीनम् अश्वैः एकाह्नेन गम्यं, "विष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते" इत्यमरः; गगनम् आकाशम्, अविरोधात् निर्विघ्ने-नेत्यर्थः, कलयति पर्य्यटति। पूर्वमुक्ता पौराणिकी वार्त्ताऽस्य सन्दर्भस्येति विस्तरभयान्न पुनरुक्ता। शिखरिणी वृत्तम्॥ ८८॥

निपीते इति।—येन मुनिना अगस्त्येन, अब्धौ समुद्रे, निपीते निःशेषेण चुलुकी-

विभ्रान्ताः कौलीरं कुहरमशरण्याः शिखरिणः
क्षणं दृष्टास्तस्य स्तुतिषु न गिरां साहसरसः ॥ ८९ ॥

अपि च, यत्र शृङ्गारसार्वभौमस्य (ज) रत्नसिंहासने सिंहलद्वीप-नाम्नि प्रदोषारम्भेषु (झ)—

उदेष्यत्पीयूषद्युतिरुचिकणार्द्राः शशिमणि-
स्थलीनां पन्थानो घनचरणलाक्षालिपिभृतः।
चकोरैरुड्डीनैर्झटिति कृतशङ्काः प्रतिपदं
पराञ्चः सञ्चारानविनयवतीनां विवृणते ॥ ९० ॥

---

कृते सति, स्तिमितानि आर्द्राणि, जलान्तरवस्थानादिति भावः, अत एव गुरूणि भारवन्तीत्यर्थः तैः, पक्षपटलैः पक्षसमूहैः, प्रयत्नात् विशेषायासात्, उड्डीय समभि-उत्थाय, प्रतिपदं पदे पदे, अपव्यस्तं विपर्य्यस्तं यथा तथा, पक्षाणां स्तैमित्य-गुरुत्वाभ्यां स्वच्छन्दोड्डयनाक्षमत्वादिति भावः, पतिताः भूमौ लुण्ठिताः, अत एव अशरण्याः रक्षि-शून्याः, निराश्रया इति यावत्, आश्रयभूतस्य समुद्रस्य व्यसनोदयादिति भावः, शिखरिणः पर्वताः, मैनाकादय इत्यर्थः, क्षणं किञ्चित्कालं, कुलीरः कर्कटः तत्सम्बन्धि कौलीरं कार्कटं, कुहरं गर्त्तं, विभ्रान्ताः प्रविष्टाः, दृष्टाः अवलोकिताः, जनैरिति शेषः, तस्य अगस्त्यस्य, स्तुतिषु स्तवेषु, गिरां वाचां, साहसरसः सहसा प्रवृत्त्यनुरागः, न ? अपि तु सर्व एव तस्य स्तुतिं कर्त्तुं प्रवर्त्तन्ते इति भावः, यद्वा—साहसरसो न साहसावलम्बनं न, भवतीति शेषः, वाचस्तस्य स्तुतिं कर्त्तुं न प्रभवन्तीति भावः। शिखरिणी वृत्तम् ॥ ८९ ॥

(ज) शृङ्गारेति।—शृङ्गार एव तदाख्यः आदिरस एव, सार्वभौमः सम्राट् तस्य, एतेन सिंहलद्वीपवासिनः सर्वे एव अत्यर्थं शृङ्गाररसानुरागिणः कामपरतन्त्रा इति व्यज्यते।

(झ) प्रदोषारम्भेषु प्रदोषो रजनीमुखं, तस्य आरम्भेषु उपक्रमेषु, "प्रदोषो रजनीमुखम्" इत्यमरः।

उदेष्यदिति।—उदेष्यतः उदयं गमिष्यतः, पीयूषद्युतेः अमृतरश्मेः, चन्द्रस्य इत्यर्थः, रुचिकणैः मयूखलवैः, आर्द्राः सिक्ताः, स्रवन्त इति भावः, घना सान्द्रा, या चरणयोः पादयोः, लाक्षा अलक्तकरागः, तस्याः लिपिम् अक्षरं, विन्यासं धारयन्तीति तथोक्ताः, [illegible] इति भावः, उड्डीनैः उत्पतितैः, चकोरैः पक्षि-

(अन्यतो दर्शयन्) । इयमितो मौक्तिकीयानामपामाधारस्ताम्रपर्णी (ञ)—

> शुक्तिकागर्भसम्बन्ध-स्तम्भितास्तोयविन्दवः ।
> भ्रमन्ति सुभ्रुवामङ्कादङ्कमस्याः प्रसूतयः ॥ ९१ ॥

अपि च—

> युवतिकुचभोगकर्मभिरुद्भूतैः शुक्तिसम्पुटधृतानि ।
> दधतीह ताम्रपर्ण्याः स्थिरकरकाभावमम्भांसि ॥ ९२ ॥

---

विशेषैः, झटिति सहसा, कृता प्राप्ता इत्यर्थः, भङ्गा त्रासः, जनसमागमभयमिति यावत् यत्र तथोक्ताः, आचाररञ्जितपदचिह्नदर्शनादिति भावः, शशिमणिशिलानां चन्द्रकान्तशिलामयभूभागानां, पन्थानः मार्गाः, अविनयवतीनां दुःशीलानाम्, अभिसारिकाणामिति भावः, प्रतिपदं पदे पदे, प्रतिपदक्षेपे इत्यर्थः, पराञ्चः प्रतीपान्, भयात् विपरीतव्याजानिति भावः, सञ्चारान् गतीन्, विवृणते प्रकटयन्ति । शिखरिणी वृत्तम् ॥ ९० ॥

(ञ) मौक्तिकीयानां मुक्तासम्बन्धिनीनां, मुक्ताप्रसविनीनामिति यावत्, अपां जलानाम् । ताम्रपर्णी नदीभेदः । ताम्रपर्णी मुक्तोत्पत्तिस्थानमिति प्रसिद्धिः ।

शुक्तिकेति ।—शुक्तिकानां मुक्तास्फोटानां, मुक्तागृहाणामित्यर्थः, "मुक्तास्फोटः स्त्रियां शुक्तिः" इत्यमरः ; गर्भस्य मध्यस्य, सम्बन्धेन सम्पर्केण, गर्भेषु स्थित्या इत्यर्थः, स्तम्भिताः पिण्डीभूताः, घनीभूता इति यावत्, अस्याः ताम्रपर्ण्याः, प्रसूतयः समुद्भवाः, यद्वा—प्रसूतयः तनयाः, तनयस्वरूपा इत्यर्थः, ताम्रपर्णीतः समुद्भूता इति यावत्, "प्रसूतिः प्रसवेऽपि स्यात् तनये दुहितर्य्यपि" इति मेदिनी ; तोयविन्दवः जलकणाः, मुक्ताफलरूपेण परिणता इति भावः, सुभ्रुवां सुन्दरीणाम्, अङ्कात् क्रोडात्, अङ्कं क्रोडं, भ्रमन्ति विचरन्ति, एकस्याः समीपात् अन्यस्याः समीपं, तस्याः समीपात् अन्यस्याः समीपं गच्छन्तीति भावः, सुभ्रुवाम् अङ्गानि अलङ्कुर्व्वन्तीति निष्कर्षः । अनुष्टुप् वृत्तम् ॥ ९१ ॥

युवतीति ।—इह अस्मिन् स्थाने, ताम्रपर्ण्याः नद्याः, अम्भांसि जलानि, उद्भूतैः सञ्जातैः, जन्मान्तरीणैरिति भावः, युवतीनां तरुणीनां, कुचाः स्तनाः, तेषां भोगः सम्भोगः, तदुपर्य्यवस्थानरूप इति भावः, तस्य कर्मभिः कार्य्यैः, यैः कर्मभिः युवतिकुचभोगः सम्पद्यते तादृशैः सुचरितैः कर्मभिर्हेतुभिरिति भावः, शुक्तिरेव मुक्तागार एव, सम्पुटः आवरणविशेषः, तत्र धृतानि स्थितानि सन्ति, स्थिरकरकाभावं कठिनवर्षोपलत्वं, "वर्षोपलस्तु करका" इत्यमरः ; दधति धारयन्ति ॥ ९२ ॥

सीता। अज्जउत्त ! जेट्ठेत्ति दक्खिणमत्तएण (ट) भअवदो साअरस्स भाईरहीपक्खवादो (ठ)। पेम्मसव्वस्सणीसंदो (ड) उण सहजसव्वंगमोत्तिआहरणरमणीआए (ढ) तम्मपस्सीए लक्खीअदि। *

रामः। (विहस्यान्यतो दर्शयन्)।—

रमयति मलयाचलोऽयमस्मा-
दुपनमता पवनेन मानिनीनाम्।
दयितविनयकूटसाक्षिणीभिः
स खलु सखीभिरदुष्करप्रबोधः॥ ८१॥

---

* आर्य्यपुत्र। ज्येष्ठेति दाक्षिण्यमात्रकेण भगवतः सागरस्य भागीरथीपक्षपातः। प्रेमसर्वस्वनिःस्यन्दः पुनः सहजसर्वाङ्गमौक्तिकाभरणरमणीयायास्ताम्रपर्ण्यां लक्ष्यते।

---

(ट) ज्येष्ठेति।—ज्येष्ठा प्रथमा पत्नीति हेतोः, दाक्षिण्यमात्रकेण दक्षिणः सरलः उदारो वा, अनेकपत्नीषु समरागो नायकविशेषः इति यावत्, तदुक्तं दर्पणे—"एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः" इति, तस्य भावः दाक्षिण्यं, तदेव दाक्षिण्यमात्रं, ततः स्वार्थे कन्-प्रत्ययः तेन।

(ठ) भागीरथ्या गङ्गायां, पक्षपातः अनुग्रहः, स्नेह इत्यर्थः।

(ड) प्रेमेति।—प्रेम प्रियता एव, अनुराग एवेत्यर्थः, सर्वस्वं सर्वधनं, तस्य निःस्यन्दः पातः, वर्षणमित्यर्थः, वितरणमिति यावत्, प्रेमसर्वस्वनिःस्यन्दः प्रणयवत्ता इत्यर्थः।

(ढ) सहजेति।—सहजं स्वाभाविकं, सर्वेषु अङ्गेषु देहेषु, यत् मौक्तिकाभरणं मुक्ताघटितालङ्कारः, मुक्तारूपालङ्कारश्च, तेन रमणीयायाः मनोहरायाः, मुक्ताशिप्सूनां चित्ताकर्षिण्याश्च।

रमयतीति।—अयम् एषः, मलयाचलः मलयपर्वतः, रमयति प्रीणयति, अस्मानिति शेषः, अस्मात् मलयाचलात्, उपनमता उपगच्छता, प्रवहता इति यावत्, पवनेन वायुना, (साधनेन) दयितस्य प्रियस्य, विनयानाम् अनुनयानाम्, अनुनयरूपकौतीनामित्यर्थः, कूटः राशिः, समूह इति यावत्, तस्य साक्षिणीभिः साक्षात्

लक्ष्मणः । ( पदे दर्शयन् ) ।—

> स्वपाणिप्राग्भारप्रबलविततोत्तानसलिल-
> स्वयंदृष्टक्रीडत्तिमिनिवहलग्नामिव घृणाम् ।
> दधानस्यापीतोज्झितजलनिधेरेतदपरं
> पुरो लोपामुद्रासहचरमुनेराश्रमपदम् ॥ ८४ ॥

अपि चास्मिन्—

> चतुरब्धिपानचेष्टादृष्टपिपासे मुनावुदयमाने ।
> पाययितुमिवात्मानं विशुध्य सज्जीभवन्त्यापः ॥ ८५ ॥

---

दृष्टीभिः, सखीभिः सहचरीभिः, मानिनीनां प्रणयकुपितानां प्रियाणां, खलु निश्चितं, स प्रबोधः सान्त्वनादानं, मानापनयनमिति यावत्, सदुष्करः न दुःसाध्यः, सुसाध्य इत्यर्थः । पुष्पिताग्रा वृत्तम् ॥ ८३ ॥

स्वपाणीति ।—स्वस्य आत्मनः, पाणिः करः, तस्य प्राग्भारेण विस्तारेण, प्रबलम् अत्यन्तं यथा तथा, विततं विस्तृतम्, उत्तानम् ऊर्द्ध्वं गतं, यद्वा—प्राग्भारेण अग्रभागेन, प्रबलं यथा तथा विततं व्याप्तम्, आक्रान्तमित्यर्थः, गण्डूषीकर्त्तुम् आकृष्टमिति भावः, अत एव उत्तानम् ऊर्द्ध्वमागतं, पाणौ अवस्थितमिति भावः, यत् सलिलं सामुद्रोदकं, तस्मिन् स्वयम् आत्मना, दृष्टे अवलोकिते, जलशून्यत्वात् प्रत्यक्षीभूते इति भावः, क्रीडति इतस्ततः लुठति, समुद्रगर्भे इति भावः, तिमिनिवहे तदाख्यमत्स्यविशेषसमूहे, लग्नां सम्बद्धां, सञ्जातामिति यावत्, घृणां दयां, "कारुण्यं करुणा घृणा । कृपा दया-ऽनुकम्पा स्यात्" इत्यमरः, दधानस्येव धारयत इव, मत्करुद्धाते पीतानुज्झिते सर्वे तिमिप्रभृतयो नश्यन्तीति अनुकम्पां कुर्वत इव इत्यर्थः, आपीतः आदौ सम्यक् पीतः, पश्चात् उज्झितः उद्गीर्णः, जलनिधिः समुद्रः येन तथाभूतस्य, लोपामुद्रा-सहचरस्य लोपामुद्राभर्त्तुः मुनेरगस्त्यस्य, एतत् इदं अपरं द्वितीयं, आश्रमपदं तपोवनं, पुरः अग्रतः, दृश्यत इति शेषः । शिखरिणी वृत्तम् ॥ ८४ ॥

चतुरब्धीति ।—चतुर्णाम् अब्धीनां समुद्रचतुष्टयानां, पानचेष्टया गण्डूषीकरण-व्यापारेण, दृष्टा प्रत्यक्षीकृता, पिपासा तृष्णा यस्य तादृशे, मुनौ अगस्त्ये, उदयमाने उद्गच्छति सति, आपः जलानि, आत्मानं स्वं, पाययितुमिव पानं कारयितुमिव, अगस्त्यमिति शेषः, विशुध्य निर्मलीभूय, सज्जीभवन्ति प्रस्तुतीभवन्ति, सज्जिताः सत्यः उपतिष्ठन्ते इत्यर्थः, शरदि अगस्त्योदये जलानि विशदानि भवन्तीति प्रसिद्धिः । उत्प्रेक्षा-ऽलङ्कारः । आर्य्या वृत्तम् ॥ ८५ ॥

सुग्रीवः । ( सस्मितम् ) ।—

ध्रुवमिह चतुरम्भोनिधिरचितापोशानकर्मणि मुनीन्द्रे ।
भक्ष्यम्मन्यानि किमपि चकम्पिरे सप्तभुवनानि ॥ ९६ ॥

( सर्वतोऽवलोक्य सहर्षाङ्कुरम् ) । अहो ! चिरेणाद्य चतुर्दशलोकैक-दण्डधरे धर्मासनाधिकारिणि रामदेवे ( ण ) दण्डकारण्यगृह-मेधिनां (त) तपोधनानामृद्धयः (थ) ।

रामः । ( सलज्ज- मधः विमानवेगनाटितकेनाधोऽवलोक्य ) कथं, हिरण्य-हरिणविहारकान्तारस्थलीनामुपरि ( द ) प्रतिष्ठामहे !! (ध)

---

ध्रुवमिति ।—इह अस्मिन्, मुनीन्द्रे ऋषिप्रवरे, अगस्त्ये इति शेषः, चतुर्भिः चतुःसङ्ख्यकैः, अम्भोनिधिभिः समुद्रैः, समुद्रचतुष्टयजलैरिति यावत्, रचितं कृतम्, आपोशानकर्म आचमनक्रिया इत्यर्थः, गण्डूषीकरणमिति यावत्, येन तथाभूते सति, सप्तभुवनानि भूर्भुवः-स्वर्जन-महस्तपः-सत्यरूपाणि जगन्ति, किमपि अनिर्वचनीयरूपेणेत्यर्थः, भक्ष्यम्मन्यानि आत्मानं भक्ष्यं मन्यन्ते इति तथोक्तानि सन्ति, चकम्पिरे कम्पितानि बभूवुः, यस्य चतुःसमुद्रं पेयं, तस्य सप्तभुवनं भक्ष्यम् अवश्यमेव सम्भवतीति धियेति भावः ॥ ९६ ॥

( ण ) चतुर्दशेति ।—चतुर्दशलोकस्य चतुर्दशसङ्ख्यकभुवनस्य, ऊर्द्ध्वं भूरादि-सप्त-लोकस्य अधः अतलादि-सप्तलोकस्य च इत्यर्थः, एकस्मिन् अद्वितीये, दण्डधरे शासितरि, राजनि इत्यर्थः, "दण्डधरो यमे राज्ञि" इति हेमः, धर्मासनाधिकारिणि सिंहासनस्य न्यायसङ्गतस्वामिनि, रामदेवे देवे रामचन्द्रे, समागते सतीति शेषः ।

( त ) दण्डकेति ।—दण्डकारण्ये दण्डकाख्यकानने, ये गृहमेधिनः गृहैर्दारैः, मेधन्ते सङ्गच्छन्ते इति तथोक्ताः तेषां, गृहमेधिनां सस्त्रीकाणां, गार्हस्थ्याश्रमिणामित्यर्थः, "न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते" इति शास्त्रात् गृहशब्देन दारा उच्यन्ते ।

(थ) ऋद्धयः अभ्युदयाः, दृश्यन्ते इति शेषः ।

(द) हिरण्येति ।—हिरण्यहरिणस्य स्वर्णमृगस्य, मायाकल्पितकाञ्चनमृगरूपस्य मारीचस्येति यावत्, विहाराः विचरणस्थानानि, याः कान्तारस्थल्यः दुर्गमारण्यभूमयः तासाम् । उपरि ऊर्द्ध्वदेशे ।

(ध) प्रतिष्ठामहे वर्त्तामहे, समुपस्थिता इत्यर्थः । यद्वा—प्रतिष्ठामहे प्रस्थानं कुर्मः, गच्छाम इत्यर्थः, अस्मिन् पक्षे—उपरि ऊर्द्ध्वभागेनेत्यर्थः ।

सुग्रीवः। (सोपहासम्)। इयं सा मारीचशरीरोपहाररचितात्मनो (न) दशकण्ठस्य कपटभिक्षुवेशविडम्बनाडम्बरैकमर्मज्ञा (प) पञ्चवटी। (सादरम्)।—

विश्वामित्रमखद्विषे च वपुषा चित्रेण पत्युर्मुखा-
दप्याकृष्टविदेहराजतनयानेत्रारविन्दाय च।
मारीचाय नमो नमः किमपरं यस्मै कुले रक्षसां
द्वौ वारौ विभुनाऽपि दाशरथिना चक्रे ततज्यं धनुः॥ ८७॥

(सीता लज्जते)।

---

(न) मारीचेति।—मारीचस्य तदाख्यस्य रावणानुचरस्य, शरीरमेव देह एव, उपहारः उपढौकनं, तेन रचितः जातः, आत्मा स्वं, शरीरं इत्यर्थः येन तथोक्तस्य। "आत्मा पुंसि स्वभावे च···शरीर-ब्रह्मणोरपि" इति मेदिनी।

(प) कपटेति।—कपटेन मायाकल्पितेन, भिक्षुवेशेन परिव्राजकनेपथ्येन, या विडम्बना वञ्चना, तस्या डम्बरस्य विस्तारस्य, एका अद्वितीया, मर्मज्ञा साराभिज्ञा, तत्त्वज्ञेति यावत्; यद्वा—कपटेन यः भिक्षुवेशः, तस्य विडम्बनम् अनुकरणं, तस्य आडम्बरः समारम्भः, आयोजनमित्यर्थः, "आडम्बरः समारम्भे गजगर्जित-तूर्य्ययोः" इति मेदिनी; तस्य एका मर्मज्ञा रहस्यज्ञा, रावणकृतकपटभिक्षुवेशधारणस्य अभिप्रायाभिज्ञा इत्यर्थः, अत्रैव तथाविधवेशपरिग्रहादिति भावः।

विश्वामित्रेति।—विश्वामित्रस्य मखः यज्ञः, तं द्वेष्टि हिनस्तीति तथोक्ताय च, विश्वामित्रस्य यज्ञविघ्नकारिणे, चित्रेण अद्भुतेन, विस्मयजनकेनेत्यर्थः, वपुषा शरीरेण, काञ्चनमयेनेति भावः, पत्युः भर्त्तुः, रामस्येत्यर्थः, मुखादपि वदनादपि, मुखं परित्यज्यापीत्यर्थः, अत्राप्यशब्दोऽपिशब्दार्थः, आकृष्टम् आक्षिप्तं, विदेहराजतनयायाः सीतायाः, नेत्रारविन्दं नयनकमलं येन तथाभूताय च, सीता पतिविरहिणी कृतवते इति भावः, मारीचाय तदाख्यराक्षसाय, नमः नमः, अस्तु इति शेषः, पुनः पुनस्तं प्रणमामीत्यर्थः, किम् अपरम् अन्यत्, वक्तव्यमिति शेषः, रक्षसां निशाचराणां, कुले वंशे, विभुना प्रभुणा, दाशरथिनाऽपि रामेणापि, यस्मै मारीचाय, यद्वधार्थमित्यर्थः, द्वौ वारौ, यद्वा—यस्मै यदर्थं, यन्निमित्तमित्यर्थः, यस्य मारीचस्य कार्य्यवशादिति भावः, विभुनाऽपि प्रभुणाऽपि, एकेनैव बाणेन राक्षसकुलविनाशाय समर्थेनापीति भावः, दाशरथिना रामचन्द्रेण, रक्षसां कुले निशाचरवंशविनाशायेत्यर्थः, द्वौ वारौ

राम। (प्रस्रवणाचलं दर्शयन् सीतामपवार्य्य)। देवि!—

नक्तं रत्नमयूखपाटलमिलत्काकोलकोलाहल-
त्रस्यत्कौशिकभुक्तकन्दरतमाः सोऽयं गिरिः स्मर्य्यते।
यत्राकृष्टकुचांशुके मयि रुषा वस्त्राय पत्राणि ते
चिन्वन्त्या वनदेवतास्तरुलतामुच्चैर्व्यधुः कौतुकात् ‖ ५८ ‖

---

वारद्वयं, खर-दूषणादिविनाशाय दण्डकारण्ये वारमेकं, रावणादिविनाशाय लङ्कायां वारमेकमित्यर्थः, धनुः शरासनं, तता विस्तृता, आकृष्टा इत्यर्थः, ज्या गुणः यत्र तादृशं, चक्रे कृतम् अतिसत्त्ववान् महामायस्त्वासौ सर्वेषु राक्षसेष्विति पुनः पुनर्नमस्करणीय इति भावः। शार्दूलविक्रीडितं वृत्तम् ‖ ५७ ‖

नक्तमिति।—नक्तं रात्रौ, रत्नानां मणीनां, मयूखाः किरणाः, तेषां पाटलः श्वेतरक्तगुणः, "श्वेतरक्तस्तु पाटलः" इत्यमरः; तथा मिलता सङ्गच्छता, काकोलानां द्रोणकाकानां, "द्रोणकाकस्तु काकोलः" इत्यमरः; कोलाहलः कलरवः ताभ्यां, त्रसद्भिः बिभ्यद्भिः, कौशिकैः पेचकैः, पर्वतोपरत्नप्रभया दिवसभ्रमेण काकशब्देन च पेचकानां त्रास इति भावः, यद्वा—रत्नानां मयूखाः किरणाः, तेषां पाटलेन श्वेतरक्तगुणेन, श्वेतरक्तप्रभयेत्यर्थः, मिलता सङ्गच्छताम्, अरुणोदयकालिकप्रभावत् आरक्तमणिप्रभया उषा समागता इति भ्रमेण एकत्र सङ्गतानामिति भावः, काकोलानां द्रोणकाकानां, पेचकशत्रूणामिति भावः, कोलाहलेन 'का का' इति कलकलेन, बिभ्यद्भिः कौशिकैः उलूकैः, पेचकैरित्यर्थः, "महेन्द्रगुग्गुलूलूक-व्यालग्राहिषु कौशिकः" इत्यमरः; भुक्तं सेवितम्, आश्रितमित्यर्थः, कन्दरतमः गुहास्थं तिमिरं यस्य तथाभूतः, सः पूर्वदृष्टः, अयम् एष, गिरिः पर्वतः, प्रस्रवणः इति यावत्, स्मर्य्यते स्मरणविषयीक्रियते, मयेति शेषः, यद्वा—स्मर्य्यते ? स्मरणविषयीक्रियते ? त्वयेति शेषः यत्र गिरौ, मयि आकृष्टम् आक्षिप्तम्, अपसारितमित्यर्थः, कुचयोः स्तनयोः, तवेति शेषः, अंशुकं वसनं येन तथाभूते सति, रुषा कोपेन, वस्त्राय वसनाय, कुचाच्छादनाय इति भावः, पत्राणि वृक्षाणां पर्णानि, चिन्वन्त्याः सङ्गृह्णन्त्याः, ते तव, वनदेवताः अरण्याधिष्ठात्र्यः देव्यः, कौतुकात् नर्मणः, कौतुकं कर्तुमित्यर्थः, तरुलतां तरुस्थितां लताम्, उच्चैः ऊर्ध्वे, व्यधुः विहितवत्यः, ऊर्ध्वे नीतवत्य इत्यर्थः, यथा त्वया पत्रं चेतुं न शक्यते तथा कृतवत्य इति यावत्। शार्दूलविक्रीडितं वृत्तम् ‖ ५८ ‖

सीता। (स्मयमाना कपोतहस्तं (फ) कृत्वा)। भअवदीओ जणट्ठाण-देवदाओ! एसा वो परिचारिआ जाणई पणमदि। *

रामः। (अन्यतो दर्शयन्)। देवि! वन्दस्व भगवतीमितो (ब) गोदावरीम्। (जनान्तिकम्)।—

एतस्याः पुलिनोपकण्ठफलिनीकुञ्जोदरेषु स्रजं
कृत्वा किंशुककोरकैरकरजक्रीडासहिष्णुस्तने।
दत्त्वा वक्षसि ते मयि प्रहसति प्रौढापराधे तदा
कौमारव्रतभङ्गरोषितमपि स्मेरं तवासीन्मुखम्॥ ५९॥

(सीता सलज्ज-स्मितं मुखमवनमयति, नमति च गोदावरीम्)।

* भगवत्यो जनस्थानदेवताः! एषा वः परिचारिका जानकी प्रणमति।

(फ) कपोतहस्तं कपोतवत् हस्तः तं कृत्वा, शिरसि अञ्जलिं बद्ध्वेत्यर्थः; यद्वा—कपोतहस्तः हस्तबन्धविशेषः, उक्तञ्च सङ्गीतसर्वस्वे—"पार्श्वद्वयसमाश्लेषात् कपोतः सर्वशीर्षके। विनयोपगमे भीते भये सम्भाषणे गुरोः। वक्षःस्थलगतो ह्येषः कल्पितस्तु कपोतवत्॥" इति तम्।

(ब) इतः अस्मात् स्थानात्, अस्मिन् पार्श्वे वा।

एतस्या इति।—एतस्याः अस्याः, गोदावर्य्याः इत्यर्थः, पुलिनं जलमध्यादुत्थितः तटभागः, "तोयोत्थितं तत् पुलिनम्" इत्यमरः; तस्य उपकण्ठे समीपे, "समीपे निकटासन्न-सन्निकृष्टसनीडवत्। उपकण्ठान्तिकाभ्यर्णा—" इत्यमरः; यः फलिनीकुञ्जः प्रियङ्गुलतावेष्टितस्थानं, "प्रियङ्गुः फलिनी फली" इत्यमरः; तस्य उदरेषु अभ्यन्तरेषु, किंशुककोरकैः पलाशकलिकाभिः, "पलाशे किंशुकः पर्णः" इति, "कलिका कोरकः पुमान्" इति चामरः, स्रजं मालां, कृत्वा विरच्य, करजक्रीडा नखक्षतं, तत्सहिष्णू सोढुं क्षमौ न भवत इति अकरजक्रीडासहिष्णू रतिक्रीडायां नखाघातवेदनां सोढुमक्षमौ, स्तनौ कुचौ यत्र तादृशे, ते तव, वक्षसि उरसि, दत्त्वा निधाय, प्रौढः कृतः, अपराधः येन, यद्वा—प्रौढः प्रवृद्धः, प्रकर्षं प्राप्त इत्यर्थः, अपराधः आगः यस्य तथाभूते, "प्रवृद्धं प्रौढमेधितम्" इत्यमरः; मयि प्रहसति हास्यं कुर्वति सति, किंशुककलिका हि वक्ररूपा नखक्षताकारा भवति, तथा च, यथा तवेयं स्तनोपरि किंशुककलिका शोभते, तथा मम नखक्षतानि शोभन्ते इति धिया हास्यकरणेन अपराधिनि सतीति यावत्,

रामः । (परिक्रम्यावलोकितकेन सखेदम्)। देवि !—

अस्मिन् माल्यवतस्तटीपरिसरे कादम्बिनीडम्बरः
स स्थूलङ्करणो मदश्रुपयसामासीदवर्षन्नपि ।
यद्धारावलितैर्न शाखिभिरपि त्वत्पालितैर्मा तथा
दृष्ट्वा कन्दलितं न केकिभिरपि प्रारम्भि सङ्गीतकम् ॥१००॥

सीता । (मन्युगद्गदकण्ठग्रन्थिलस्वरा (भ) पुष्पकं प्रति)। त्रिमाणाराम !

---

।दा तस्मिन् समये, कौमारव्रतस्य कुमारिकाया व्रतस्य, ब्रह्मचर्य्यावलम्बनरूपस्य नियमस्य वा, सुरतसम्भोगवर्जनरूपस्येति भावः, भङ्गेन खण्डनेन, रोषितं कोपित-मपि, तव मुखं वदनं, स्मेरं मन्दहसितम्, आसीत् अभूत् । शार्दूलविक्रीडितं वृत्तम् ॥९९॥

अस्मिन्निति ।—माल्यवतः तदाख्यगिरेः, अस्मिन् परिदृश्यमाने, तटीपरिसरे तटस्य पर्य्यन्तभूमौ, पार्वत्यभूभागस्य प्रान्तदेशे इत्यर्थः, "पर्य्यन्तभूः परिसरः" इत्यमरः ; सः पूर्वानुभूतः, कादम्बिनीडम्बरः मेघमालायाः समारम्भः, मेघमालाविस्तार इत्यर्थः, "कादम्बिनी मेघमाला" इत्यमरः ; अवर्षन्नपि वृष्टिमकुर्वन्नपि, मम अश्रुपयसां नेत्रजलानां, स्थूलङ्करणः अस्थूलं स्थूलं क्रियते अनेनेति तथोक्तः, अत्यर्थं वृद्धिकारणः इत्यर्थः, आसीत् अभूत्, मेघमालादर्शनेन त्वद्विरहार्त्तस्य मम भूयानश्रुपातः समभव-दिति भावः, मा तथा प्रबलतया अश्रु विमुञ्चन्तं, दृष्ट्वा अवलोक्य, रुदन्तं दृष्ट्वेत्यर्थः, यस्य कादम्बिनीडम्बरस्य, धाराभिः आसारैः, अविच्छिन्नवर्षणैरित्यर्थः, वलितैः वर्द्धितैः, तथा त्वया भवत्या, पालितैः परिपोषितैः, शाखिभिरपि वृक्षैरपि, न कन्दलितं न पल्लवितं, "कन्दलं स्यात् पल्लवे च नवाङ्कुरे" इति विश्वः, केकिभिः मयूरैरपि, सङ्गीतकं केकारवमित्यर्थं, न प्रारम्भि न प्रारब्धं, न कृतमित्यर्थः, मम विरहार्त्तस्य दुःखेन अचेतना वृक्षाः सचेतनास्तिर्य्यञ्चोऽपि दुःखिता आसन्निति भावः । शार्दूल-विक्रीडितं वृत्तम् ॥ १०० ॥

(भ) मन्युगद्गदेति ।—मन्युना दैन्येन, पूर्ववृत्तान्तस्मरणजनितविषादेन इत्यर्थः ; "मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः ; यद्वा—मन्युना शोकेन, प्रियस्य शोकविह्वलावस्था-श्रवणजनितेनेति भावः, "मन्यु-शोकौ तु शुक् स्त्रियाम्" इत्यमरः ; गद्गदे वाष्पयुक्ते, कण्ठे गलदेशे, ग्रन्थिलः ग्रन्थियुक्तः, रुद्ध इति भावः, स्वरः ध्वनिः यस्याः तथाभूता ।

सीदम्हि, (म) ण दलदि ज्जेव्व वज्जमअं मे हिअअं, तधा वि तुवरेहि, एसा अंतरीअदु (य) दंडआरस्सविच्छोली। *

रामः। (विमानवेगनाटितकेन सीतां प्रति)। देवि! इदमग्रे महाराष्ट्रमण्डलैकमण्डनं (र) कुण्डिनं नाम नगरम्। इह हि—

अनन्यक्षुण्णश्रीर्मलयवनजन्माऽयमनिलो
निपीय स्वेदाम्बु स्मरमकरसम्भुक्तविभवम्।
विदर्भीणां भूरिप्रियतमपरीरम्भरभस-
प्रसङ्गादङ्गानि द्विगुणपुलकस्रञ्जि तनुते॥ १०१॥

---

* विमानराज! सीताऽस्मि, न दलत्येव वज्रमयं मे हृदयं, तथाऽपि त्वरस्व, एषा अन्तरीयतां दण्डकारण्यपङ्क्तिः।

---

(म) सीताऽस्मीति।—सीताशब्दः लाङ्गलपद्धतौ वर्त्तते, सा च प्रायशः कठिना तिष्ठति, अहञ्च तदुत्पन्नत्वात् कठिनप्रकृतिरेवेति भावः।

(य) दलति विदीर्य्यते। त्वरस्व त्वरितो भव, शीघ्रमितः प्रतिष्ठस्व इति भावः। अन्तरीयताम् अतिक्रम्यताम्, एतद्दर्शनम् अतीव शोककारणमिति भावः।

(र) महाराष्ट्रेति।—महाराष्ट्रस्य देशभेदस्य, एकं केवलम्, अद्वितीयमित्यर्थः, मुख्यं वा, "एके मुख्यान्यकेवलाः" इत्यमरः; मण्डनं भूषणम्, अलङ्कारभूतमित्यर्थः।

अनन्येति।—अनन्यक्षुण्णश्रीः न अन्यैः परैः, क्षुण्णा विदलिता, विकृतेति भावः, श्रीः समृद्धिर्यस्य तथाभूतः, अन्यसङ्गरहित इति भावः, मलयजन्मा मलयपर्वतीयः, अयम् एषः, अनुभूयमानः इत्यर्थः, अनिलः वायुः, विदर्भीणां विदर्भदेशभवानां नारीणां, स्मरस्य कामस्य, मकरेण रथध्वजस्थेन जलजन्तुविशेषरूपेण चिह्नेन, सम्भुक्तः कृतोपभोगः, अनुभूत इति यावत्, विभवः सम्पत्, आतिशय्यमिति यावत् यस्य तथोक्तं, कामावेशजनितसत्त्वोदयात् समुद्भूतमिति भावः, स्मरशाह्चर्य्यात् मकरेणापि अनुभूतसुरतामर्द्दजनितस्वेदाधिक्यमिति वा भावः, स्वेदाम्बु घर्म्मजलं, निपीय पीत्वा, शोषयित्वेति यावत्, अङ्गानि अवयवाः, भूरिर्बहुलः, प्रियतमस्य अभीष्टतमस्य, भर्त्तुर्नायकस्य वा इत्यर्थः, परीरम्भेण आलिङ्गनेन, यः रभसः हर्षः, "रभसो वेग-हर्षयोः" इत्यमरः; तत्प्रसङ्गात् तदभ्यासात्, द्विगुणाः द्विराहृताः, पुलकान्येव रोमाञ्चा एव, स्रजः माला येषु तथोक्तानि, यद्वा—द्विगुणानि द्विराहृतानि, अधिकाधिकानीति यावत्, पुलकानि

किञ्च—

विभ्रतीं कौशिकीं वृत्तिं सौरभोद्गारिणीं गिरः ।
दूराध्वानोऽपि कवयो यस्य रीतिमुपासते ॥ १०२ ॥

विभीषणः । ( दक्षिणतो दर्शयन् ) । देव ! प्रणम्यतामयमन्ध्र-विषयलक्ष्म्याः सप्तगोदावरहारकलापैकनायको ( ल ) भगवान् भीमेश्वरः (व) । अयं हि—

तत्कालारभटीविजृम्भणपरित्रासादिव भ्रश्यता
वामार्द्धेन तदेकशेषचरणं बिभ्रद्वपुर्भैरवम् ।

---

एव स्रजः माला येषु तानि, तनुते विस्तारयति, करोतीत्यर्थः । शिखरिणी वृत्तम् ॥ १०१ ॥

बिभ्रतीमिति ।—दूराध्वानोऽपि दूरमार्गवर्त्तिनोऽपि, विभिन्नदेशीया अपि इत्यर्थः, कवयः काव्यकर्त्तारः, कौशिकीं तदाख्यां, वृत्तिं रचनापद्धतिं, बिभ्रतीं दधानां, सौरभोद्गारिणीं सुष्ठु सौन्दर्य्यशालिनीमिति यावत्, यस्य महाराष्ट्रस्य, गिरः वाचः, रीतिं पदसङ्घटनाविशेषम्, उपासते सेवन्ते, आश्रयन्तीत्यर्थः । कौशिक्यादिलक्षणमुक्तं दर्पणे —"या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसङ्कुला पुष्कलनृत्यगीता । कामोपभोगप्रभवोपचारा सा कौशिकी चारुविलासयुक्ता ॥ शृङ्गारे कौशिकी वीरे सात्त्वत्यारभटी पुनः । रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती ॥" इति । "चतस्रो वृत्तयो ह्येताः सर्वनाट्यस्य मातृकाः ॥ पदसङ्घटना रीतिरङ्गसंस्थाविशेषवत् । उपकर्त्री रसादीनां सा पुनः स्याच्चतुर्विधा ॥ वैदर्भी चाथ गौडी च पाञ्चाली लाटिका तथा । माधुर्य्यव्यञ्जकैर्वर्णै रचना ललितात्मिका । अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ॥" इति । अनुष्टुप् वृत्तम् ॥ १०२ ॥

( ल ) अन्ध्रेति ।—अन्ध्रो नाम विषयः दाक्षिणात्यजनपदविशेषः, तस्य लक्ष्मीः श्रीः तस्याः । गोदावर्य्यः नदीविशेषाः, सप्तानां गोदावरीणां समाहारः सप्तगोदावरं, तदेव हारकलापः हारश्रेणी, तस्य एकः अद्वितीयः, नायकः स्वामी मध्यमणिर्वा ।

( व ) भीमेश्वरः भीमो नाम ईश्वरः शिवः ; यद्वा—भीमो नाम कश्चित् राजा, तत्प्रतिष्ठितत्वात् तस्य ईश्वरः ।

तत्कालेति ।—तत्काले नृत्यसमये, या आरभटी तदाख्यवृत्तिविशेषः, तल्लक्षणमुक्तं दर्पणे—"मायेन्द्रजालसङ्ग्राम-क्रोधोद्भ्रान्तादिचेष्टितैः । संयुक्ता वध-बन्धाद्यैरुद्धता-

तुल्यं चास्थिभुजङ्गभूषणमसौ भोगीन्द्रकङ्कालकै-
र्बिभ्राणः परमेश्वरो विजयते कल्पान्तकर्मान्तिकः ॥ १०३ ॥

रामः । (कृताञ्जलिः) ।

नृत्यारम्भपरिश्रमद्गिरिसुतारिक्तार्द्धसम्पूर्त्तये
निर्व्यूढभ्रमिविभ्रमाय जगतामीशाय तुभ्यं नमः ।
यच्चूडाभुजगेश्वरप्रभृतिभिस्तादृग्भ्रमन्तीर्दिशः
पश्यद्भिर्भ्रमघूर्णमाननयनैः शान्तोऽपि न श्रद्दधे ॥१०४॥

---

ऽऽरभटी मता ॥ वस्तूत्थापन-सम्फेटौ सङ्क्षिप्तिरवपातनम् । इति भेदास्तु चत्वारः आरभट्याः प्रकीर्त्तिताः ॥ मायाद्युत्थापितं वस्तु वस्तूत्थापनमुच्यते । सम्फेटस्तु समाघातः क्रुद्ध-सत्वरयोर्द्वयोः ॥ सङ्क्षिप्ता वस्तुरचना शिल्पैरितरथाऽपि वा । सङ्क्षिप्तिः स्यान्निवृत्तौ च नेतुर्नेत्रन्तरग्रहः ॥ प्रवेशत्रासनिष्क्रान्ति हर्षविद्रवसम्भवम् । अवपातनमित्युक्तम्—" इति ; आरभटी आरम्भो वा, यद्वा—तत्काले कल्पान्तसमये इत्यर्थः, या आरभटी नाट्य-विशेषः, उद्दामताण्डवविशेष इत्यर्थः, तस्या विजृम्भणं स्फुरणं, वृद्धिरिति यावत्, तस्मात् यः परित्रासः भयं तस्मादिव, भ्रश्यता स्खलता, अर्द्धाङ्गात् च्यवमानेनेत्यर्थः, वामार्द्धेन गौरीरूपेण अर्द्धांशेन हेतुना, तत् एकशेषः एकमात्रावशिष्टः, वामार्द्धीयगौरीचरण-भ्रंशनादिति भावः, चरणः पादः, दक्षिण इति भावः, यस्य तथाभूतं, भैरवं भीषणं, वपुः शरीरं, बिभ्रत् दधानः, भोगीन्द्रस्य वासुकेः, कङ्कालकैः अस्थिभिः, तुल्यं समम् ; यद्वा—भोगीन्द्रस्य कङ्कालैः देहास्थिभिः, सास्थिदेहैरिति भावः, तुल्यं समं, सहेत्यर्थः, अस्थि-भुजङ्गमयम् अस्थि-सर्परूपं, भूषणम् आभरणं, बिभ्राणः धारयन्, कल्पान्ते सृष्ट्यवसाने, कर्मान्तिकः कर्मकर्त्ता, संहारक इति भावः, असौ कथितप्रकारः, परमेश्वरः भीमेश्वरः शङ्करः, विजयते सर्वोत्कर्षेण वर्त्तते । शार्दूलविक्रीडितं वृत्तम् ॥ १०३ ॥

नृत्यारम्भेति ।—नृत्यारम्भे ताण्डवोपक्रमे, परिश्रमन्त्या अत्यर्थं भीतया, नृत्य-व्यापारस्य उत्कटत्वश्रवणादिति भावः, गिरिसुतया गौर्या, रिक्तस्य शून्यस्य, भयात् परित्यक्तस्येत्यर्थः, अर्द्धस्य वामाङ्गस्य, सम्पूर्त्तये सम्यक् पूरणाय, पुनर्गौरीदेहसङ्गमायेति भावः, निर्व्यूढः त्यक्तः, असमाप्तस्यैव निवारितः इति यावत्, भ्रमिः मण्डलिकया भ्रमणं, तेन विभ्रमः विलासो येन तथाभूताय, जगतां भुवनानाम्, ईशाय अधिपतये, महेश्वरायेत्यर्थः, तुभ्यं नमः, यस्य, चूडायां मुकुटे, जटाजूटरूपे

अपि च—

> क्रीडानटस्य प्रलयान्धकारैः
> कण्ठे निपीते तव नीलकण्ठ !।
> पृथक् कबन्धं पृथगुत्तमाङ्गं
> नृत्यद्ययादैक्षत कालरात्रिः ॥ १०५ ॥

( सर्वे नमन्ति )।

रामः ( अग्रतो दर्शयन् )। देवि ! द्रविडमण्डलमौलिमण्डन-माणिक्यमणिस्तवकम् (अ) इदं काञ्चीनामधेयमायतनं मीन-केतनस्य (ष)। ( सीतामपवार्य्य )। इह हि—

---

इति यावत्, स्थिता ये भुजगेश्वरप्रभृतयः वासुकिप्रमुखाः तैः सह, तादृक् तथैव, पूर्ववदेवेत्यर्थः, भ्रमन्तीः घूर्णमानाः, दिशः पश्यद्भिः अवलोकयद्भिः, अत एव भ्रमेण घूर्णनेन, चक्रवत् भ्रमणेनेत्यर्थः, घूर्णमानानि भ्राम्यन्ति, नयनानि नेत्राणि येषां तैः, शान्तोऽपि त्यक्तनृत्योऽपि, न श्रद्धधे न विश्वसिमि, नृत्यात् निवृत्त इति विश्वसितुं नैव शक्यते इत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ १०४ ॥

क्रीडेति।—नीलकण्ठ ! हे शम्भो ! प्रलयान्धकारैः कल्पान्ततिमिरैः, क्रीडा-नटस्य लीलानर्त्तकस्य, संहारलीलया नृत्यं कुर्वाणस्येत्यर्थः, तव कण्ठे गलदेशे, नील-वर्णे इति भावः, निपीते ग्रसिते इत्यर्थः, आच्छादिते इति यावत्, कण्ठस्य नीलत्वेन अन्धकारे अदृश्यत्वादिति भावः, कालरात्रिः महाभैरवी, यद्वा—कालरात्रिः यम-भगिनी, कल्पान्तनिशा इति यावत्, भयात् त्रासात्, पृथक् नृत्यत् नृत्यं कुर्वत्, कबन्धं शिरःशून्यं देहं, पृथक् उत्तमाङ्गं शिरः, ऐक्षत दृष्टवती, प्रलयकाले संहारप्रवृत्तस्य उद्दामं नृत्यतो महेश्वरस्य रजतधवलाङ्गं तथा मस्तकञ्च अन्धतमसि परिस्फुटं दृश्यते, किन्तु विषज्वालया कृष्णवर्णस्य कण्ठदेशस्य अदृश्यमानत्वात् शिरसो देहः पृथगिव प्रतीयते, एवञ्च उत्तमाङ्गस्य कबन्धस्य च पृथक् नर्त्तनं बोध्यम्। उपजाति-वृत्तम् ॥ १०५ ॥

(अ) द्रविडेति।—द्रविडमण्डलस्य द्रविडदेशस्य, मौलिमण्डनं शिरोभूषणभूतं, माणिक्यमणिस्तवकं मणिमुक्तारचितपुष्पगुच्छतुल्यं मनोहरम्।

(ष) आयतनं स्थानम्। मीनकेतनस्य कामस्य।

स्वेदजलपिच्छिलाभिस्तनुभिर्यूनां च शिथिलमाश्लेषम्।
विपुलं पुलकशलाकापटलं झटिति प्रतिकरोति ॥ १०६ ॥

अपि च—

अभिमुखपतयालुभिर्ललाट-
श्रमसलिलैरवधूतपत्रलेखः।
कथयति पुरुषायितं वधूनां
मृदितहिमद्युतिनिर्मलः कपोलः ॥ १०७ ॥

सुग्रीवः। (वामतो दर्शयन्)। इयमितः शृङ्गारदेवतागर्भगृहमवन्तिविषयसीमन्तमौक्तिकम् (ख) उज्जयिनीनाम राजधानी।

---

स्वेदेति।—यूनां तरुणानां स्त्री-पुंसानां, विपुलं महत्, पुलकशलाकापटलं रोमाञ्चरूपशलाकासमूहः, स्वेदजलैः घर्माम्भोभिः, पुलक-स्वेदजलयोः सत्त्वोद्रेकात् उद्गम इति बोद्धव्यं, पिच्छिलाभिः पिच्छलाभिः, क्लिन्नाभिरिति यावत्, तनुभिः शरीरैः, आश्लेषम् आलिङ्गनं, झटिति सहसा, शिथिलं श्लथम्, अदृढमित्यर्थः, प्रतिकरोति जनयतीत्यर्थः। आर्या वृत्तम् ॥ १०६ ॥

अभिमुखेति।—अभिमुखे सम्मुखे, निम्नदेशे इत्यर्थः, मुखं वदनम्, अभि लक्षीकृत्य अभिमुखम् इत्यर्थो वा, पतयालुभिः पतद्भिः, क्षरद्भिरित्यर्थः, ललाटश्रमसलिलैः भालनिःसृतस्वेदजलैः, अवधूता विलुप्ता, पत्रलेखा पत्रावलीरचना यस्मात् तथाभूतः, मृदितः विमृष्टः इति यावत्, निष्कलङ्क इति भावः, यो हिमद्युतिश्चन्द्रः, तद्वत् निर्मलः शुभ्रः, यद्वा—मृदितः दलितः, यः हिमः तुषारः, तस्य द्युतिवत् प्रभेव, निर्मलः स्वच्छः, वधूनां सीमन्तिनीनां, कपोलः गण्डदेशः, पुरुषायितं रतौ पुरुषवत् आचारं, विपरीतरतमित्यर्थः, कथयति प्रकटयतीति यावत्। पुष्पिताग्रा वृत्तम् ॥ १०७ ॥

(ख) शृङ्गारेति।—शृङ्गारस्य उज्ज्वलरसस्य, देवता अधिष्ठात्रीत्यर्थः, कामदेव इति यावत्, तस्याः गर्भगृहम् अभ्यन्तरस्थप्रकोष्ठम्, अन्तःपुरस्वरूपमिति यावत्। अवन्तीति।—अवन्तिरेव विषयः जनपदः, तस्य सीमन्ते केशरचनायां, द्विधा विभक्तकेशस्य मध्यवर्त्तिस्थाने इत्यर्थः, मौक्तिकं मुक्तास्वरूपम्, अतीव रम्यदर्शनमिति भावः।

इह हि—

कामितुरभिसत्वरीणां गौराङ्गीणामिहेन्दुगौरीषु ।
उह्यमानानामिव रजनिषु परमीक्ष्यते छाया ॥ १०८ ॥

अपि च—

अधस्तात् सौधानामिह हि चरतामिन्दुकिरणान्
घनोदञ्चच्चञ्चूपुटनिहितनेत्रा युवतयः ।
चकोराणां ज्योत्स्नारसकुतुपकौतूहलकृता-
मुदीक्षन्ते नश्यत्तिमिरविशदाभोगमुदरम् ॥ १०९ ॥

अपि च—

इह युवतिवदनकान्तिभिराप्यायिततुन्दपरिमृजः शेते ।
भुक्तापभुक्तहिमरुचिमरीचिरन्तःपुरचकोरः ॥ ११० ॥

---

कामितुरिति ।—इह उज्जयिन्याम्, इन्दुगौरीषु चन्द्रकिरणोज्ज्वलासु, रजनिषु रात्रिषु, कामितुः कामिनः, सकाशे इति शेषः, अभिसत्वरीणाम् अभिसरन्तीनां, गौराङ्गीणां शुभ्रावयवानां, गौरवर्णानां नायिकानामिति यावत्, उह्यमानानामिव चलितानामिव, परं केवलं, छाया प्रतिबिम्बं, न तु शरीरमिति भावः, ईक्ष्यते दृश्यते, जनैरिति शेषः, यतो गौराङ्गता चन्द्रकिरणेऽपह्नुता इति भावः । आर्या वृत्तम् ॥१०८॥

अधस्तादिति ।—इह उज्जयिन्यां, युवतयः तरुण्यः, सौधानां हर्म्याणाम्, अधस्तात् अधोभागे, इन्दुकिरणान् चन्द्रमयूखान्, चरतां सेवमानानां, पिबतामिति यावत्, यद्वा—इन्दुकिरणान् चरतां गच्छतां, चन्द्रकिरणान् पातुं विचरतामित्यर्थः, ज्योत्स्ना एव चान्द्रिका एव, रसः द्रवविशेषः, तस्य कुतुपः चर्मनिर्मितात्पस्नेहपात्रं, तैलघृतादिरक्षार्थं चर्मनिर्मितक्षुद्रपात्रमित्यर्थः, "कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा कुतुपः पुमान्" इत्यमरः; तस्मिन् कौतूहलं कौतुकम्, अभिलाषमिति यावत्, कुर्वन्तीति तत्कृतानां, चकोराणां पक्षिभेदानां, घनं वारंवारं यथा तथा, उदञ्चति विकसति, यद्वा—उद्गच्छति, व्याप्तीभवतीत्यर्थः, चञ्चुपुटे पुटाकारोष्ठद्वये इत्यर्थः, निहितं निवेशितं, नेत्रं नयनं याभिः तत्कृताः सत्यः, नश्यत् अपगच्छत्, तिमिरम् अन्धकारं यस्मात् तथाभूतः, विशदः निर्मलः, आभोगः परिपूर्णता यस्य तादृशम्, उदरं जठरं, चकोराणामिति पूर्वेणान्वयः, उदीक्षन्ते पश्यन्ति । शिखरिणी वृत्तम् ॥ १०९ ॥

इहेति ।—इह उज्जयिन्याम्, अन्तःपुरचकोरः अन्तःपुरवर्ती चकोराख्यपक्षिविशेषः, भुक्ता अपभुक्ताः वा पीताः अर्द्धपीता वा इत्यर्थः, हिमरुचयश्चन्द्रस्य, मरीचयः

विभीषणः। इहैवायमलकायाः शाखानगरगौरवभाजि त्रिपुरदहनाधिष्ठानप्रतिष्ठो भगवान् महाकालनाथः (ङ)। अयं हि—

उद्दामभ्रमिवेगविस्तृतजटावल्लीप्रणालीपतत्-
स्वर्गङ्गाजलदण्डिकावलयितं निर्माय तत्पञ्जरम्।
सम्भ्राम्यद्भुजदण्डपक्षपटलद्वन्द्वेन हंसायित-
स्त्रैलोक्यव्ययनाटिकानयनटः स्वामी जगत्त्रायताम्॥ १११॥

रामः। (प्रञ्जलिः)।—

नमस्तुभ्यं देवासुरमुकुटमाणिक्यकिरण-
प्रणालीसम्भेदस्नपितचरणाय स्मरजिते।

---

किरणाः येन तथाभूतोऽपि, युवतीनां तरुणीनां, वदनकान्तिभिः, मुखशोभाभिः, आप्यायितः स्फीतः, परितृप्त इत्यर्थः, अत एव तुन्दपरिमृजः अलसः सन्, "मन्दस्तुन्द-परिमृज आलस्यः शीतकोऽलसोऽनुष्णः" इत्यमरः, शेते स्वपिति। आर्या वृत्तम्॥११०॥

(ङ) अलकायाः कुबेरनगर्याः। शाखानगरस्य मूलनगरादन्यस्य पुरस्य, अलकायाः समीपवर्त्तिनगरान्तरस्येत्यर्थः, "—अन्यत्तु यत् मूलनगरात् पुरम्। तच्छाखानगरम्" इत्यमरः; गौरवं समादरं, भजते प्राप्नोतीत्यर्थः, इति तथोक्तायाम्। त्रिपुरेति।—त्रिपुरदहनस्य हरस्य, अधिष्ठानेन आविर्भावेण, प्रतिष्ठा गौरवं यस्य तथोक्तः। महाकालनाथः तदाख्यशिवमूर्त्तिः।

उद्दामेति।—उद्दामा उच्छृङ्खला, या भ्रमिः भ्रमणं, नर्त्तनमिति भावः, तस्याः वेगेन आतिशय्येन, विस्तृता प्रसारिता, विमुक्ता इति यावत्, जटावल्ली एव लतेव लम्ब-मानसंयतकेशराशिरेव, प्रणाली पयसः पदवी, जलनिर्गमपथः इत्यर्थः, "द्वयोः प्रणाली पयसः पदव्याम्" इत्यमरः; तस्याः पतन्ती स्रवन्ती, या स्वर्गङ्गा मन्दाकिनी, तस्या जलान्येव सलिलान्येव, दण्डिकाः शलाकाः, ताभिः वलयितं वेष्टितं, तत्पञ्जरं तस्य हंसस्य, पञ्जरं पिञ्जरं, पञ्जरस्वरूपमिति भावः, निर्माय रचयित्वा, सम्भ्राम्यत् सञ्चलत्, इतस्ततो विक्षिपदित्यर्थः, भुजदण्ड एव बाहुयष्टिरेव, पक्षपटलद्वन्द्वं पक्षसमूह-युगलं, तेन हंसायितः हंसवत् आचरितः, तथा त्रैलोक्यस्य जगत्त्रयस्य, व्ययः नाश एव, नाटिका नाट्यं, तस्या नये अभिनये, नटः अभिनेता, स्वामी प्रभुः, महाकालः इति यावत्, जगत् भुवनं, त्रायतां रक्षतु। शार्दूलविक्रीडितं वृत्तम्॥ १११॥

महाकल्पस्वाहाकृतभुवनचक्रेऽपि नयने
निरोद्धुं भूयस्तत्प्रसरमिव कामं हुतवते ॥ ११२ ॥

किञ्च—

वेगादगात् देव! तव त्रिनेत्र!
युग्मेतरस्मान्नयनात् कृशानुः।
कामे तु सम्मोहनशस्त्रहस्ते
स्वाहामनुध्याय चिरं जडोऽभूत् ॥ ११३ ॥

(सर्वे नमन्ति)।

सीता। (विहस्य)। अहो! तत्थभवदो ससहरसेहरस्स

---

नम इति।—देवासुराणां सुरदानवानां, मुकुटेषु किरीटेषु, यानि माणिक्यानि रत्नविशेषाः, तेषां किरणा एव अंशव एव, प्रवालीसम्भेदाः पयःपदवीस्फुटनं, विदीर्णजलनिर्गमपथनिःसृतपयांसीति भावः, "सम्भेदः स्फुटने सङ्गे" इति मेदिनी; तैः स्नपितौ अभिषिक्तौ, आर्द्रीकृतौ इत्यर्थः, प्रक्षालितौ इति यावत्, चरणौ पादौ यस्य तस्मै तथोक्ताय, महाकल्पे महाप्रलये, "संवर्त्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि" इत्यमरः; स्वाहाकृतं हुतं, भुवनचक्रं जगन्मण्डलं यस्मिन् तादृशेऽपि, नयने नेत्रे, तृतीये इति शेषः, भूयः पुनः, तस्य नयनस्य, भस्मीकृतभुवनस्येति भावः, प्रसरं विजृम्भणं, यद्वा—तस्य भुवनचक्रस्य, प्रसरं विस्तारं, पुनः सृष्टिमिति भावः, निरोद्धुमिव प्रतिहन्तुमिव, कामं मदनं, हुतवते होमविषयं कृतवते, स्मरजिते कामारये, महेश्वराय इत्यर्थः, तुभ्य नमः। शिखरिणी वृत्तम् ॥ ११२ ॥

वेगादिति।—हे देव! त्रिनेत्र! हे त्रिलोचन! तव भवतः, युग्मेतरस्मात् अयुग्मात्, तृतीयादित्यर्थः, नयनात् लोचनात्, कृशानुः अग्निः वेगात् सवेगम्, अगात् निरगच्छत्, तु किन्तु, सम्मोहनं नाम अस्त्रं पञ्चबाणान्तर्गतबाणविशेषः, हस्ते पाणौ यस्य तथाभूते, कामे अनङ्गे, स्वाहां निजपत्नीम्, अनुध्याय स्मृत्वा, चिरं दीर्घकालं, जडः मन्थरः, निष्क्रिय इति यावत्, अभूत् अजायत, कामबाणविद्धः सन् पत्नीं स्वाहां स्मरन् विमूढ आसीदिति भावः, अथच कामं दग्ध्वा चिरेण शान्तिमलभतेति भावः। इन्द्रवज्रा वृत्तम् ॥ ११३ ॥

कवलिदचउद्दसभुवणस्स (क) वि ण पलाइदा अक्खिवुभुक्खा, (ख) जेण भअवं मअणो वि विआलिअग्गासीकिदो * (ग) ।

(सर्वे हसन्ति) ।

रामः । (सविमर्शम्) । अस्य हि भगवतः,—

बाणीभूतपुराणपूरुषधृतिप्रत्याशया धाविते
विद्राति स्फुरदाशुशुक्षणिकणक्लान्ते शकुन्तेश्वरे ।
नम्रोन्नम्रभुजङ्गपुङ्गवगुणव्याकृष्टबाणासन-
च्छिन्नास्त्रस्य पुरद्रुहो विजयते सन्धानसीमाश्रमः ॥ ११४ ॥

---

* अहो ! तत्रभवतः शशधरशेखरस्य कवलितचतुर्दशभुवनस्यापि न पलायिता अक्षिबुभुक्षा, येन भगवान् मदनोऽपि विकालिकग्रासीकृतः ।

---

(क) शशधरशेखरस्य चन्द्रचूडस्य । कवलितेति ।—कवलितानि ग्रसितानि, चतुर्दश भुवनानि जगन्ति येन तादृशस्य ।

(ख) पलायिता निवृत्ता । अक्षिबुभुक्षा दृष्टिक्षुधा ।

(ग) विकालिकग्रासीकृतः विकाले असमये भवः विकालिकः असामयिकः, स चासौ ग्रासः कवलश्चेति विकालिकग्रासः, अविकालिकग्रासो विकालिकग्रासः कृत इति तथोक्तः, अथवा—मध्याह्ने कृताहारस्य विकाले यथा यत्किञ्चित् स्वल्पभोजनं, तथा देवस्यापि सर्वजगत् भक्षितवतः कामदेवरूपस्वल्पद्रव्यभक्षणमिति भावः ।

बाणेति ।—बाणीभूतस्य शरस्वरूपस्य, पुराणपूरुषस्य नारायणस्य, धृतौ धारणे, वहने इति यावत्, या प्रत्याशा आकाङ्क्षा, तया धाविते चलिते, किन्तु स्फुरद्भिः ज्वलद्भिः, आशुशुक्षणेः अग्नेः, शैवानलस्येति यावत्, "आश्रयाशो वैश्वानरो वाह्निर्वीतिहोत्रो धनञ्जयः ।···शिखावानाशुशुक्षणिः ॥" इत्यमरः ; कणैः स्फुलिङ्गैः, क्लान्ते श्रान्ते, दहनभयात् आर्ते इति भावः, शकुन्तेश्वरे पक्षिराजे गरुडे, नारायणस्य वाहने इति भावः, विद्राति अपगच्छति सति, दूरमपसरति सतीत्यर्थः, नम्रः नतः, आनतमस्तक इत्यर्थः, गरुडापातभयादिति भावः, उन्नम्रः उन्नतमस्तकः, गरुडापगमनादिति भावः, यो भुजङ्गपुङ्गवः सर्पराजः वासुकिः, स एव गुणः मौर्वी, तेन व्याकृष्टं विशेषेणाकृष्टम्, आकर्णाकृष्टमित्यर्थः, यत् बाणासनं शरासनं, धनुरित्यर्थः, तेन च्छिन्नं पातितम्, अस्त्रं बाणो येन तथाभूतस्य, पुरद्रुहः त्रिपुरारेः, सन्धानं शरसंयोजनं, तदेव सीमा पर्यन्तः यस्य तथाभूतः, श्रमः आयासः, रोषानलेनैव त्रिपुरभस्मीकरणात्

(अग्रतो दर्शयन्)। इयं च कलचुरिकुलनरेन्द्रसाधारणाग्रमहिषी (घ) माहिष्मती नाम चेदिमण्डलमुण्डमाला (ङ) नगरी। इह हि—

आश्लेषचुम्बनरतोत्सवकौतुकादि-
क्रीड़ादुरोदरपणप्रतिभूरनङ्गः।
भोगस्तु यद्यपि जये च पराजये च
यूनोर्मनस्तदपि वाञ्छति जेतुमेव ॥ ११५ ॥

प्ररसन्धानाय प्रमनाय: जातः, न तु शरनिक्षेपाय इति भावः, यद्वा—सन्धानाय शरयोजनाय, या सीमा स्थितिः, आलीढ-प्रत्यालीढभावेनावस्थानमित्यर्थः, "सीमाऽऽघाटस्थितिक्षेत्रेष्वण्डकोषेऽपि च स्त्रियाम्" इति मेदिनी; तया श्रमः तज्जन्यश्रान्तिः, विजयते सर्वोत्कर्षेण वर्त्तते। त्रिपुरदाहे विष्णु: शरः वासुकिश्च गुणो हन्त इति पुराणवार्त्ता। शार्दूलविक्रीडितं वृत्तम् ॥ ११४ ॥

(घ) कलचुरीति।—कलचुरिकुलं तदाख्यं क्षत्रियकुलं, तत्र ये नरेन्द्रा राजानः, तेषां साधारणी सामान्या, सर्वभोग्या इत्यर्थः, अग्रमहिषी ज्येष्ठा महिषी, परिचयात् प्रागेव राजधान्या पातिव्रत्येनाङ्गीकारादिति भावः।

(ङ) चेदिमण्डलस्य चेदिराज्यस्य, मुण्डमाला मुण्डस्य मस्तकस्य, माला माल्यस्वरूपिणीत्यर्थः, शिरोभूषणभूतेति यावत्।

आश्लेषेति।—अनङ्गः कामः, आश्लेषः आलिङ्गनं, चुम्बनम् अधरपानं, रतोत्सवः सुरतरूपानन्दजनकव्यापारः, तेषु कौतुकम् अभिलाषः, हर्षो वा, "कौतुकन्त्वभिलाषे स्यादुत्सवे नर्म-हर्षयोः" इति मेदिनी; एते आदयो यस्याः तादृशी, या क्रीडा केलिविशेषः, सैव दुरोदरस्य द्यूतक्रीड़ायाः, पणः ग्लहः, "वाजी" इति भाषा, द्यूतक्रीड़ाया जय-पराजययोः शुल्कमित्यर्थः, "दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्" इति "पणोऽक्षेषु ग्लहः" इति चामरः; तस्य प्रतिभूः लग्नकः, विश्वासस्थानमिति यावत्, "जामिन्" इति भाषा, "स्युर्लग्नकाः प्रतिभुवः" इत्यमरः; यद्यपि जये च विजयलाभे च, पराजये च पराभवे च, भोगः सुखं, यूनोरुभयोरेव उभयत्रजनितमिति भावः, "भोगः सुखे स्त्र्यादिभृतावहेश्च फण-काययोः" इत्यमरः; तु अवधारणार्थकमव्ययम्, तदपि तथाऽपि, यूनोः तरुणयोः, स्त्री-पुरुषयोरिति यावत्, मनः चित्तं, जेतुमेव आयत्तीकर्त्तुमेव, न तु पराजेतुमिति भावः, अन्योऽन्यमिति शेषः, वाञ्छति अभिलषति। वसन्ततिलकं वृत्तम् ॥ ११५ ॥

( विमानवेगं रूपयित्वा )। देवि !—

देव्या भूमेर्मृगमदमसीमण्डनं सिद्धसिन्धोः
सध्रीचीयं जयति यमुना या तटैकाग्रवृत्तीन्।
प्रेमोत्कर्षादिव पितृपतेर्भ्रातुराच्छिद्य हस्ता-
दस्ताबाधं गमयति पितुर्मण्डलं चण्डभानोः॥ ११६॥

लक्ष्मणः। ( दूरमङ्गुल्या दर्शयन् )।

त्रिपुरहरकिरीटक्रीडितैः क्रीडयद्भि-
र्भुवनममृतभानोर्बालमित्रैः पयोभिः।
सगरसुतचितायाः पावनी तोयराशे-
रियमियमघमग्रे जाह्नवी निह्नुते नः॥ ११७॥

देव्या इति।—भूमेर्देव्याः क्षितिदेवतायाः, मृगमदः कस्तूरी एव, मसी तया मण्डनं भूषणम्, आभरणस्वरूपमित्यर्थः, यमुनाजलस्य गाढकृष्णवर्णत्वात् तत्र पृथिव्याः मसी-भूषणत्वारोप इति भावः, सिद्धसिन्धोः स्वर्णद्याः, यद्वा—सिद्धानां मुक्तानां, मुमुक्षूणा-मिति भावः, "सिद्धौ व्यासादिके देवयोनौ निष्पन्न-मुक्तयोः" इति हैमः, सिन्धोः नद्याः, मुक्तिदायिन्याः नद्याः, गङ्गायाः इत्यर्थः, सध्रीची सहचरी, इयं पुरतः प्रवहमाना, यमुना कालिन्दी, जयति सर्वोत्कर्षेण वर्त्तते, या यमुना, तटैकाग्रवृत्तीन् तटे तीरभूमौ, एकाग्रा ऐकान्तिकी, वृत्तिः व्यापारः, चित्तस्याकर्षणमिति यावत् येषां तादृशान्, एकाग्रमनसा तटवर्त्तिनः, जनानिति शेषः, प्रेमोत्कर्षादिव स्नेहातिशयादिव, भ्रातुः सोदरस्य, पितृपतेः यमस्य, उभयोरेव सूर्य्यात्मजत्वादिति भावः, "धर्मराजः पितृपतिः समवर्त्ती परेतराट्। कृतान्तो यमुनाभ्राता शमनो यमराड् यमः॥" इत्यमरः; हस्तात् करात, आच्छिद्य आकृष्य अस्ताबाधम् अस्त दूरीभूतः, आबाधः पीड़ा, विघ्न इति यावत् यत्र तद्यथा तथा, निर्विघ्नं यथा तथा इत्यर्थ, पितुः जनकस्य, चण्डभानोः सूर्य्यस्य, मण्डलं विम्बं, लोकमिति भावः, गमयति प्रेरयति, गङ्गा यमुनयोः सङ्गमे मृतानां यमयातना नास्ति, प्रत्युत सूर्य्यलोकप्राप्तिरिति भावः। मन्दाक्रान्ता वृत्तम्॥ ११६॥

त्रिपुरेति।—त्रिपुरहरस्य शम्भोः, किरीटे मुकुटे, मुकुटरूपायां जटायामित्यर्थः, क्रीडितैः क्रीडनैः, कृतक्रीडैरित्यर्थः, शम्भुना शिरसा गङ्गाया जलवेगधारणादिति भावः, अमृतभानोः सुधाकरस्य, चन्द्रस्य इत्यर्थः, बालमित्रैः बाल्यबन्धुभिः, चन्द्रस्य जलत्वादिति

रामः। (सहर्षम्)।—

गौरीविभज्यमानार्द्धसङ्कीर्णहरमूर्द्धनि।
अम्ब! द्विगुणगम्भीरे! भागीरथि! नमोऽस्तु ते ॥११८॥

(सीतां प्रति)। देवि! वन्दस्व—

देवस्याम्बुजसम्भवस्य भवनादम्भोधिमागामुका
सेयं मौलिविभूषणं भगवतो भर्गस्य भागीरथी।

भावः, भुवनं जगत्, क्रोडयद्भिः प्रीणयद्भिरिति यावत्, जलस्य जीवनत्वादिति भावः, पयोभिः सलिलैः, सगरसुतानां षष्टिसहस्राणां सगरतनयानां, चिता शवदाहनचुल्ली, कपिलकोपानलेन दहनस्थानमिति यावत् तथाभूतायाः, तोयराशेः समुद्रस्य, सागरगर्भ एव कपिलकोपानलेन तेषां भस्मीभवनादिति भावः, पावनी पवित्रताकारिणी, स्वस्याः सङ्गदानात् गङ्गासागरसङ्गमस्य पवित्रतीर्थत्वादिति भावः, अग्रे पुरतः, अवस्थितेति शेषः, इयम् इयम् एषा एषा, सम्भ्रमे द्विरुक्तिः, जाह्नवी गङ्गा, नः अस्माकम्, अघं पापं, निह्नुते नाशयति। पुरा सगरेण राज्ञा अश्वमेधे प्रक्रान्ते देवेन्द्रस्तस्याश्वं हृत्वा पाताले कपिलसन्निधौ स्थापयामास। सगरपुत्रैश्च तदन्वेषणपरैः पृथिवीं खनद्भिः सोऽश्वः कपिलसन्निधाने दृष्टः। ततश्च तैस्ताडितो मुनिस्तान् कोपानलेन ददाह। अथ सगरस्य वृद्धप्रपौत्रेण भगीरथेन बहुभिस्तपोभिर्गङ्गां समानीय तान् प्राप्तभस्मभावान् सगरसुतान् उद्दधारेति पुराणवार्त्ता। मालिनी वृत्तम् ॥११७॥

गौरीति।—अम्ब! हे मातः! भागीरथि! गङ्गे! गौर्य्या पार्वत्या, विभज्यमानम् अङ्गीक्रियमाणं, द्विधा कृत्वा गृह्यमाणमित्यर्थः, अर्द्धम् एकांशं यस्य तादृशे, अत एव सङ्कीर्णे स्वल्पीभूते, वामार्द्धस्य गौरीमस्तकत्वादिति भावः, हरस्य शिवस्य, मूर्द्धनि शिरसि, अर्द्धनारीश्वरमूर्त्तेरीश्वरभागस्य शिरसीत्यर्थः, दक्षिणार्द्धे इति भावः, द्विगुणं द्विरावृत्तं, गम्भीरं गभीरता यस्याः तत्सम्बुद्धौ, सङ्कीर्णे प्रदेशे हि नद्यः स्वल्पपरिसराः, किन्तु सर्वाधिकगम्भीरा भवन्तीति भावः, ते तुभ्यं, नमः अस्तु, त्वां प्रणमामीत्यर्थः। अनुष्टुप् वृत्तम् ॥११८॥

देवस्येति।—अम्बुजसम्भवस्य पद्मयोनेः, देवस्य ब्रह्मण इत्यर्थः, भवनात् आवासात्, ब्रह्मलोकादित्यर्थः, ब्रह्मकमण्डलुतः गङ्गायाः भूमौ आगमनादिति भावः, अम्भोधिं समुद्रम्, आगामुका आगमनशीला, भगवतः षडैश्वर्य्यसम्पन्नस्य, भर्गस्य हरस्य, "हरः स्मरहरो भर्गः" इत्यमरः; मौलिविभूषणं शिरोभूषणभूता, सा जगत्पावनीत्यर्थः,

उद्‌यातानपहाय विग्रहमिह स्रोतःप्रतीपानपि
स्रोतस्तीव्रतरत्वरा गमयति द्राक् ब्रह्मलोकं जनान् ॥११९॥

सीता । (कृताञ्जलिः) । अइ णिअस्रोतसिंखलासंदाणिद-तिहुअणे ! (च) मंदाइणि ! वंदिज्जसि । *

( सर्वे नमन्ति ) ।

लक्ष्मणः । ( अन्यतो दर्शयन् )—

धनाधिनाथप्रणयानुरोधा-
दभग्नकैलासनिकेतनस्य ।
देवस्य कल्पान्तकपालपाणे-
र्वाराणसी नाम पुरी पुरस्तात् ॥ १२० ॥

रामः । ( सहर्षमवलोक्य ) ।—

---

* अयि निजस्रोतःशृङ्खलासन्दानितत्रिभुवने । मन्दाकिनि । वन्द्यसे ।

---

भागीरथी गङ्गा, इयम् एषा, इह भागीरथ्या. विग्रह कलेवरम, अपहाय त्यक्त्वा, उद्‌यातान् ऊर्द्ध्वं गतान्, परलोकं प्रस्थितान् इत्यथः, अथवा उच्चप्रदेशं गतान्, यस्या दिशो गङ्गा आगच्छति तस्यामेव दिशि गन्तुं प्रवृत्तानित्यर्थः, अत एव स्रोतसः जलवेगस्य, प्रतीपानपि प्रतिकूलानपि, विपरीतगामिनोऽपि इत्यर्थः, जनान् लोकान्, स्रोतसो निम्नगामित्वात् ऊर्द्ध्वगमनमसम्भवमिति विरोधालङ्कारः. ऊर्द्ध्वं परलोकमिति तत्परिहार इति बोध्यं, स्रोतसः अपि जलवेगादपि, तीव्रतरा अतीव तीव्रा, अत्यर्था इत्यर्थः, त्वरा वेगिता यस्याः तथाभूता सती, द्राक् झटिति, "द्राक् झटित्यञ्जसाऽह्नाय" इत्यमरः; ब्रह्मलोकं ब्रह्मरूपं लोक, चतुर्मुखस्य आवासस्थानमिति वा, गमयति नयति । शार्दूलविक्रीडितं वृत्तम ॥ ११९ ॥

( च ) निजेति ।—निजस्रोत एव स्वकीयजलवेग एव, शृङ्खला निगडः, लौह-रज्जुरित्यर्थः, तया सन्दानितं बद्धं, त्रिभुवनं त्रैलोक्य यया तथोक्ता, मन्दाकिनी-अलका-नन्दा-भोगवतीरूपेण भुवनत्रयं व्याप्य स्थिता इत्यर्थः, तत्सम्बुद्धौ ।

धनाधिनाथेति ।—धनाधिनाथस्य कुबेरस्य, धनाधिनाथे वा यः प्रणयः प्रेम, स्नेह इत्यर्थः, तस्य अनुरोधात् अनुवर्त्तनात्, प्रणयवशादित्यर्थः, अभग्नम् अपरित्यक्तम्, अत्यक्तमित्यर्थः, कैलास एव तदाख्यपर्वत एव, निकेतनं गृहं येन तथाभूतस्य, कल्पान्ते प्रलयकाले, कपालमेव खर्परं एव, पाणौ हस्ते यस्य तथोक्तस्य, देवस्य शम्भोः,

प्लवमानैरपारोऽयं जनैः संसारसागरः।
द्वीपे वाराणसीनाम्नि विश्रान्तैरिह तीर्य्यते ॥ १२१ ॥

अपि चैनां नित्यमध्यास्ते (छ) भगवान्—

कण्ठच्छायनिपीतपन्नगफणारत्नौघमावस्थितौ
हारे निर्भयपार्वतीभुजलताबन्धोल्लसत्कन्धरः।
तत् सर्वाङ्गविरामवामनतमैरेव स्वरैः साममं
बिभ्रत् ब्रह्मशिरः शिवाय जगतामीशाङ्कचूड़ामणिः ॥ १२२ ॥

---

वाराणसी नाम पुरी नगरी, पुरस्तात् अग्रतः, दृश्यते इति शेषः। उपजाति-वृत्तम् ॥ १२० ॥

प्लवमानैरिति।—अयम् एषः, संसार एव अविद्याजन्यसंस्काररूपवासना एव, पुनः पुनः कर्मजन्यदेहपरिग्रह एव वा, सागरः समुद्रः, प्लवमानैः सन्तरद्भि, संसारसागरे एवेति भावः, जनैः जीवैरित्यर्थः, अपारः पारयितुमशक्यः, तर्त्तुमशक्य इति यावत्, किन्तु इह अस्मिन्, वाराणसीनाम्नि द्वीपे अन्तरीपे, असि-वरुणयोर्नद्योः मध्यभागे अवस्थितत्वात् वाराणस्याः द्वीपत्वमवगन्तव्यं, विश्रान्तैः कृतविश्रामैः, अध्युषितैरिति भावः, जनैरिति शेषः, तीर्य्यते तर्त्तुं शक्यते, वाराणसी मुक्तिक्षेत्रमिति भावः। अनुष्टुप् वृत्तम् ॥ १२१ ॥

(छ) एना वाराणसीम्। अध्यास्ते अधितिष्ठति।

कण्ठच्छायेति।—हारे हारस्वरूपे वासुकौ इत्यर्थः, कण्ठस्य गलदेशस्य, छाया कान्तिः, प्रभा इत्यर्थः, कण्ठच्छाय कालकूटभक्षणात् गलदेशस्य नीलाभा इत्यथः, तेन निपीतः निःशेषेण कवलितः, सम्यग्रूपेण नीलवर्णतामापादितः इत्यर्थः, पन्नगस्य भुजङ्गस्य, वासुकेरिति भावः, फणारत्नानां सहस्रफणासु अवस्थितानां सहस्रमणीनाम्, ओघः समूहः, तन्मात्रेण कण्ठस्य नीलकान्तिमात्रेणेत्यर्थः, अवस्थानं स्थितिः यस्य तथाभूते सति, केवलं हाररूपेण, न तु वासुकिरूपेण प्रतीयमाने सतीत्यर्थः, निर्भयाया भयविहीनायाः, पार्वत्याः गौर्य्याः, भुजलताबन्धेन बाहुवल्लीवेष्टनेन, उल्लसन्ती शोभमाना, कन्धरा ग्रीवा यस्य तथोक्तः, अन्यदा शिरोरत्नदीप्त्या वासुकीसद्भावज्ञानेन भयमिति भावः, सर्वेषां निखिलानाम्, अङ्गानाम् अवयवानां, शिरोव्यतिरिक्तानामन्येषा-मवयवानामित्यर्थः, विरामेण क्षयेण, अभावेनेत्यर्थः, रुद्रेण ब्रह्मणः एकं शिरश्छित्त्वा स्वयं धारणादिति भावः, वामनतमैरेव अतिह्रस्वैरेव, अतिक्षीणैरेवेत्यर्थः, स्वरैः उदात्तादी-

(अन्यतो दर्शयन् सीतां प्रति)। देवि! दृश्यतामितः,—

नवोन्मीलन्मौर्वीकिणनिकरकार्कश्यसदय-
प्रवृत्तस्त्वत्पाणौ किमपि निविड़ं पीड़यति मे।
कृतार्थोऽयं यस्याः समजनि करः सैव पुरतः
पुरी पूर्वेषां ते नयनमियमालानयति नः॥ १२३॥

सीता। (साभ्यसूयानुरागं साचीकृताक्षी (ञ) रामं पश्यन्ती पुरीं प्रति)। अंब मिहिले! वंदिज्जसि। गुरुजणे वि वंदणं मे विण्णवेसि।*

रामः। (सुग्रीव-विभीषणौ प्रति)। वयस्यौ! इयं सा जानकीं प्रजायमानायाः (झ) भगवत्या भूमेररिष्टमन्दिरं (ञ) मिथिला।

* अम्ब मिथिले! वन्द्यसे। गुरुजनेऽपि वन्दनं मे विज्ञापयिष्यसि।

नामन्यतमैरित्यर्थः, सामगं सामवेदगायकं, तत् प्रसिद्धं, ब्रह्मणः चतुराननस्य, शिर मुण्डं, स्वेनैव छिन्नमिति भावः, बिभ्रत् दधान, एणाङ्कचूडामणिः मृगाङ्कशेखरः चन्द्रशेखरः शिव इत्यर्थः, जगतां लोकानां, लोकत्रयनिवासिनामिति यावत्, शिवा मङ्गलाय, अस्त्विति शेषः। शार्दूलविक्रीडितं वृत्तम्॥ १२२॥

नवेति।—यस्याः पुर्य्याः, नवं नूतनं यथा तथा, उन्मीलन् उद्भवन्, मौर्वीकिणनिकर मौर्वी धनुर्गुणः, तस्याः किणनिकरः शुष्कमांसग्रन्थिसमूहः, मौर्वीघर्षणजाति इति भावः, तस्य कार्कश्यात् काठिन्यात्, सदयं सकृपं यथा तथा, मृदु यथा तथेत्यर्थः प्रवृत्तः उद्यतः, त्वत्पाणिं ग्रहीतुमिति शेषः, मे मम, अयम् एषः, करः पाणिः, त पाणौ करे, किमपि अनिर्वचनीयं यथा तथा, निविड़ं दृढ़, पीड़यति निष्पेषयति, कृतार्थः कृतकृत्यः, सफल इत्यर्थः, समजनि सञ्जातः, सैव तादृशी एव, इय एषा, ते तव, पूर्वेषां पूर्वपुरुषाणां, पुरी नगरी, मिथिलेति यावत्, पुरतः अग्रतः, न अस्माकं, नयनं नेत्रम्, आलानयति बध्नाति, तत्र दृष्टिर्लगतीति भावः। शिख रिणी वृत्तम्॥ १२३॥

(ञ) साचीकृताक्षी साचीकृते तिर्य्यक्कृते, वक्रभावेन विनिहिते इत्यर्थः "तिर्य्यगर्थे साचि तिरोऽपि" इत्यमरः; अक्षिणी नयने यया तादृशी।

(झ) प्रजायमानायाः प्रसवमानायाः, जनयन्त्याः इत्यर्थः, अन्तर्भूतण्यर्थोऽ प्रयोगः।

(ञ) अरिष्टमन्दिरं सूतिकागृहम्, "अरिष्टं सूतिकागृहम्" इत्यमरः।

सुग्रीव-विभीषणौ। (सकौतुक-स्मितम्)। यत्र भगवतः पार्वती-जीवितेश्वरस्य धनुर्धनुरन्तेवासिनावजगव-भार्गवौ भञ्जतो भवतः सहपांशुक्रीडादीर्घसखीयं वीरलक्ष्मीः ? (ट)।

रामः। (सलज्ज-स्मितमन्यतो दर्शयन् सीतां प्रति)। देवि ! इयं पुन-स्ततोऽपि पुरस्ताच्चम्पा नाम गौड़ानां विनयमधुरशृङ्गारविभ्रम-रमणीया मकरकेतनकुमारव्रतचर्य्यातपोवनमिव (ठ)राजधानी। (अपवार्य्य च)। इह हि—

रोमाञ्चोच्छ्वसदङ्गसन्धिनिविड़ैरालिङ्गनैर्यामिनीं
शेषीकृत्य विवृण्वते निजरहश्चातुर्य्यमेणीदृशः।
यष्टिस्थे सपदि प्रदीपमुकुले दग्ध्वा दशां मल्लिका-
तैले प्रज्वलति स्तृणाति वसतीर्यन्नाभिदघ्नं तमः॥ १२४॥

---

(ट) पार्वतीजीवितेश्वरस्य गौरीनाथस्य। धनुरिति।—धनुश्च शरासनञ्च, धनुरन्तेवासी च धनुर्वेदाध्येता च तौ। अजगवेति।—अजगवः पिनाकः, "पिनाकोऽजगवं धनुः" इत्यमरः, भार्गवः परशुरामः तौ, भञ्जतः भग्नौ कुर्वतः, भवतः तव, सहपांशुक्रीडायां सहधूलिखेलने, परस्परं मिलित्वा बाल्यक्रीडायामित्यर्थः, दीर्घसखी चिरसहचरी। वीरलक्ष्मीः वीरश्रीः, वीर्य्यशुल्का भार्य्या इत्यर्थः।

(ठ) गौड़ानां गौड़देशवासिनाम्। विनयेति।—विनयेन शिष्टाचारेण, अनु-रागव्यञ्जकव्यवहारेणेति भावः, मधुरः मनोहरः, यः शृङ्गाराय सुरताय, सुरतक्रीड़ार्थ-मित्यर्थः, विभ्रमः विलासविशेषः, तेन रमणीया मनोहारिणी। मकरकेतनेति।—मकरकेतनः काम एव, कुमारः शिशुः, अनूढ इति भावः, तस्य व्रतचर्य्यायाः नियमानुष्ठानस्य, कौमारव्रतोद्यापनस्येति भावः, तपोवनमिव तपश्चरणायतनस्थ-मिव, विनयमधुरशृङ्गारविभ्रमशालित्वादिति भावः।

रोमाञ्चेति।—एणीदृशः मृगनयनाः कामिन्यः, रोमाञ्चेन लोमहर्षेण, उच्छ्वसता उद्गच्छता, स्फूर्तिं गच्छता इत्यर्थः, अङ्गसन्धिना अवयवानां संयोगस्थानेन, निविड़ैः घनैः, सुदृढैरिति भावः, आलिङ्गनैः आश्लेषैः, यामिनीं रजनीं, शेषीकृत्य अतिवाहयित्वा, किञ्चिदवशिष्टां कृत्वेति यावत्, निजं स्वकीयं, रहश्चातुर्य्यं निगूढनिधुवनवैदग्ध्यं, विवृण्वते प्रकटयन्ति, यत् यतः, सपदि झटिति, यष्टिस्थे प्रदीपाधारदण्डवर्त्तिनि, प्रदीपमुकुले प्रदीपकोरके, कलिकाकारदीपाग्रमुखे इत्यर्थः, दशां वर्त्तिं, दग्ध्वा भस्मीकृत्य,

लक्ष्मणः। (अग्रे दर्शयन्)। एते भगवत्यौ भूमिदेवानां मूलायतनमन्तर्वेदीं पूर्वेण कृष्णागुरु-मलयजमयमङ्गरागमिवान्योऽन्यस्य (ड) कुर्वाणे कलिन्दकन्या-मन्दाकिन्यौ (ढ) सङ्गच्छेते—

हिमालयोत्सङ्गसदाधिवासतो
जातेव पाण्डुः प्रतिभाति जाह्नवी।
निदाघभानोः पितुरङ्कलालनात्
कृतेव काली यमुना च दृश्यते॥ १२५॥

---

मल्लिकातैले मल्लिकापुष्पवासितगन्धतैले इत्यर्थः, प्रज्वलति सति दीप्यमाने सति, ज्वलितुमारब्धे सतीत्यर्थः, तमः अन्धकारः, नाभिदघ्नं नाभिप्रमाणं सत्, वसतीः वेश्मानि, "वसती रात्रि-वेश्मनोः" इत्यमरः; स्तृणोति आच्छादयति, नाभिप्रमाणोन्नताधारदण्डोपरिस्थदीपस्य दशा यावत् तैलसिक्ता आसीत्, तावत् प्रदीपाग्रभागे प्रज्वलितायास्तस्या आलोकेन सर्वं गृहं समुद्भासितमासीत्, ततः सर्वां निशां व्याप्य प्रज्वलनेन तैले निःशेषिते प्रज्वलिताग्रदशाभागः क्रमशः भस्मीभूय दीपगर्भे अवस्थाय ईषत् प्रज्वाल, तेन च गृहाभ्यन्तरे दण्डायमानस्य कस्यचित् नाभिपर्य्यन्तः गृहोत्सेधः तमसाऽऽवृतोऽभूत्, एवञ्च गृहाभ्यन्तरे उपरिभागे एव आलोकः, अधोभागे पुनरन्धकार इति समस्तरजनीं व्याप्य कामिनीनां क्रीडाचातुर्य्यं प्रकटितमिति भावः। शार्दूलविक्रीडितं वृत्तम्॥ १२४॥

(ड) भूमिदेवानां ब्राह्मणानां, मूलायतनं मूलस्थानम्, आदिनिवासम् इत्यर्थः। अन्तर्वेदीं हरिद्वारमारभ्य प्रयागपर्य्यन्तं "ब्रह्मस्थली" "ब्रह्मावर्त्त" इति च ख्यातं प्रदेशं, पूर्वेण इति योगे द्वितीया, अस्य च प्रदेशस्य पृथिव्या मध्यस्थितत्वादन्तर्वेदीव। अत्र तु अन्तर्वेदी-शब्देन प्रयाग एव लक्षितव्यः, गङ्गा-यमुनयोः सङ्गमस्थलत्वेनोक्तत्वात्। कृष्णागुरु कृष्णवर्णम् अगुरु गन्धद्रव्यविशेषः, मलयजं श्वेतचन्दनं, तन्मयं तदात्मकम्, अङ्गरागम् अङ्गविलेपनं, यमुनासलिलस्य कृष्णवर्णत्वात् गाङ्गोदकस्य च शुभ्रवर्णत्वादिति भावः। अन्योऽन्यस्य परस्परस्य।

(ढ) कलिन्देति।—कलिन्दकन्या कलिन्दः सूर्य्यः, तस्य कन्या यमुनेत्यर्थः, मन्दाकिनी गङ्गा, ते।

हिमालयेति।—जाह्नवी गङ्गा, हिमालयस्य हिमाचलस्य, उत्सङ्गे क्रोड़े, सदा नित्यम्, अधिवासतः अवस्थानात्, पाण्डुः शुभ्रा सती, जातेव प्रादुर्भूतेव, प्रतिभाति

( विभाव्य च ) ।

बलिद्विषः पादनखांशुराजिभिः
स्मरारिमौलीन्दुमरीचिवीचिभिः ।
हिमाद्रिनिःस्यन्दरसैः पदे पदे
विवर्द्धते वैबुधसैन्धवी रुचिः ॥ १२६ ॥

अपि च—

प्रयागः सर्वतीर्थेभ्यस्तीर्थमुच्चैस्तरामयम् ।
संसाराब्धेः परं पारमिहस्थैरवलोक्यते ॥ १२७ ॥

रामः । ( सादरम् ) । किमुच्यते—

---

प्रतीयते, लक्षिता भवतीत्यर्थः, यमुना कालिन्दी च, पितुः जनकस्य, निदाघभानोः उष्णरश्मेः, सूर्यस्येत्यर्थः, अङ्के क्रोडे, लालनात् प्रतिपालनात् हेतोः, पित्रा अङ्के प्रतिपालितत्वाद्धेतोरित्यर्थः, काली कृष्णवर्णा, लतेव जातेवेत्यर्थः, दृश्यते लक्ष्यते, अनवरतसूर्यकिरणसन्तापात् कृष्णत्वमिति भावः । वंशस्थविलं वृत्तं—"वदन्ति वंशस्थविलं ज-तौ ज-रौ" इति तल्लक्षणात् ॥ १२५ ॥

बलिद्विष इति ।—बलिद्विषः दैत्याधिपतेः बलिराजस्य बन्धनकर्त्तुः वामनदेवस्य, पादनखानां चरणनखराणाम्, अतीव शुभ्राणामिति भावः, अंशुराजिभिः किरणसमूहैः, गङ्गायाः विष्णुपादसमुद्भूतत्वादिति भावः, तथा स्मरारेर्हरस्य, यः मौलीन्दुः शिरोभूषणचन्द्रः, तस्य मरीचिराजिभिः मयूखनिचयैः, शङ्करशिरोनिवासत्वादिति भावः, तथा हिमाद्रेः हिमगिरेः, निःस्यन्दः प्रस्रवणं, सुशुभ्रतुषारस्राव इति यावत्, तस्य रसैः द्रवैः, यद्वा—रसैः रागैः, शुभ्रप्रभाभिरिति यावत्, "शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः" इत्यमरः ; पदे पदे प्रतिपदं, वैबुधसैन्धवी देवनदीसम्बन्धिनी, गङ्गायाः स्वर्णदीत्वादिति भावः, रुचिः कान्तिः, शुभ्रता इति भावः, विवर्द्धते वृद्धिं गच्छति ॥ १२६ ॥

प्रयाग इति ।—अयं परिदृश्यमान एषः, प्रयागः तन्नामा त्रिवेणीतीर्थः, सर्वतीर्थेभ्यः सर्वेभ्यः पुण्यक्षेत्रेभ्य, उच्चैस्तराम् अतिशयेन उच्चैः, प्रधानमित्यर्थः, तीर्थं पृथिव्याः पवित्रस्थानम्, इह प्रयागे तिष्ठन्तीति तथोक्तैः जनैः, संसाराब्धेः भवसागरस्य, परम् अपरं, पारं तीरम्, अवलोक्यते दृश्यते, प्रयागक्षेत्रे कृतवसतयो जनाः विमुक्ता भवन्तीति भावः । अनुष्टुप् वृत्तम् ॥ १२७ ॥

सत्यमेव प्रयागोऽयं मोक्षद्वारमुदीर्य्यते।
देव्यौ यस्याभितो गङ्गा-यमुने वहतः श्रियम्॥ १२८॥

(सीतां प्रति)। देवि! प्रणम्यतामितः,—(ग)

श्यामो नाम वट सोऽयमेतस्याद्भुतकर्म्मणः।
छायामप्यधिवास्तव्यैः परं ज्योतिर्निषेव्यते॥ १२९॥

(सर्वे प्रणमन्ति)।

रामः। (विमानवेगमाटिकीन सहर्षम्)—

यूपाङ्कुरप्रकरदन्तुरतीरलेखा-
सङ्क्राायमानमनुमन्तितिसप्ततन्तुः।

---

सत्यमिति।—अयम एषः, प्रयागः मोक्षस्य निर्वाणस्य, मुक्तिलाभस्येत्यर्थः, द्वारम् उपायस्वरूपम्, उदीर्य्यते कीर्त्त्यते, विद्वद्भिरिति शेषः, सत्यमेव यथार्थमेव, देव्यौ गङ्गा-यमुने भागीरथी कालिन्दी च, यस्य प्रयागस्य, अभितः उपरि, श्रियं शोभा, वहतः गच्छतः, यद्वा—देव्यौ गङ्गा-यमुने अभितः साकल्येन, सर्वतोभावेन इत्यर्थः, यस्य श्रियं वहत, धारयतः, सम्पादयत इत्यर्थं, यद्वा—देव्यौ यस्य अभितः अन्तिके, समीपे इत्यर्थः, "अभितः शीघ्रसाकल्य-सम्मुखोभयतोऽन्तिके" इति मेदिनी, श्रिय वहतः प्राप्नुतः। अनुष्टुप् वृत्तम॥ १२८॥

(ग) प्रणम्यतामित्यस्य "श्यामो नाम वटः" इति वक्ष्यमाणश्लोकस्थवाक्येनान्वयः। इतः अस्मात स्थानात, अस्यां दिशि इत्यर्थौ वा।

श्याम इति।—सः प्रसिद्ध, अयम् एषः, श्यामो नाम वटः "श्यामवटः" इति "अक्षयवट." इति वा नाम्ना प्रसिद्धः वटवृक्षः, दृश्यते इति शेषः, यद्वा—सोऽयं श्यामो नाम वटः, प्रणम्यतामिति गद्यस्थेनान्वय, अद्भुतम् आश्चर्य्यं, कर्म कार्य्यं यस्य तथोक्तस्य, एतस्य अस्य वटस्य, छायामपि निम्नस्थानस्थानातपप्रदेशमपि, अधिवास्तव्यैः अधिवासिभिः जनैः, परम उत्कृष्टं, ज्योतिः तेजः, ज्योतिर्मयं परब्रह्म इत्यर्थः, निषेव्यते प्राप्यते, छायानिषेवणेन शैत्यप्राप्तिर्भवति, अत्र तु तेजःप्राप्तिरिति विरोधालङ्कारः, अत एवाश्चर्य्यकर्मत्वमस्य, ब्रह्मप्राप्तिरिति परिहार इति बोध्यम। अनुष्टुप् वृत्तम्॥ १२९॥

यूपाङ्करेति।—यूपाः यज्ञीयपशुबन्धनदारुविशेषाः, ते एव अङ्कुराः प्ररोहा, अङ्कुरवत भूपृष्ठे उन्नततया अवस्थानादिति भावः, तेषां प्रकरेण समूहेन, दन्तुरा उन्नतदन्ता इव, याः तीरलेखाः तटसीमानः, रेखावत् परिदृश्यमानतटप्रदेशा इत्यर्थो वा,

इक्ष्वाकुराजमहिषीपदपट्टलक्ष्मी-
र्देव्या भुवो भगवती सरयूरियं नः ॥ १३० ॥

इयं च भगवत्ययोध्या—

गगनगतास्मदुदीक्षणकुतूहलोत्तानपृथुलनिःस्पन्दैः ।
उन्नालस्थलकुवलयवनमिव जनलोचनैः क्रियते ॥ १३१ ॥

( सर्वे नमस्यन्ति )।

सुग्रीव-विभीषणौ। ( निर्वर्ण्य )—

वृन्तैरिव क्रतुसहस्रभुवां फलाना-
मालोक्य यूपनिकरैर्मधुरामयोध्याम् ।

---

यद्वा—यूपाङ्कुरप्रकरदन्तुरं यत् तीरं, तत्र याः लेखाः श्रेण्यः, यूपश्रेण्य इत्यर्थः, ताभिः सङ्ख्यायमानाः एकद्वित्र्यादिगणनाविषयीक्रियमाणाः, मनुसन्ततीनां मनुवंशीयनृपतीनाम्, इक्ष्वाकुप्रभृतीनामित्यर्थः, सप्ततन्तवः यज्ञाः यस्याः सा वा तथोक्ता, "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इत्यमरः; भुवः पृथिव्याः देव्याः, इक्ष्वाकुराजमहिषीपदस्य इक्ष्वाकुवंशीयनृपतीनां महिषीरूपस्य पदस्य अधिकारस्य, महिषीव्यपदेशेन परिचयदानस्येत्यर्थः, इक्ष्वाकुवंशीयनृपतीनां पृथिवीपतित्वादिति भावः, पट्टलक्ष्मीः पट्टवसनश्रीः, यद्वा—पट्टः राजदत्तशासनपत्रविशेषः, तदात्मिका लक्ष्मीः सम्पत्, राजदत्तशासनपत्रबलेन प्राप्तसम्पत्स्वरूपिणीत्यर्थः, "पट्टः पेषणपाषाणे व्रणादीनाञ्च बन्धने। चतुष्पथे तु राजादि-शासनान्तर-पीठयोः॥" इति मेदिनी; इयम् एषा, भगवती पूजनीया, नः अस्माकं, सरयूः तन्नाम नदी, दृश्यते इति शेषः। वसन्ततिलकं वृत्तम् ॥ १३० ॥

गगनेति।—गगनगतानाम् अन्तरीक्षे स्थितानां, विमानवर्तिनामिति भावः, अस्माकम् उदीक्षणे ऊर्द्ध्वनिरीक्षणे, यत् कुतूहलं कौतुकम्, आग्रह इत्यर्थः, तेन उत्तानानि उन्नमितानि, पृथुलानि विस्फारितत्वात् विशालानि, यद्वा—पृथुलानि बहुलानि, निःस्पन्दानि निश्चलानि च तैः, जनानाम् अयोध्यावासिनां लोकानां, लोचनैः नेत्रैः, उन्नालानाम् उद्गतदण्डानां, स्थलकुवलयानां स्थलीयनीलोत्पलानां, वनमिव काननमिव, क्रियते सम्पाद्यते इत्यर्थः, अयोध्येति गद्यस्थं पदमत्र कर्मकारकम् ॥ १३१ ॥

वृन्तैरिति।—क्रतुसहस्रभुवां यज्ञसहस्रसम्भूतानां, "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इत्यमरः, फलानां लाभानां, व्युष्टीनां वा, समृद्धीनामित्यर्थः, प्रजानाञ्च,

राज्ञामिह प्रवसतां च विचिन्त्य सिद्धिं
देवः शचीसहचरोऽपि न रोचते नः ॥ १३२ ॥

राम:। (तौ प्रति)। वयस्यौ!—

ईदृशाः प्रागजायन्त राजानो यदिहान्वये।
तद्वशिष्ठचरोरैन्द्रा-बार्हस्पत्यस्य वैभवम् ॥ १३३ ॥

(पुरोऽवलोक्य सहर्षोल्लासम्)। कथं, स एवायं भगवान् प्रकल्पितास्मदभिषेकसम्भारो भरत-शत्रुघ्नाभ्यां सह वशिष्ठो मां प्रतीक्षमाणः (त) तिष्ठति!! (पुष्पकं प्रति)। विमानराज! समवतीर्य्यतामस्यां काकुत्स्थकुलोपकारिकायाम् (थ)।

(सर्वे विमानावतारणं नाटयन्ति)।

(ततः प्रविशति पटाक्षेपेण (द) वशिष्ठो भरत-शत्रुघ्नौ च)।

---

"फलं जातीफले शस्ये हेतुत्थे व्युष्टि-लाभयोः" इति मेदिनी; वृन्तैरिव प्रसवबन्धनैरिव, यूपनिकरैः यज्ञीयपशुबन्धनदारुदण्डैः, मधुरां मनोहारिणीम्, अयोध्यां तदाख्यां नगरीम्, अवलोक्य दृष्ट्वा, तथा इह अयोध्यायां, प्रवसतां कृतवसतीनां, राज्ञां नृपाणाम्, इक्ष्वाकुवंशीयानामिति शेषः, सिद्धिं साफल्यम्, ऐश्वर्य्यमिति यावत्, विचिन्त्य च ध्यात्वा च, शचीसहचरः शचीपतिः, देवः इन्द्रोऽपि, नः अस्माकं, न रोचते अस्माभिर्न बहु मन्यते इत्यर्थः, न तं कृतार्थं गणयाम इति भावः। वसन्ततिलकं वृत्तम् ॥ १३२ ॥

ईदृशा इति।—इह अस्मिन्, अन्वये वंशे, यत् ईदृशाः एवंविधाः, महात्मान इति भावः, राजानः भूपालाः, प्राक् पूर्वम्, अजायन्त समुदपद्यन्त, तत् इन्द्रश्च देवराजश्च, बृहस्पतिश्च देवगुरुश्च तौ इन्द्रा-बृहस्पती, तौ देवते अधिष्ठातारौ यस्य तथाभूतस्य, वशिष्ठचरोः वशिष्ठस्य अस्माकं कुलपुरोहितस्य, चरोः मन्त्रसंस्कृतपायसविशेषस्य, वैभवं सामर्थ्यं, वशिष्ठस्य मन्त्रप्रभावेणैव मत्पूर्वजाः महतीं सिद्धिं प्रापुरिति भावः। अनुष्टुप् वृत्तम् ॥ १३३ ॥

(त) प्रकल्पितेति।—प्रकल्पिताः विरचिताः, सङ्गृहीता इत्यर्थः, मम अभिषेकाय राज्याधिकारप्राप्त्यर्थं माङ्गलिकानुष्ठानविशेषाय, सम्भाराः द्रव्याणि येन तादृशः। प्रतीक्षमाणः प्रतिपालयन्, मदागमनमपेक्षमाण इत्यर्थः।

(थ) काकुत्स्थकुलेति।—काकुत्स्थकुलस्य काकुत्स्थवंशस्य, उपकारिका राजसदनं तस्यां, "सौधोऽस्त्री राजसदनमुपकार्य्योपकारिका" इत्यमरः।

(द) पटाक्षेपेण पटस्य जवनिकायाः, आक्षेपेण अपसारणेन।

वसिष्ठः।—

चक्रे लङ्केश्वरपरिभवच्छेदनिष्णातदोष्णा
यद्वत्सेन त्रिजगदभयं तन्न चित्रीयते नः।
बालेनाजौ विगलितवतो वीर्य्यनिर्य्यासराशे-
र्यत् पिण्याकः स मुनिरमुना निर्मितो जामदग्न्यः ॥ १३४ ॥

(राममवलोक्य सहर्षम्)।

भल्लावलूनदशकन्धरकण्ठपीठ-
सीमासमाप्तभुजविक्रमकर्म्मकाण्डः।
दिष्ट्या जगद्विजयमाङ्गलिकैर्यशोभिः
सोऽयं पुनर्नयनवर्त्मनि रामचन्द्रः ॥ १३५ ॥

---

चक्रे इति।—लङ्केश्वरस्य रावणस्य, परिभवः पराजयः, छेदः छेदनं, न केवलं परिभवः विनाशश्चेति भावः ताभ्यां, यद्वा—लङ्केश्वरस्य परिभवेण अनादरेण, अवहेलया इत्यर्थः, "अनादरः परिभवः परीभावस्तिरस्क्रिया" इत्यमरः; यः छेदः विनाशः, तेन निष्णातः निपुणः, अस्त्रविद्यायां कुशलित्वेन विज्ञात इत्यर्थः, "प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः" इत्यमरः; दोर्बाहुर्यस्य तथाभूतेन, "भुजबाहू प्रवेष्टो दोः" इत्यमरः; वत्सेन पुत्रस्थानीयेन, रामेण राघवेण, त्रिजगत् त्रिभुवनं, यत् अभयं भयशून्यम्, "अगदम्" इति पाठे—अगदं रोगशून्यं, चक्रे कृतं, तत् नः अस्मान्, न चित्रीयते न चमत्करोतीति, बालेन शिशुना, अमुना रामेण, आजौ युद्धे, सः एकविंशतिकृत्वः क्षत्रियान्तकारी, मुनिः जामदग्न्यः परशुरामः, विगलितवतः क्षरितवतः, वीर्य्यनिर्य्यासराशेः वीर्य्यसारसमूहस्य, यत् पिण्याकः कल्कः, निर्मितः कृतः, निर्वीर्य्यः कृत इति भावः, तत् परं चित्रीयते इत्यन्वयः। मन्दाक्रान्ता वृत्तम् ॥ १३४ ॥

भल्लेति।—भल्लेन अस्त्रविशेषेण, अवलूनं छिन्नं, यत् दशकन्धरस्य रावणस्य, कण्ठपीठं गलदेशरूपमासनं, पीठवत् कठिनविस्तृतगलदेश इत्यर्थः, तस्य सीमा अवसानं, तया समाप्तः शेषतां गतः, भुजयोः बाह्वोः, विक्रमस्य सामर्थ्यस्य, बलस्येत्यर्थः, कर्म्मकाण्डः क्रियासमूहः यस्य तथाभूतः, जगतां भुवनानां, विजयेन पराभवेण, त्रिजगद्द्राविजयिरावणविनाशेनैव रामचन्द्रस्य जगद्विजयित्वं बोद्धव्यम्, अत एव माङ्गलिकैः मङ्गलमयैः, यशोभिः कीर्त्तिभिः उपलक्षित इति विशेषणे तृतीया, रावणकृतपीड़ननिवारणात् यशसः माङ्गलिकत्वमवगन्तव्यं, स महावीरः, अयम् एषः,

रामः। (सलज्जमुपसृत्य वशिष्ठपादावुपगृह्य च)।

> रघुब्रह्मक्रियाऽऽचार्य्यं पुराणब्रह्मवादिनम्।
> ब्रह्मर्षिं ब्रह्मजन्मानमेष रामोऽभिवादये॥ १२६॥

वशिष्ठ.। (सादरमालिङ्ग्य)। वत्स रामभद्र! का तुभ्यमाशीः? (ध)—

> आदाय प्रतिपक्षकीर्त्तिनिवहान् ब्रह्माण्डमूषान्तरे
> निर्विघ्नं धमता नितान्तमुदितैः स्वैरेव तेजोऽग्निभिः।
> तत्तादृक्पुटपाकशोधितमिव प्राप्तं गुणोत्कर्षिणा
> पिण्डस्य च महत्तरं च भवता निःक्षारतारं यशः॥ १२७॥

---

रामचन्द्रः दिष्ट्या भाग्येन, पुनः भूयः, नयनयोः चक्षुषोः, वर्त्मनि पथि, वर्त्तते इति शेषः। वसन्ततिलकं वृत्तम्॥ १२५॥

रघ्विति।—रघूणां रघुवंशप्रसूतानां ब्रह्मक्रिया वैदिककर्मानुष्ठानं, तस्या आचार्य्यः गुरुः तं, पुराणब्रह्मवादिनं प्राचीनं वेदविदं, ब्रह्मज्ञानसम्पन्नं वा, ब्रह्मजन्मानं ब्रह्मणः पुत्रं, ब्रह्मर्षिं ब्रह्मद्रष्टारम् ऋषिं, वेदद्रष्टारम् ऋषिं वा, वशिष्ठमित्यर्थः, एष अहं, रामः अभिवादये प्रणमामि। अनुष्टुप् वृत्तम्॥ १२६॥

(ध) आशीः आशीर्वादः, प्रयुज्यते मयेति शेषः।

आदायेति।—ब्रह्माण्डमेव भुवनकोष एव, मूषा आवर्त्तनघटिका, सुवर्णादिधातुद्रावणपात्रविशेष इत्यर्थः, "तैजसावर्त्तनी मूषा" इत्यमरः, तस्याः अन्तरे मध्ये, प्रतिपक्षाणां शत्रूणां, कीर्त्तिनिवहान् यशोराशीन्, आदाय गृहीत्वा, संस्थाप्य इत्यर्थः, नितान्तम् अत्यर्थम्, उदितैः उद्भूतैः, प्रवृद्धैरित्यर्थः, स्वैरेव निजैरेव, तेजोऽग्निभिः प्रतापानलैः, निर्विघ्नम् अन्तरायविहीनं यथा तथा, धमता पूरयता, उद्दीपयता वा, गुणोत्कर्षिणा गुणोत्कर्षशालिना, उत्तमगुणवता इत्यर्थः, भवता तत् प्रसिद्ध, तादृक् तथाविध, पुटपाकः पुटे मृत्तिकादिनिर्म्मित-आवरणपात्रविशेषे, पाकः पचनं, तेन शोधितमिव द्रवीकृत्य उज्ज्वलीकृतमिव, पिण्डस्य एकीभूतञ्च, महत्तरञ्च अतिमहच्च, निःक्षार-तार निःक्षारं निर्दोषं, तारम् उत्कृष्टञ्च, यशः कीर्त्तिः, प्राप्तं लब्धम्, अतः का तुभ्यम् आशीः? इति गद्योक्तेनान्वयः, का नाम आशीः तुभ्यं प्रदीयते, आशिषां सर्वस्यैव फलस्य भवता प्राप्तत्वादिति भावः। शार्दूलविक्रीडितं वृत्तम्॥ १२७॥

अपि च—

त्रिजगदङ्गनलङ्घनजाङ्घिकै-
स्तव यशोभिरतीव पवित्रिताः।
प्रथमपार्थिवपुङ्गवकीर्त्तयो
विबुधसिन्धुजलैरिव सिन्धवः॥ ११८॥

तथाऽपीदमस्तु—

जगदालोकधौरेयौ सूर्य्या-चन्द्रमसाविव।
पुत्रौ गोत्रस्य गोप्तारौ जनय स्वभुजाविव॥ ११९॥

(सीता मुनिं वन्दते)।

वशिष्ठः। वत्से! जनकवंशसुवासिनि! (न) युवयोः साधारणयोरिव रामस्य वयमाशिषमवोचाम।

---

त्रिजगदिति।—त्रिजगत् त्रिभुवनमेव, अङ्गनम् अजिरम्, तस्य लङ्घने अतिक्रमणे, जाङ्घिकैः जङ्घाकरिकैः, प्रशस्तजङ्घावद्भिरित्यर्थः, द्रुतगामिभिरिति यावत्, "जङ्घाकरिक-जाङ्घिकौ" इत्यमरः; तव भवतः, यशोभिः कीर्तिभिः, विबुधानां देवानां, सिन्धुः सरित्, नदीत्यर्थः, मन्दाकिनीति यावत्, तस्या जलैः सलिलैः, सिन्धवः अब्धय इव, समुद्रा इव इत्यर्थः, "देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्" इत्यमरः; प्रथमपार्थिवानाम् आदिनृपतीनां, पुङ्गवाः श्रेष्ठाः, यद्वा—प्रथमे आद्यौ, पूर्वजा इत्यर्थः, ये पार्थिवपुङ्गवाः नृपतिश्रेष्ठाः, सगरादयः इत्यर्थः, तेषां कीर्त्तयः यशांसि, अतीव अतिमात्रं, पवित्रिताः पवित्राः कृताः, उज्ज्वलीकृता इत्यर्थः। द्रुतविलम्बितं वृत्तम्—"द्रुतविलम्बितमाह न-भौ भ-रौ" इति तल्लक्षणात्॥ ११८॥

जगदिति।—जगतां भुवनानाम्, आलोके प्रकाशने, धौरेयौ धुरन्धरौ, समर्थौ इत्यर्थः, "धूर्वहे धुर्य्य-धौरेय-धुरीणाः सधुरन्धराः" इत्यमरः; सूर्य्या-चन्द्रमसाविव दिनकर-निशाकराविव, तथा स्वभुजाविव निजबाहुद्वयमिव, स्वबाहुबलवीर्य्यशालिनौ इति भावः, गोत्रस्य कुलस्य, गोप्तारौ रक्षितारौ, पुत्रौ तनयद्वयं, जनय उत्पादय। अनुष्टुप् वृत्तम्॥ ११९॥

(न) जनकेति।—जनकवंशे सीरध्वजजनकान्वये, सुवासिनी सुष्ठु वासकारिणी, तत्सम्भूता, यद्वा—जनकवंशस्य सुवासिनि! सुवासजननि! यशःसौरभप्रदायिनि! इत्यर्थः। युवयोः भवतोः, तव रामस्य चेत्यर्थः, साधारणयोरिव समानयोरिव, रामस्य

सीता। (सहर्षमात्मगतम्)। अम्मो! णिस्सावत्तश्रं (प) मे अज्जउत्तस्स घरणित्तणं हुविस्सदि। *

लक्ष्मणः। सगरगोत्रगुरो! मैत्रावरुणे! सौमित्रिरभिवादयते।

वसिष्ठः। वत्स लक्ष्मण! आशिषां विषयमतिक्रम्य वर्त्तसे—

वीरमिन्द्रजितं जित्वा दिष्ट्या वर्द्धयतो जगत्।
अभये दक्षिणीयस्ते गीर्वाणग्रामणीरपि॥ १४०॥
तथाऽपि यूयं सर्वेऽपि द्वौ द्वौ जनयतात्मजौ।
येनादिराजवंशोऽयमष्टशाखः प्ररोहति॥ १४१॥

रामः। (सहर्षं कृताञ्जलिः)। भगवन्! परमनुगृहीतमिक्ष्वाकुकुलम्।

भरतः। (रामं प्रति)। आर्य्य! शून्यभवनप्रकोष्ठकरक्षापदातिः (फ) भरतः प्रणमति।

---

* अम्मो! निःसापत्न्यं मे आर्य्यपुत्रस्य गृहिणीत्वं भविष्यति।

---

आशिषं युवयोः साधारणीमेव वयम् अवोचाम इत्यन्वयः, वयं रामाय यामाशिषं कृतवन्तः, सा न केवलं रामस्य, परन्तु तवापि सम्बन्धे इत्यर्थः।

(प) निःसापत्न्यं निःशत्रुकं, सपत्नीदोषशून्यमित्यर्थः।

वीरमिति।—वीरं वीर्य्यवन्तम्, इन्द्रजितं मेघनादं, जित्वा पराभूय, विनाश्य इत्यर्थः, दिष्ट्या भाग्येन, जगत् भुवनं, वर्द्धयतः आप्याययमानस्य, जगतः अभ्युदयं सम्पादयत इत्यर्थः, जगत् निर्विघ्नं कुर्वत इति यावत्, ते तव, गीर्वाणानां देवानां, ग्रामणीः श्रेष्ठः, अधीश्वरः इत्यर्थः, इन्द्र इति यावत्, "ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु" इत्यमरः; अभये भयराहित्ये, दक्षिणीयः उदारतासम्पन्नः, दत्ताभयदक्षिणः इति यावत्, तव अभयविधाने देवराजोऽपि सदा जागरूक इति भावः। अनुष्टुप् वृत्तम्॥ १४०॥

तथाऽपीति।—तथाऽपि भवतः आशीर्विषयातिक्रमणेऽपीत्यर्थः, यूयं भवन्तः, सर्वेऽपि भ्रातृचतुष्टयेऽपीत्यर्थः, द्वौ द्वौ आत्मजौ पुत्रौ, जनयत उत्पादयत, यैः आत्मजैः, अयम् एषः, आदिराजस्य प्रथमनृपस्य, मनोरित्यर्थः, वंशः कुलम्, अष्टौ अष्टसङ्ख्याकाः, शाखाः विभागाः यस्य तथाभूतः, अष्टधा विभक्तः सन्नित्यर्थः, प्ररोहति प्रवर्द्धते। अनुष्टुप् वृत्तम्॥ १४१॥

(फ) शून्येति।—शून्यं रिक्तं, भवता विरहितमिति भावः, यत् भवनं गृहं, तस्य

रामः। (सहर्षमालिङ्ग्य)। वत्स भरत!—

आत्मानमिन्दुकरमेदुरचन्द्रकान्त-
स्तम्भोज्ज्वलं वितर मे हृदि निर्वृणोमि।
न भ्रातृसङ्गमसुखासिकया जहाति
विष्णोः सकौस्तुभमुरश्चपलाऽपि लक्ष्मीः॥ १४२॥

भरतः। (सीतां प्रति)। देवि! प्रणमामि।

सीता। वच्छ भरद! उग्गहकरकिरणणिउरंबचुंबिअ-कमलखंडं विअ चिरं मे णअणं आणंदेहि * (व)।

* वत्स भरत! उष्णकरकिरणनिकुरम्बचुम्बितकमलषण्डमिव चिरं मे नयन-मानन्दय।

प्रकोष्ठः बाह्यप्रदेशः, द्वारसन्निहितोपवेशनस्थानमिति यावत्, यद्वा—प्रकोष्ठः राज्ञ कक्षविशेषः, यस्मिन् कक्षे सिंहासन मणिरत्नादिकं वा विद्यते स इति यावत्, "प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च। भूपकक्षान्तरेऽपि स्यात्" इति मेदिनी; तस्य एका केवला, रथ्या रचणं, तस्याः तदर्थं वा पदातिः सैन्यविशेषः, रक्षिसैन्यविशेष इत्यर्थः।

आत्मानमिति।—इन्दोश्चन्द्रस्य, करेण किरणेन, मेदुरः सान्द्रस्निग्धः, सत्यर्थं स्निग्ध इत्यर्थः, "सान्द्रस्निग्धस्तु मेदुरः" इत्यमरः, यश्चन्द्रकान्तस्तम्भः चन्द्रकान्तमणि-निर्मितस्थूणा, तद्वत् उज्ज्वलं निर्मलं, कालुष्यलेशशून्यमिति यावत्, आत्मानं शरीरं, स्वदेहमित्यर्थः, "आत्मा पुंसि स्वभावे च···शरीरब्रह्मणोरपि" इति मेदिनी; मे मम, हृदि वक्षसि, वितर अर्पय, निर्वृणोमि निर्वृतिं प्राप्नोमि, सुखीभवामीत्यर्थः, "निर्वृतिः स्वस्थितावस्तं गमने च सुखे स्त्रियाम्" इति मेदिनी; तथाहि, लक्ष्मीः कमला, चपलाऽपि चञ्चलाऽपि, अस्थिरप्रकृतिरपीति भावः, भ्रातृसङ्गमसुखासिकया भ्रात्रा सोदरेण, कौस्तुभेनेति भावः, सङ्गमः मेलनं भ्रातृसङ्गमः, तेन या सुखासिका सुखावस्थानं, सुखानुभव इति यावत् तया हेतुना, विष्णोर्नारायणस्य, सकौस्तुभं कौस्तुभाख्यरत्नभूषितमित्यर्थः, उरः वक्षःस्थलं, न जहाति न त्यजति, कौस्तुभस्य लक्ष्म्याः भ्रातृत्वमेकसमुद्रसमुद्भूतत्वादिति भावः। भ्रातृसङ्गमादधिकं सुखकरं किमपि नास्तीति तात्पर्य्यम्। वैधर्म्येण दृष्टान्तालङ्कारः; तदुक्तं दर्पणे—"दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिविम्बनम्" इति। वसन्ततिलकं वृत्तम्॥ १४२॥

(व) उष्णकरेति।—उष्णकरस्य सूर्य्यस्य, किरणनिकुरम्बेण मयूखनिचयेन,

(लक्ष्मणो भरतं वन्दते)।

भरतः।—

वत्स लक्ष्मण! सोत्कण्ठं चिरात् परिरभस्व माम्।
श्रद्धालुर्भ्रातुरङ्गानि चन्दनेष्वप्यरोचकी ॥ १४३ ॥

(निर्भरं (अ) परिरभ्य)। हन्त! रघुवंशयशस्तडागयूपदण्डेन (आ) लक्ष्मणबाहुना(ऽ)परिक्षिप्यमाण (इ) चिरेण शीतलीकृतोऽस्मि।—

इन्दोः कलाकलापेन पङ्क्तिक्रमनिवेशिना।
सर्वदुःखापनोदाय सोदर्याणां भुजाः कृताः ॥ १४४ ॥

---

पुष्पितं स्फुटं, कमलवनमिव पद्मसमूहमिव, यथा सूर्यदर्शनेन कमलमानन्दमनुभवति, तथा मम नेत्रं त्वद्दर्शनेनेति भावः।

वत्सेति।—हे वत्स लक्ष्मण! सोत्कण्ठम् उत्कलिकाकुलं, त्वदालिङ्गनोत्सुकमिति भावः, मां चिरात् बहुकालात् परं, दीर्घकालं व्याप्य वा, यद्वा—चिरात् दीर्घकालं यावत्, सोत्कण्ठं मामित्यन्वयः, परिरभस्व आलिङ्ग, भ्रातुः सोदरस्य, अङ्गानि गात्राणि, "अङ्गानि" इत्यत्र "अङ्गेषु" इति पाठः सुगमार्थश्च, श्रद्धालुः श्रद्धायुक्तः, स्पृहयालुः इत्यर्थः, अनुरागेण दधान इति यावत्, अहम् इति शेषः, चन्दनेषु अपि मलयजेष्वपि, अतीव सुख-शीतलस्पर्शेष्वपीति भावः, अरोचकी अनभिलाषी, भवामीति शेषः, भ्रातुरङ्गस्पर्शस्य चन्दनरसस्पर्शादपि सुखकरत्वादिति भावः। अनुष्टुप् वृत्तम् ॥ १४३ ॥

(अ) निर्भरं प्रगाढम्।

(आ) हन्त हर्षे। रघुवंशेति।—रघुवंशस्य रघुकुलस्य, यश एव कीर्त्तिरेव, तडागः सरोवरं, तस्य यूपदण्डः यज्ञसमाप्तिसूचकस्तम्भविशेषः, तडागप्रतिष्ठासूचकदारुस्तम्भविशेष इत्यर्थः "रंकाठ" इति प्रसिद्धः तेन।

(इ) परिक्षिप्यमाणः आवेष्ट्यमानः, आलिङ्ग्यमान इति यावत्। "लक्ष्मणबाहुना परिक्षिप्यमाणः" इत्यत्र "लक्ष्मणबाहुनाऽपरिक्षिप्यमाणः" इति लुप्त-अकारपरिकल्पना समीचीना; परिक्षिप्यमाण इत्यस्य वेष्टनार्थकत्वस्य अप्रसिद्धत्वात् क्वाप्यदर्शनाच्च; अपरिक्षिप्यमाणः अत्यज्यमानः, आकृष्यमाण इति यावत्, आलिङ्ग्यमान इति भावः।

इन्दोरिति।—पङ्क्तिक्रमेण श्रेणीक्रमेण निविशति व्याप्नोतीति तथोक्तेन, इन्दोश्चन्द्रस्य, कलाकलापेन कलासमूहेन, षोडशभिरेव कलाभिरित्यर्थः, सर्वेषां निखिलानां, दुःखानां क्लेशानाम्, अपनोदाय निराकरणाय, सोदर्याणां भ्रातॄणां,

शत्रुघ्नः। (रामं प्रति)। आर्य्य! पादुकाभृत्यानुभृत्यः (र) शत्रुघ्नः प्रणमति।

रामः। (गाढमालिङ्ग्य)। कथम्, आवृत्त्या लक्ष्मणमनुभवामि!! (ल)। (अपवार्य्य सीतायै दर्शयन्)—

एतत्तदेव मुखमक्षतचन्द्रविम्ब-
संवादटूकमवलोकय लक्ष्मणस्य।
गीर्वाणवारणकरार्गलकर्कशौ मां
तावेव लक्ष्मणभुजौ न परिष्वजाते?॥ १४५॥

(शत्रुघ्नः सीतां प्रणमति)।

सीता। तेल्लोक्कसल्लुद्धरणगोरविदेहिं चरिदेहिं लक्खणसरिसो होहि। वच्छ सत्तुहण! अज्जाजणो कहिं? * (व)

* त्रैलोक्यशल्योद्धरणगौरवितैश्चरितैर्लक्ष्मणसदृशो भव। वत्स शत्रुघ्न! आर्य्याजनः कुत्र?

भुजाः बाहवः, कृताः निर्मिताः, विधात्रेति शेषः। अत्र विमातृजानामपि सोदरत्वेनाभिधानं निरतिशयसौभ्रात्रद्योतनार्थेति बोध्यम्। अनुष्टुप् वृत्तम्॥ १४४॥

(र) पादुकेति।—पादुकाभृत्यः उपानद्वाहकः सेवकः, भरत इति यावत्, तस्य अनुभृत्यः कनिष्ठसेवकः इत्यर्थः; यद्वा—पादुकाभृत्यादपि अनुभृत्यः हीनः दासः, अतीव क्षुद्रसेवक इत्यर्थः, "अनु हीने सहार्थे च" इति मेदिनी।

(ल) आवृत्त्या आवर्त्तनेन, पुनरपीति यावत्। शत्रुघ्नस्य लक्ष्मणानुरूपत्वेन लक्ष्मणालिङ्गनमिव शत्रुघ्नालिङ्गनमिति भावः।

एतदिति।—एतत् पुरतः परिदृश्यमानं, तदेव बहुशो दृष्टमेव, अक्षतं परिपूर्णं, यत् चन्द्रविम्बं चन्द्रमण्डलं, तस्य संवादटूकम् अनुरूपं, लक्ष्मणस्य मुखम् आननम्, अवलोकय पश्य, यादृशो लक्ष्मणस्तादृश एव शत्रुघ्न इति भावः, गीर्वाणवारणस्य देवहस्तिनः, ऐरावतस्य इत्यर्थः, करः शुण्ड एव, अर्गलं विष्कम्भः कवाटप्रसरणप्रतिबन्धार्थं लौहमयः काष्ठमयो वा दण्डविशेषः इत्यर्थः, तद्वत् कर्कशौ कठिनौ, तावेव लक्ष्मणस्य भुजौ बाहू, मां परिष्वजाते नु? आलिङ्गतः किम्? वसन्ततिलकं वृत्तम्॥ १४५॥

(व) त्रैलोक्येति।—त्रैलोक्यस्य त्रिभुवनस्य, यत् शल्योद्धरणं पीड़ादायकास्त्र-

शत्रुघ्नः। कृतमङ्गलोपचारो मध्यमाम्बाभवने (ग) भवतीं प्रतीक्षते। (उपसृत्य लक्ष्मणं प्रणमति)।

लक्ष्मणः। (सहर्षमालिङ्ग्य)। वत्स! दिष्ट्या दीर्घायुषि त्वयि दीप्यमाने न वयमेकाकिनम् (घ) आर्य्यभरतं परित्यज्य गताः।

रामः। (मुनिं प्रति)। भगवन्! एतौ लङ्का-किष्किन्धयोरधिपती विभीषण-सुग्रीवौ भगवन्तं प्रणमतः।

वशिष्ठः। विकर्त्तन-पुलस्त्यकुलकीर्त्तितोरणमालाऽवलम्बन-स्तम्भाविमौ चिरस्य भूयास्ताम्। (ङ)

रामः। (भरतं प्रति)। वत्स! वन्दस्व महात्मानावेतौ पौलस्त्य-सावित्रौ (च)।

(भरत-शत्रुघ्न-विभीषण-सुग्रीवा मिथो यथोचितमाचरन्ति)।

वशिष्ठः। (सहर्षम्)। दिष्ट्या चतुर्दशभिः परिवत्सरैः पुनः समुद्यमानं दशरथकुटुम्बमीक्षामहे (छ)। (सविमर्श-चिन्तनम्)(ज)—

---

विशेषोत्पाटनम्, इन्द्रजिदादिशत्रुसंहरणमिति यावत्, तेन गौरवितैः सर्व्वलोकाहृतैः। आर्य्या-जनः श्वश्रू-जनः।

(ग) कृतेति।—कृतः अनुष्ठितः, मङ्गलोपचारः माङ्गलिकव्यवहारः, मङ्गलार्थं देवाराधना वा येन तथाभूतः। मध्यमा अम्बा माता, कैकयी इत्यर्थः, तस्या भवनं गृहं तस्मिन्।

(घ) दीप्यमाने विभाति, स्ववीर्य्येण उद्भासमाने इत्यर्थः, विद्यमाने इति भावः। एकाकिनम् असहायम्।

(ङ) विकर्त्तनेति।—विकर्त्तनः सूर्य्यः, पुलस्त्यः देवर्षिविशेषः, तयोः कुलयोः वंशयोः, कीर्त्तिरेव यश एव, तोरणमाला बहिर्द्वारस्रक्, तस्या अवलम्बनाय धारणाय, स्तम्भौ तत्स्वरूपावित्यर्थः, विकर्त्तनकुलतोरणस्तम्भः सुग्रीवः, पुलस्त्यकुलतोरणस्तम्भो विभीषण इति भावः। चिरस्य भूयास्तां चिरं जीव्यास्तां, चिरजीविनौ भूयास्तामित्यर्थः।

(च) पौलस्त्य-सावित्रौ पौलस्त्यः पुलस्त्यपौत्रः विभीषणः, सवितुः सूर्य्यस्य अपत्यं पुमान् सावित्रः सुग्रीवः तौ।

(छ) समुद्यमानं सम्यक् वर्द्धमानम्। दशरथकुटुम्बं दशरथस्य पोष्यवर्गं, परिजनवर्गमित्यर्थः। ईक्षामहे पश्यामः।

जेतारं दशकन्धरस्य जितवानेवार्जुनं भार्गव-
स्तं रामो यदि काकपक्षकधरस्तत् पूरितेयं कथा।
ऊर्द्ध्वं कल्पयतस्तु बालचरितात्तत्प्रक्रियागौरवा-
दन्येयं कविता तथाऽपि जगतस्तोषाय वर्त्तिष्यते॥ १४६॥

(रामं प्रति)। वत्स! माङ्गलिकलग्नमतिक्रामति (ग)।—

तदिदं रघुसिंहानां सिंहासनमलङ्कुरु।
राजन्वन्तः प्रतन्वन्तु मुदमुत्तरकोशलाः॥ १४७॥

(रामस्तथा करोति। वशिष्ठ ऐन्द्रेण (घ) महाभिषेकेण मन्त्रपूर्वकमभिषिञ्चति।

---

(ख) सविमर्श-स्मितं किञ्चित् वितर्क-हास्याभ्यां सहितम्।

जेतारमिति।—भार्गवः परशुरामः, दशकन्धरस्य रावणस्य, जेतारं पराभवितारम्, अर्जुनं कार्त्तवीर्य्यार्जुनं, जितवानेव पराभूतवानेव, काकपक्षकधरः शिखण्डकधारी, बालोचितशिखाविशेषधारीत्यर्थः, शिशुरिति भावः, "काकपक्षः शिखण्डकः" इत्यमरः; रामः यदि तं दशकन्धरविजयिकार्त्तवीर्य्यविजयिनं भार्गवमित्यर्थः, जितवानिति पूर्व्वेणान्वयः, तत् तदा, इयम् एषा, कथा आलापनं, विजयवार्त्ता इति यावत्, पूरिता समाप्तिं गता, परशुरामजयेनैव रावणादीनां सर्व्वेषां जयस्य सिद्धत्वादिति भावः, तथाऽपि कथायाः पूरितत्वेऽपि, बालचरितात् शैशवकालिकाचरणात्, तस्य रावणवधादेः, प्रक्रियायाः प्रकरणस्य, गौरवात् गुरुत्वात्, ऊर्द्ध्वम् अग्रे, आगामिनि काले इत्यर्थः, कल्पयतः रचयतः, रावणवधादिकमिति भावः, कवेरिति शेषः, अन्या अपरा, इयम् एषा, कविता छन्दोनिबद्धा कविभारती, जगतः भुवनस्य, लोकानामिति भावः, तोषाय सन्तुष्ट्यै, वर्त्तिष्यते भविष्यति। शार्दूलविक्रीडितं वृत्तम्॥ १४६॥

(ग) माङ्गलिकलग्नं शुभसमयम्, अभिषेकस्येति शेषः। अतिक्रामति अतिगच्छति।

तदिति।—तत् तस्मात्, रघुसिंहानां रघुश्रेष्ठानाम्, इदं सम्मुखे स्थापितं, सिंहासनं मणिकाञ्चनमयं राजासनम्, अलङ्कुरु भूषय, अधिष्ठानेनेति भावः, उत्तरकोशलाः कोशलाख्यजनपदस्य उत्तरविभागाः, राजन्वन्तः सुराजपालिताः, प्रशस्तराजयुक्ताः सन्तः इत्यर्थः, "सुराज्ञि देशे राजन्वान्" इत्यमरः; मुदम् आनन्दं, प्रतन्वन्तु विस्तारयन्तु, महोत्सवादिकं कुर्व्वन्त्विति यावत्। अनुष्टुप् वृत्तम्॥ १४७॥

(घ) ऐन्द्रेण इन्द्रसम्बन्धिना, इन्द्रो यथाऽभिषिक्तः तथेति भावः।

(सर्वे तूच्चावचमभिषेकं (ङ) नाटयित्वा पञ्चाङ्गचुम्बितभूमयः (च) प्रणमन्ति।
नेपथ्ये मङ्गलगीतिर्नान्दीवाद्यानि च )।

वसिष्ठः। (सहर्षम्)। वत्स रामभद्र! सम्प्रति—

उदयदुदयधर्मस्कन्धे धुरं त्वयि बिभ्रति
क्व नु परिभवौ दृष्टादृष्टौ प्रजाः परिचिन्वते?।
अपि खलु यथा जीवात्मानः प्रभोः परमात्मनो
दिशि दिशि दिशामष्टौ नाथास्तवैव विभीषिकाः॥१४८॥

---

(ङ) उच्चावचम् अनेकविधम्, "उच्चावचं नैकभेदम्" इत्यमरः। अभिषेकम् अभिषेकार्थमनुष्ठानमित्यर्थः।

(च) पञ्चाङ्गेति।—पञ्चभिः अङ्गैः हस्तद्वय-पदद्वय-मूर्द्धभिरित्यर्थः, चुम्बिता स्पृष्टा, भूमिः मृत्तिका यैः तथाभूताः।

उदयादिति।—उदयन् उदयन् अतिशयेन वृद्धिं गच्छन्नित्यर्थः, धर्म एव स्कन्धः कायः यस्य, यद्वा—धर्मकायः धर्मसमूहः, धर्म्याः क्रिया इत्यर्थः यस्मात् तस्मिन्, "स्कन्धः प्रकाण्डे कायेऽंसे विज्ञानादिषु पञ्चसु। नृपे समूहे व्यूहे च" इति हेमः; त्वयि भवति, धुरं राज्यभारं, बिभ्रति वहति सति, प्रजाः जनाः, "प्रजा स्यात् सन्ततौ जने" इत्यमरः; दृष्टादृष्टौ दृष्टः स्व-परचक्रजः, स्वचक्रजातः शत्रुचक्रजातश्च इति यावत्, अदृष्टः वह्नि-तोयादिरूपः, अनलानावृष्ट्यादिसमुद्भवः इति यावत् तादृशौ, "अदृष्टं वह्नि-तोयादि दृष्टं स्व-परचक्रजम्" इत्यमरः; परिभवौ तिरस्कारौ, दुःखे इति यावत्, क्व नु कुत्र खलु, परिचिन्वते? जानन्ति? नैव कुत्रापि जानन्तीत्यर्थः, तथाहि, प्रभोः निग्रहानुग्रहसमर्थस्य, परमात्मनः ईश्वरस्य, जीवात्मानः जीवांशभवात्मानः, यथा, तथा दिशि दिशि प्रतिदिशं, दिशाम् अष्टानां काष्ठानाम्, अष्टौ नाथाः अपि अधिपतयोऽपि, इन्द्रादयो दिक्पाला अपि इत्यर्थः, प्रभोः तवैव भवत एव, विभीषिकाः खलु लोकानां भयप्रदर्शनानि एव, परमात्मा यथा लोकानां पुण्य-पापादिकं द्रष्टुं पापेभ्यो भयं प्रदर्शयितुञ्च जीवात्मनो देहे नियोजितवान्, अत एव ते लोकानां विभीषिकाः, एवं भवानपि इन्द्रादीन् अष्टौ लोकपालान् लोकानां पुण्यपापादिकं द्रष्टुं पातकिनः शासितुञ्च अष्टसु दिक्षु संस्थापितवान् इति भावः, यद्वा—विभीषिकाः खलु प्रपञ्चा एव, यथा परमात्मनः प्रपञ्चा जीवाः, तथा इन्द्रादयो दिगीश्वरास्तवैवांशरूपास्त्वत्कार्य्यमेव जगद्रक्षणं कुर्वन्तीति भावः, अतः तव राज्ये न दृष्टादृष्टभयाशङ्का इति पर्य्यवसितम्। हरिणी वृत्तम्॥१४८॥

( वाद्यते तूर्य्यम् )।

विभीषणः। ( सतातविमानपुष्पकं प्रविश्य )। देव !—

लङ्का च पुष्पकमिदं च विमानमार्य्यात्
यक्षेश्वरादपहृतं दशकन्धरेण।
एकां भवानदित मह्यमथेदमन्य-
दाज्ञापय द्रुतमुपेतु पतिं निधीनाम् ॥ १४९ ॥

रामः। ( वशिष्ठेनानुज्ञातः पुष्पकं प्रति )। विमानराज ! प्रथम-स्वामिनं प्रथमपौलस्त्यम् उपतिष्ठस्व। (छ)

वशिष्ठः। ( सहर्षं प्रसादम् )। रामभद्र ! किं ते भूयः प्रियं करोमि ?

रामः। भगवन् ! किमतः परमपि प्रियमस्ति ? भगवत्-प्रसादात्—

ताताज्ञामधिमौलि मौक्तिकमणिं कृत्वा महापोत्रिणो
दंष्ट्राविन्ध्यविलासपत्रशबरी दृष्टा भृशं मेदिनी।

---

लङ्केति।—दशकन्धरेण रावणेन, आर्य्यात् पूज्यात्, ज्येष्ठभ्रातुरिति यावत्, यक्षेश्वरात् कुबेरात्, लङ्का च इदं परिदृश्यमानम्, पुष्पकं पुष्पकाख्यं, विमानञ्च व्योम-यानञ्च, अपहृतम् बलात् गृहीतमित्यर्थः। पूर्वं धनपतिः लङ्कायामधिराज्यमकरोत्, ततश्च रावणेन तं ज्येष्ठभ्रातरं पराजित्य दूरीकृत्य च स्वयं लङ्का तदीयं पुष्पकञ्चाधिकृत-मिति पुरावार्त्ता। भवान् एकां लङ्कामिति यावत्, मह्यम् अदित दत्तवान्, अथ इदम् एतत्, अन्यत् अपरं, पुष्पकमित्यर्थः, द्रुतं शीघ्रं, निधीनां पतिं धनेश्वरम्, उपेतु प्राप्नोतु, आज्ञापय आदिश। वसन्ततिलकं वृत्तम् ॥ १४९ ॥

(छ) प्रथमस्वामिनं पूर्वाधिकारिणम्। प्रथमपौलस्त्यं ज्येष्ठं पुलस्त्यनन्दनं, पुलस्त्यस्य ज्येष्ठपौत्रं कुबेरमित्यर्थः। उपतिष्ठस्व सेवस्व, बहुमानादिकमेवा आराध-येत्यर्थः।

ताताज्ञामिति।—तातस्य पितुः, आज्ञाम् आदेशम्, अधिमौलि मौलौ, शिरसीत्यर्थः, विभक्त्यर्थेऽव्ययीभावः, मौक्तिकमणिं मौक्तिकस्य मुक्ताहारस्येति यावत्, मणिं रत्नं, मुक्ताहारघटितमणिवदिति यावत्, कृत्वा विधाय, धृत्वा इत्यर्थः, मुक्तामालामिव मत्वेति यावत्, महापोत्रिणः महावराहस्य, "वराहः शूकरो घृष्टिः कोलः पोत्री